पूर्णप्रज्ञसंशोधनमन्दिरम्
नवदेहलीस्थमानवसंसाधनविकासमन्त्रालयाधीन-
राष्ट्रियसंस्कृतसंस्थानेन सम्मानितम्

श्रीव्यासतीर्थविरचितं

# भेदोज्जीवनम्

भावदीप-भेदचिन्तारत्न-भेदचन्द्रिका-भेदसञ्जीविनी-
काशिका-शर्कराटिप्पणीभिः समलङ्कृतम्

सम्पादकौ

डा. हेच्. सत्यनारायणाचार्यः
न्यायशास्त्रप्राध्यापकः

विद्वान् तिरुमलकुलकर्णी
अलङ्कारशास्त्रप्राध्यापकः

प्रकाशनम्
पूर्णप्रज्ञसंशोधनमन्दिरम्
पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु-२८

२००७

पूर्णप्रज्ञसंशोधनमन्दिरम्
नवदेहलीस्थमानवसंसाधनविकासमन्त्रालयाधीन-
राष्ट्रियसंस्कृतसंस्थानेन सम्मानितम्

श्रीव्यासतीर्थविरचितं

# भेदोज्जीवनम्

भावदीप-भेदचिन्तारत्न-भेदचन्द्रिका-भेदसञ्जीविनी-
काशिका-शर्कराटिप्पणीभिः
समलङ्कृतम्

सम्पादकौ

डा. हेच्. सत्यनारायणाचार्यः
न्यायशास्त्रप्राध्यापकः,

विद्वान् तिरुमलकुलकर्णी
अलङ्कारशास्त्रप्राध्यापकः,

पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु

पूर्णप्रज्ञसंशोधनमन्दिरम्
पूर्णप्रज्ञविद्यापीठम्, बेङ्गलूरु - २८

२००७

पूर्णप्रज्ञसंशोधनमन्दिरग्रन्थमाला-४७

श्रीव्यासतीर्थविरचितं

# भेदोज्जीवनम्

भावदीप-भेदचिन्तारत्न-भेदचन्द्रिका-भेदसञ्जीविनी-काशिका-शर्कराटिप्पणीभिः समलङ्कृतम्

सम्पादकौ- **डा. हेच् सत्यनारायणाचार्यः** न्यायशास्त्रप्राध्यापकः, पूर्णप्रज्ञविद्यापीठम्
**विद्वान् तिरुमलकुलकर्णी** अलङ्कारशास्त्रप्राध्यापकः, पूर्णप्रज्ञविद्यापीठम्

*This publication is brought out by the generous financial help of*
**Rashtriya Sanskrit Samsthan, (Deemed University), New Delhi**

पूर्णप्रज्ञसंशोधनमन्दिरम्
पूर्णप्रज्ञविद्यापीठम् बेङ्गलूरु - २८

प्रथममुद्रणम् - २००७

मुद्रितपुस्तकसङ्ख्या - १०००

मूल्यम् - २४० रूप्यकाणि

राष्ट्रोत्थानमुद्रणद्वारा मुद्रितम्।

**Poornaprajna Samshodhana Mandiram**
Recognised by Rashtriya Sanskrit Samsthan, Deemed University,
Ministry of H.R.D., Govt. of India, New Delhi

# BHEDOJJĪVANAM

**of**

**Sri Vyāsatīrtha**

**with the Bhavadīpa-Bhedacintāratna-Bhedacandrikā-Bhedasanjīvinī-Kaśikā and Śarkarā commentaries**

*Editors*

**Dr. H. Satyanarayanacharya**
Navya Nyaya Dept.,

**Vidwan Tirumala Kulkarni**
Alankara Dept.,

Poornaprajna Vidyapeetha, Bangalore

***Publisher :***
**Poornaprajna Samshodhana Mandiram**
**Poornaprajna Vidyapeetha,**
**Bangalore - 560 028**

**2007**

Poornaprajna Samshodhana Mandira Grantamālā - 47

**Bhedojjīvanam** of Sri Vyāsatīrtha with the Bhavadīpa-Bhedacintāratna-Bhedacandrikā-Bhedasanjīvinī-Kaśikā and Śarkarā commentaries.

*Editor* : **Dr. H. Satyanarayanacharya**
**and**
**Vidwan Tirumala Kulkarni**

*Published by :*
**Poornaprajna Samshodhana Mandiram**
Poornaprajna Vidyapeetha, Bangalore - 560 028.

First Edition : 2007

Copies : 1000

Price : Rs. 240/-

*This publication is brought out by the generous financial help of*
**Rashtriya Sanskrit Samsthan, (Deemed University), New Delhi**

*Type setting :*
**Ramya Creations, Bangalore**

*Printed by :*
**Rashtrotthana Mudrana**, Bangalore.

# अनुग्रहसन्देशः

'आत्मा वा अरे द्रष्टव्यः । श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्युपनिषद्वाग् ब्रह्मदर्शने श्रवणमननध्यानानामावश्यकसोपानतां विधत्ते । श्रवणमननादिरूपोपासना च सत्यवस्तुविषयिणी भवितुमर्हतीति निर्गलितः पन्थाः । 'न च रमन्त्यहो असदुपासनायाऽऽत्महनः' इति मिथ्योपासनाया अनर्थप्रदत्वोकत्वेः । जीवब्रह्मणोर्भेदश्च 'द्वा सुपर्णा', 'स आत्माऽतत्त्वमसि श्वेतकेतो' इत्यादिश्रुतिशतैः 'पृथगुपदेशात्' 'भेदव्यपदेशाच्चान्यः' इत्यादिसूत्रेभ्यश्च सुदृढं प्रतीयते । न चायं भेदो व्यावहारिकः । उपनिषदि सूत्रेषु च भेदस्यापारमार्थिकत्वानुक्तेः । जीवब्रह्मणोः स्वरूपस्य वेदैकसमधिगम्यत्वेन तत्र विरुद्धधर्माधिकरणत्वेनैवोभयोः प्रतीतेः पारमार्थिकभेदाभ्युपगमस्यापरिहार्यत्वाच्च । एतेन शास्त्राणाम् अभेदपरत्वे अपूर्वता भेदपरत्वे तु न तथेति व्याख्यातारो निरस्ताः । षड्विधतात्पर्यलिङ्गपर्यालोचने शास्त्राणां भेद एव ऐदम्पर्यमस्तीति सुष्ठूपपादितम् आकरग्रन्थेषु । किञ्च, भेदस्य प्रत्यक्षसिद्धत्वाभ्युपगमे तद्विरोधादेवाभेदश्रुतेर्गौणार्थ अकामेनाप्यभ्युपेयः । जीवब्रह्मणोः भेदावेदकस्य पुराणोदाहृतनारदादिपरीक्षितप्रत्यक्षस्य प्रबलत्वात् प्रमाणद्वयप्रतिपन्नभेदस्य सत्यतावगतेश्च । अनुमानानि चात्र प्रमाणान्तरानुगृहीतानि अनुकूलितानि भवन्ति । तदेतत्सर्वमाकरभूतेषु तत्त्वनिर्णय-श्रीसुधा-न्यायामृतादिग्रन्थेषु व्यक्तमेव, अथापि परमहंसपरिव्राजकाचार्यैः विद्वज्जनाराधितकमनीयचरणैः

श्रीमद्व्यासतीर्थैः द्वैतप्रकरणग्रन्थाध्येतॄणां व्युत्पित्सूनामनुग्रहाय नव्यन्यायपरिभाषया जीवब्रह्मणोर्भेदः 'भेदोज्जीवन'नामकग्रन्थे त्रिभिः प्रमाणैः सम्यगुपवर्णितः। विचारदृष्ट्या व्युत्पत्तिदृष्ट्या चात्यन्तमुपकारकोऽयं प्रकरणग्रन्थः माध्वविद्यापीठेषु सश्रद्धं पाठ्यते । व्युत्पत्तिप्रदोऽयं ग्रन्थः अस्माकमतीव प्रियः विद्याभ्यासकाले सविमर्शं पठितः । पाठितश्च नैकविद्यार्थिनामपूर्वपरिष्कारव्याख्यानपुरस्सरम् । स एष इदानीं षड्भिः टिप्पणीभिः समेतः सम्पादितः प्राकाश्यं नीयत इत्ययं महान् मोदास्पदो विषयः ।

अस्माकमन्तेवासिनौ डा. एच्. सत्यनारायणाचार्यः तथा तिरुमलाचार्य कुलकर्णी अस्मिन् सम्पादने, विशेषतः श्रीहुलगी श्रीनाथाचार्यटिप्पण्याः शुद्धपाठाविष्करणे साफल्यमभजतामित्यनेन वयं नितरां सन्तुष्टाः । छात्रसौकर्याय काशिकाटिप्पण्याः विवृतिः विरच्य संयोजितेत्यनेनापि वयमानन्दिताः स्मः ।

सोऽयं ग्रन्थः पूर्णप्रज्ञसंशोधनमन्दिरेण प्रकाश्यत इति नितान्तं हृष्टा वयम् । तदेतस्य ग्रन्थस्य एवंरूपेण प्रकाशने कारणीभूतान् सर्वान् समभिनन्द्य अस्मदुपास्ययोः रामविठ्ठलयोः प्रसादं प्रार्थयामहे ।

**श्रीविश्वेशतीर्थश्रीपादाः**
**श्रीपेजावरमठाधीशाः**
**उडुपि**

# DIRECTOR'S NOTE

## BHEDOJJIVANAM

Śri Vyāsatīrtha's Nyāyāmṛta, Tarkatāndava and Tātparya-candrikā- creative works of Madhva school are shining like the three eyes of the Lord Narasimha.

नेत्राणीव त्रयोऽपि त्रिजगति नृहरेरिन्धते यत्प्रबन्धाः ।

Bhedojjīvanam is an another significant work of Śri Vyāsatīrtha. It establishes the doctrine of difference with the support of all the three pramāṇas namely perception, inference and scriptures. Bhedojjīvanam has been prescribed as a text book in all the Gurukulas of Madhva tradition.

If this work is studied with the aid of many commentaries published, a student can have a smooth sail in the ocean of Madhva thought. This work, along with a few commentaries, was published long ago. The present volume is brought out with the help of manuscripts available in our library.

It is indeed a Bhagirathan task for the editors to fix the correct reading. Dr. Tirumala Kulakarni, a sound scholar in Nyāya and Vedānta took up the editing work of this text with rigor and vigor to present this work to the scholarly world. I have been watching all along his earnest pursuit hard study and his earnest work in producing this volume. Dr. H. Satyanarayanacharya, another scholar of eminence in many śāstras joined hands to make this volume very valuable one. I sincerely thank these two young scholars for their valuble contribution.

The source of inspiration for this useful venture is our founder H.H. Sri Sri Vishveshatirtha Swamiji. We express our heartfelt gratitude with pranāmas.

We also express our thanks to Prof. V. Kutumba Sastry, Vice-chancellor of Rashtriya Sanskrit Sansthan, New Delhi and Sri C.S. Kaniyal, Finance Officer, Rashtriya Sanskrit Sansthan, New Delhi, for giving all support in our academic activities.

I thank the Rashtrotthana Mudrana, for the nice prniting work.

*Sujanavidheya*
**Dr. A.V. Nagasampige**
**Director**
**Poornaprajna Samshodhana Mandiram**

# भूमिका

इह खलु कर्षकः कश्चन भुवं कर्षणेन मृदूकरोति। तत्र गोमयसारादिकं निदधाति। जलेनावसिञ्चति। धान्यप्ररोहायापेक्षितं सर्वं सम्पाद्य बीजानि वपति । यथायोग्यं प्ररोहतां वर्धमानानां तेषां रक्षणाय स्वयं शस्त्रधारी सञ्चरति। त्रायते च मृगकपिवराहादिभ्यः। प्रवृद्धानि पचेलिमानि लवित्रैः लुनाति। स्वयमपि संवर्ध्य स्वयं छिनत्ति ! धान्यानि गृहं नयति। किञ्चिदेव धान्यं पुनर्वपति वर्धयति लुनाति च।

तदेतादृशं कृषिककर्मानुकुर्वन् देवः क्षित्यात्मकमिदं जगत् क्षेत्रमिवादौ निर्माति। तत्र जीवस्य जीवनार्थमपेक्षितं मरुत्तेजोवार्यादिकं तरुलतादिकं च सृष्ट्वा जीवं वपति। अनादयस्ते उप्ताः जीवाः यथायोग्यं प्ररोहमाणाः स्वस्वयोग्ये साधने प्रवर्तन्ते। तेषां परित्राणाय रामकृष्णनृसिंहव्यासादिरूपेण स्वयमेव अवतरति। स्वेनैव सृष्टान् रक्ष्यमाणानपि जीवान् कर्षक इव संहरति। पुनरपि सृजत्यवत्यत्ति चेति चक्रमावर्तयति। तदेवं जगद्व्यापारनिरतः कृपालुर्देव एतादृशेनालौकिककर्षणेन 'कृष्णः' इत्याख्यायते। कर्षणात् खलु कृष्णो भवति। वक्ति च स्वयं पार्थं प्रति-

कृषामि पृथिवीं पार्थ भूत्वा कार्ष्णायसो महान्।
कृष्णो वर्णश्च मे यस्मात् तस्मात्कृष्णोऽहमर्जुन ॥

*(शान्तिपर्वणि ३५२-१४)* इति।

'जन्माद्यस्य यतः' इति सूत्रमप्येतादृशीमेव कृष्णतां ब्रह्मणो लक्षणं वक्ति। 'तद्विजिज्ञासस्व' इति विचारविधायिका श्रुतिरपि जिज्ञास्यत्वेनोक्तं तत्पदार्थं विवृण्वन्ती 'यतो वा इमानि भूतानि जायन्ते। येन जातानि

जीवन्ति । यत्प्रयन्ति' इति जगज्जन्मादिकारणत्वमेव जिज्ञास्यब्रह्मणः स्वरूपमाह ।

तदेतेनेदं स्फुटीभवति यत् सृष्टिकर्ता देवः । जीवा जडाश्च सृज्या इति । अनयोः सर्जकसृज्ययोः सृज्ययोश्च परस्परं जीवजडयोः किं भेदः ? अहो अभेदः ? अत्र विवदन्ते दार्शनिकाः । जीवेऽनुभूयमानानामल्पज्ञत्वादीनां ब्रह्मणि श्रुतानां सर्वज्ञत्वादीनां चालीकत्वेन तत्वतोऽनयोरभेद एवेति शाङ्कराः । दृश्यत्वादिव जडस्वरूपस्यैव मिथ्यात्वेन ब्रह्मातिरिक्तं सन्नास्तीति तत्वतो भेद इति वस्तु नास्त्येवेति तेषां कृतान्तः । अत एव तात्विकभेदस्यैव द्वैतशब्दार्थत्वात् तात्विकभेदराहित्यं सद्द्वितीयराहित्यं वा अद्वैतशब्दार्थं वर्णयन्ति । अपाकुर्वन्ति च भेदम् अनवस्थान्योन्याश्रयादिदोषसङ्गमपरिहार्यं ब्रुवाणाः। परन्तु धर्मिस्वरूपभेदवादस्याङ्गीकारेणानन्दतीर्थ-जयतीर्थ-विष्णुदासार्य-व्यासतीर्थादयोऽन्योन्याश्रयादिदोषाभावमुपपादयन्तो भेदं तात्विकं प्रतिष्ठापयामासुः ।

**धर्मभेदवादः - धर्मिस्वरूपभेदवादः**

भेदाभ्युपगन्तृभिर्दार्शनिकैः भेदस्य स्वरूपमुपपादनीयं भवति । तत्र द्वयी गतिः । भेदो धर्मिस्वरूपो वा भवेत् धर्मो वा स्यात् । द्रव्यगुणादिव्यतिरिक्तोऽभावाख्यः पदार्थविशेष एव द्रव्यादिधर्मः भेद इति एकः पक्षः । अयं न्यायवैशेषिक-साङ्ख्यभाट्टाद्यभिमतः पन्थाः । न भेदः पृथक्पदार्थः । परन्तु धर्मिस्वरूपभूत एवेत्यपरः पक्षः । प्राभाकरमीमांसका अत्र पक्षे न्यस्तदृष्टयः । न केवलं भेद एवैतन्मते धर्मिरूपः । अत्यन्ताभावाद्यभावमात्रस्यात्राधिकरणरूपता ।

परन्तु यदि भेदः धर्मिस्वरूपस्तदा 'घटः पटाद् भिन्नः' इति प्रतीतौ घटरूपविशेष्याभिन्नस्य भेदस्य प्रकारतयानुभवो न घटेत। घटप्रतीतेर्भेदप्रतीतेश्च विषयवैलक्षण्याभावेनाविशेषप्रसङ्गश्च। तद्व्यतिरिक्तप्रतीतौ सत्यामपि किमेषः पूर्वदृष्टश्चैत्रो न वेत्याद्यनुभवसिद्धभेदसंशयानुपपत्तिश्च। धर्मिणो घटस्य निष्प्रतियोगिकत्वेन तदभिन्नस्य भेदस्य सप्रतियोगिकत्वानुपपत्तिश्च। घट-भेदवत् घटाभेदस्यापि धर्मिस्वरूपत्वेन घटभेद-घटाभेदयोरप्यभेदापत्तिश्च। यद्यदभिन्नाभिन्नं तत्तदभिन्नमिति न्यायात्। किञ्च प्रतियोग्यादिप्रतीतिनिरपेक्षं प्रतीयते धर्मी। भेदस्तु प्रतियोग्यनुयोगिप्रतीतिसापेक्षप्रतीतिकः। सति खलु धर्मिणा भेदस्यैक्ये निरपेक्षत्वाद्यापत्तिः कथं वारणीया ?

तमिमं विभीषिकापुञ्जमनुवीक्ष्य यदि भेदं धर्मिव्यतिरिक्तं धर्मं ब्रूमस्तर्हि भावोऽभावो वा वाच्यः। न तावद् भावः। द्रव्यादिसर्ववृत्तित्वाद् भेदस्य। न खलु कोऽपि भावः द्रव्यादिसर्ववृत्तिः। द्रव्यं हि द्रव्यमात्रवृत्तिः। गुणादिश्च न गुणादिवृत्तिः। समवायस्य द्रव्यादिवृत्तित्वेऽपि न स्ववृत्तित्वम्। एतेनैव पृथक्त्वं भेद इत्यपि निरस्तम्। पृथक्त्वस्य गुणत्वेन गुणवृत्तेर्भेदस्य गुणत्वानुपपत्तेः। अन्योन्याभावेनैवोपपत्तौ पृथक्त्वाख्यगुणस्यानङ्गी-काराच्च। अत अभाव एव भेद इति पक्षः कक्षीकर्तव्यः।

सोऽप्यनुपपन्नः। घटस्य पटाद्भेदे प्रतीत एव पटस्य घटात् स प्रतीयत इत्यन्योन्याश्रयात्। एवं पटे घटभेदसंशये व्यतिरेकनिश्चये वा पटभेदानिश्चयात् घटभेदनिश्चयः पटभेदनिश्चयं प्रति हेतुरिति सिद्ध्यति। 'यत्संशय-व्यतिरेकनिश्चयौ यदुत्पत्तिप्रतिबन्धकौ तन्निश्चयस्तद्धेतुः' इति न्यायात्। तत एव पटभेदनिश्चयः घटभेदनिश्चयं प्रति हेतुरित्यन्योन्याश्रयः। अन-

वस्थापि। घटपटयोर्भेदः खलु न घटः। ततो भिन्नः। घटे भेदस्य भेदोऽस्तीति यावत्। अयमपि घटनिष्ठो घटभेदप्रतियोगिको भेदः न घटस्वरूपः। घटभिन्न इति यावत्। सोऽपि घटभेदभेदप्रतियोगिको भेद एवमेवेत्यनवस्था। तदेवं भेदस्य धर्मत्वधर्मित्वादिना निर्वक्तुमशक्यत्वादनिर्वचनीयता आस्थेया। अतः व्यावहारिक एवायं भेदः न परमार्थतः भेदो नामास्तीति भेदस्यानिर्वचनीयमायासामार्थ्यविलसिततावादिनां वाचोव्यक्तिः।

परन्त्वेवं धर्मिस्वरूपभेदं निराकुर्वाणास्त एवाभेदं ब्रह्मस्वरूपं ब्रुवते। अविद्यानिवृत्तिं च शुद्धब्रह्मस्वरूपमाकलयन्तीति महदाश्चर्यम्! अतः स्फुटमवादि श्रीव्यासतीर्थैर्न्यायामृते-

भेदः स्वरूपं धर्मो वेत्यादिरूपा विभीषिका।
अकारमात्रप्रक्षेपे स्यादभेदे विभीषिका॥

भेदाभावादन्यदैक्यं नास्तीति चेदैक्याभावादन्यो भेदो नास्तीति समम्। भेददूषणेनैवैक्यसिद्धिश्चेदैक्यदूषणेनैव भेदसिद्धिः स्यात्। एवं च-

भेदस्य खण्डनेनैव यद्यभेदः प्रसिध्यति।
अभेदखण्डनेनैव तर्हि भेदोऽपि सिध्यतु॥ इति।

**धर्मिस्वरूपोऽपि भेदः तद्धर्मः**

भेदस्य धर्मिस्वरूपत्वे य उक्ता दोषास्ते सर्वेऽपि प्राभाकरादिमतं स्पृशेयुरपि। विशेषाङ्गीकर्तॄणां द्वैतवादिनां मते तु नैते दोषाः। तथा हि- अत्र मते विशेषाख्यः पदार्थः सप्रमाणमङ्गीकारि। अभेदेऽपि भेदकार्यकारी विशेषः। स्वरूपस्य वस्त्वभिन्नत्वेऽपि 'वस्तुनः स्वरूपम्' इति सम्बन्धानु-

भवस्तावत् सार्वजनीनः । स च विशेषानङ्गीकारे कथमुपपादनीयः? किञ्च पटस्य पटाकारेण पटरूपेण च मात्रयापि भेदं नानुपश्यामः । व्यवहरामश्च 'पटस्य आकारः' 'पटस्य रूपम्' इति च । स्पर्शनेन कदाचित्तमसि पटे गृहीतेऽपि तद्रूपं तदभिन्नमपि नावगच्छामः । पटतद्रूपयोरभेदो यथा प्रमाणसिद्धस्तथा तयोरेकस्य ग्रहणेऽपरस्याग्रहणरूपं भेदकार्यमपि प्रामाणिकम् । प्रमाणसिद्धयोरनयोरुभयोरुपपत्त्यर्थं कश्चनाभेदेऽपि भेदकार्यकारी ऊरीकार्यः ।

स एव विशिष्यते अनेनेति व्युत्पत्त्या विशेष इत्युच्यते । तस्यैतस्य विशेषस्य महिम्ना भेदो धर्मिस्वरूपः तद्धर्मश्च भवति । घटनिष्ठो भेदः घटाभिन्नोऽपि घटस्य धर्मः । अभिन्नयोरपि घटभेदयोर्धर्मधर्मिभावो विशेषबलात् । विशेषप्रभावादेव च 'घटः पटाद्भिन्नः' इति प्रतीतावभिन्नयोरपि घटभेदयोरन्यतरस्य विशेष्यत्वमन्यतरस्य प्रकारत्वम् । घटत्वेन घटप्रतीतावपि तद्विशेषभेदत्वेन घटाप्रतीत्या घटप्रतीतौ भेदसन्देहानुपपत्तिरपि परास्ता ।

तदेवं भेदः धर्मिणा सविशेषाभिन्न इति तत्ववादः । विशेषसामर्थ्यादेवानुपपत्तिशङ्कालेशोऽपि नास्ति । मायिनस्तु सर्वा अनुपपत्तय अनिर्वाच्याविद्यामहिमत उपपद्यन्त इति मन्यन्ते । परन्तु अद्वैतवादेऽविद्यैव नोपपद्यते । सत्यत्वादिविकल्पासहत्वात् । न च दुर्घटत्वमविद्याया भूषणमिति युक्तिसहम् । तथात्वे लाघवात् आत्मैवाविद्येति कुतो न कल्प्यते ? आत्मनोऽविद्यात्वेऽविद्यानिवृत्तावात्मनिवृत्तिप्रसङ्ग इत्याद्यनुपपत्तिर्बाधिकेति चेत् भूषणमेव खलु अविद्याया मिथ्यात्वेऽनुपपत्तिः ।

तदेवं स्वप्रकाशब्रह्मणः अविद्याधर्मित्वाविद्यात्वाद्यनुपपत्तेः नाविद्यायाः सर्वव्यवहारोपपत्तिः। परन्तु सर्वानुभवसिद्धेन अभेदेऽपि भेदकार्यनिर्वाहकेण विशेषेणैव सेति सर्वं चतुरस्रम्।

**पञ्चभेदाः**

जीव-जड-ब्रह्माख्यानि त्रीणि तत्वानि। अत्र जीवा जडाश्च अनन्ताः। ब्रह्म त्वेकमेवानन्तरूपि। अत अत्र तत्वत्रये पञ्चभेदाः भवन्ति। ते च जीवेश्वरभेदः, जडेश्वरभेदः, जडजीवभेदः, परस्परं जीवभेदः, परस्परं जडभेदश्चेति। इमे पञ्चापि भेदाः सर्वजनप्रत्यक्षवेद्या भवन्ति।

'घटः पटो न' इत्यनुभववत् 'नाहं सर्वज्ञः' 'नाहं निर्दुःखः' इत्याविपालगोपालमनुभूयते। अयमनुभवः जीवस्य ब्रह्मणः सकाशात् भेदं विषयीकरोति। भेदप्रत्यक्षे प्रतियोगिप्रत्यक्षनैरपेक्ष्यं 'स्तम्भः पिशाचो न' 'अयं परमाणुर्न' इत्यादिप्रत्यक्षेण निर्णीयते। प्रत्यक्षेण प्रमाणान्तरेण वा प्रतियोगिज्ञानवता धर्मिप्रत्यक्षमात्रेण भेदः साक्षात्क्रियते। तथा च १. नाहं ब्रह्म, २. नाहं यज्ञदत्तः, ३. नाहं पटः, ४. घटो न ब्रह्म, ५. घटो न पटः इत्यनुभवात् पञ्चापि भेदाः प्रत्यक्षाः। तत्राद्यप्रत्यक्षत्रयस्य साक्षिरूपत्वात् भेदत्रयं साक्षिप्रत्यक्षवेद्यम्। अन्त्यद्वयं तु बाह्यप्रत्यक्षवेद्यमिति विवेकः।

**न्यायामृते भेदव्यवस्थापनम्**

श्रीव्यासतीर्थैः न्यायामृताख्ये स्वीये आदिमे ग्रन्थे भेदः सुस्पष्टं सविस्तरं चोपपादि। तत्र हि द्वितीयपरिच्छेदे द्वादशप्रकरणेषु भेदः निर्बाधं व्यवस्थापितः। तेषु प्रकरणेषु क्रमेण १. सामान्यतो भेदखण्डनोद्धारः, २. विशिष्य

भेदखण्डनोद्धारः, ३. विशेषसमर्थनम्, ४. भेदपञ्चके प्रत्यक्षव्यवस्थापनम्, ५. जीवब्रह्मभेदेऽनुमानप्रदर्शनम्, ६. जीवानामन्योन्यभेदेऽनुमानसमर्थनम्, ७. आत्मभेदेऽनुकूलतर्कप्रदर्शनम्, ८. भेदपञ्चकेऽनुमाननिरूपणम्, ९. भेदश्रुतेरनुवादकत्वभङ्गः, १०. भेदश्रुतेर्व्यावहारिकभेदपरत्वभङ्गः, ११. शब्दान्तर-अभ्यास-सङ्ख्या-गुणान्तर-प्रकरणान्तर-सञ्ज्ञाख्यैः कर्मभेदे प्रमाणत्वेन मीमांसकोक्तैः न्यायैः भेदव्यवस्थापनम् । १२. भेदश्रुतेः षड्विधतात्पर्ययुक्ततया उपपादनम्, इत्येते विषयाः न्यरूपिषत । ततः परं प्रकरणसप्तके अभेदस्वरूपं तत्र प्रमाणानि च निराक्रियन्त ।

सम्यक् परामृश्यमानेऽत्र भेदोज्जीवने उल्लिखिता अनुल्लिखिताश्चानेके विषयाः न्यायामृते सुविस्तृतमुपपादिता इत्यत्र नास्ति संशीतिलेशोऽपि । अत एवास्य ग्रन्थस्य गतार्थताशङ्का समुन्मिषति । न्यायामृतरचनानन्तरं समुत्पन्नानामाक्षेपाणां परिहारपूर्वकं भेदव्यवस्थापनायायं परिशिष्टग्रन्थ इति तु दुरुपपादम् । तथात्वादर्शनात् । अतः न्यायामृते विस्तृततयोक्तस्य सुखबोधाय सङ्क्षिप्य भङ्ग्यन्तरेणात्र निरूपणमिति युक्तं भाति ।

किञ्च बृहद्ग्रन्थे विद्यमानेष्ववान्तरविषयेषु विशिष्याध्ययनं सामान्यतो न प्रवर्तते । अवश्यं च विशिष्याध्येय्यो भवति भेदसमर्थनग्रन्थः । न खलु भेदनिरासकयुक्त्याद्यनपाकरणे भेदनिश्चयः । न वा तदनिश्चये भगवतः सर्वाधिक्यज्ञानम् । न चापि तद्विना भगवति सर्वाधिकभक्तिः । नैव तया विना परमपुरुषार्थप्राप्तिः । अतो भेदपरिज्ञानस्यात्यावश्यकताद्योतनाय छात्राणामध्ययनसौलभ्याय चेदं भेदोज्जीवनप्रकरणं कृपालुभिर्व्यासतीर्थ-चरणैर्व्यरचि । कलिङ्गपण्डितैः विजयनगरराजास्थानं प्रति प्रेषितस्य भेद-

खण्डनग्रन्थस्य प्रत्युत्तररूपेणेमं ग्रन्थं रचयामासुरित्यैतिह्यमप्यनुमन्यते । अत एव खण्डनेन मूर्च्छावस्थां प्रापितस्य भेदस्य मण्डनरूपेणामृत-सेचनेनोज्जीवनमत्र क्रियत इति ग्रन्थनामान्वर्थं प्रतिभाति ।

इमं हि भेदोज्जीवनग्रन्थं श्रीव्यासतीर्थाः न्यायामृतादिग्रन्थप्रणयनात्परं व्यरचयन्निति ग्रन्थावलोकनेन निश्चिनुमः । अत्र हि न्यायामृतमन्दार-मञ्जर्योरुल्लेखः कृतो दृश्यते । तथाहि- 'आकाशभेदसाधनं त्वस्माभिरन्यत्र कृतम् । ग्रन्थगौरवभयान्नेह तन्यते ।' (पृ. ९२) 'भेदे षड्विधतात्पर्य-युक्तत्वमन्यत्रोपपादितमस्माभिः' (पृ. ६३) अत्रान्यत्रेति न्यायामृत-मेवोल्लिखन्ति ग्रन्थकाराः । तत्रैवात्रोक्तोपपादनदर्शनात् । 'आत्मनां स्वाभाविकभेदे सुखदुःखादिव्यवस्थानुपपत्तिर्बाधिका मन्दारमञ्जर्याम् अस्माभिरुपपादिता द्रष्टव्या' (पृ. ६१) इत्यत्र मन्दारमञ्जरीं कण्ठ-रवेणोल्लिखन्ति ।

एवं च न्यायामृतादिषु स्वप्रणीतेषु पूर्वग्रन्थेषु व्यवस्थापितस्य भेदस्य उज्जीवनं केवलमत्र क्रियते नान्यन्नूतनमत्र उच्यत इति ग्रन्थनाम सूचयति ।

**ग्रन्थप्रणेतारः श्रीव्यासतीर्थाः**

श्रीब्रह्मण्यतीर्थैः प्राप्तप्रणवोपदेशः श्रीश्रीपादराजसकाशादधिगतसर्वविद्यः श्रीव्यासराजयतिः क्रैस्तवीयकालमानानुसारं षोडशतमशतकस्यादिमेषु वर्षेषु (1478-1538 A.C.) कर्णाटकदेशभागमिममलमकार्षीत् । योऽयं स्वतः सत्वयुतस्यापि मध्वसिद्धान्तस्य सुदृढतामप्रधृष्यतां परिरक्षां च कामयमानः समर्थसेनानी इव परपक्षं व्युदस्य सिद्धान्तं परितः अभेद्यं दुर्गं निरमासीत् ।

सर्वतन्त्रस्वतन्त्राणां श्रीव्यासतीर्थगुरूणामितिवृत्तपरिज्ञाने बहूपकुर्वन्ति तत्समकालीनदासश्रेष्ठानां वचनानि सोमनाथकविप्रणीतं व्यासयोगि-चरितकाव्यं च। तदनुसृत्य किञ्चिदिव उत्तमश्लोकचर्या तन्यते। 'वाग्जन्म-वैफल्यमसह्यशल्यं गुणाद्भुते वस्तुनि मौनिता चेत्' इति भणितिरत्र चोदिका।

आसीदौदार्यभक्तिविरक्तिसम्पन्नः सदा विष्णुपदासक्तमानसो मुनिर्ब्रह्मण्यतीर्थाभिधो ग्रामे चेन्नपत्तने (अयं प्रदेशः बेङ्गलूरुनगरतः ५० कि.मी. दूरेऽस्ति )। यस्यास्य परमानुग्रहेण बल्लण्णदम्पत्योः निरपत्ययोः बहोः कालात् सत्पुत्रः समजनि। यतिप्रसादाल्लब्धजनोरेतस्य 'यतिराज' इति नाम च कृतम्।

स एषः प्रथमे हायने परिकलितोदरावसर्पणरिङ्कणपरिभ्रमणादिः, द्वितीये कलभाषणः, तृतीये कृतचूडः, चतुर्थेऽधिगतस्तोत्रकोशादिः, पञ्चमे सम्प्राप्ताक्षराभ्याससंस्कारः, षष्ठे कण्ठस्थीकृतशब्दधातुरूपादिः सप्तमे पित्रोपनीतो द्विजत्वमगात्। तत अचिरमेव ब्रह्मण्यतीर्थैर्वृतोऽयं यतिराजः यतिदीक्षां स्वीकृत्य 'व्यासतीर्थ' इति लोके शुश्रुवे।

पीठमधिरूढाः श्रीव्यासतीर्थाः ततो विद्याक्षेत्रत्वेन प्रथितं काञ्चीक्षेत्रम् अध्यूषुः। शाङ्कर-रामानुजीयदार्शनिकसम्प्रदायम्, भाट्ट-न्याय-व्याकरणादिशास्त्रं चाभ्यस्यानितरसाधारणं वैदुष्यमेतैरत्राध्यगामि। तदिदमेव सर्वशास्त्रवैदुष्यं न्यायामृताद्युद्ग्रन्थप्रणयने मूलस्रोतः समभवत्।

काञ्चीक्षेत्रे अधीतशास्त्रः पुनर्मुलबागिलुक्षेत्रे केषुचिद्वर्षेषु द्वैतवेदान्तमधि-जगे। अत्रैषां विद्यागुरवः खल्वासन् 'श्रीपादराज' इत्येव प्रथितनामानः

श्रीलक्ष्मीनारायणतीर्थाः । अत एवैते स्वप्रणीतग्रन्थादौ सर्वत्र 'वन्दे विद्यागुरून्मम' इति श्रीश्रीपादराजयतीन् प्रणमन्ति । उट्टङ्कितश्च स्वीयायामुपाधिखण्डनटीकाविवृतौ मन्दारमञ्जर्याम्- 'लक्ष्मीनारायणाख्यात् द्वैतकुलतिलकादधीतमध्वशास्त्रामृतेन व्यासयतिना विरचिता मन्दारमञ्जरी समाप्ता' इति ।

ततः खल्वेते राज्ञा सालुवनरसिंहेन प्रार्थिताः सम्पूजिताश्च चन्द्रगिरि-संस्थाने किञ्चित्कालमूषुः । अत्रान्तरे तिरुपतिश्रीनिवासस्य पूजाव्यवस्थामपि स्वयं निरूहुः । विजयनगरसाम्राज्यस्याध्यात्मिकमार्गदर्शकाः सन्तः राज्ञः कृष्णदेवरायभूपालादेर्विद्यागुरवश्च त एते समासन् । स्वतः संस्कृतज्ञः नैककाव्यकृत्कृष्णदेवभूपालः स्वरचितकाव्ये क्वचिदिदमाह-

उत्साहं मम वीक्ष्य मद्गुरुरथ श्रीव्यासतीर्थो मुनिः
पर्यालोच्य पुराणशास्त्रविविधाम्नायेतिहासादिकान् ।
लब्धास्तत्र कथा हरेः पशुपतेः साम्यं निरस्याधिकं
विष्णुं कीर्तय सर्वथेत्युपदिशन् मह्यं मुदा दत्तवान् ।।

कृष्णदेवरायः सर्वधर्मसहिष्णुः धर्मसंरक्षकश्चासीत् । तत्र मूलकारणं तद्गुरुर्व्यासतीर्थयतिः । स्वयं माध्वतत्ववादनिष्ठोऽपि अयं यतिः मतान्तराय नाद्रुह्यत् । कलिङ्गबसवभट्टादिविद्वद्वृन्देन सार्धं त्रिंशद्दिनात्मकवादकथायां विजयिनोऽप्येते पराजितान् तान् विदुषः सममानयन् । विद्यागौरवात् बसवभट्टेन प्रदत्तस्य शिवलिङ्गस्य पूजा सम्प्रत्यपि श्रीमठे काले प्रवर्तते ।

**श्रीव्यासतीर्थविरचितग्रन्थाः**

विद्वत्तल्लजैः प्रकाण्डपण्डितमण्डलैरप्यनुगीयमानयशस्कैः पक्षधरमिश्र-

बसवपण्डितप्रभृतिभिः प्रतिपक्षिभिरपि सशिरःकम्पमुपलालितमाहात्म्यै-रेतैर्व्यासतीर्थभिक्षुभिर्लोकोपचिकीर्षुभिर्नव ग्रन्था व्यरचिषत। तेषु सत्तर्क-विलासाख्यो ग्रन्थः सम्प्रत्यपि नोपलभ्यते। उपलभ्यमाना एते अष्टौ ग्रन्थाः-

१. **न्यायामृतम्** - अद्वैतप्रमेयविमर्शार्थं प्रवृत्तो ग्रन्थः। अत्र परिच्छेद-चतुष्टये मिथ्यात्व-सत्तात्रैविध्य-अध्यास-अखण्डार्थ-मोक्ष-मोक्षसाधनादिकं मायावादाभि-मतं प्रमेयं कूलङ्कषं विमृष्टम्।

२. **तर्कताण्डवम्** - न्यायवैशेषिकाणां प्राभाकराणां भाट्टानां च सिद्धान्तं विवेचयितुमुद्युक्तम्। प्रत्यक्षागमानुमानसम्बन्धिनि परिच्छेदत्रये निबद्धम्।

३. **तात्पर्यचन्द्रिका** - श्रीमध्वाचार्यप्रणीतब्रह्मसूत्रभाष्यस्य श्रीजयतीर्थ-विरचिता या तत्त्वप्रकाशिकाटीका तस्या विवृति-रूपापि स्वतन्त्रानेकविषयगर्भिता। मूलस्थास्पष्ट-विषयस्फुटीकारिणी परभाष्यविमर्शरूपा च।

४. **भेदोज्जीवनम्** - पञ्चभेदव्यवस्थापकः स्वतन्त्रग्रन्थः।

५. **मायावादखण्डनमन्दारमञ्जरी**।

६. **उपाधिखण्डनमन्दारमञ्जरी**।

७. **मिथ्यात्वानुमानखण्डमन्दारमञ्जरी**।

८. **तत्वविवेकमन्दारमञ्जरी** -ता एताश्चतस्रो मन्दारमञ्जर्यः श्रीमदानन्द-भगवत्पादविरचितप्रकरणग्रन्थचतुष्टयटीकाविवृति-

रूपाः । उपलब्धेषु टीकाटिप्पणिग्रन्थेष्वेत एव प्राचीनतमाः ।

एषु ग्रन्थेष्वविवेचिता न काप्यद्वैतप्रक्रियाऽवशिष्यत इति निस्सङ्कोचं भणन्ति विद्वांसः । चित्सुखी-प्रमाणमाला-न्यायमकरन्द-अद्वैतदीपिका-भामती-विवरणादिग्रन्थेषु विशकलिततयोपलभ्यमानानां प्रक्रियाविशेषाणां समेषां सङ्कलनेन तथा तत्तन्मतप्रक्रियाविशेषाणां विना कलङ्कं सरलगम्भीरया प्रणाल्योपपादनेन च न केवलं द्वैतिनः किन्त्वन्येऽपि तत्तन्मतानुयायिनो विमर्शनकुतूहला अधमर्णा एव भवन्ति श्रीव्यासतीर्थाणां न्यायामृतादिग्रन्थप्रणेतॄणाम् ।

प्रकृतं भेदोज्जीवनमधिकृत्य किञ्चिदिव वक्तव्यमस्ति ।

**भेदोज्जीवनम्**

व्यासयोगिचरितकाव्ये श्रूयते- कलिङ्गाधिपतिः पण्डितम्मन्यैः तत्ववाद-विद्वेषिभिः कैश्चित् प्रेरितः स्वसेनानीद्वारा कञ्चन ग्रन्थं कृष्णदेवरायसकाशं प्रैषयत् । तन्निरीक्षणेन सम्भ्रान्तः सम्राट् व्यासतीर्थगुरुं समेत्य ग्रन्थं प्रदर्शयामास । तत्ववादखण्डनपरे तस्मिन् ग्रन्थेऽभेदस्थापनप्रकाराः प्रादर्श्यन्त । अङ्गीकृतद्वैतवादस्य स्वस्य प्रतिष्ठा गौरवं च नावतिष्ठते विना तद्ग्रन्थखण्डनेन । गुरुर्व्यासतीर्थश्च तद्ग्रन्थमवलोक्य हसन्नेव विना क्लेशं तद्ग्रन्थखण्डनमारचय्य तत्सेनानीमुखेनैव कलिङ्गाधिपं प्रति प्रेषयामासेति ।

काव्ये व्यासतीर्थरचितस्य ग्रन्थस्य नाम नोल्लिखितम् । न वा कलिङ्गाधिपप्रेषितग्रन्थस्य । अथापि अनतिकाले प्रणीतः अत एवाल्पाक्षरः

खण्डनमण्डनात्मकः स्वतन्त्रग्रन्थः भेदोज्जीवनाख्य एष एवेति व्यक्त-मुत्पश्यामः । अस्मिन् विषये अधिकजिज्ञासवः डा. बि.एन्.के. शर्ममहोदयैः रचितं द्वैतवेदान्तेतिहासग्रन्थं (**History of the Dvaita School of Vedanta and its Literature**) पश्यन्त्विति प्रार्थ्यते ।

अभेदनिरसनं भेदसमर्थनं चास्य ग्रन्थस्य मुख्यं लक्ष्यमिति 'भेदोज्जीवनम्' इति शीर्षिकयैव स्पष्टमस्ति । तदिदं प्रकरणम्-

जीवेश्वरभिदा चैव जडेश्वरभिदा तथा ।
जीवभेदो मिथश्चैव जडजीवभिदा तथा ।
मिथश्च जडभेदोऽयं प्रपञ्चो भेदपञ्चकः ।। (अनुव्याख्यानम् ४.१९)

इत्याचार्योक्तान् पञ्चापि भेदान् व्यक्तं समर्थयति ।

ग्रन्थस्यास्य प्रवृत्तिक्रम एषः- प्रथमं मायावादिनां ये भेदनिरसनपराः पूर्वपक्षाः तेषां सङ्ग्रहेणानुवादः, ततः सिद्धान्तसङ्ग्रहः । पूर्वपक्षभागेऽपि आदौ जीवभेदसाधकानां प्रमाणानां निरासस्ततः परं चाभेदसाधकप्रमाणोपन्यासः । सिद्धान्तभागे तु भागत्रयम् । आदौ भेदसाधकप्रमाणोपन्यासः, ततः पूर्ववादिप्रदर्शितानां भेदसाधकप्रमाणदूषणानमुद्धरणम्, अनन्तरं चाभेदसाधकप्रमाणनिरास इति ।

तदिदं भेदोज्जीवनं काशिकाटिप्पणीसंवलितं सत् विद्वत्तल्लजैर्मान्यैः डि. प्रह्लादाचार्यैः १९८९तमे क्रिस्ताब्दे संशोध्य प्राकाश्यं नीतम् । तत्रैतैः संशोधकैः योऽयं ग्रन्थसारसङ्ग्रहः कृतः तस्यान्यूनानतिरिक्तत्वात् सरलमधुरत्वाच्च स एव लेखोऽत्रोपस्थापितः -

## 'भेदे प्रत्यक्षं प्रमाणम्

जीवेश्वरभेदे प्रत्यक्षं न प्रमाणमित्यद्वैतिनां वादः । तेषामयमाशयः । धर्मिप्रतियोगिनोः प्रत्यक्षसद्भाव एव भेदोऽपि प्रत्यक्षो भवेत् । नान्यथा । जीवेश्वरयोश्च ईश्वरोऽप्रत्यक्ष इति तत्प्रतियोगिकस्तदनुयोगिको वा भेदो न प्रत्यक्ष इति ।

यद्यपि द्वैत्यभिमतः स्वतन्त्रत्वादिगुणविशिष्टविष्णोः जीवाद्भेदः नाद्वैतिनां प्रतिकूलः । शुद्धचिदैक्यस्यैव तदभिमतत्वात् । विशिष्टचेतनयोर्भेदस्य तैरप्यङ्गीकारात् । अथाप्यंशद्वयमत्र तैः प्रतिक्षेप्तव्यमस्ति । एकं तस्य भेदस्यानौपाधिकत्वम् । अपरं तस्य प्रत्यक्षसिद्धत्वम् । यद्यप्यस्मिन्नवसरे भेदस्य स्वाभाविकत्वं न तैर्निराकृतम् । अथापि भेदस्यैवाप्रत्यक्षत्वे साधिते स्वाभाविके भेदेऽपि प्रत्यक्षप्रमाणाभावः निरूपितो भवतीति भेदस्याप्रत्यक्षत्वमात्रं तैः साधयितुं प्रयतितम् ।

जीवेशभेदविषये प्रत्यक्षसामान्याभावसमर्थनपरश्चायमद्वैतवादः तद्विषये ईश्वरीयं जीवीयं च प्रत्यक्षं प्रमाणतयोपन्यस्य श्रीव्यासतीर्थैर्निराकृतः । ईश्वरस्य जीवेशभेदज्ञानं तावदस्तीत्यत्र 'उत्तमः पुरुषस्त्वन्यः' इत्यादितद्वचनमेव प्रमाणम् । परोक्षज्ञानविधुरस्येश्वरस्य सर्वं ज्ञानमपरोक्षमिति भेदज्ञानं प्रत्यक्षात्मकमीश्वरस्य सिद्ध्यति । एवं भेदप्रत्यक्षं प्रति प्रतियोगिज्ञानमात्रस्यानुयोगिप्रत्यक्षस्य चावश्यकत्वेन स्वापरोक्षवतो जीवस्यापि स्वानुयोगिकपरोक्षज्ञानविषयेश्वरप्रतियोगिकभेदप्रत्यक्षसद्भावे नास्ति काचिदनुपपत्तिरिति तैः सुष्ठु प्रतिपादितम् ।

यद्यप्यन्योन्याभावप्रत्यक्षेऽधिकरणस्य प्रत्यक्षयोग्यता आवश्यकीत्यभ्यु-

पगमेऽप्यस्त्यनुपपत्तिः । वाय्वधिकरणकस्य उद्भूतरूपवद्भेदस्य वायोरधिकरणस्य प्रत्यक्षायोग्यत्वेनाप्रत्यक्षत्वप्रसङ्गात् । तथाप्यन्ततो गत्वा यद्यदभावस्य प्रत्यक्षत्वमनुभवसिद्धं तत्तदभावत्वस्यैव तदभावप्रत्यक्षयोग्यताप्रयोजकत्वं स्वीकर्तव्यम् । तथा च वायोरप्रत्यक्षत्वेऽपि तदधिकरणकोद्भूतरूपवद्भेदस्य प्रत्यक्षत्वमनुभवसिद्धमिति तद्भेदत्वरूपाभावत्वं योग्यताप्रयोजकमस्तीति नानुपपत्तिरिति काशिकायां समाहितम् ।

अभेदे प्रत्यक्षानुभवो नास्तीति सामान्यतः सर्वेषां प्रतिपत्तिः । परन्तु केचिदद्वैतिनः प्रत्यक्षमप्यभेदं प्रमाणत्वेन साधयितुमुद्युञ्जते । तेषामयमाशयः । एकाकारानुभवस्यैकवस्तुविषयकत्वे हि लाघवम् । अस्ति चाहंधीः सर्वेषामेकाकारा । तथा च तद्विषयस्यात्मन एकत्वं लाघवात् सर्वैरभ्युपगन्तव्यमिति ।

अत्र श्रीव्यासतीर्थानामयं प्रश्नः- अहमित्येकाकारानुभवः किमहमर्थस्यैक्यं साधयत्युत शुद्धचिदैक्यम् । न तावदन्तिमम् । शुद्धचितोऽहंधीवेद्यत्वस्य परेणानभ्युपगमात् तदैक्यस्य तयाऽसिद्धेः । नापि प्रथमम् । अहमर्थस्यान्तःकरणावच्छिन्नचैतन्यस्यान्तःकरणरूपोपाधिभेदेन भिन्नत्वस्यैवाद्वैतमते सिद्धान्तितत्वेन तदभेदस्य प्रत्यक्षसिद्धत्वोक्तावपसिद्धान्तात् । एवमभेदे प्रत्यक्षप्रमाणसद्भावाशा श्रीव्यासतीर्थैर्निर्मूलिता ।

## भेदेऽनुमानं प्रमाणम्

अनुमानान्यपि भेदविषये विपुलान्युदाहृतान्यस्मिन् प्रकरणे । तेषु जीवं पक्षीकृत्य दुःखानुसन्धातृत्वेन हेतुना ब्रह्मभेदसाधकानुमानेऽद्वैतिनामयमाक्षेपः- अत्र पारमार्थिकत्वविशेषितभेदसाधनेऽप्रसिद्धविशेषणता । किञ्चिदविशेषितस्य

भेदस्य साधने व्यावहारिकभेदमादाय सिद्धसाधनता । धर्मिसत्तासमानसत्ताकभेदसाधने च धर्मिणो जीवस्य द्वैतमते पारमार्थिकत्वेऽप्यद्वैतसिद्धान्ते तस्य विशिष्टचेतनत्वेन व्यावहारिकत्वात् तत्सत्तासमानसत्ताकत्वेन सिद्ध्यन् भेदः व्यावहारिक एव सिद्ध्येदिति तदवस्था सिद्धसाधनतेति ।

साकूतमत्र पृष्टं श्रीव्यासराजैः 'कस्तर्हि तवापि जीवशब्दार्थः ?' इति । तेषामयमभिसन्धिः । अद्वैतमते जीवशब्दस्य जीवभावविशिष्टचैतन्यमेवार्थश्चेत् जीवस्य मुक्तिरसम्भाविता स्यात् । अज्ञानकल्पितस्य विशिष्टचेतनस्य अज्ञानप्रविलयसमकालमेव प्रविलीनत्वेन तस्य ब्रह्मैक्यायोगात् । अतो जीवभावोपलक्षितचैतन्यस्यापि जीवशब्दार्थत्वमवश्यं तैः स्वीकरणीयम् । तच्च चैतन्यं सत्यमेवेति तत्पक्षीकृत्य धर्मिसत्तासमानसत्ताकभेदसाधने न सिद्धसाधनताया दोषान्तरस्य वा अवकाश इति ।

भेदे धर्मिसत्तासमानसत्ताकत्वमनिवेश्यापि पारमार्थिकजीवब्रह्मभेदसाधनस्य प्रकारोऽप्युपदर्शितः श्रीव्यासतीर्थैः । यथा जीवः ब्रह्मप्रतियोगिकतादात्म्याधिकरणं न भवति, ब्रह्माननुसंहितदुःखानुसन्धातृत्वादित्यादि । अनेन चानुमानेन ब्रह्मप्रतियोगिकतादात्म्याधिकरणत्वावच्छिन्नप्रतियोगिताकभेदः सिषाधयिषितः । न चायं भेदो व्यावहारिकः परस्य सिद्ध इति वाच्यम् । पराभ्युपगतस्य व्यावहारिकभेदस्स्य ब्रह्मप्रतियोगिकतादात्म्याधिकरणत्वावच्छिन्नप्रतियोगिताकत्वाभावात् । न हि घटानवच्छिन्नात् महाकाशात् घटावच्छिन्नस्याकाशस्यौपाधिकभेदसद्भावेऽपि 'घटाकाशः महाकाशतादात्म्याधिकरणं न भवति' इति प्रतीतिः परस्याभिलषिता । घटाकाशस्य वस्तुतो महाकाशतादात्म्याधिकरणत्वात् ।

एवमेवाद्वैतमते जीवे ब्रह्मप्रतियोगिकव्यावहारिकभेदसद्भावेऽपि, 'जीवः ब्रह्मप्रतियोगिकतादात्म्याधिकरणं न भवति' इति प्रतीतेरङ्गीकर्तुमशक्यत्वेन सिद्धसाधनताशङ्का नैव समुदेति । अप्रसिद्धविशेषणत्वं तु शक्यशङ्कम् । अद्वैतमते सर्वस्यापि ब्रह्मतादात्म्याधिकरणत्वेन तदनधिकरणत्वस्याप्रसिद्धत्वात् । परन्त्वेतदपि विचार्यमाणे न लगति । यतः अप्रसिद्धविशेषणत्वस्य दोषत्वे द्वयी गतिः । साध्यस्यैवाप्रसिद्धौ साध्यतदभावकोटिकसंशयासम्भवेन पक्षताविघटनद्वाराऽनुमितिविरोधित्वमित्येका । अन्या तु साध्यनिरूपितव्याप्तेः हेतौ ग्रहणासम्भवेन व्याप्तिविघटनद्वाराऽनुमितिप्रतिबन्धकत्वमिति । आद्या तु न सम्यक् । प्रकृतेऽद्वैतिनां साध्यस्याप्रसिद्धावपि ब्रह्मप्रतियोगिकतादात्म्यरूपस्य तदभावस्य प्रसिद्धत्वेन तद्धर्मिकस्य पक्षवृत्तित्वतदभावकोटिकसंशयस्य पक्षतात्वसम्भवात् । नापि व्याप्तिविघटनद्वाराऽप्रसिद्धविशेषणताया दोषत्वमिति द्वितीयः पक्षो युक्तः । प्रकृतानुमानस्य केवलव्यतिरेकित्वात्, केवलव्यतिरेकिणि च साध्याभावे हेत्वभावनिरूपितव्याप्तिग्रहस्यैवापेक्षितत्वात् । तस्य चात्र सुलभत्वात् । न हि ब्रह्मप्रतियोगिकतादात्म्यरूपे साध्याभावे हेत्वभावनिरूपितव्याप्तिग्रहणे किमपि प्रतिबन्धकमस्ति ।

यद्यपि सिद्धान्ते व्यतिरेकस्यान्वयमुखेनैव साध्यसाधकता समर्थिता । तथा च साध्याप्रसिद्धौ तन्निरूपितान्वयव्याप्तेः हेतौ कथमपि ग्रहणासम्भवेन कथमत्र साध्यसिद्धिरिति शङ्का जागर्ति । तथापि यो यद्व्यापकीभूताभावप्रतियोगी स तदभावव्याप्यः, यथा वह्न्यभावव्यापकीभूताभावप्रतियोगी धूमः वह्न्यभावाभावव्याप्य इति सामान्यव्याप्तिबलात्, प्रकृतेऽन्वयव्याप्तिसाधकस्य ब्रह्मप्रतियोगिकतादात्म्याधिकरणत्वव्यापकीभूताभाव-

प्रतियोगित्वरूपहेतौ पक्षधर्मताबलाच्च ब्रह्माननुसंहितदुःखानुसन्धातृत्वरूप-हेतौ अप्रसिद्धसाध्यनिरूपितान्वयव्याप्तिः सिद्ध्यतीति काशिकायां साधु समर्थितम् ।

एवमत्र भेदसाधकत्वेनोपन्यस्तेषु सर्वेषु अनुमानेषु अद्वैतिभिः सूचितानि दूषणानि सम्यग् विमृश्य तेषामलग्नकता सुसमर्थिता । न्यायमतमालम्ब्याप्यत्र भेदसाधनप्रकारो दर्शितः । तत्र सम्भावितदोषाश्च न्यायप्रक्रियामादृत्यैव परिहृताः । तथैवाभेदसाधकत्वेनाभिमतान्यनुमानानि च प्रत्यक्षानुमानागम-बाधतर्कपराहतिसोपाधिकत्वाभाससमानयोगक्षेमत्वादिभिः साधारणदूषणैः तथा व्याभिचाराद्यसाधारणदूषणैर्निरस्य भेदसिद्धेरप्रतिहतत्वं सुसम्पा-दितम् ।

### भेदे श्रुतयः प्रमाणम्

भेदोज्जीवने श्रुतीनां द्वैतपरत्वसमर्थनम् अद्वैतपरत्वनिरासश्च यद्यप्यति-सङ्क्षेपतः कृतः । तथापि तत्र चर्चिताः केचिदेव विषया अद्वैतवादस्यासारता-बोधने पर्याप्ताः ।

द्वा सुपर्णेत्याद्याः श्रुतयो लोकसिद्धस्य व्यावहारिकभेदस्यानुवादिकाः । अनुवादश्च नेह नानास्तीति निषेधाय । नातः पारमार्थिकभेदे श्रुतयः प्रमाणानि भवितुमर्हन्तीत्यद्वैतिनामभिमानः । स चाभिमानो नितरामत्र खण्डितः । अयमत्र श्रीव्यासतीर्थानामाशयसङ्क्षेपः-

श्रुतिप्रतिपादितस्य भेदस्याबाध्यत्वं तु नाद्वैतिनां सम्मतम् । भेदस्य व्यावहारिकत्वेन तैरभ्युपगमात् । व्यावहारिकत्वस्य च बाध्यत्वरूपत्वात् ।

एवं च बाध्यार्थप्रतिपादिकानां श्रुतीनां प्रामाण्यं कथङ्कारं तैः समर्थ्यते ? अबाध्यार्थप्रतिपादकत्वं खलु प्रामाण्यम्। श्रुत्यप्रामाण्यमद्वैतिनां सम्मतमेवेति चेत् किमत्रापराद्धं बौद्धैः ? न च श्रुतितात्पर्यविषयीभूतस्य बाध्यत्वे श्रुत्यप्रामाण्यप्रसङ्गः। श्रुतितात्पर्यगोचरोऽभेदश्चाबाध्यः। अभेदे श्रुतितात्पर्यं चोपक्रमादितात्पर्यनिर्णायकैर्लिङ्गैः सिद्ध्यतीति वाच्यम्। वैपरीत्येनापि वक्तुं शक्यत्वात्। उपक्रमादितात्पर्यलिङ्गानि च भेदविषय एवेति साधु समर्थयितुं शक्यन्ते। तथा च भेदे एव श्रुतीनां तात्पर्यम्। तस्य च बाध्यत्वे श्रुत्यप्रामाण्य-प्रसङ्ग इति स्यात्।

किञ्चाभेदश्रुतय एवानुवादिन्यः। ताश्च अनुमानाभासप्राप्तम्, श्रुति-तात्पर्यापरिज्ञानप्राप्तम्, प्रवाहतोऽनादिभूतया शास्त्रपरम्परया वा प्राप्तमभेदं द्वा सुपर्णेति निषेधायानुवदन्तीति किं न स्यात् ? तादात्म्यनिषेधरूपस्य भेदस्य प्रतिपादिकाः श्रुतयः निषेधिका इत्यपि वक्तुं शक्यन्त इत्युपसंहृतं श्रीव्यासराजैः।'

### टिप्पणिकृतः

अथात्र षण्णां महानुभावानां भेदोज्जीवनटिप्पणिकृतां संस्तवः सङ्क्षेपेण दीयते। पौर्वापर्ये कालक्रमः आधारः।

### श्रीकुम्भारिवासुदेवाचार्याः (क्रि.श. १५७५)

श्रीमदुत्तरादिमठाधीशानां श्रीसत्यनिधिश्रीपादानां (क्रि.श. १६३०-१६४०) जीवनचरित्रनिरूपके श्रीसत्यनिधिविलासाख्ये काव्ये पञ्चमसर्गे एतेषां विषये उक्तम्। तदनुसारेण एवं ज्ञायते - श्रीसत्यनिधितीर्थाः पूर्वाश्रमे (रघुनाथाचार्या इति तदात्वे नाम) एतेषां सविधे शास्त्राध्ययनं व्यदधुः।

एतैः पाठिता ग्रन्थाः - समग्रव्याकरणमहाभाष्यं, पूर्वमीमांसा, प्राचीनन्यायः, नवीनन्यायः, साङ्ख्यम् तथा विशेषतो मध्वशास्त्रम् - इति ।

एतेन ते सकलशास्त्रज्ञा इति ज्ञायते । 'वासुदेवविदुषोऽखिलवेत्तुः' इति तस्मिन् काव्ये एते अखिलवेत्ता इति व्यवहृताः ।

'इति कुम्भारिनारायणाचार्यसूनुवासुदेवाचार्यविरचिता' इति समाप्तिवाक्येन एतेषां वंशनाम-पितृनाम्नी ज्ञायेते । एतेषां अयमेक एव ग्रन्थ उपलब्धः । उपलब्धासु भेदोज्जीवनटिप्पणीषु एतेषामत्यन्तप्राचीना ।

**श्रीमुद्गलानन्दतीर्थाचार्याः (क्रि.श. १६४०)**

ताम्रपर्णिविट्ठलाचार्यसुता आनन्दतीर्थाचार्याः सत्तत्वरत्नमालाया रचनेन विद्वत्प्रपञ्चे असाधारणसम्मानभाजः । श्रीमुद्गलानन्दतीर्थाचार्याः तेषां शिष्याः । मुद्गलवंश्या एते जनार्दनपुरनिवासिनः । (इदानीं जनार्दनपुरं केन नाम्ना व्यवह्रियते इति न ज्ञायते ।) इदं सर्वं तैरेव ग्रन्थान्ते एवं निरूपितम् -

'ये श्रीमध्वार्यवाणीविवरणविदुषामग्रगण्या वरेण्याः
ते तीर्थाचार्यवर्या मम किल गुरवो विठ्ठलार्यप्रसूताः ॥ ७ ॥
मुद्गलार्यतनूजेन जनार्दनपुरौकसा ।
शर्मणाऽऽनन्दतीर्थेन यथाप्रज्ञमभाषि वाक् ॥ ८ ॥' - इति

(अनयोर्द्वयोर्विषये प्रसिद्धेषु आकरेषु कुत्रापि नोपलब्धम् । अन्ते अस्माभिः पृष्टाः श्रीमन्तः डा. व्यासनकेरे प्रभञ्जनाचार्याः स्वसंशोधनसामग्र्या आधारेण इदं विवरणं सज्जीकृतवन्तः । तेषां सौजन्यमुपकारिता च विशेषतः स्मर्यते ।)

'मुद्गलवेदव्यासनामानः एके विद्वांसः तन्त्रदीपिकानाम्नीं सदाचार-स्मृतिव्याख्यां रचितवन्तः सन्ति। ते श्रीमदुत्तरादिमठाधीशानां श्रीसत्यपूर्ण-तीर्थानां (१७००-१७२६) सम्प्रतिपन्ना आसन्। (ते एतेषां वंशोद्भवा एव स्युः १) श्रीप्रसन्नवेङ्कटदासानां (१६८०-१७५०) चरित्रे एकेषां मुद्गलाचार्याणामुल्लेखः वर्तते। ते क इति खचिततया न ज्ञातम्' इति डा. नागसम्पिगेमहोदयाः मैसूरुप्राच्यविद्यासंशोधनालयतः प्रकटिते स्वसम्पादिते सदाचारस्मृतिग्रन्थे प्राक्कथने व्यलिखुः। ते प्रायः मुद्गलानन्दतीर्थाचार्या एव स्युः।

**श्रीशर्करा श्रीनिवासाचार्याः (क्रि.श. १६५०)**

एते प्रथितयशसां श्रीयादवार्याणां शिष्याः। एतेषां सतीर्थ्याः श्रीबिदिरहळ्ळिश्रीनिवासतीर्थाः। उभयोः नामसाम्यात् एते शर्करोपनाम्ना प्रसिद्धाः। शर्करेति एतै रचितानां ग्रन्थानां नाम। एते अत्युपयुक्तान् चतुरो ग्रन्थान् व्यररचन्।

१. तत्वप्रकाशिकाटिप्पणी वाक्यार्थमञ्जरी। इयं शर्कराश्रीनिवास-तीर्थीयेति प्रथिता। अन्यूनानतिरिक्ता। अत एव विद्यार्थिनां महोपकाराय भवति।

२. भेदोज्जीवनटिप्पणिः

३. तन्त्रसारटिप्पणिः

४. सदाचारस्मृतिटिप्पणिः

**श्रीभगवन्तरायाः (क्रि.श. १७८३-१८९५)**

कर्णाटकराज्यस्य बळ्ळारिनामकप्रदेशे श्रीनागेशरायेभ्यः एते जनिम् अलभन्त ।

संस्कृत-आङ्ग्ल-फार्सिभाषाज्ञानमेषामासीत् । जीवनस्य पूर्वार्धे एते सदाचारशीलाः नित्यकर्मानुष्ठानरताः सन्तः गुत्ति-रायदुर्गनामकस्थलयोः तह्सील्दाराख्यामाधिकारिकपदवीं निरवहन् । क्रमेण द्वैतवेदान्तेतिहासे प्रमुखस्थानभाजां श्रीजगन्नातदासानां सम्पर्केण प्राणनाथविट्ठलेति अङ्कितनाम प्राप्तम् । ततः परिवर्तिता एते विशेषेण श्रीमध्वशास्त्राध्ययते प्रावर्तन्त । हरपनहळ्ळिग्रामवास्तव्यान् श्री भक्रिवराहाचार्यान् स्वगृहे संस्थाप्य तेभ्यः शान्तिपाठपुरस्सरं श्रीमध्वशास्त्रमधिजगुः । एते स्वयमपि बहून् शिष्यान् सिद्धानकार्षुः । एतैः रचिताः षोडश ग्रन्थाः लब्धाः तेषां सूची तथा अन्येऽप्येतत्सम्बन्धिविचाराः श्रीगलगलीपण्ढरीनाथाचार्यैरचिते माध्व-वाङ्मयतपस्विगळु इति कन्नडपुस्तके लभ्यन्ते । तत्रानुल्लिखिता, श्रीमदैतरेयोप-निषद्भाष्यस्य श्रीपेजावरमठाधीशश्रीविश्वेश्वरतीर्थविरचितटीकायाः एतै रचिता व्याख्या समुपलब्धेति, तथा, बृहतीसहस्रस्य एतैः स्वहस्तलिखिता अपूर्वा व्याख्यापि समुपलब्धा वर्तते इति डा. व्यासनकेरे प्रभञ्जनाचार्याः सम्भाषणावसरे संसूचितवन्तः । ब्रह्मसूत्रभाष्यस्य एतै रचिता सरला टिप्पणिः चिरस्मरणीया वर्तते ।

**श्रीकाशीतिरुमलाचार्याः (श्रीकाशीतिम्मण्णाचार्याः) (क्रि.श. १८००)**

मूलतः एते आन्ध्रप्रदेशराज्यस्य पेनगोण्डस्थलीयाः । पितॄणां श्रीवराह-मूर्त्याचार्याणां सकाशे आरब्धाध्ययनाः एते पितृव्यानां श्रीश्रीरमणाचार्याणां

मुखतः विशेषाध्ययनमकार्षुः। श्रीश्रीरमणाचार्याः गदाधरभट्टाचार्यप्रणीत-न्यायशास्त्रवादग्रन्थानां व्याख्यातृभ्यः कृष्णभट्टोपाध्यायेभ्यः विहिताध्ययनाः। यौवने श्रीतिम्मण्णाचार्याः काश्यां न्याय-व्याकरण-मीमांसादि-शास्त्रेषु अप्रतिमपाण्डित्यमर्जयामासुः। काश्यामेतैस्तादृशं वैदुष्यं प्रापि येन काशीत्युपनामवन्तोऽभूवन्। ततः श्रीमदुत्तरादिमठाधीशानां श्रीसत्यधर्म-तीर्थानां सकशात् श्रीमध्वशास्त्रमधिजगुः। तेन वेदान्तेऽप्यनितरसाधारणं प्रागल्भ्यं प्रौढिमानं च प्रापन्।

एते स्वीयवैदुष्येण विद्वन्मान्यस्य महीशूर(कर्णाटकराज्यस्य मैसूरु) पालस्य मुम्मडिकृष्णराजसार्वभौमस्य आस्थाने बहुमानभाजनमभूवन्निति, तत्तत्काले सम्पन्नासु गोष्ठीषु महतो विदुषः वादे पराजित्य द्वैतसिद्धान्त-विजयपताकामुन्निन्युरिति, तथा तत्कालीनाः पीठाधीशाः सन्यासिनोऽपि एभ्यः शास्त्रश्रवणमकार्षुरिति च श्रूयते।

एतै रचिता ग्रन्थाः -

१. श्रीमन्न्यायसुधाटिप्पणिः
२. श्रीमन्न्यायामृतटिप्पणिः
३. तत्वसङ्ख्यानटिप्पणिः
४. भेदोज्जीवनटिप्पणिः
५. कृष्णामृतमहार्णवटिप्पणिः
६. कुमतखण्डनम्
७. वायुपरत्वसमर्थनम्
८. व्युत्पत्तिवादव्याख्या - इत्यादयः।

**श्रीहुलगीश्रीनाथाचार्याः (क्रि.श. १८२५)**

वाक्यार्थकुशलानां श्रीवासुदेवाचार्याणामात्मजा एते स्वपितुः सकाशात् द्वैतसिद्धान्तं तथा पण्ढरपुरवास्तव्यानां श्रीविट्ठलमहोपाध्यायानां सकाशात् न्यायशास्त्रं चाध्यगमन् ।

'यन्मन्त्राक्षतमाहात्म्यात् ग्रन्थोऽयं पूर्णतां गतः ।
तान् वन्दे सत्यसङ्कल्पानन्वर्थाभिधया युतान् ॥'

इत्येतैः द्वैतद्युमण्यन्ते निर्दिष्टम् । तेन श्रीमदुत्तरादिमठाधीशाः श्रीसत्यसङ्कल्पतीर्थाः एषां गुरव इति ज्ञायते । एते तदानीन्तनपेश्वेनामकेन पुणेराजेनाहूताः स्ववैदुष्येण वादकौशलेन चात्युन्नतसम्भावनां प्राप्नुवन् । एतै रचितः द्वैतद्युमणिः न्यायामृताद्वैतसिद्धिवादपरम्परायामन्तर्गतोऽपि तथा प्रसिद्धो न वर्तते । सोऽयं ग्रन्थः न्यायवेदान्तशास्त्रपाण्डित्यनिकषात्मकः सन् विद्वद्भिः जिज्ञासुभिश्च समादृतो वर्तते । समग्रतया कूलङ्कषतया च विषयविवेचनं पङ्क्त्यर्थविवरणं चैतेषां वैशिष्ट्यम् । भेदोज्जीवनटिप्पण्यां भेदसञ्जीवन्यामपि इमे गुणाः दरीदृश्यन्ते ।

एतैर्विरचिता ग्रन्थाः -

१. द्वैतद्युमणिः (तत्वोद्योतटिप्पणिः)

२. भेदसञ्जीवनी (भेदोज्जीवनटिप्पणिः)

३. श्रीरमारामस्तुतिः

४. तथा ५. सुधा-भागवतयोर्भागशः टिप्पणी (अप्रकटिते)

(टिप्पणिकृत्परिचस्य इमे ग्रन्था आकाराः -

१. डा. बि.एन्.के. शर्मणां द्वैतवेदान्त मत्तु इतिहास

२. श्री पण्ढरीनाथाचार्याणां माध्ववाङ्मयतपस्विगळु

३. श्रीविद्यापयोनिधिप्रकाशनस्य भेदोज्जीवनस्य प्रो.डि. प्रह्लादाचार्याणां प्राक्कथनम्

४. श्रीपूर्णप्रज्ञविद्यापीठप्रकाशिततत्वोद्योतस्य प्रो. ए. हरिदासभट्ट-लिखिता भूमिका

५. वायुपरत्वसमर्थननामकग्रन्थस्य श्रीबाळगारुरुचिराचार्यरचिता पूर्वपीठिका

अस्मिन् ग्रन्थे केचनैवांशाः सङ्गृहीताः विशेषं जिज्ञासुभिराकरा एवावलोक्याः ।)

**भेदोज्जीवनस्य अप्रकटितटिप्पण्यः**

डा. व्यासनकेरे प्रभञ्जनाचार्याः स्वकृतहस्तलिखितग्रन्थपरिशोधन-फलरूपायाःग्रन्थसूच्या आधारेणेदं प्रकटयकुर्वन् यत् भेदोज्जीवनस्य तिस्रः अप्रकटिताः टिप्पण्यः विद्यन्ते । तेषां सूची एवमस्ति -

१. **भेदतरङ्गिणी-** भास्करभूपालतनयसुभानुरायतनयरङ्गनाथकृता । मैसूरुप्राच्यविद्यासंशोधनालये अस्या हस्तलिखितग्रन्थः वर्तते । क्रमसङ्ख्या सि २०४९

२. **भेदरत्नमाला-** गोविन्दाचार्यकृता । अस्या अपि हस्तलिखितग्रन्थः प्राच्यविद्यासंशोधनालये विद्यते । क्र.सं. सि १६५६

३. **न्यायरत्नाकरः-** आयीनरहर्याचार्यसूनुसत्यनाथाचार्यकृता । अयं ग्रन्थः डा. प्रभञ्जनाचार्याणां जयतीर्थहस्तलिखितग्रन्थालये विद्यते ।

**मातृका :**

एतस्मिन् शोधकार्ये पञ्च मातृकाः उपायुज्यन्त। तासां विवरणमेवं वर्तते-

१. **हुलगीटिप्पणिः**- पूर्णप्रज्ञविद्यापीठग्रन्थालयस्था। इयमस्मिन् पुस्तके 'हु.' इति सङ्केतेन उल्लिखिता।

२. **काशिका**- पू.प्र.वि.पी. ग्रन्थालयस्था, 'का.' इत्युल्लिखिता

३. **शर्करा**- श्रीमाधवरावमहोदयस्य गृहे लब्धा, 'श.' इत्युल्लिखिता।

४. **कुम्भारीया**-श्रीमाधवरावमहोदस्य गृहे लब्धा, 'कु१.'इत्युल्लिखिता।

५. **कुम्भारीया** - पू.प्र.वि.पी. ग्रन्थलायस्था। 'कु२.' इत्युल्लिखिता।

एतैश्चिह्नैः सह श्रीसवणूर गोविन्दमहोदयैः १८५६तमशाके यत् चतसृभिष्टिप्पणीसिः सह भेदोज्जीवनं प्रकाशितं तत् 'मु.' (मुद्रितपाठः) इत्युल्लिखितम्।

**सम्पादनपद्धतिः - शुद्धपाठोल्लेखः**

भेदोज्जीवनग्रन्थस्य षट् टिप्पण्यः प्राक् पृथक् प्रकाशिता आसन्। प्रायः अनुपलभ्यास्ताः सङ्गृह्य एकत्र प्रकाशनमस्य लक्ष्यमिति मान्यैः निदेशक-महोदयैः डा. आनन्दतीर्थ नागसम्पिगेमहाभागैः आदौ सूचितमासीत्। तदनुसारेण कार्ये प्रवृत्ते तत्रतत्र मुद्रितपाठेषु संशया उदैरयन्। तत्परिहाराय मातृकासु अवलोक्यमानासु न केवलं सन्दिग्धस्थलेषु, अपि तु तत्प्रागर्वाक्स्थलेष्वपि पाठभेदाः दर्यदृयन्त। विशेषतः हुलगीटिप्पण्यां पाठभेदाः समदृश्यन्त। तेषां परिशीलनेन शुद्धपाठः निर्धृतः। उदाहरणाय प्राति-निधिकतया अत्र मातृकापाः मुद्रितपाठश्च (आवरणयोः) प्रदर्श्यंते -

१. महारजनाद्युपाधिकभेदस्योक्तरूपाभावस्य(‘महारजताद्यौपाधिक-’) (अष्टममूलम्)

२. पूर्ववाक्यस्यैतावत्पर्यन्ताभिप्रायो (यद्वा पूर्ववाक्यस्यैतावत्पर्यन्ताभिप्रायो) (१०)

३. चक्षुरादेरालोकवत् (‘चाक्षुषालोकवत्’) (१२)

४. घटनावैधुर्यैण (‘घटनौवधुर्येण’) (१२)

५. कश्चिदेवाभावः कस्यचित् प्रत्यक्षः (‘कश्चिदेवाभावः कश्चित् प्रत्यक्षः’) (१३ कुम्भारिटिपत्पणिः)

६. प्रकृतपरामर्शजननेनानुमित्यप्रामाण्यसन्देहः (‘-परामर्शे जननेन-’) (२०)

७. विशेषनिषेधः शेषविधिं गमयतीति (‘विशेषनिषेधः । शेषविधिं गमयतीति’) (२६)

८. स्वप्रतियोग्यप्रतियोगिकत्वस्वभिन्नत्वोभयसम्बन्धेन (‘स्वप्रतियोगिमात्राप्रतियोगिकत्व-’) (३२)

९. मुखाध्यासस्थलेऽगतिरेव (‘मखादिस्थले गतिरेव’) (३५)

१०. निर्णयो भेदधीहेतुः (‘निर्णयो भावधीहेतुः’) (२)

एवं परश्शताः पाठभेदाः मातृकासु उपलब्धाः । एतैः पाठभेदैः अस्य प्रकाशनस्य मौल्यं नितरामभिवृद्धमिति विश्वसिवः ।

**‘इति पाठेन भाव्यमिति भाति’**

यत्र मातृकापाठः मुद्रितपाठश्च दोषयुक्त इति भातं तत्र सम्भावितपाठः

'इति पाठेन भाव्यमिति भाति' सति उल्लिख्य अधष्टिप्पण्यामुल्लिखितः । आहत्य उपत्रिंशत् सम्भावितपाठाः उल्लिखिताः । यथा -

१. हेतुर्मनदिदृष्टान्तः ('मनआदिदृष्टान्त' इति पाठेन भाव्यमिति भाति । ) (१९ हुलगीया)

२. इह च नात्मत्वविशेषेण विमतिः किन्तु जीवाः । परमात्मनो भिद्यन्ते न वेति । एवेति । परमात्मनोऽपि प्रवेशे दोष एवेति विरोधादिति । (*'-किन्तु जीवाः परमात्मनो भिद्यन्ते न वेत्येवेति परमात्मनोऽपि प्रवेशे दोष एवेति ।। विरोधादिति ।। ' इति पाठेन भाव्यम् ।) (५ मुद्गलार्यटिप्पणिः)

**'इदं वाक्यममुकपाठे नास्ति'**

पाठभेदेषु पदानामिव वाक्यानामपि आवापोद्वापा दृश्यन्ते । तत्र यस्मिन् पाठे यद्वाक्यं पदं वा न पठ्यते तदेवं प्रदर्शितम् । यथा-

'तत्तद्धर्मिणां विशिष्य साध्यशरीरे निवेशे पुनः सिद्धसादनतैव ।(इदं वाक्यं मु.पाठे नास्ति।)' इत्यादि। आहत्य उपचत्वारिंशत्स्थलेषु एवमुल्लेखः कृतः ।

**किं न कृतम् ?**

सर्वत्र भिन्नपाठयोः शुद्धाशुद्धपाठयोः कतरः शुद्धः इति, कुतः अशुद्ध इति च न निर्दिष्टम्। प्रायः भेदोज्जीवनसद्ग्रन्थाध्येतारः स्वयं शुद्धपाठनिर्धारणे समर्था इति भावेन इतोऽप्यतिबहुकालसापेक्षं तत्कर्म न निरूढम् ।

**'काशिकाविवृतिः'**

भेदोज्जीवनस्य षट्सु टिप्पणीषु श्रीकाशीतिरुमलाचार्य (तिम्मण्णाचार्य) रचिता काशिका अध्ययनपरम्परायामधिकतया स्वीकृता । कूलङ्कषतया अन्यूनानतिरिक्ततया विषयविवेचनमस्याष्टिप्पण्या वैशिष्टचम् । अस्या अभ्यासेन न केवलं मूलग्रन्थाशयः , अपि तु, अतिसूक्ष्मेक्षिकया विषयाः कथङ्कारं विवेचयितुं शक्यन्ते इत्यपि शक्यावगाहम् ।

पूर्णप्रज्ञविद्यापीठे काशिकापाठकाले विद्यार्थिनः बहुवारम् 'अस्या अपि काचित् विवृतिः यद्यभविष्यत्......' इति समुदगिरन् । एवं बहवः सन्तः अभिप्रयन्ति स्म । तन्मनसि निधाय स्ववचःशुद्ध्यै यथाशक्ति काशिकाविवृती रचिता । तया सह गुरूणां प्रो.डि. प्रह्लादाचार्याणां, विदुषां श्रीमदनन्त-तन्त्रिमहाभागानां तथा विदुषां श्रीवेङ्कटेशबायरिमहोदयानां टिप्पण्यः अस्यां समायोजिताः । एतत्सम्बन्धिविवरणं काशिकाविवृतेरादौ दत्तम् । काशिका-विवृतेः कतिपयभागः काशिकाया अधस्ताद्दत्तः । कारणान्तरात् शिष्टो भागः परिशिष्टरूपेण दत्तः । समयावकाशानानुकूल्यात् आन्तं विवृतिर्न रचिता । गुणपक्षपातिनः सुधियः तामिमां परिशीलयन्तु दोषांश्च संसूचयन्त्विति प्रार्थ्यते ।

**कृतज्ञताः**

'कृतघ्ने नास्ति निष्कृति'रिति प्राचीनोक्तिं मनसि निधायोपकारस्मरणं क्रियते । श्रीश्री१०८श्री विश्वेशतीर्थचरणाः न केवलं विद्यार्थिदशायां विद्यादिदानेन किन्त्वध्यापकावस्थायामपि सर्वविधप्रोत्साहनेन समनुगृह्णन्तः

सन्ति । अत्र योयो गुणः सः सर्वस्तेषामनुग्रहफलमिति चिन्तयन्तौ तान् सभक्तिश्रद्धं वन्दावहे ।

प्रो.डि. प्रह्लादाचार्याः पारोक्ष्येण एतत्सम्पादने काशिकाविवृतिनिर्माणे च हेतवः । ते पूर्वं तैर्ग्रथितानि काशिकाविवरणान्यस्मिन् पुस्तके उपयोक्तुं समनुमत्य एतद्ग्रन्थमौल्यं समवर्धयन् । कालेकाले मार्गदर्शनमप्यकार्षुः तेभ्यो नमस्ततिः समर्प्यते ।

श्रीमदनन्ततन्त्रिमहोदयाः तत्रतत्र संशयानपाहार्षुः काशिकाविवृतिं च परिशील्य वात्सल्यधारामवीवृषन् । तान् पौनःपुन्येन प्रणवावः ।

डा. व्यासनकेरे प्रभञ्जनाचार्याः कुत्राप्यप्राप्तं कतिपयटिप्पणिकृत्परिचयं तथा भेदोज्जीवनस्याप्रकटितटिप्पणिसूचीं च प्रदाय उपकृतवन्तः । तेषां वयमधमर्णाः ।

एतत्कार्यकरणे प्रेरितवतः , समुचितस्थले मार्गं प्रदर्शितवतः, ससौलभ्यं सर्वविधस्वातन्त्र्यं प्रदाय प्रोत्साहितवतश्च मान्यान् निदेशकमहोदयान् डा. ए.वि. नागसम्पिगे महाभागान् कथमभिनन्दयाव इति न जानीवहे ।

अस्माकं मित्रमणयः डा. वीरनारायणपाण्डुरङ्गीमहोदयाः विशेषतः उल्लेखानामाकरग्रन्थान्वेषणे साहायकमाचरन् । तेषां स्नेहसम्बन्धः वरीवर्धतामिति भगवन्तं प्रार्थयावहे । विद्वांसः सि आर् प्रदीपसिंहाचार्याः नानाहस्तलिखितग्रन्थानावयोर्दृष्टिपथमानीय सहकारितामवाक्षुः । उल्लेखानामाकरग्रन्थान्वेषणेऽपि साह्यमकुर्वन् । तेषामुपकारं नितरां स्मरावः ।

पूर्णप्रज्ञसंशोधनालयस्य संशोधकः युवविद्वान् श्रीभीमसेनः हुलगीटिप्पण्य
द्रेत-हस्तलिखितपाठयोः तुलनामल्पीयसा कालेन आश्चर्यकरवेगेन
ाय पाठभेदानां पट्टिकामारचयत्। तेषु पाठभेदेषु यथोचिता आवाभ्या
ष्टिप्पणिरूपेण निर्दिष्टाः। तेन भगवती सारस्वतश्रीः इतोऽप्यतिशये
द्गत्ताकार्याणि कारयतु इति आशास्वहे। श्रीमाधवरावमहोदयाः नाना
तलिखितग्रन्थान् प्रदायोपाकार्षुः तेषां वयमधमर्णाः।

टङ्कितस्य विस्तृतस्यास्य अक्षरपरिशोधने पूर्णप्रज्ञविद्यापीठे
ोज्जीवनाध्येतारः परोविंशतिविद्यार्थिनः श्रीहनुमन्ताचार्यवरखेडिमहोदया
ा श्री डि. के. नागराजाः सात्मजाः साह्यमकार्षुः। तेषामुपकारं
स्मरावः। सम्पादितस्यास्य पुटसंयोजनं श्रीसुब्बण्णमहोदयाः सुन्दरं सश्रद्ध
निरवहन् तान् ,एवं समग्रग्रन्थस्य प्रधानटङ्ककान् श्रीअञ्जनप्रसादांश्च
कृतमहोपकाराय स्मरावः।

सर्वान्ते कृतिरियं विदुषां करकमलयोरर्पिता।

विद्वांसः प्रमाणम्।

**डा. एच्. सत्यनारायणाचार्यः**

**श्रीतिरुमलकुलकर्णी**

# श्रीव्यासतीर्थप्रशस्तिः

मायातन्त्रामरारिस्मयमपनयतो मध्वसिद्धान्तनाम्नो
नेत्राणीव त्रयोऽपि त्रिजगति नृहरेरिन्धते यत्प्रबन्धाः ।
यद्वागद्वैतविद्याचलकुलकुलिशप्रौढिमाढौकते सः
श्रेयो भूयो विदध्यात्सुमहितमहिमा सम्प्रति व्यासराजः ॥

**(श्रीवादीन्द्रतीर्थाः)**

भो! भो! मत्सरकुत्सितान् सुमतयो! दुर्वैदुषीगर्वितान्
आकाशादवतारभागिन इवाहंयून् समाढौक्य किम् ।
श्लाघाकम्पनमेकमेव शिरसः श्रीव्यासयोगीशितु-
र्मेरूणां शतमर्हति क्षितितले विद्यासु विद्यावतां ॥

**(श्रीव्यासयोगिचरितम्)**

ब्रह्मण्यतीर्थचरणश्रीपाण्यरणिसम्भवः ।
मध्वोक्तिमारुतेतोऽस्तु व्यासाग्निर्मत्तमश्छिदे ॥

**(श्रीकुम्भारिवासुदेवाचार्याः)**

वाणी यस्य सतां सुधारसकरी माधुर्यसारोपमा
स्वातन्त्र्यासिकठोरतेजितमहाप्रासाग्रधारा सताम् ॥
दृष्टादुष्टजनाघपुण्यफलसम्प्राकारितो व्यासराट्
सोऽयं मे दिशताद्गुशङ्कविशिरःपट्टाग्रभूषामणिः ॥ ६ ॥

**(श्रीमुद्गलानन्दतीर्थाचार्याः)**

# विषयानुक्रमणिका


| | |
|---|---|
| अनुग्रहसन्देशः | v |
| Director's Note | vii |
| भूमिका | ix-xxxix |
| विषयानुक्रमणिका | xli-xliii |
| **भेदोज्जीवनम्** | **१-५५१** |
| मङ्गलाचरणम् (मूलसङ्ख्या १) | १ |
| **पूर्वपक्षग्रन्थः(२-११)** | **१४-१५६** |
| भेदे प्रत्यक्षनिरासः(२) | १४ |
| भेदे अनुमाननिरासः(३) | २६ |
| भेदे आगमनिरासः(४) | ६४ |
| अभेदे प्रत्यक्षकथनम्(४) | ६४ |
| अभेदे अनुमानप्रदर्शनम्(४-११) | ६४-१५४ |
| विमता आत्मानः ...(४,५) | ६४-९२ |
| मूलम् ५ | ७८ |
| विमतानि शरीराणि ...(६) | ९३ |
| भेदो मिथ्या भेदत्वात् ...(७) | १०७ |
| विमतं तात्त्विकस्वान्तर्भेदहीनम् ...(८-११) | १२६-१५४ |
| मूलम् ८ | १२६ |
| मूलम् ९ | १३६ |
| मूलम् १० | १४३ |

| | |
|---|---|
| मूलम् ११ | १५४ |
| दे आगमोल्लेखः(११) | १५४ |
| **ान्तग्रन्थः(१२-३६)** | **१५७-५५१** |
| श्वरभेदे प्रत्यक्षम्(१२,१३) | १५७-१९४ |
| मूलम् १२ | १५७ |
| मूलम् १३ | १८४ |
| अनुमानानि(१४-२५) | १९५-३७७ |
| मूलम् १४ | १९५ |
| मूलम् १५ | २२२ |
| मूलम् १६ | २३२ |
| मूलम् १७ | २४९ |
| मूलम् १८ | २५४ |
| मत्वस्य जातित्वसाधकानुमानानि (१९-२३) | |
| मूलम् १९ | २६२ |
| मूलम् २० | २८० |
| मूलम् २१ | ३०२ |
| मूलम् २२ | ३१७ |
| मूलम् २३ | ३२४ |
| मूलम् २४ | ३३१ |
| मूलम् २५ | ३७२ |
| आगमाः(२६,२७,२८) | ३७८-४१३ |
| मूलम् २६ | ३७८ |

| | |
|---|---|
| मूलम् २७ | ३९० |
| मूलम् २८ | ४०१ |
| ज़डभेदे प्रत्यक्षम् (२८) | ४०१ |
| ज़डभेदे अनुमानम् (२९-३२) | ४१४-४७६ |
| मूलम् २९ | ४१४ |
| मूलम् ३० | ४२२ |
| मूलम् ३१ | ४२७ |
| मूलम् ३२ | ४४३ |
| अभेदे प्रत्यक्षनिरासः (३३) | ४७७ |
| अभेदे अनुमाननिरासः (३३-३६) | ४७७-५५१ |
| मूलम् ३३ | ४७७ |
| मूलम् ३४ | ४९० |
| मूलम् ३५ | ५०१ |
| मूलम् ३६ | ५३९ |
| अभेदे आगमनिरासः (३६) | ५३९ |
| अन्तमङ्गलम् | ५३९ |
| परिशिष्टम् - १ (उल्लिखितवाक्यानां सूची) | ५५३ |
| परिशिष्टम् - २ (काशिकाविवृतेः शिष्टो भागः) | ५६३ |

०-०-०

# भेदप्रमाणवचनानि

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥
समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः ।
जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥

**(आथर्वणोपनिषत् ५-१)**

यदा पश्यः पश्यते रुग्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।
तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ।'

**(आथ.उ.३-१)**

पुमान् रेतः सिञ्चति योषितायाम् । बह्वीः प्रजाः पुरुषात्सम्प्रसूताः

**(आथ.उ.३-५)**

तद्गुणसारत्वात् तद्व्यपदेशः (ब्र.सू.)
इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ **(भ.गी. १४-२)**

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । **(भ.गी.१५-१७)**

अधिष्ठानं च सदृशंतथ्यवस्तुद्वयं विना ।
न भ्रान्तिर्भवति क्वापि स्वप्नमायादिकेष्वपि **(अनु.व्या. ३-१)**

पञ्चभेदांश्च विज्ञाय विष्णोः स्वाभेदमेव च ॥
निर्दोषत्वं गुणोद्रेकं ज्ञात्वा मुक्तिर्नचान्यथा ।

**(महाभारततात्पर्यनिर्णयः १-८१)**

भिन्ना जीवाः परो भिन्नस्तथाऽपि ज्ञानरूपतः ।
प्रोच्यन्ते ब्रह्मरूपेण वेदवादेषु सर्वशः । **(भागवततात्पर्यम्)**

॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

श्रीव्यासतीर्थविरचितं

# भेदोज्जीवनम्

(१) स्वभावतः स्वतन्त्रत्वप्रमुखैर्निखिलैर्गुणैः ।
विभिन्नो विश्वतो विष्णुर्जयताज्जगदीश्वरः ॥

(१) भगवन्तरायकृतभेदोज्जीवनभावप्रदीपः –

स्वतः स्वातन्त्र्येणासमसुखमुखैः सर्वसुगुणैः
सुपूर्णं निर्दोषं निखिलचिदचिद्भिन्नमनिशम् ।
भजे श्रीमत्पूर्णप्रमतिगुरुराद्धान्तकमल-
स्थिरावासं व्यासं चिदभयकराम्भोजयुगलम् ॥ १ ॥

प्रणम्य श्रीमदानन्दतीर्थसच्चरणाम्बुजम् ।
जयराजमुनीन्व्यासमुनीनस्मद्गुरूनपि ॥ २ ॥

तदनुग्रहतो भेदोज्जीवनं व्याकरोम्यहम् ।
उपजीव्य महद्वाचं यथामति हरेर्मुदे ॥ ३ ॥

श्रीमद्व्यासतीर्थपूज्यचरणो मायिमतनिकृन्तनं भेदोज्जीवनं वितन्वन् विघ्नविघाताद्यर्थं वर्तिष्यमाणग्रन्थोपक्षेपाय तदुपयोगिविशेषणवत्तया विष्णुं स्तुवंस्तदुत्कर्षज्ञानं प्रार्थयते – स्वभावत इति ॥ जगदीश्वरो विष्णुर्जयतात् । उत्कृष्टो वर्तातामिति योजना । जिधातोः सकर्मकत्वेऽप्यत्रोत्कर्षप्राप्त्यर्थकत्वादकर्मकः प्रयोगः । यथोक्तम् –

'जयेर्जयाभिभवयोराद्येऽर्थेऽसावकर्मकः ।
उत्कर्षप्राप्तिराद्योऽर्थो द्वितीयार्थे सकर्मक' इति ।

अत्र नित्योत्कर्षवतोऽपि भगवत उत्कर्षप्राप्तिप्रार्थना `जय जय जह्यजामजिते'त्यादाविव तज्ज्ञापकाभिप्रायत्वादुपपन्ना । यथोक्तम् –

`सर्वदा जयतो विष्णोर्जयस्तस्य प्रकाशनम् ।
श्रवणं दृष्टिरित्यादिप्रार्थ्यं तज्ज्ञापनं स्मृतम् ।
शृणोति पश्यति ह्येष जयतीत्यादिकं स्वतः ।
जय पश्य शृणुष्वेति तत्तज्ज्ञापनमेव त्वि'ति ।

एके तु भगवदुत्कर्षस्य नित्यसिद्धत्वेऽपि भाविकालसम्बन्धित्वेन तदिच्छाया भगवत्प्रीतिहेतुत्वेन जयतादिति भाविकालसम्बन्धित्वेनोत्कर्षेच्छार्थकलोट् उपपन्नः। राज्ञ एवमेवोत्कर्ष उत्तरत्रापि स्यादितीच्छावत्सु राज्ञः प्रीतिदर्शनादित्याहुः। तच्चिन्त्यम् । भगवदुत्कर्षस्य नित्यसिद्धत्ववद्राजादीनां भाविकालसम्बन्ध्युत्कर्षस्यानिश्चितत्वात्तदिच्छावत्सु राजप्रीतेर्युक्तत्वेऽपि नित्यसिद्धभगवदुत्कर्षविषये तादृशेच्छायाः प्रीतिहेतुत्वायोगेन तस्या अकर्तव्यत्वात् । अत एव महाभारततात्पर्यनिर्णये श्रीकृष्णसत्यभामाभ्यामदितिदत्ताशीर्वचनस्यासुरावेशादज्ञानमूलकत्वमुक्तम् –

`तमासुरावेशवशादजानती सत्यां च सर्वप्रभवौ जगत्प्रभू।
निर्दोषसौख्यैकतनू शुभाशिषस्ताभ्यां ददौ सोऽदितिरात्मपुत्रवदि'ति ।

अन्यथाऽदित्याशीर्वचनस्याप्युक्तरीत्या भगवत्प्रीतिहेतुत्वापातात्तेन तस्यासुरावेशादिमूलकत्वोक्त्ययोगादिति ॥ केचित्तु विष्णुर्जगत् दुष्टकृतविघ्नादिकं विश्वं जयतादभिभवत्वित्यर्थ इति व्याचक्षते । अपरे तु जगत् श्रुतितात्पर्यानभिज्ञमद्वैतिवादिजातं जयतान्मत्कृतभेदोज्जीवनेन परा

भावयेत् । अन्तर्णीतणिजर्थोऽयमिति व्याचक्रुः ।

ननु कथं विष्णोर्जगदीश्वरत्वं नियम्यनियामकभावस्य भेदव्याप्तत्वात् । तस्य च विलक्षणधर्मयोगनिबन्धनत्वादित्यतो जगद्विलक्षणधर्मवत्त्वेन विष्णोस्ततो भेदं साधयति । **स्वतन्त्रत्वप्रमुखैरित्यादिना** । निखिला निश्शेषाः खिला अपूर्णा न भवन्तीति निखिलाः प्रत्येकं निरवधिकाश्च । तैर्गुणैर्ज्ञानानन्दबलादिभिर्निमित्तैर्विनश्वतश्चेतनाचेतनात्मकाज्जगतो विभिन्न इति । भेदाभेदमतनिरासाय वीत्युपसर्गः । अत्यन्तभिन्न इत्यर्थः । भेदस्याविद्याद्युपाधिकृतत्वमतनिरासायोक्तं स्वभावत इति । विभिन्न इति सम्बन्धः । वीत्युपसर्गलब्धार्थकथनमेवैतत् । अत्यन्तभेदस्यानौपाधिकत्वनियमात् । ननु न विष्णुर्निखिलपूर्णगुणश्चेतनत्वाद्देवदत्तवदिति चेन्न । अस्यानुमानस्यास्वतन्त्रत्वरूपोपाधिदुष्टत्वादिति भावेनोक्तं **स्वतन्त्रत्वप्रमुखैरिति** । स्वतन्त्रत्वस्य निखिलपूर्णगुणत्वोपपादकत्वात्प्रमुखत्वोक्तिः । यथोक्तं **न्यायविवरणे –`स्वतन्त्रस्य पूर्णगुणत्वनियमादि'ति** ।

**`यदधीना गुणाश्चैव दोषा अपि हि सर्वशः ।**

**कथं तस्य गुणा न स्युः स्युर्दोषाश्च कथं पुनः' इत्यनुव्याख्याने च ।**

स्वतन्त्रत्वं च स्वसत्तादौ परानपेक्षत्वं विवक्षितम् । स्वेच्छामात्राधीनप्रवृत्तिमत्त्वं वा । केचित्त्वनधीनत्वमेव स्वतन्त्रत्वं विवक्षितमित्याहुः । तच्चिन्त्यम् । तस्य स्वतन्त्रशब्देनालाभात् । स्वस्य तन्त्रोऽधीनो हि स्वतन्त्रः । भगवति स्वाधीनत्वस्य सत्त्वेनानधीनत्वाभावादसम्भवापत्त्या पराधीनत्वस्यावश्यं[1] विवक्षणीयत्वाच्च । अत एवोक्तमनुव्याख्याने -

---

[1] `परानधीनत्वस्य-' इति पाठेन भाव्यमिति भाति ।

'स्वेच्छानुसारितामेव स्वातन्त्र्यं हि विदो विदुः' इति । 'स्वतन्त्रः स्वेच्छाधीनप्रवृत्तिः' इति तत्त्वोद्योतटीकायां च । एतेन नियम्यनियामकभावस्य भेदव्याप्तत्वेनैकस्मिन्भगवति कथं स्वाधीनत्वरूपस्वतन्त्रत्वोपपत्तिरिति निरस्तम् । स्वेच्छानुसारिप्रवृत्तेरेव स्वतन्त्रशब्दार्थत्वात् । इच्छाप्रवृत्योश्च भेदाभावेऽपि तत्प्रतिनिधेर्विशेषस्य सद्भावात्तद्बलेन नियन्तृनियम्यतोपपत्तेरिति ॥ अत्र केचित् । ईशितव्येन जगता सम्बन्धाभावे तदीश्वरत्वं न सम्भवतीत्यत उक्तं विश्वतो विष्णुरिति । विश्वस्मिन्व्याप्त इत्यर्थ इति व्याचक्षते । तदपि चिन्त्यम् । जगत्यस्थितस्यापीश्वरस्य तन्नियमनोपपत्तेः । परं केवललीलयैव जगति स्थितिरीश्वरस्य । यथोक्तमनुव्याख्याने –

'तत्र तत्र स्थितो विष्णुस्तत्तच्छक्तिप्रबोधकः ।
दूरतोऽप्यतिशक्तः स लीलया केवलं प्रभुः' इति ।

(१) मुद्गलार्यतनूजानन्दतीर्थाचार्यविरचितभेदचिन्तारत्नम्-

निसर्गस्वातन्त्र्यप्रमितिसुखसौन्दर्यकरुणा-
मुखैर्लोकव्रातात्स्वगुणनिचयैर्गाढमितरः ।
हरिः श्रीमानस्मात्स्थिरतरभिदा भिन्नजगत-
स्सदा साक्षादीशो जयति जगति श्रीपरिवृढः ॥ १ ॥

पूर्णबोधाङ्घ्रयार्यांश्च व्यासराजगुरूनपि ।
नत्वा तत्कृपया कुर्वे भेदोज्जीवनविस्तृतिम् ॥ २ ॥

प्राचीनप्रपञ्चितमपि पञ्चविधं भेदप्रपञ्चं विक्षिप्तं सङ्क्षेपादिना स्फुटीकरिष्यन् जिज्ञासाजननाय तमेवोपक्षिपन् प्रारिप्सितपरिसमाप्तये

स्वेष्टदेवताशिषमाशास्ते ॥ स्वभावत इति ॥ अत्र स्वतन्त्रत्वस्य प्रमुखत्वं नाम स्वेतरसकलगुणसाधकत्वम् । यथाऽऽहुराचार्याः - `स्वतन्त्रत्वात् सुखसज्ज्ञानशक्तिपूर्वैर्गुणैः पूर्ण' इति । विश्वतो विभिन्न इति सम्बन्धः । वीत्युपसर्गो भेदाभेदनिषेधाय । विश्वत इत्युक्त्या तत्राप्यवान्तरभेद उपक्षिप्तः । एकस्य विश्वत्वायोगात् । मिथ्यागुणैः सत्यत्वालाभात्स्वभावत इति ॥ प्राप्तेरिति शेषः । स्वभावतो विभिन्न इति वा सम्बन्धः । तदपि भेदस्योपाध्यायत्तत्त्वनिषेधाय । प्रयोगश्च विष्णुर्विश्वप्रतियोगिकपारमार्थिकभेदाधिकरणं विश्वावृत्तिपारमार्थिकगुणाधिकरणत्वात् । यो यदवृत्तियत्सत्ताकगुणाधिकरणं स तत्प्रतियोगिकतत्सत्तासमानसत्ताकभेदाधिकरणम् । यथा घटः पटभिदाधिकरणमिति । गुणपारमार्थ्यं च `सत्यस्सो अस्य महिमा' इत्यादि प्रमाणसिद्धमिति भावः । अप्रसिद्धविशेषणता च न दोष इति वक्ष्यति । जगदीश्वर इति भेदे युक्त्यन्तरोक्तिः । शत्रूनित्यध्याहरेणाभिभावयतादिति वाऽर्थः । त्वमित्यध्याहारेण मध्यमपुरुषो वा । `आशिषि[1] लिङ्लोटाविति ' स्मरणादाशिषि लोट् । विष्णोर्जय एव स्वस्याशासितेति स्वस्यासीस्त्वं स्वापेक्षया न तु विष्ण्वपेक्षयेति ज्ञातव्यम् । तेन पूर्णकामे कथमाशीर्वचनमिति निरस्तम् ।

---

1 `-आशिषि लोटा विष्णोर्जय एव स्वस्याशासिषतेति स्वस्याशीस्त्वं-' मु. । अत्र वाक्यमध्ये एवं पाठः सम्भाव्यते `-विष्णोर्जय एव स्वस्याशासित इति आशीस्त्वं स्वापेक्षया-'

## (१) कुम्भारिवासुदेवाचार्यकृतभेदचन्द्रिका -

प्रमितासहवासिधर्मवासं मयि सम्भावयतेति भावनाय ।
नरसिंहशरीरमादधानो मयि मूढेऽस्तु सरस्वतीं दधानः ॥ १ ॥
ब्रह्मण्यतीर्थचरणश्रीपाण्यरणिसम्भवः ।
मध्वोक्तिमारुतेतोऽस्तु व्यासाग्निर्मत्तमश्छिदे ॥ २ ॥
मायिमत्तेभकुम्भारिवासुदेवो हृदेर्मुदे ।
हर्यालम्बो वितनुते भेदोज्जीवनटिप्पणीम् ॥ ३ ॥

श्रीमद्व्यासतीर्थपरमहंसो विष्णुविश्वक्षीरनीरभेदोज्जीवनं करिष्यन्विघ्नविघातादिप्रयोजनाय वर्तिष्यमाणग्रन्थसङ्गत्युपयोगिविशेषणविशिष्टत्वेन विष्णुं स्तुवन्नाशास्ते ॥ **स्वभावत इत्यादिना** ॥ जगदीश्वरो जयतात् उत्कृष्टो वर्तताम् । उत्कर्षप्राप्तावयमकर्मकः । कर्मणो धात्वन्तर्गतेः[1] । `धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोप्रसङ्ग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया । जयेर्जयाभिभवयोराद्येऽर्थेऽसावकर्मकः । उत्कर्षप्राप्तिराद्योऽर्थो द्वितीयेऽर्थे सकर्मक' इत्युक्तेः । यद्यपि भगवत उत्कर्षेण वर्तनस्य नित्यसिद्धत्वात् असिद्धेष्टप्रार्थनारूपाशीरर्थको लोट् न युज्यते । तथाऽपि दुर्वादिभिर्भगवतो विश्वाभेदस्य साधितत्वेन साधूनां तस्य विश्वोत्कर्षप्राप्तिबुद्धेरसिद्धत्वेन लोकदर्शनभाषया `जय जय जह्यजा'मित्यादविव लोट् युज्यते। अभीष्टार्थकोऽयं वा लोट् । यद्वेश्वरो जगद्गच्छति श्रुतिमार्गादिति श्रुतितात्पर्यानभिज्ञमद्वैतवादिजातं जयतात् । अन्तर्भूतणिजर्थोऽयं जिधातुरभिभावयेत् मत्कृतभेदोज्जीवनेन तत्पराभावयेदिति

1 `-गतः' मु.

भावः । एवञ्च ल्लोऽपि यथाश्रुत एव सम्बध्यते[1] । ईशितव्येन जगता सम्बन्धाभावे तदीश्वरत्वं न सम्भवतीत्यत उक्तं विश्वतो विष्णुरिति । सप्तम्यन्तात्तसिः । विश्वस्मिन्व्याप्त इत्यर्थः । यद्वा विष्णुर्जयतादिति सम्बन्धः । जगदीश्वरपदं तत्सद्भावे प्रमाणसूचनपरम् । विष्णुविश्वयोः सति भेदे तत्र व्याप्तिस्तदीश्वरत्वं वा स्यादित्यत उक्तं स्वभावतो न तूपाधितो विभिन्न इति। पञ्चम्यास्तसिः। विश्वत इति देहलीप्रदीपवदुभयत्राप्यन्वेति। तत्र किं मानमत उक्तं स्वभावतः स्वतन्त्रत्वप्रमुखैर्निखिलैर्गुणैरिति । ज्ञप्तिसाधनत्वेन तृतीयाप्रातिपदिकानां ज्ञानेषु लक्षणा वा। तृतीयार्थे तसिः। स्वभावतः स्वरूपभूतैर्न त्वविद्याद्युपाधिप्रयुक्तैः स्वतन्त्रत्वं प्रमुखं मुख्यमेषां सर्वज्ञत्वसर्वशक्तित्वपूर्णानन्दत्वादीनां तैस्तद्गुणसं ज्ञानश्चायम् । तेन स्वतन्त्रत्वस्यापि समासार्थेऽन्तर्भावः । व्यतिरेकिणश्चैते विश्वभेदे हेतवः । चेतनभेदाचेतनभेदयोः प्रत्येकं प्रसिद्धोर्विष्णौ साधनान्नासिद्धिः । न चासाधारण्यम् । द्वित्वरूपसाध्यतावच्छेदकावच्छिन्नवत्त्वेन निश्चिताद्धेतोरव्यावृत्तेः । एकाधिकरणान्तर्भावेन साध्यतावच्छेदकावच्छिन्नसाध्याप्रसिद्धावप्यधिकरणद्वयान्तर्भावेन तत्प्रसिद्धेश्च । अन्यथा पृथिव्यां त्रयोदशभेदानां साध्यत्वपक्षः परेषामप्यनुपपन्नः स्यात् । अथवा वक्ष्यमाणरीत्या विश्वतादात्म्याभावस्य साध्यत्वादभावसाध्यके व्यतिरेकिणि साध्याप्रसिद्धेरदूषणत्वात् । साध्यविशेष्यकाया एवानुमितेः प्रथमं सम्भवान्नानुपपत्तिः । अवशिष्टमग्रे वक्ष्यते ।

ननु किमिदं स्वतन्त्रत्वम् ? स्वाधीनत्वमिति चेन्न । स्वस्यानुगतस्यैकस्याभावेन भगवदधीनत्वस्य पर्यवसाने नियम्यनियामकभावस्य

---

[1] `सम्बन्धः' मु.

भेदव्याप्यस्य भेदाभावे एकस्मिन्नयोगेनासिद्धेर्विरोधाच्च । विशेषणानुपादाने च विश्वस्मिन्नपि सत्त्वेन व्यभिचारः। न च स्वतन्त्रत्वं `स्वयं दासास्तपस्विन' इत्यत्र स्वयं दासत्वं स्वातिरिक्तदासशून्यत्वमिव स्वातिरिक्तनियामक-शून्यत्वं तच्च भगवत्यस्तीति नासिद्धिर्न वा विरोधः। नास्ति च विश्वस्मिन्निति न व्यभिचार इति वाच्यम् । अब्भक्षो वायुभक्ष इत्यादाविवासाधारण्येन व्यपदेशमाश्रित्य स्वमात्रतन्त्रत्वं स्वमात्राधीनत्वम् । स्वाधीनत्वे सति स्वान्यानधीनत्वमिति स्वशब्दादुपस्थितिसम्भवेन तत्र भावांशस्य वैय्यर्थ्यादविवक्षणेन स्वान्यानधीनत्वस्य शब्दादुपस्थितिसम्भवेऽपि स्वातिरिक्तनियामकशून्यत्वस्य स्वतन्त्रशब्दादुपस्थितेः । न च स्वान्यानधीनत्वमपि तत्तुल्यसत्ताकमितीदमेव स्वतन्त्रत्वमिति वाच्यम् । भगवदन्यानधीनत्वस्यापि भगवतीव विश्वास्मिन्नपि सत्त्वेन व्यभिचारानिरासात् । न च भगवदन्यस्वोत्तमाधीनत्वस्य विश्वास्मिन्नसत्त्वेन व्यभिचार इति वाच्यम् । तथाऽपि लक्ष्म्यां तदपरिहारदिति चेत् । उच्यते । स्वाधीनत्वांशस्येव भगवदन्यानधीनत्वांशस्यापि वैय्यर्थ्येनाविवक्षितत्वात् । अनधीनत्वमेव स्वतन्त्रत्वम् । तच्चास्ति भगवति । नास्ति च विश्वस्मिन्निति न कश्चित्क्षुद्रोपद्रवः । अनेनैव पद्येन विषयादिकं सूचितं भवति । विश्वभिन्नो विष्णुर्विषयः । तज्ज्ञानमवान्तरप्रयोजनम् । मोक्षः परमप्रयोजनम् । तत्कामोऽधिकारी । यथा योग्यं सम्बन्धः ।

## (१) हुलगीश्रीनाथाचार्यकृता भेदसञ्जीविनी -

हरिः ओम्

नुमः सत्यवतीसूनुं यत्प्रसादाच्छ्रियं धियम् ।
कीटोऽपि निश्चलां प्राप लोककौतुककारिणीम् ॥ १ ॥

नत्वा नन्दजयव्यासमुनिप्रभृतिसद्गुरून् ।
श्रीनाथनामा तनुते भेदसञ्जीवनीं शुभाम् ॥ २ ॥
बह्व्यः सन्त्यत्र टिप्पण्यस्तथाऽप्येषा कृतिर्मम ।
नोपेक्ष्या तदनुक्तार्थलेशस्याप्यत्र शंसनात् ॥ ३ ॥

ग्रन्थादौ मङ्गलं कृत्वा निबध्नाति ॥ स्वभावत इति ॥ जयतादित्याशीर्लोटो भाविकालसम्बन्धित्वेनेच्छार्थः[1]। भाविकालस्येदानीमसत्वात्[2] तत्सम्बन्धित्वेनेच्छायुक्तैव । उक्तेच्छायास्तदकारणत्वेऽपि[3] तादृशेच्छावत्सु भगवत्प्रीतिर्भवत्येवेति तादृशेच्छा कर्तव्यैव । `राज्ञ एवमेवोत्कर्षोऽस्तूत्तरत्रापी'तीच्छावत्सु[4] राज्ञः (राज्ञां) प्रीतिदर्शनात्। अतो भगवदुत्कर्षस्य सर्वदा सिद्धत्वात्कथमत्रेच्छेति शङ्काऽनवकाशः। विभिन्न इत्यत्र वीत्युपसर्गेण भेदे सत्यत्वमनौपाधिकत्वं तत एव मुक्तावप्यनिवर्त्यत्वमभेदासामानाधिकरण्यं च लभ्यते । तदुपपादनाय स्वभावत इत्यादिकमुपात्तम् । स्वभावत एव विरुद्धधर्मवत्त्वे कदाचिदप्यभेदसत्त्वे तत्स्वरूपस्यैव निवृत्त्यापत्त्या कदाऽपि कथमप्यभेदो नास्तीति लभ्यते । स्वतन्त्रस्य सर्वनियामकस्य सर्वज्ञस्योपाध्यधीनभेदादिप्रयुक्तदुःखानुभवोऽत्यन्तासम्भवदुक्तक इति स्फोरणाय स्वातन्त्र्यस्यैव प्रथमतो ग्रहणं कृतम् ।

---

1 इच्छापदं हु.पाठे नास्ति ।

2 `असिद्धत्वात्' - हु.

3 `-युक्तेनैवेत्युक्तेच्छायाः' इति मु.पाठः प्रमादबहुलः ।

4 `राज्ञ एवमेवोत्कर्षस्तूत्तरत्रापि-' इति मु.पाठः दुर्बोधः । हु.पाठस्यायं भागः त्रुटितः । अतः 'उत्कर्षस्तु' इत्यस्य स्थाने 'उत्कर्षोऽस्तु' इति पाठः सम्भावितः ।

## (१) काशीतिम्मण्णाचार्यकृतटिप्पणी -

**जन्माद्यस्य यतः शास्त्रगम्यमन्वयतः पृथक् ।**
**परमं ब्रह्म विष्ण्वाख्यमधिकं तदुपास्महे ॥**[1]

---

[1] श्रीः ॥ अथ भेदोज्जीवनटिप्पणी काशिकायाः टिप्पणी काशिकाविवृतिः ॥
श्रीगुरुभ्यो नमःश्रीगुरुराजो विजयते
समासव्यासतो योऽस्मत्सर्ववृत्तिनियामकः ।
मध्वहृत्कमलावासः प्रीयतां कमलालयः ॥
यद्ग्रन्थसततव्याख्यालब्धशक्तिलवाञ्जनाः ।
पराजयन्ते दुर्वादान् तं जयार्यगुरुं भजे ॥
श्रीव्यासराघवेन्द्राणां महामहिमशालिनां ।
विद्यामान्यमुनीनां च चरणावाश्रयेऽनिशम् ॥
यदनुग्रहसम्प्राप्तशक्त्या व्याख्या चिकीर्षिता ।
स्मारितव्यासतीर्थाय विश्वेशगुरवे नमः ॥
भेदोज्जीवनटिप्पण्याः काशिकाया यथामति ।
विवृतिः क्रियते सद्भिः प्रेरितेन यथोचितम् ॥
*प्रह्लादाचार्य-*तन्त्र्याख्यानन्तानां टिप्पणेस्तथा ।
*वेङ्कटेशगुरूणां च विषया अत्र टङ्किताः ॥
(एते *त्रयोऽपि महानुभावाः - श्रीडि.प्रह्लादाचार्याः, श्री अनन्ततन्त्रि आचार्याः तथा श्रीवेङ्कटेशबायरि आचार्याः - परमपूज्यानाम् उडुपीपेजावरमठाधीशानां श्रीश्री108 श्रीविश्वेशतीर्थचरणानां शिष्याः, प्रकृतकाशिकाविवृतिकर्तुः गुरवः । तत्र श्रीप्रह्लादाचार्यैः काशिकायाः तत्रतत्र अपूर्वं विवरणं १९९१तमे क्रिस्ताब्दे श्रीविद्यापयोनिधिप्रकाशनद्वारा प्राकाश्यं नीतः । सर्वाण्यपि तानि विवरणानि तेषामनुमत्या अत्र योजितानि । श्रीमदनन्ततन्त्रिआचार्यैः तथा श्रीवेङ्कटेशबायरिआचार्यैः पाठकाले छात्रसौकर्याय तत्रतत्र अतिसङ्क्षिप्तं विवरणमलेख्यत । तानि आधृत्य इयं काशिकाविवृती रचितेत्याशयः ।)

[1]अखिलापेक्षितमोक्षप्रयोजकपरदेवतोत्कर्षप्रतिपत्तिप्रतिबन्धकभेदविप्रतिपत्तिप्रतिषेधपूर्वकविभेदव्यवस्थापनाय प्रकरणमारभमाणः श्रीमद्व्यासतीर्थमुनिर्निरन्तरायपरिसमाप्तये प्रचयाय च परमेश्वरं प्रार्थयते ॥ **स्वभावत इति** ॥ यद्यपि भगवत्पादैरेव [2]सपरिकरं भेदो व्यवस्थापितः । तथापि तदेवात्र सङ्गृह्य सङ्क्षेपेणोपपाद्यत इत्यवैयर्थ्यम् । **विष्णुर्जयतात्** विश्वोत्कर्षेण [3]विज्ञातो वर्तताम् । नातो नित्यसिद्धविष्णोः उत्कर्षप्रार्थनानुपपत्तिः । नन्वस्य विश्वोत्कर्ष एव कथमत आह – **जगदीश्वर इति** ॥ नन्वनीश्वरजीवाद्यभिन्नस्य जगदीश्वरत्वमपि कथमत आह – **विश्वतो विभिन्न इति** ॥ विश्वशब्दो जीवजडार्थः । तद्भेदस्यौपाधिकस्याप्रयोजकत्वात्

---

श्रीव्यासतीर्थविरचितस्य भेदोज्जीवनाख्यप्रकरणग्रन्थस्य विशिष्टां व्याख्यां वितन्वन्तः श्रीकाशीतिरुमलाचार्याः ग्रन्थादौ मङ्गलमाचरन्ति - **जन्माद्यस्येति** ॥ यतः अस्य = जगतः जन्मादि यत् अन्वयतः = उपक्रमादितात्पर्यलिङ्गैः शास्त्रगम्यं, यत् पृथक् = जकतः भिन्नं, तत् अधिकं = सर्वोत्तमं विष्ण्वाख्यं परब्रह्म उपास्महे इत्यन्वयार्थः । उपासना च श्रवणमनननिदिध्यासनरूपा ।

[1] कृतमङ्गलाः व्याख्येयग्रन्थस्यावतारिकामारचयन्ति - **अखिलेत्यादिना** ।। अखिलापेक्षितो यो मोक्षः तस्य `भगवान् सर्वोत्कृष्टः' इति प्रतिपत्तिः प्रयोजिका । तस्याः `भगवान् सर्वभिन्नः न वा' इति भेदविप्रतिपत्तिः प्रतिबन्धिका । तस्या निषेधपूर्वकं पारमार्थिकभेदं संस्थापयितुं इदं प्रकरणमारब्धमित्याशयः ।

[2] ॥ **सपरिकरमिति** ॥ भेदभेदिनोः भेदो वा? अभेदो वा? भेदाभेदो वा? इत्यादिविकल्पे प्राप्ते भेदः अधिकरणस्वरूपमिति, वस्तुनि ज्ञाते सामान्यतः सर्वतो भिन्नत्वज्ञानं भवत्येवेत्यादिविषयसमर्थनपूर्वकं भेदः समर्थित इति भावः ।

[3] ॥ **विज्ञातो वर्ततामिति** ॥ तथा च उत्कर्षे शक्तस्य जिधातोः उत्कर्षप्रकारकज्ञाने लक्षणेति भावः ।

स्वाभाविकत्वलाभाय विशब्दः । तादृशभेदवत्त्वे हेतुर्गुणैरित्यन्तम् । गुणैरसाधारणप्रमापकैः । इत्थंभूतलक्षणे तृतीया । तादृशगुणज्ञाप्यविश्वविभेदवानित्यर्थः । कानि तानि प्रमापकाणीत्यतः – **स्वतन्त्रत्वप्रमुखैरिति** ॥ परानपेक्षसत्ताकत्वादिरूपस्वातन्त्र्यादेः कल्पितस्य स्वाभाविकभेदसाधकत्वायोगादाह – **स्वभावत इति** ॥ [1]स्वाभाविकैरित्यर्थः । अनेन श्रोतृप्रवृत्त्यङ्गभूतविषयादिकमपि सूचितम् । विश्वविभेदवद्विष्णुरेव विषयः । तस्य विश्वोत्कर्षज्ञानं प्रयोजनम् । तदिच्छुरधिकारी । यथायोगं सम्बन्ध इति ॥

## (१) शर्कराश्रीनिवासाचार्यविरचितटिप्पणी

**हरिः ओम् ।**

**रामं रमापतिं नत्वा श्रीमध्वं जययोगिनम् ।**

**व्यासतीर्थगुरुं भेदोज्जीवनं व्याकरोम्यहम् ॥**

इह खलु सुखमेव मे स्याद्दुःखं मनागपि मा भूदिति निखिलापेक्षितमोक्षस्य –

**`पञ्चभेदांश्च विज्ञाय विष्णोः स्वाभेदमेव च ॥**

**निर्दोषत्वं गुणोद्रेकं ज्ञात्वा मुक्तिर्नचान्यथे'ति**

पञ्चभेदज्ञानसाध्यत्वस्मरणात्तदर्थं प्रवृत्तमपि चिरन्तनशास्त्रमतिविततगम्भीरतया न मन्दानां सुखेन भेदज्ञापकमिति तदुक्तभेदप्रमाणान्येव सङ्गृह्य सङ्क्षिप्य च भेदोज्जीवनाख्यप्रकरणनिर्माणेन भेदज्ञानं जनयित्वा

---

[1] ॥ स्वाभाविकैरितीति ॥ ततश्च मूले स्वभावशब्दात् तृतीयाबहुवचने तसिः । स्वभावैः = स्वभावभूतैः = स्वाभाविकैः गुणैरित्यन्वय इत्याशयः ।

मन्दानुद्दिधीर्षुर्व्यासतीर्थमुनिः प्रारिप्सितपरिसमाप्त्यादिफलकशिष्टाचारादिप्रमाणकेष्टदेवतास्तवनप्रार्थनरूपं मङ्गलं कृत्वा शिष्यान्ग्राहयितुं प्रकरणादौ निबध्नाति – **स्वभावत इति** ॥ ननु देवदत्तः शत्रून्जयतीत्यादौ जिधातोः सकर्मकत्वदर्शनात्कथमत्र कर्माभाव इति चेन्न । जिधातोरभिभवार्थे सकर्मकत्वेऽप्युत्कर्षार्थे सकर्मकत्वाभावात् । यथोक्तं **जयेरित्यादिना** । प्रकृते चोत्कर्ष एव विवक्षितः । तथाच विष्णुर्जयतात् उत्कृष्टो भवतादित्यर्थः । यद्यपिभगवान्नित्योत्कृष्टः तथापि व्यक्तिविशेषाभिप्रायेणोत्कर्षप्रार्थनाया अत्र क्रियमाणत्वादाशीरर्थकलोड्प्रयोगोपपत्तिः । यद्वा, विवक्षाभेदेन जगत्पदं व्यस्तं समस्तं च तन्त्रन्यायेन पूर्वोत्तराभ्यां सम्बध्यते । तथाच विष्णुर्जगत् दुष्टविघ्नादिकं विश्वं जयतादभिभवत्वित्यर्थः । नन्वनिर्धारितस्वरूपस्य स्तुत्यादिकरणमनुपपन्नं, नच लक्षणेन विना स्वरूपनिर्धारणं भवतीत्यतो विष्णोर्लक्षणमाह – **जगदीश्वर इति** ॥ अत्र जगच्छब्देन जमुत्पत्तिं गच्छतीति व्युत्पत्त्या चेतनाचेतनात्मकप्रपञ्च उच्यते । पराधीनविशेषावाप्त्यादिरूपोत्पत्तेः सर्वसाधारण्यान्नात्र कश्चित्क्षुद्रोपद्रवः । अनेन जगन्नियामकत्वं लक्षणमुक्तं भवति । ननु नियम्यनियामकभावस्य भेदव्याप्तत्वात्प्रपञ्चेश्वरयोश्चभेदाभावादिदं लक्षणं न सम्भवतीत्यत आह – **विभिन्न इति** ॥ अत्र विश्वपदं चेतनात्मकविश्वपरम् । अत एव चेतनाचेतनात्मकविश्वभिन्नत्वमित्यनुपदमेव वक्ष्यति । तथाच चेतनाचेतनात्मकप्रञ्चचादत्यन्तभिन्नमित्यर्थः । अत्र वीत्युपसर्गेणात्यन्तभेदोक्त्या भेदाभेदवादियादवप्रकाशो निराकृतः । ननु भेदस्यौपाधिकत्वेन मुक्तावभावान्मुक्तचेतननियामकत्वं भगवतो न स्यादित्यत आह – **स्वभावत इति** ॥ स्वरूपत इत्यर्थः। विभिन्न इत्यनेनास्य सम्बन्धः । भेदस्य भेदकधर्मनियत्वात्तानाह –

**गुणैरिति** ॥ तेषां प्रपञ्चसाधारण्येन कथं भेदकत्वमित्यतोगुणान्विशिनष्टि – **स्वतन्त्रत्वप्रमुखैरिति** ॥ सत्तात्रैविध्ये परानधीनत्वं स्वतन्त्रत्वम् । तदेव प्रमुखं प्रधानं येषु ते स्वतन्त्रत्वप्रमुखाः तैरित्यर्थः । नन्वेषां गुणानामौपाधिकत्वेन मुक्तावभावान्न स्वरूपभेदनियामकत्वमित्यतोप्याह(तोवाह) – **स्वभावत इति** ॥ आद्यादिभ्य उपसङ्ख्यानात्तृतीयार्थे तसिः । स्वरूपभूतैरित्यर्थः । निखिलैरिति स्वरूपसङ्कीर्तनम् ॥ १ ॥

**(२) ननु कथं विष्ण्वाख्यस्य परब्रह्मणः स्वतश्चेतनाचेतनात्मक-विश्वभिन्नत्वम् । भेदे प्रमाणाभावात् । तथा हि । न तावज्जीवेश्वरभेदे प्रत्यक्षं सम्भवति । ईश्वरधर्मिकस्येश्वरप्रतियोगिकस्य वा भेदस्येश्वराप्रत्यक्षत्वेनाप्रत्यक्षत्वात् ।**

(२) (भ.) यदर्थं विश्वतो विभिन्नत्वं विष्णोर्विशेषणमुक्तं तत्समर्थयितुमाक्षिपति – **नन्वित्यादिना** ॥ विश्वशब्देन चेतनाचेतनात्मक-सर्वजगतो विवक्षितत्वाच्चेतनाचेतनात्मकेत्युक्तम् । एवं विष्णुशब्देन परब्रह्मण एव विवक्षितत्वाद्विष्ण्वाख्यस्य परब्रह्मण इत्युक्तमिति ध्येयम् । कुत एवमाक्षेप इत्यत आह – **भेद इति** ॥ विष्ण्वाख्यस्य ब्रह्मणो विश्वविभिन्नत्वाङ्गीकारे विश्वस्यापि ततो भेदोऽङ्गीकार्यः । न हि विष्णुर्विश्वभिन्नो विश्वं तु ततोऽभिन्नमिति सम्भवति । एवं चेतनाचेतनात्मक-विश्वस्यापि मिथो भेदोऽङ्गीकार्यः । अन्यथा चेतनाचेतनात्मकेति निर्देशस्यैवानुपपत्तेः । एवमेव चेतनानामचेतनानां च परस्परभेदोऽप्यङ्गीकार्यः । अन्यथा समस्तवाचिविश्वशब्दोपादानवैय्यर्थ्यापातात् । तथा च चेतनाचेतनात्मकविश्वप्रतियोगिकविष्णुधर्मिकभेदे वा विश्वधर्मिक-विष्णुप्रतियोगिकभेदे वा विश्वस्य परस्परभेदे वा चेतनानामचेतनानामपि

परस्परभेदे वा प्रमाणाभावादित्यर्थः । अत एव कथं विश्वविभिन्नत्वमिति विष्णुधर्मिकभेदस्य प्रस्तुतत्वेऽपि सर्वभेदसङ्ग्रहार्थं पुनर्भेदग्रहणम्। अन्यथा तस्य वैय्यर्थ्यापत्तेरिति ध्येयम् । यद्याप्याद्यपद्ये स्वतन्त्रत्व-प्रमुखैरित्यनुमानप्रमाणमुक्तम् । तथाऽपि तस्य प्रत्यक्षादिक्रमेणैव दूषणमभिधास्यन् शङ्कोत्थापनार्थमेव मुक्तिः । अभिधास्यति चैतद्दूषणं विमतौ भिन्नावित्यनुमानमाशङ्क्येति । एतदेव क्रमेणोपपादयति – **तथा हीत्यादिना** ॥ तावच्छब्दः क्रमार्थः । न तावज्जीवेश्वरभेदे न तावत्प्रत्यक्ष-मित्युभयत्रापि सम्बध्यते – **जीवेश्वरभेद इति** ॥ जीवादीश्वरस्य भेदे जीवस्येश्वराद्भेदे वेत्यर्थः । प्रत्यक्षं भवति । प्रमाणमिति शेषः । कुतस्तत्र प्रत्यक्षं प्रमाणं नेत्यत आह – **ईश्वरधर्मिकस्येति** ॥ जीवादीश्वरभेदस्ये-श्वराज्जीवभेदस्य वेत्यर्थः । भेदप्रत्यक्षे धर्मिप्रतियोगिनोरुभयोरपि प्रत्यक्षत्वं तन्त्रमिति भावः । एतेन विष्णोर्विश्वतो भिन्नत्वं कथमिति विष्णुधर्मिक-भेदमात्रस्य शङ्कितत्वेन तत्प्रतियोगिकभेदे प्रमाणाभावकथनमसङ्गतमिति शङ्कानवकाश इति ध्येयम् । केचित्तु जीवेश्वरभेदे इत्येतज्जीवप्रतियोगिक ईश्वरभेदे इति व्याख्याय तर्हीश्वरप्रतियोगिकस्य वेत्यप्रस्तुतकथनं कुत इत्याशङ्क्य दृष्टान्तार्थं तदुक्तिरिति व्याचक्षते । तच्चिन्त्यम् । ईश्वर-प्रतियोगिकभेदस्याप्युक्तरीत्या प्रस्तुतत्वसत्त्वात् । किञ्च विश्वविभिन्नत्वं विश्वप्रतियोगिकभेदवत्त्वं वा विश्वनिष्ठभेदप्रतियोगित्वं वा स्यात् । तदुभय-मपि न सम्भवति । भेदद्वये प्रमाणाभावादित्याशयेन न तावज्जीवेश्वरभेद इत्वादिग्रन्थो यथाश्रुत एवास्त्विति यदत्र व्याख्यानान्तरं तदपि चिन्त्यम् । विश्वतो विभिन्न इत्युक्ते विश्वप्रतियोगिकभेदस्यैवावभासात् । विश्वनिष्ठभेदप्रतियोगित्वस्यानवभासादिति ।

(मु.) पूर्वपक्षमुट्टङ्कयति – **नन्विति** ॥ परेण ब्रह्मण एव विश्वाभेदोक्ते-र्विष्णुर्विभिन्न इति व्यधिकरणमित्यतो विष्ण्वाख्यस्येति – **कथमिति** ॥ किं भेदे प्रमाणादैक्ये प्रामाणाभावाद्वा । आद्ये प्रत्यक्षादनुमानादागमाद्वा । द्वितीये प्रत्यक्षाभावादनुमानाभावादागमाभावाद्वेत्यर्थः । चेतनाचेतनेति विश्वपदव्याख्यानम् । तदवान्तरभेदोपक्षेपसूचनार्थं चेतनाचेतनात्मकेति । अन्यथाऽवान्तरभेदभिन्नमित्येवावक्ष्यत् ॥ **भिन्नत्वमिति** ॥ भेदं प्रति धर्मित्वं प्रतियोगित्वं चेत्यर्थः । अत्र विप्रतिपत्तिः । ईश्वरत्वोपलक्षिता चित् जीवत्वोपलक्षितचित्प्रतियोगिकधर्मिसत्तासमानसत्ताकानौपाधिककेवलभेदव ती न वेत्यादिरूह्या ॥ **ईश्वराप्रत्यक्षत्वेनेति** ॥ ससम्बन्धिकपदार्थप्रत्यक्षे सम्बन्धिप्रत्यक्षं तन्त्रम् । अन्यथा वाय्वाकाशसंयोगस्य वा वायुघटसंयोगस्य वा प्रत्यक्षत्वापातः । अत्रापीश्वरेति शुद्धं ब्रह्मैव विवक्षितम् । ननु तत्त्वविद्भिः सगुणस्य साकारस्य भिन्नत्वमुच्यते । पराभिप्रेतं तु ब्रह्म निर्गुणमिति व्यधिकरणो विवाद इति चेन्न । यत्परस्य निर्गुणं तदेव तत्त्वतः सगुणः साकार ईश्वरो न ततोऽतिरिक्तः कश्चिदिति विशेषैक्येन सामानाधि-करण्यात् । एतेन जीवजडानामतीन्द्रियाणामनतीन्द्रियाणां चान्योन्यभेदे प्रत्यक्षं निरस्तम् । न च सर्वत्र योगिप्रत्यक्षं मानम् । तच्च 'जुष्टं यदा पश्यति' इत्यादिप्रसिद्धमिति वाच्यम् । आगमनिरासेनैव निरसिष्यमाणत्वात् ।

(२) (कु.) विश्वभिन्नत्वनिर्वाहार्थमुत्तरग्रन्थ इति निर्वाहकत्वमेव सङ्गतिरित्याशयेन भगवतो विश्वभिन्नत्वमाक्षिपति – **नन्वित्यादिना** ॥ आक्षेपो न विष्णोः किन्तु भेदस्येत्याह – **भेदे प्रमाणाभावादिति** ॥ यद्यपि स्वतन्त्रत्वप्रमुखैर्निखिलैर्गुणैरिति प्रमाणमुक्तं तथाऽपि निर्गुणे ब्रह्मणि पक्षीकृते हेतूनां गुणानामसिद्धिः । सगुणपक्षीकारे औपाधिकभेदेना-

र्थान्तरतेत्यभिसन्धिनैवमुक्तिः । चेतनाचेतनात्मकविश्वभिन्नत्वे प्रमाणाभावं परिशेषेण साधयिष्यन् चेतनभेदे प्रत्यक्षं तावद्दूषयति – **न तावदिति** ॥ जीवेश्वरभेदे जीवप्रतियोगिकेश्वरभेदे ॥ **ईश्वरधर्मिकस्येति** ॥ जीवप्रतियोगिकस्येश्वरधर्मिकस्य भेदस्येश्वररूपधर्मिप्रत्यक्षाभावेनाप्रत्यक्षत्वादित्यन्वयः । ईश्वरप्रतियोगिकस्येति दृष्टान्तार्थो वा । वा इवार्थे । ततश्च जीवधर्मिकस्येश्वरप्रतियोगिकस्य भेदस्येश्वररूपप्रतियोगिप्रत्यक्षाभावेन जीवान्तररूपधर्मिप्रत्यक्षाभावेन च यथाऽप्रत्यक्षत्वं तथेत्यर्थः । अन्यथा तस्याप्रस्तुतत्वेन तत्र प्रमाणनिराकरणानौचित्यात् । यद्वा विश्वभिन्नत्वं विश्वप्रतियोगिकभेदवत्त्वं वा विश्वनिष्ठभेदप्रतियोगित्वं वा स्यात् । तदुभयमपि न सम्भवति । भेदद्वये प्रमाणाभावादित्याशयेन `न तावज्जीवेश्वरभेद' इत्यादिग्रन्थो यथाश्रुत एव । अत्र वक्तव्यं परिहारावसरे वक्ष्यते ।

(२) (हु.) उक्तार्थं पूर्वपक्षनिरासादिना दृढीकर्तुमारभ्यते – **नन्वित्यादिना** ।। विष्णोर्ब्रह्मत्वोत्कीर्तनं परैर्मायाशबलस्य कस्यचिद्विष्ण्वाख्यस्यास्मदादाविव निखिलप्रपञ्चतादात्म्यानङ्गीकारात्कथं तदभिप्रायेण पूर्वपक्षोत्थितिरिति शङ्कामपाकर्तुम् । विष्णुपदब्रह्मपदयोस्त्रिविधपरिच्छेदराहित्यरूपव्याप्तिवृद्ध्यर्थयोः (-वृद्ध्यर्थकयोः) समानार्थत्वेन तयोरेकत्वात् तदुपरि पूर्वपक्षोत्थितिरिति भावः । उत्तरत्र चेतनाचेतनभेदयोर्विचारयिष्यमाणत्वात्तस्य विश्वपदार्थतया प्रसक्तत्वसूचनाय चेतनाचेतनात्मकमिति विश्वविशेषणम् – **ईश्वरप्रतियोगिकस्येति** ॥ भेदः संयोगादिवदुभयवृत्तिस्तद्घटकपदार्थ[1]प्रतियोगिकस्तदनुयोगिकश्च भवति । इमौ

---

1 `-पद-' मु.

संयुक्तावयमनेन संयुक्तोऽयमप्यनेन संयुक्त इति प्रतीतीनामिवेमौ भिन्नावयमस्माद्भिन्नोऽयं चास्माद्भिन्न[1] इति प्रतीतीनामबाधितानां सत्त्वात् । एकस्यैव भेदस्य घटप्रतियोगिकत्वं तदनुयोगिकत्वं चाङ्गीक्रियते । घटः स्वस्माद्भिन्न इत्याद्यापत्तिश्च स्वप्रतियोगिकत्वविशिष्टभेदाधिकरणताया-स्तादृशप्रतीतौ नियमेन भासमानायाः स्वस्मिन् बाधितत्वादेव न प्रसज्यते । घटः स्वेन संयुक्त इति प्रतीत्यापत्तिवदिति मतेनेदम् । अत एवैतन्मतावष्टम्भेनैव चन्द्रे भेदमाश्रित्य द्वौ चन्द्राविति प्रतीतिमुपपादयि-ष्यन्दृष्टान्ते साध्यवैकल्यं परिहरिष्यति । तथा चेश्वरप्रतियोगिकत्वेन प्रतीयमानस्य[2] जगद् ईश्वराद्भिन्नमिति प्रतीतौ भासमानस्येश्वरो जीवादिप्रपञ्चाद्भिन्न इति प्रतीतौ भासमानस्य च भेदस्यैकत्वेने-श्वरधर्मिकत्वेनेश्वराप्रत्यक्षत्वेनाप्रत्यक्षत्वमेव । घटगगनसंयोगवत् सम्बन्ध-प्रत्यक्षे यावदाश्रयप्रत्यक्षस्य कारणत्वादिति भावः । एतेन पूर्वश्लोके जगत्प्रतियोगिकेश्वरभेदस्यैव प्रसक्तत्वेन तत्रैव विचारस्य प्रक्रान्तत्वेनेश्वर-प्रतियोगिकभेदस्याप्रत्यक्षत्ववचनमसङ्गतम् । एवं प्रतियोग्यप्रत्यक्षत्वस्य भेदाप्रत्यक्षत्वसम्पादकत्वे स्तम्भः पिशाचो नेति भेदस्य प्रत्यक्षत्वानुप-पत्तिरिति परास्तम् । पूर्वोक्तमते ईश्वरप्रतियोगिकस्यापि भेदस्येश्वरधर्मिक-त्वाङ्गीकारेणाप्रसक्तविचाररूपत्वाभावादेतन्मते स्तम्भः पिशाचो नेति प्रतीतेरनुमितिशाब्दादिरूपत्वाभ्युपगमेन प्रत्यक्षरूपत्वानभ्युपगमाच्च । वाशब्दः समुच्चये ।

यद्वा, भेदो यत्प्रतियोगिकः नतद्वृत्तिः, किन्त्वनुयोगिमात्रवृत्तिरिति

---

[1] `अयमस्माद्भिन्न' मु.

२. इदं पदं मु.पाठे नास्ति ।

सर्वसिद्धिमतेनेदं वाक्यं प्रवृत्तम्[1]॥ तर्हीश्वर[2]प्रतियोगिकभेदस्याप्रत्यक्षत्वोपपादनस्य कथमुपयोग इति चेदित्थम् । यथा भास्करमते घटे मृदा सहात्यन्ताभेदो मृदि तु घटस्यात्यन्तभेद एव । एवं कार्यकारणयोर्भेदाभेदौ व्यवस्थितौ । तथा कारणीभूतेश्वरस्य जगता सहात्यन्ताभेदेऽपि जगदीश्वरेणात्यन्ताभिन्नमिति मतमपाकर्तुं विभिन्न इत्युक्तम् । विशेषतो विभिन्नत्वं[3] च स्वात्यन्ताभिन्नजगत्प्रतियोगिकात्यन्तभेदवत्त्वम् । इदं च पूर्वश्लोकप्रसक्तं तदनुसारेण विश्वभिन्नत्वशङ्काग्रन्थस्य भिन्नत्वमित्यस्याप्ययमेवार्थः । तथा च भेदद्वयस्यापि प्रकृतत्वादीदीश्वरप्रतियोगिकभेदस्याप्रत्यक्षत्वोपपादनं युक्तम् । न च प्रतियोग्यप्रत्यक्षत्वेन भेदस्याप्रत्यक्षत्वे स्तम्भपिशाचभेदप्रत्यक्षानुपपत्तिः । इष्टापत्तेः । पूर्वोक्तरीत्या तस्य शाब्दादिरूपत्वोपगमात् । न चात्र बीजाभावः । भेदप्रत्यक्षे प्रतियोगिवृत्तिधर्मविरुद्धधर्मज्ञानस्य कारणत्वानुभवेन प्रतियोगिन एवाप्रत्यक्षत्वे तद्वृत्तिधर्मस्याप्यप्रत्यक्षत्वेन तद्विरुद्धत्वस्यापि धर्मान्तरे ग्रहीतुमशक्यत्वात् । अथवा प्रतियोगितावच्छेदकविशिष्टप्रतियोगिनिर्णयो भेदधीहेतुः[4] ॥ पिशाचादीनां लोकसिद्धव्यवहारादिना निर्णयात्तत्प्रतियोगिकभेदप्रत्यक्षमुपपद्यते । भवदभिमतस्य स्वातन्त्र्यादिविशिष्टेश्वरस्य[5] नानुमानादिगम्यत्वम् । तस्य सत्प्रतिपक्षादिक-

---

[1] `यदा भेदो न प्रतियोगिवृत्तिः किन्त्वनुयोगिमात्र इति मतेनेदं वाक्यं प्रवृत्तम्' मु.

[2] `तर्ह्रीश्वर-' मु.

[3] विशेषतः इतिं पदस्य प्राक् सत्वात् `भिन्नत्वं' इति पाठेन भाव्यमिति भाति ।

[4] `निर्णयो भावधीहेतुः' मु. ४. `-ईश्वरे' मु.

बलितत्वेनानिर्णायकत्वात् । आगमानां तूपक्रमालिङ्गैश्चिन्मात्रपरत्वादवशिष्टं प्रत्यक्षमेव[1] । तदप्युक्तेश्वरे नास्तीति प्रतियोगिनिर्णयरूपकारणाभावादुक्तेश्वरभेदप्रत्यक्षं न युक्तमित्याशयः ।

नन्वीश्वररूपधर्मिणोऽप्रत्यक्षत्वात्तद्वृत्तिभेदस्याप्रत्यक्षत्वकथनमयुक्तम् । गगनस्याप्रत्यक्षत्वेऽपि तद्वृत्त्युद्भूतरूपाभावस्य[2] प्रत्यक्षविषयतायास्तान्त्रिकैरभ्युपगमात्पुष्पस्य घ्राणाविषयत्वेऽपि[3] तद्वृत्तिचम्पकगन्धाभावस्य घ्राणजप्रत्यक्षविषयत्वाङ्गीकारादिति चेन्न । अत्यन्ताभावस्थले योग्यप्रतियोग्यनुपलब्धेर्हेतुत्वेन तथात्वसम्भवेऽपि भेदप्रत्यक्षेऽधिकरणप्रत्यक्षस्यैवान्वयव्यतिरेकाभ्यां हेतुत्वमित्याशयेनोक्तसङ्गतेः । यद्वा तादात्म्याभावोऽन्योन्याभाव एव[4] । तत्प्रत्यक्षे योग्यतादात्म्यानुपलब्धिः कारणम् । योग्यत्वं च प्रतियोगिसत्त्वप्रसञ्जितप्रतियोगिकत्वम् । तथा च प्रत्यक्षीभूताधिकरणे तन्निष्ठेतरतादात्म्योपलब्धेरापादयितुमशक्यत्वान्न प्रकृते योग्यानुपलब्धिरित्याशय इत्यलम् । केचित्तु वाशब्द उपमायाम् । तथा चेश्वरप्रतियोगिकभेदो दृष्टान्ततयोपात्त[5] इति नाप्रसक्तकथनम् । सोऽपि परजीवानुयोगिकोऽतीन्द्रियजडानुयोगिकश्च ग्राह्यस्तस्य स्वप्रत्यक्षत्वादिति व्याचक्षते । तत्रेश्वरप्रतियोगिकभेदस्येश्वरातिरिक्तसामान्यनिष्ठस्यैकस्यैवाद्वैतवादिभिर्नैय्यायिकैश्चाङ्गीकृतत्वेन स्वस्मिन् घटादौ चेश्वरभेदस्य

---

[1] `अविशिष्टप्रत्यक्षमेव' मु.

[2] `तदवृत्त्युद्भूतरूपाभावस्य' मु.

2. अपिशब्दः मु.पठे नास्ति ।

[4] एवशब्दः हु.पाठे नास्ति।

4. `दृष्टान्विधया-' हु.

प्रत्यक्षविषयत्वविवादस्य[1] सत्त्वेन दृष्टान्तासङ्गतिः । धर्मिभेदेन भेदाङ्गीकारेणैवेदमित्युक्तावपि भेदसामान्यस्य ग्रहणासङ्गतिः । स्वानुयोगिकेश्वरभेदप्रत्यक्षनिराकरणं चेत्यादिकं कथं परिहर्तव्यमिति विभावनीयम् । न च तस्याप्रसक्तत्वादेव न[2] तन्निराकरणमपेक्षितमिति वाच्यम् । तथाऽपि स्वकृतद्वितीयव्याख्याने ईश्वरप्रतियोगिकभेदप्रत्यक्षसामान्यस्यापि निराकर्तव्यत्वेन प्रसक्ततया तत्रोक्तदोषापरिहारादिति भेदप्रत्यक्षसामान्ये प्रतियोगिप्रत्यक्षस्यापि कारणत्वमिति शङ्कस्याभिमानस्थापनेन[3] यथाकथञ्चिद्ग्रन्थसङ्गमनं त्वगतिका गतिः । अथवेति कृतास्मद्व्याख्याने च नैषोऽभिमान इति ।

(२) (का.) अत्राद्वैतवादी शङ्कते – **नन्विति** ॥ परब्रह्मण इत्यनेन भेदाङ्गीकारे [4]वस्त्वपरिच्छेदरूपपरब्रह्मत्वानुपपत्तिं सूचयति । चेतनाचेतने जीवजडे । स्वभावत इत्यस्य भेद इत्यनेनापि सम्बन्धः । अत्रेश्वरधर्मिकभेदस्यैव प्रकृतत्वेऽपि विश्वशब्दसूचितजीवजडभेदस्यापि सङ्ग्रहाय भेदमात्रग्रहणम् ॥ **प्रमाणाभावादिति** ॥ उक्तप्रमाणस्याभासत्वादित्यभिमानः । तदेवोपपादयति **तथाहीत्यादिना सङ्क्षेप इत्यन्तेन** ॥ **न तावदिति** ॥

---

1 '-विचारस्य' मु.

2 नशब्दः मु.पाठे नास्ति।

3 'अभिमानस्यापनयेन' मु.

4 ॥ वस्त्वपरिच्छेदेति ॥ अद्वैतसिद्धन्तानुसारेण ब्रह्मशब्दस्य देशतः कालतः वस्तुतश्च परिच्छेद(अन्त)रहितत्वमर्थः । तत्र वस्तुतः अपरिच्छिन्नत्वं नाम निखिलवस्त्वात्मकत्वम् । तेन भेदाङ्गीकारे ब्रह्मत्वं न स्यादित्याशयः ।

नन्विदमसङ्गतम् । स्वतन्त्र्यादिरूपविरुद्धधर्महेतुकानुमानस्यैवाद्य-पद्योक्ततया तत्प्रतिक्षेपस्यैव कर्तव्यत्वात् । मैवम् । तत्र प्रमुखपदेन भेदग्राहिप्रत्यक्षागमविषयत्वस्यापि विवक्षितत्वेन प्रमाणत्रयस्यैव लाभात् । स्वभावतः प्रत्यक्षागमयोः प्राबल्येऽपि प्रकृते प्रत्यक्षस्येश्वरीयस्य साध्यतया सविवादत्वादागमस्य चोपपत्तिसापेक्षत्वादनुमानस्यैव प्राधान्येन परिग्रहात्, स्वभावप्राबल्यमेव पुरस्कृत्य प्रत्यक्षस्य प्रथमं प्रतिक्षेपात् । अत एव सिद्धान्तेऽपि प्रत्यक्षादिप्रमाणत्रयं प्रदर्शयिष्यते ॥ **जीवेश्वरभेद इति** ॥ आत्मधर्मिकात्मान्तरप्रतियोगिकभेद इत्यर्थः । ईश्वरधर्मिकजीवभेदे जीवधर्मिकेश्वरभेदे मिथो जीवभेदे चेति यावत् । अत एव सामान्यत आत्मनानात्वसाधकानुमाननिराकरणसङ्गतिः । ईश्वरेत्यात्मान्तरोपलक्षणम् । यत्तु - विष्णोर्विश्वतो भिन्नत्वं विश्वप्रतियोगिकभेदवत्त्वं विश्वनिष्ठभेद-प्रतियोगित्वं वा स्यात् । तदुभयमपि न सम्भवतीत्याशयेन भेदद्वये प्रत्यक्षप्रतिक्षेप इति । तन्न । [1]भिन्नशब्दस्य भेदप्रतियोग्यबोधकत्वेन

[1] ॥ **भिन्नशब्दस्य भेदप्रतियोग्यबोधकत्वेनेति** ॥ अयमत्र वादक्रमः - भिन्नशब्दस्य भेदानुयोगीति यथा अर्थः तथा भेदप्रतियोगीत्यप्यर्थः । तदनुसारेण मूले `ईश्वरधर्मिकस्येश्वरप्रतियोगिकस्य वे'त्युक्तमिति केषाञ्चित् व्याख्यानं । तन्न युक्तं, भिन्नशब्दस्य भेदप्रतियोग्यर्थकत्वाभावात् तादृशविकल्पस्यायोगात् । ननु तत्कुतो नाङ्गीकार्यमिति चेत्, तर्हि घटो घटभिन्न इति लोके असाधुत्वेन सम्मतस्यापि प्रयोगस्य साधुत्वं स्यात् । भिन्नशब्दस्य भेदानुयोग्यर्थकत्वे हि `घटो घटभिन्न' इत्यस्मात् वाक्यात् `घटप्रतियोगिकभेदानुयोगी घटः' इति शाब्दबोधः । स्वस्मिन् स्वभेदायोगात् सः अर्थः बाधित इति तस्य प्रयोगस्य असाधुत्वं सूपपादम् । यदि भिन्नशब्दस्य भेदप्रतियोग्यर्थकत्वं तर्हि `घटप्रतियोगिकभेदप्रतियोगी घट' इति बोधः स्वीकार्यः । स च अबाधित इति

प्रयोगस्य साधुत्वापत्तिः स्यात् ।

ननु `यदा भिन्नशब्दस्य भेदप्रतियोग्यर्थकत्वं तदा तत्पूर्वशब्दः अनुयोगिपरः' इति व्युत्पत्तिस्वीकारे नायं दोषः । तदा खलु `घटो घटभिन्न' इति वाक्यात् `घटानुयोगिकभेदप्रतियोगी घट' इति बोधः स्वीकार्यः । स च बाधितः इति चेत्, अत्र दोषपरिहारसम्भवेऽपि स्थलान्तरे दोषः अशक्यवारण इत्याशयेन काशिकायां प्रयोगान्तरं दर्शितम् । लोके `घटपटोभयं घटोऽपि भवति, पटोऽपि भवति' इति, `घटः घटपटोभयभिन्नः' इत्यपि व्यवहरन्ति । न तु `घटपटोभयं घटभिन्नमि'ति व्यवहरन्ति । (समूहः एकदेशैरभिन्नः न तु एकदेशाः समूहात्मकाः इति एतेषां प्रयोगानामाशयः ।) तदनुसारेण `व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकतदेकदेशप्रतियोगिताकभेदः नाभ्युपगम्यते' इति नियमः स्वीकृतः । तदनुसारेण च अस्य प्रयोगस्यासाधुत्वं सिद्ध्यति । तथा हि । `घटपटोभयं घटभिन्नम्' इत्यत्र भेदस्य अनुयोगि घटपटोभयम् । अनुयोगिता घटपटोभयनिष्ठा । अनुयोगितावच्छेदकं घटपटोभयत्वम् । तच्च व्यासज्यवृत्तिधर्मः । एवं चायं भेदः व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताको जातः । भेदस्यास्य प्रतियोगी उभयैकदेशभूतः घटः । तथा चायं भेदः उक्तनियमविरुद्ध इति तद्बोधकवाक्यस्याप्रामाण्यमुपपद्यते । यदि भिन्नशब्दः भेदप्रतियोग्यर्थकः, तत्पूर्वशब्दश्च भेदानुयोगिपर इति स्वीक्रियते तर्हि अस्मात् वक्यात् `घटानुयोगिकभेदप्रतियोगि घटपटोभयम्' इत्यर्थः वर्णनीयः । अयं च बोधः एकदेशे घटे उभयभेदमवगाहते । अर्थात् व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकतदेकदेशानुयोगिताकभेदमवगाहते । स भेदः अबाधित इति अस्य प्रयोगस्य साधुत्वं दुर्वारम् । अतः भिन्नशब्दस्य भेदप्रतियोग्यर्थकत्वं नाङ्गीकारार्हम् - इत्याशयः ।

किं नाम व्यासज्यवृत्तित्वमित्यत्र अस्मद्गुरवः काशिकाविवरणप्रणेतारः श्रीप्रह्लादाचार्याः एवं लिखन्ति - `व्यासज्यवृत्तित्वं चैकमात्रवृत्तिधर्मावच्छिन्नापर्याप्तिमत्त्वम् । उभयत्वादिकं च व्यासज्यवृत्ति । घटपटोभयत्वपर्याप्तिः घटपटयोर्विद्यमाना न तावद् घटादिमात्रवृत्तितत्तद्व्यक्तित्वावच्छेदेन, अपि तु घटपटगतद्वित्वावच्छेदेनेत्युभयत्वादेर्व्यासज्यवृत्तित्वम् ।' - इति । अस्यायमाशयः - धर्मेषु केचनाननुगताः यथा तद्व्यक्तित्वगगनत्वादयः । केचन

तादृशविकल्पायोगात् । अन्यथा घटो घटभिन्न इति प्रयोगापत्तेः । व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकतदेकदेशप्रतियोगिताकभेदानुपगमेऽपि घटपटोभयं घटभिन्नमिति प्रयोगापत्तेश्च ॥ **अप्रत्यक्षत्वादिति** ॥ धर्मिप्रतियोगिप्रत्यक्षयोरभावप्रत्यक्षहेतुत्वादिति भावः ।

(२) (श.) विष्णौस्वभावतश्चेतनात्मकविश्वभिन्नत्वं समर्थयितुमाक्षिपति – **नन्विति** ॥ **चेतनाचेतनात्मकेति** ॥ अन्योन्यभिन्नचेतनाचेतनात्मकेत्यर्थः । तेनोत्तरत्र क्रियमाणे जीवानां जठानां चान्योन्यभेदनिराकरणसमर्थनेसङ्गच्छेते । अन्यथा तयोः प्रकृतासङ्गतिः स्यादिति ध्येयम् । भेदे स्वभावतोभेदे । एवमग्रेऽपि । भेदे प्रमाणं प्रत्यक्षमनुमानमागमोवेति विकल्पान्मनसि निधायाद्यं दूषयति – **नेति** ॥

---

अनुगताः यथा प्रमेयत्व-द्रव्यत्व-घटत्वादयः तथा उभयत्व-द्वित्व-त्रित्वादयः । तत्र घटत्वादयः सर्वेषु घटेषु सन्तोऽपि एकैकघटेऽपि स्वव्यवहारं जनयन्ति । परन्तु घटपटौ इत्यादौ द्वित्वादिरूपा धर्माः स्वाधारेषु समवयादिना विद्यमाना अपि केवलं घटे `घटः द्वौ' इत्यादिरूपं व्यवहारं न जनयन्ति । एते धर्माः स्वाधिकरणेषु यावत्सु युगपत्स्वव्यवहारं जनयन्ति । तदेतन्निर्वाहाय नैयायिकैः पर्यास्त्याख्यः सम्बन्धः स्वीकृतः । द्वित्वस्य प्रत्येकं घटेन पटेन च सह समवायः । घटपटयोः युगपत् पर्याप्तिः । तथा च पर्याप्तिसम्बन्धयोग्या धर्माः पर्याप्तिसम्बन्धं पुरस्कृत्यैव व्यवहारं जनयन्ति नान्यसम्बन्धेनेति न्यायसिद्धान्तस्थितिः । तदेवं पर्याप्तिसम्बन्धेन विद्यमाना धर्माः व्यासज्यवृत्तय इति कथ्यन्ते । तत्र द्वित्वादयः सर्वाः सङ्ख्याः व्यासज्यवृत्तयः । उभयत्व-समूहत्व-वनत्व-सेनात्वादयोऽपि तथा । `महनसीयवह्निर्नास्ती'त्यादौ अवच्छेदकत्वं न केवलं महानसीयत्वे न वा केवलं वह्नित्वे अपि तु उभयोरपि इति हेतोः अवच्छेदकत्वमपि व्यासज्यवृत्ति - इति ।

जडभेदेऽपि प्रत्यक्षं निराकरिष्यामीत्याशयेन तावच्छब्दः । उत्तरपक्षद्वयमपि निराकरिष्यामीत्याशयेन वा ॥ **जीवेश्वरभेद इति** ॥ जीवानामन्योन्यभेदे जीवेश्वरभेदे चेत्यर्थः । प्रत्यक्षं किमीश्वरो जीवो नेतीश्वरधर्मिक-जीवप्रतियोगिकभेदविषयमभिधीयते उत जीव ईश्वरो नेति जीव-धर्मिकेश्वरप्रतियिगिकभेदविषयकम् । आद्यं निराचष्टे – **ईश्वरधर्मिक-स्येति** ॥ ईश्वरधर्मिकस्य ईश्वराधिकरणस्य भेदस्याप्रत्यक्षत्वादित्यन्वयः । तत्र हेतुमाह – **ईश्वराप्रत्यक्षत्वेनेति** ॥ धर्मिभूतेश्वरस्याप्रत्यक्षत्वेनेत्यर्थः । अभावप्रत्यक्षेऽधिकरणप्रत्यक्षस्य कारणत्वादिति भावः । नन्वभावप्रत्यक्षे नाधिकरणप्रत्यक्षनियमः । अप्रत्यक्षेऽप्याकाशे शब्दाभावस्य प्रत्यक्षत्वात् । वायौ रूपाभावस्य प्रत्यक्षत्वात् । अतोऽधिकरणज्ञानमात्रस्यापेक्षितत्वेन तस्येश्वरविषयकस्यापि परोक्षस्य सत्त्वात्तद्धर्मिकस्य भेदस्य प्रत्यक्षत्व-मक्षतमिति चेन्न । अत्यन्ताभावरूपसंसर्गाभावस्य प्रत्यक्षेऽधिकरण-प्रत्यक्षनियमाभावेऽपि भेदाख्यान्योन्याभावप्रत्यक्षेऽधिकरणप्रत्यक्षावश्यं-भावात् । अत एवोक्तं **रुचिदत्तेनोपाध्यायमतानुवादे** 'रूपवदन्योन्याभावस्तु योग्योऽपि वायावधिकरणे योग्यताविरहान्न गृह्यते । अन्योन्याभावग्रहे तस्याः प्रयोजकत्वादि'ति । उक्तं च तृतीयाध्याये टीकाकारेण । 'संसर्गान्योन्याभावग्रहे प्रतियोग्यधिकरणयोग्यता क्रमेण तन्त्रमि'ति । द्वितीयं निराह – **ईश्वरप्रतियोगिकस्येति** ॥ ईश्वरप्रतियोगिकस्य भेदस्या-प्रत्यक्षत्वादित्यन्वयः । तत्र हेतुमाह – **ईश्वराप्रत्यक्षत्वेनेति** ॥ प्रतियोगिभूतेश्वराप्रत्यक्षत्वेनेत्यर्थः । अभावप्रत्यक्षे प्रतियोगिप्रत्यक्षस्य हेतुत्वादिति भावः । उपलक्षणमेतत् । जीवान्तरप्रतियोगिकस्य जीवान्तरधर्मिकस्य वा भेदस्य जीवान्तराप्रत्यक्षत्वेनाप्रत्यक्षत्वादित्यपि

द्रष्टव्यम् । अत एव यज्ञदत्तप्रतियोगिको विष्णुमित्रधर्मिको भेदो विष्णुमित्रस्य प्रत्यक्ष इत्याद्यूह्यमिति सिद्धान्तग्रन्थे जीवानामन्योन्यभेदस्य प्रत्यक्षत्वसमर्थनं क्रियते । अत एव च नाप्यनुमानमित्यादिनाऽऽत्ममात्रभेदेऽनुमानमाशङ्क्य निराकरणं सङ्गच्छते । अन्यथा जीवेश्वरभेदे प्रत्यक्षं निराकृत्य तत्रैवानुमाननिराकरणस्य सङ्गतत्वेनात्ममात्रभेद-साधकानुमाननिराकरणस्यासङ्गतत्वात् । नचात्ममात्रभेदासिद्धौ जीवेश-भेदोऽपि सिध्यतीत्याशयेन तदिति वाच्यम् । तथापि चैत्रशरीर-मित्यादिनाऽन्योन्यजीवभेदशङ्कानिरासयोरनुपपत्तिरिति ध्येयम् ।

(३) नाप्यनुमानम् । आत्मत्वं नानाव्यक्तिनिष्ठं जातित्वात् पृथिवीत्ववदित्यस्यासिद्धेः । आत्मैक्यवादिनां(ना) व्यक्तिभेदस्य बाधित-त्वेनात्मत्वस्य जातित्वानङ्गीकारात् । आत्मा आत्मप्रतियोगिक-भेदाधिकरणं द्रव्यत्वात् घटवदित्यस्याप्यसिद्धेः । आत्मनो निर्गुणस्यास्माभिर्गुणाश्रयत्वलक्षणद्रव्यत्वानङ्गीकारात् । अथ सुखं नानाव्यक्त्याश्रितं गुणत्वात् रूपवत् । सुखत्वं वा नानाव्यक्त्याश्रिताश्रितं गुणनिष्ठजातित्वाद्रूपत्ववदिति । न च शब्दे शब्दत्वे च (वा) व्यभि-चारः । (तस्य द्रव्यत्वात्) । अद्रव्यत्वपक्षेऽपि तदन्यत्वेन हेतुविशेषणादिति चेन्न । सुखदुःखादीनामन्तःकरणाश्रितत्वेनान्तः-करणानां च नानात्वेन सिद्धसाधनात् । स्वरूपसुखविवक्षायां तु तस्य द्रव्यत्वेनासिद्धेः ।

चैत्रशरीरं मैत्रशरीरस्वामिभिन्नस्वामिकं तद्विरुद्धचेष्टावत्त्वादित्यत्र व्यभिचारः । एकस्वामिकयोरपि (सकलैकस्वामिकयोरपि) घट-पटयोर्विरुद्धचेष्टा(चेष्टाकत्व)दर्शनात् । शरीरत्वेन हेतुविशेषणे

१ - ...



**दृष्टान्तासिद्धिः ।**

**विमतौ भिन्नौ विरुद्धधर्माधिकरणत्वात् दहनतुहिनवदिति चेन्न । पारमार्थिकभेदसाधने अप्रसिद्धविशेषणत्वात् । अपारमार्थिक-(व्यावहारिक)भेदसाधने सिद्धसाधनत्वात् । तस्मान्नानुमान-मात्मजीवभेदे मानमिति ।** १

(३) (भ.) ॥ **नाप्यनुमानमिति** ॥ जीवेश्वरभेदे प्रमाणं भवतीति वर्तते ॥ **आत्मत्वमिति** ॥ यद्यपीदमनुमानमात्ममात्रभेदसाधकं तथाऽपि तद्विशेषजीवेश्वरभेदोऽप्यनेन सिध्यतीत्याभिप्रायेणेदमभिहितम् । यथा द्रव्यमात्रस्य गुणित्वसिद्धौ तद्विशेषस्य घटस्यापि तत्सिद्धिरिति । जीवेश्वरभेदस्येव परस्परजीवभेदस्यापि प्रस्तुतत्वस्य प्रदर्शितत्वात्तदपेक्षया चेति बोध्यम् ॥ **जातित्वादिति** ॥ जातेरनेकानुगतत्वलक्षणकत्वादिति भावः ॥ **असिद्धेरिति** ॥ अन्यतरासिद्धेरित्यर्थः । तामेवोपपादयति – **आत्मैक्य-वादिनेति** ॥ जातित्वानङ्गीकारादिति सम्बन्धः ॥ **व्यक्तिभेदस्येति** ॥ आत्माख्यव्यक्तिभेदस्य वक्ष्यमाणप्रमाणबाधितत्वेनेत्यर्थः । असिद्धि-मेवोपपादयति – **आत्मनो निर्गुणस्येति** ॥ निर्गुणस्याप्यात्मनो द्रव्यत्वं किन्नाङ्गीक्रियत इत्यत उक्तम् – **गुणाश्रयत्वलक्षणेति** ॥ आत्मभेदे पुनरनुमानद्वयमाशङ्कते – **अथ सुखमित्यादिना** ॥ अनुमानद्वये व्यभिचार-माशङ्क्य निराकारोति – **न चेति** ॥ आद्यानुमाने शब्दे व्यभिचारः । द्वितीयानुमाने शब्दत्वे व्यभिचार इत्यर्थः । आकाशव्यक्तेरेकत्वेन नानात्वाभावादिति भावः । कुतो न व्यभिचार इत्यत आह – **तस्येति** ॥ तथा च शब्दस्य गुणत्वाभावाच्छब्दत्वस्य गुणनिष्ठजातित्वाभावा-द्धेतोरेवाभावान्न व्यभिचार इति भावः । मीमांसकमते शब्दस्य द्रव्यत्वेऽपि

नैय्यायिकादिमते गुणत्वाद्व्यभिचारः सुस्थ इत्यत आह – **अद्रव्यत्वपक्षेऽपीति** ॥ **तदन्यत्वेनेति** ॥ आद्यानुमाने शब्दान्यत्वेन द्वितीयानुमाने शब्दत्वान्यत्वेनेत्यर्थः । एवं शङ्कितमनुमानद्वयं दूषयितुं किमत्र सुखशब्देनान्तःकरणधर्मभूतं प्राकृतं सुखं विवक्षितमुत स्वरूपसुखमिति विकल्पं मनसि निधायाद्यं निराचष्टे – **सुखदुःखादीनामिति** ॥ अत्र दुःखादिग्रहणं दृष्टान्तार्थम् । द्वितीयं निराह – **स्वरूपसुखेति** ॥ गुणगुणिनोर्भेदे स्वरूपत्वस्यैवानुपपत्तेरभेद एवाङ्गीकार्ये आत्मन इव तदभिन्नसुखस्यापि गुणत्वायोगादसिद्धिरित्यर्थः । एतेन द्वितीयानुमानेऽपि सुखत्वस्यान्तःकरणधर्मनिष्ठत्वे सिद्धसाधनता । स्वरूपसुखवृत्तिधर्मत्वे तस्यागुणत्वेन गुणनिष्ठजातित्वायोगेनासिद्धिरिति दूषणं सूचितं भवति । उपलक्षणमेतत् । अत्र किमेकमेव सुखं नानाव्यक्त्याश्रितमित्युच्यते । उतानेकम् । अद्ये बाधः । दृष्टान्ते साध्यवैकल्यं च । न ह्येकमेव सुखं रूपं वा नानाव्यक्त्याश्रितमनुभवविरोधत्वात्[1] । एकत्वसङ्ख्यायां व्यभिचारश्च । द्वितीये हेतोयप्रयोजकता । एकस्मिन्नेवात्मनि कालभेदेनानेकसुखाश्रयत्वदर्शनात् । पादाद्यवच्छेदकभेदेन युगपदपि तद्दर्शनाच्च । स्वरूपसुखैक्यवादिनस्तद्वृत्तिसुखत्वस्य जातित्वानङ्गीकारादसिद्धिश्च । किञ्चैकस्यैव सुखस्य रूपस्य वा नानाव्यक्त्याश्रितत्वपक्षे जातिवत्पर्याप्त्या नानाव्यक्त्याश्रितत्वमुतानेकतृणाग्रप्रसारितपटवदपर्याप्त्या । नोभयमपि । अनुभवविरोधात् । तथा च सुखस्य नानाव्यक्त्याश्रयत्वानुपपत्तौ[2] सुखत्वस्य नानाव्यक्त्याश्रिताश्रितत्वमपि दूरोत्सारितम् । तदधीनसिद्धिकत्वात्तस्य ।

---

[1] '-विरोधात्' इति पाठेन भाव्यमिति भाति ।

[2] '-श्रितत्व-' इति पाठेन भाव्यमिति भाति ।

एतेन स्वाश्रयद्वारकसम्बन्धेन नानाव्यक्त्याश्रितत्वं सुखत्वस्यैव साध्यत इत्यपि निरस्तम् । उक्तरीत्याऽप्रयोजकत्वादित्याद्यपि द्रष्टव्यम् । अत एवैवं बहुदूषणग्रस्तत्वादिदमनुमानद्वयं सिद्धान्तग्रन्थेन समाहितमिति ज्ञातव्यम् ।

अन्योन्यजीवभेदेऽनुमानमशङ्क्य निराह – **चैत्रशरीरमिति** ॥ **मैत्रशरीरेति** ॥ मैत्रशररिस्वामी मैत्रस्तद्भिन्नश्चैत्रस्तत्स्वामिकमित्यर्थः ॥ **तद्विरुद्धेति** ॥ मैत्रशरीरचेष्टाविरुद्धेत्यर्थः । अत्र मिथो युध्यत्पालितमेषकुक्कुटादिदृष्टान्तः । यद्यद्विरुद्धचेष्टाकं तत्तत्स्वामिभिन्नस्वामिकमिति सामान्यव्याप्तिरभिमता । व्यभिचारमुपपादयति – **एकस्वामिकयोरिति** ॥ अत्र क्वचित्सकलैकस्वामिकयोरिति पाठः । स तु प्रामादिक इति प्राञ्चः प्राहुः । उपलक्षणं चैतत् । पारमार्थिकभेदविवक्षायामप्रसिद्धविशेषणता । अपारमार्थिकभेदसाधने सिद्धसाधनतेति वक्ष्यमाणदूषणमपि ग्राह्यम् ॥ **दृष्टान्ताभाव इति** ॥ चैत्रमैत्रशब्दयोरुदाहरणमात्रार्थत्वेन विन्यासभेदेन सर्वशरीराणामपि पक्षत्वेन विवक्षितत्वाद्दृष्टान्ताभाव इत्यर्थः । केचित्त्वात्मैक्यवादिनो यज्ञदत्तादिशरीरेऽपि मैत्रशरीस्वामिभिन्नस्वामिकत्वस्यासम्प्रतिपत्तेर्दृष्टान्ताभाव इति व्याचक्षते ।

जीवेश्वरभेदेऽनुमानान्तरमाशङ्कते – **विमताविति** ॥ **विरुद्धधर्माधिकरणत्वादिति** ॥ अत्र पक्षे सर्वज्ञत्वासर्वज्ञत्वादिर्विरुद्धो धर्मः । दृष्टान्ते चौष्ण्यशीतत्वादिर्द्रष्टव्यः । विरोधस्वरूपं तु सिद्धान्तग्रन्थे वक्ष्यते । तत्र वक्तव्यमपि तद्व्याख्यानावसर एव वक्ष्यते – **अप्रसिद्धविशेषणत्वादिति** ॥ पारमार्थिकभेदस्य मया कुत्राप्यनङ्गीकृतत्वादिति भावः ॥ **सिद्धसाधनत्वादिति** ॥ जीवेश्वरभेदस्य व्यावहारिकतया मयाऽङ्गीकृतत्वादिति भावः । अनुमाननिराकरणमुपसंहरति – **तस्मादिति** ॥

(३) (मु.) ॥ आत्मत्वमिति ॥ यद्यपि न तावदित्यादिना जीवेश्वरभेदमात्रोपक्षेपः कृतः । तथाऽपि पञ्चविधस्याप्यादावुपक्षेपात् सामान्येनात्मभेदसाधनं प्रसङ्गादत्र चिन्त्यते । ननु कथं भेदस्य पञ्चविधत्वम् । किं धर्मिभेदात्प्रतियोगिभेदाद्धर्मितावच्छेदकभेदात्प्रतियोगितावच्छेदकभेदाद्वा । नाद्यौ । जडजीवेश्वराणां त्रयाणामेव पर्यावृत्त्या प्रतियोगिधर्मित्वात् । अवान्तरभेदग्रहे त्वानन्त्यात्पञ्चत्वायोगः । अत एव नोत्तरौ । जडजीवेश्वरत्वानां त्रयाणामेव पर्यावृत्त्या तथात्वात् । तस्मादत्र त्रय एव भेदा वाच्याः । कथञ्चिद्धर्म्यादिपाञ्चविध्येऽपि दशभेदा इत्येव वाच्यम् । पञ्चप्रतियोगिकानां पञ्चानुयोगिकानां च दशत्वादिति । अत्र चकास्ति प्रतियोगितावच्छेदकभेदादेवाभावभेदः । अत एव घटानन्त्येऽप्यवच्छेदकैक्यान्न भूतले घटाभावानन्त्यम् । प्राक्प्रध्वंसाभावयोस्तु प्रतियोग्यैक्येऽपि पूर्वोत्तरकालरूपावच्छेदकभेदाद्भेदः । प्रकृते चेशत्वं जीवत्वं जडत्वं जडत्वव्याप्यधर्मौ जीवत्वव्याप्यधर्मश्चेति पञ्चावच्छेदकाः । यद्यपि व्याप्यधर्मा अनेके तथाऽपि तत्त्वेनैकीकरणान्न दोषः ।

न हि जीवो जीवाज्जडाज्जडं भिन्नमित्यत्र जीवत्वजडत्वेऽवच्छेदकौ[1] धर्मिभूतजीवजडेष्वपि सत्त्वात् । जडं जीवाद्भिन्नमित्यत्र तु जीवत्वादिकमेवावच्छेदकमिति धर्मिप्रतियोगिनां प्रत्येकं पञ्चकाभावेऽपि तदुभयसमुदायपञ्चकाद्भेदपञ्चकोपपत्तिरित्याहुः । विभज्य दशविधत्वं त्वनुमतमेव । धर्मितया प्रतियोगितया वा जीवजडोभयसम्बन्धी भेद इत्याद्येकीकरणसम्भवान्न पञ्चत्वहानिः । ननु तथाऽपि रमायाः

---

[1] `-दको' मु.

पार्थक्यादीशरमयोर्जीवरमयोर्जडरमयोश्चेत्यष्टविधत्वं स्यात् । तच्च[1] दुःखास्पृष्टत्वमीशत्वमिति तस्या अपीशकोटौ प्रवेश इति वाच्यम् । तथा सतीशयोर्भेदम् इति षड्विधः स्यादिति चेन्न । अस्वतन्त्रचेतनत्वं जीवत्वमिति विवक्षया तस्या अपि जीवशब्देन ग्रहणादिति । इहात्मत्वं नाम चित्त्वम् ॥ **नानाव्यक्तीति** ॥ परस्परप्रयोगिकधर्मिसत्तासमानसत्ताकानौपाधिककेवल-भेदाधिकरणनिष्ठमित्यर्थः । एवमुत्तरत्रापि यथासम्भवं ज्ञेयम् ॥ **जातित्वादिति** ॥

ननु जातित्वं न जातिः किन्तु नित्यैकानेकानुगतत्वम् । तत्रानेका-नुगतत्वादित्येवालम् । तावन्मात्रे च साध्यावैशिष्ट्यम् । मैवम् । अनेकानुगतत्वं चैकत्वेतरसङ्ख्यावद्वर्तित्वम् । साध्यं तु भेदवद्वृत्तित्वमिति भेदात् । स्वातन्त्र्येणानुगतधीनियामकत्वं वा जातित्वम् ॥ **व्यक्तिभेदस्य बाधितत्वेनेति** ॥ अत एवानुगतत्वस्य वाऽनुगतधीनियामकत्वस्य वाऽयोगादिति भावः । ननु तत्त्वविदां जातेरेकमात्रवृत्तित्वेन कथं तेन नानाव्यक्तिनिष्ठत्वं साध्यते । कथं च तान्प्रत्यनेकानुगतत्वासिद्ध्या परिहार इति चेत् । उच्यते । तैरप्याकाशत्वादेरजातित्वाय जातेर्नानाव्यक्ति-निष्ठत्वमनेकानुगतत्वं वाच्यम् । परन्तु यत्पदेन यदभिव्याहृत्य नानाव्यक्तिनिष्ठत्वमुच्यते तत्पदवाच्यतावच्छेदकधर्मेण तत्तत्सदृशान्यान्य-तत्तद्धर्माधिकरणान्यान्यतत्तद्व्यक्तिमध्यपतितव्यक्तिविशेषनिष्ठत्वमेव नाना-व्यक्तिनिष्ठत्वम् । अनेकानुगतत्वमुक्तधर्मेण स्वसदृशानेकतत्तद्धर्माधिकरणा-नेकतत्तद्व्यक्तिमध्यपतितव्यक्तिविशेषनिष्ठत्वम् । एवञ्चात्मत्वेन धर्मेणै-कात्मत्वसदृशानां तत्तदात्मत्वानां खण्डानुगत्याऽप्यभेदलाभान्न कोऽपि-

[1] 'न च' इति पाठेन भाव्यम् ।

दोषः । आत्मत्वपदेनेत्येवोक्तौ साध्यैवकल्यं स्यादिति यत्तदिति सामान्याश्रयणं कृतम् । आकाशत्वस्याकशत्वेन रूपेण सदृशधर्मान्तराभावान्न तस्य नानाव्यक्तिनिष्ठत्वमिति ।

ननु किमिदं सादृश्यम् । तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वमिति चेन्न । अपसिद्धान्तात् । नापि तद्धर्मसदृशधर्मवत्त्वम् । आत्माश्रयात् । नापि तद्धर्मनिरूपितधर्मवत्त्वम् । गौरिव गवय इत्यादौ गोगताकारादेर्गवयगताकारादिनिरूपितत्वादिति वाच्यम् । देवदत्तगतपितृत्वनिरूपिततत्पुत्रत्ववति यज्ञदत्ते देवदत्तसादृश्यापत्तेः । न च पितृत्वादिभिन्नवद्धर्मनिरूपितधर्माधिकरणं यत्तत्तेन सदृशमिति वाच्यम् । आदिपदेन सादृश्यनिरूपकधर्मस्यापि ग्रहणेऽसम्भवापत्तेः । न च सम्बन्धिभिन्नेत्यादि वाच्यम् । पितृत्वादिवत्सादृश्यस्याप्युभयनिरूप्यतया सम्बन्धविशेषत्वात् । पितृत्वादिमात्रे सम्बन्धत्वस्य दुर्वचत्वाच्चेति । उच्यते । विशिष्टप्रतीत्यनियामकनिष्ठधर्मनिरूपितधर्माधिकरणं यत्तत्तेन सदृशम् । पितृत्वादिधर्मस्य पुत्रवानित्यादिविशिष्टप्रतीतिनियामकत्वान्न तत्रातिव्याप्तिः । सादृश्यस्थले तु गौरिव गवय इत्यादावाकारादेर्न विशिष्टप्रतीतिनियामकत्वम् । गवयवान्गौरित्यादिप्रतित्यभावात् । न च सदृशवान्गौरित्यत्रापि विशिष्टप्रतीतिरस्तीति वाच्यम् । तत्र परस्परपदार्थद्वयगतस्वरूपसम्बन्धविशेषस्यैव तन्नियामकत्वेनाकारादेरनियामकत्वादिति । ननु भवतां मते जातेरखण्डानुगत्यभावेन खण्डानुगतेश्च रूपादावपि सत्त्वेन लाघवात्तेनैव घटादावनुगतप्रतीत्युपपत्तौ किं जात्यङ्गीकारेण । नन्वस्त्वनतिप्रसक्तयत्किञ्चिद्धर्म एव जातिपदार्थ इति वाच्यम् । गुणक्रियाजातिपूर्वेत्यादिपृथग्ग्रहण विरोधादिति चेन्न । न हि वयं

प्रयोजनवशाज्जातिं कल्पयामः । घटादौ गुणाद्यतिरिक्ता जातिः प्रत्यक्षत एव सिद्धा । अयं घट इत्यत्र घटप्रतीतिविषयभूतं घटत्वं न तावद्रूपादि । पटादावपि सत्त्वेन तत्रापि घटत्वप्रतीत्यापत्तेः । नापि जलाधारत्वम् । एतदननुसन्धानेऽपि तत्प्रतीतेः । ह्रदादावपि तत्प्रतीत्यापत्तेः । छिद्रघटे तदयोगापत्तेश्च । नापि पृथुबुध्नोदराकारत्वम् । चित्रलिखितप्रतिकृतौ पेटिकाविशेषादौ च तत्प्रतीत्यापत्तेः । न च मृज्जन्यत्वे सतीति विशेषणीयम् । सुवर्णघटादौ तत्प्रतीत्ययोगापत्तेः । एतदननुसन्धानेऽपि तत्प्रतीतिदर्शनाच्च । एतेषामेव घटपदप्रवृत्तिनिमित्तत्वे उक्तशब्दानां घटपदेन पर्यायत्वापत्तेश्च । यद्वा न्यायमतानुसारेणैतदनुमानप्रवृत्तिरित्यदोषः ॥ **आत्मेति** ॥ न च प्रतिज्ञा व्याहतिरिति वाच्यम् । आत्मनानात्वसन्देहदशायां तदभावात् । असिद्धिं दर्शयति – **आत्मन इति** ॥ न च तर्हि द्रव्यत्वं नाम समवायिकारणत्वमिति वाच्यम् । अविक्रियस्य निष्क्रियस्यात्मनो गुणं प्रत्येव तस्य वक्तव्यत्वात् । नापि गुणादिषड्भिन्नत्वं द्रव्यत्वमिति वाच्यम् । भिन्नत्वसम्पादकस्य गुणाश्रयत्वस्याभावेन तद्वचनस्य रिक्तत्वात् । न च तर्हि द्रव्यत्वमेव हेतुरस्त्विति वाच्यम् । आत्मप्रतियोगिकभेदे व्यभिचारात् । स्वस्यैव स्ववृत्तित्वायोगेन साध्याभावसत्त्वात् । पक्षदृष्टान्तानुगतवस्तुत्वस्यानङ्गीकाराच्च ।

॥**सुखमिति**॥ अस्यात्माश्रितत्वेन पक्षधर्मताबलादात्मनानात्वसिद्धिरिति भावः । नन्वत्रैकात्मसुखपक्षीकारे बाधः । अनेकात्मसुखपक्षीकारे पक्षविशेषणासिद्धिः । सामान्यतः सुखपक्षीकारेऽपि बाध एव । यावद्विशेषवृत्तिनः सामान्येऽप्यभावौचित्यात् । अतः खण्डानुगत्या समाधानसम्भवेऽपि तुष्यत्विति जातेरखण्डानुगतिमभ्युपेत्य प्रकारान्तरेण

प्रयुङ्क्ते ॥ **सुखत्वमिति** ॥ एवञ्चैकैकत्र विद्यमानतत्तत्सुखानुगतसुखत्वस्य नानाव्यक्त्याश्रिताश्रितत्वं सूपपादमिति भावः ॥ **शब्दे शब्दत्वेति** ॥ यथासङ्ख्यमुक्तहेतुद्वयस्येति शेषः । तदाश्रयस्याकाशस्यैकत्वादिति भावः ॥ **द्रव्यत्वादिति** ॥ वर्णभागस्येति शेषः । अतः शब्दत्वस्य द्रव्यनिष्ठत्वादित्यपि ग्राह्यम् ॥ **अद्रव्यत्वेति** ॥ ध्वनिभागस्येति शेषः । द्रव्यत्वादित्येकदेशविवक्षया प्रौढवादः ॥ **तदन्यत्वेनेति** ॥ शब्दमात्रस्यापि तथात्वाङ्गीकार इत्यपि द्रष्टव्यम् ॥ **चैत्रशरीरमिति** ॥ यो यद्विरुद्धचेष्टाश्रयः स तत्स्वामिभिन्नस्वामिको यथा चैत्रघटो मैत्रघटस्वामिभिन्नस्वामिक इत्युदाहर्तव्यम् । ननु शरीरवद्धटपटयोरपि तत्स्वामिभिन्नस्वामिकत्वासिध्या साध्यविकलोऽयम् । न च व्यावहारिकभेदोऽस्तीति वाच्यम् । तथात्वे तेनैव सिद्धसाध्यतापत्तेः । न चात्र व्यतिरेकदृष्टान्त एवोदाहर्तव्य इति[1] वाच्यम् । दृष्टान्ताभावादित्युत्तरग्रन्थविरोधादिति चेन्न । सामान्यतो भिन्नस्वामिकत्वस्यैव साध्यत्वेन साध्यवैकल्याभावात् । प्रकृते च शरीरोपहितयोरेव शरीरस्वामित्वे आत्माश्रयादनुपहितभेदस्य स्वाभाविकत्वावश्यम्भावेन पक्ष एव पर्यवसाने पारमार्थिकभेदस्यैव लाभान्न सिद्धसाधनता । न चान्तःकरणोपहितयोरेव शरीरस्वामिकत्वमिति शुद्धात्मभेदालाभ इति वाच्यम् । तत्रापि चैत्रान्तःकरणं मैत्रान्तःकरणस्वामिभिन्नस्वामिकमिति साधनात् । न चान्योपहितयोरेवान्तःकरणस्वामित्वमिति वाच्यम् । तदुपाधेरपि भिन्नोपाधेयकत्वसाधनात् । शरीरपक्षीकारस्तु तस्यैवाद्योपाधित्वाङ्गीकार इति ध्येयम् । उपाध्यानन्त्यकल्पने चानवस्था । शरीरोपलक्षितयोरेव शरीरस्वामित्वान्न

---

[1] 'उदाह्रियतामिति' – मु.

शुद्धात्मभेदो नाप्यात्माश्रय इति चेन्न । उपलक्षकस्य तटस्थत्वे उपलक्ष्यैतत्समार्थितयत्किञ्चिद्विशेषो वाच्यः । यथा काकस्य ताटस्थ्येऽपि तत्समार्थितो तृणत्वतत्संयोगध्वंसादिविशिष्टस्यैव गृहस्योपलक्षकम् । एवञ्च तादृशविशेषपक्षीकारेण भिन्नाश्रयत्वसाधने शुद्धात्मभेदसिद्धिः । न च स विशेषोऽप्युपलक्षकत्वान्न शुद्धाश्रय इति वाच्यम् । अनवस्थापत्तेरिति । व्यभिचारं व्यनक्ति – **सकलेति** ॥ सकला एके भिन्नाः स्वामिनो ययोस्तौ तयोर्ये घटस्वामिनस्ते सकला अपि पटस्य स्वामिन इत्येवमभिन्नस्वामिकयोरित्यर्थः । अवान्तरस्वामिभेदादिनाऽपि रहितयोरिति । एकस्वामिकयोरित्येवोक्ते प्रधानस्वाम्यैक्यैऽप्यवान्तरस्वामिभेदान्न व्यभिचार इत्युच्येतेति सकलेत्युक्तम् ॥ **दृष्टान्ताभावादिति** ॥ शरीरमात्रस्य पक्षतुल्यत्वमिति भावः ॥ **अप्रसिद्धेति** ॥ अस्यादूषणत्वेऽपि स्वरीत्याऽभिधानमिति ज्ञेयम् ॥ **पारमार्थिकेति** ॥ पारमार्थिकत्वविशेषणाघटितभेदमात्रेत्यर्थः ।

(३) (कु.) ॥ **आत्मत्वमिति** ॥ ननु जातित्वं नाम नित्यैकत्वे सत्यनेकसमवेतत्वम् । तच्च नानाव्यक्तिनिष्ठत्वसन्देहदशायामात्मत्वे सन्दिग्धं निश्चये चानुमनवैफल्यम् । नित्यैकत्वे सतीत्यस्य वैय्यर्थ्याच्चेति चेन्न । जातित्वस्याखण्डोपाधित्वात् । व्यक्त्यभेदादिबाधकषट्करहितधर्मत्वं वा तत् । न चात्रापि व्यक्त्यभेदराहित्यमात्रस्यैव गमकत्वे विशेषवैय्यर्थ्यमिति वाच्यम् । अखण्डाभावघटकतयाऽवैय्यर्थ्यात् । तावन्मात्रस्यैव प्रकृते हेतुत्वाच्च । न च तत्रापि सन्दिग्धासिद्धिः सिद्धसाधनता वेति वाच्यम् । अस्यैवाग्रेऽभिधानात् ॥ **घटवदितीति** । यद्यपि परो घटेऽप्यात्मप्रतियोगिकभेदाधिकरणत्वं न मन्यत इति दृष्टान्तः साध्यविकलः । तथाऽपि

घटो नाहमिति निर्बाधप्रत्यक्षेण घट इव तत्सिद्धिरित्याशयेनेदम् । यद्वा प्रसिद्धेऽरित्यस्य दृष्टान्ते साध्यासिद्धेरित्यप्यर्थमङ्गीकृत्येदमपि दूषणमुत्तरत्र वक्ष्यमाणमेवेति बोध्यम् ॥ **आत्मन इति** ॥ यद्यपि निर्गुणस्यात्मनो गुणाश्रयत्वरूपद्रव्यत्ववत्तायोगेऽपि जातिरूपं तद्युज्यते । तथाऽपि निर्धर्मके तद्द्रव्यत्वं न सम्भवति । गुणाश्रयत्वस्य तद्व्यापकत्वात् । तन्निवृत्तौ तदपि न सम्भवतीत्याशयेनेदम् । एकस्य नानाव्यक्त्याश्रितत्वं बाधितम् । एवं दृष्टान्ते साध्यवैकल्यमित्यस्वरसादाह – **सुखत्वमिति** ॥ यद्यप्यत्रैकस्यापि सुखस्य रूपस्य वा जातिपर्याप्त्या नानातृणाग्रप्रसारितपटवदपर्याप्त्या वा न नानाव्यक्त्याश्रितत्वं बाधितम् । एवं रूपस्यापीति दृष्टान्ते साध्य-वैकल्यमित्यस्वरसादाह – **सुखत्वमिति** ॥ यद्यप्यत्रापि कस्यापि सुखस्य रूपस्य वा जातिवत्पर्याप्त्या नानातृणाग्रप्रसारितं पटवदपर्याप्त्या वा न नानाव्यक्त्याश्रितत्वमिति पुनरपि बाधो दृष्टान्ते साध्यवैकल्यं च । तथाऽपि स्वाश्रयद्वारकसम्बन्धेन व्यक्त्याश्रितत्वं सुखत्वे साध्यमिति न कश्चि-त्क्षुद्रोपद्रवः ॥ **गुणनिष्ठेति** ॥ तद्रूपत्वे व्यभिचारवारणाय जातित्वादिति । मनस्त्वे व्यभिचारवारणाय गुणनिष्ठेति । शब्द इत्याद्यानुमाने शब्दत्व इत्युत्तरानुमाने तदन्यत्वेनेति । शब्दान्यत्वेनाद्यानुमाने शब्दत्वान्यत्वेन द्वितीये । आद्यानुमाने सुखमन्तःकरणवृत्तिरूपं स्वरूपसुखं वा । द्वितीयेऽन्तःकरणवृत्तिधर्मो वा स्वरूपसुखवृत्तिधर्मो वा पक्षत्वेन विवक्षितमिति विकल्पं मनसि निधायाद्ययोराह – **सुखदुःखादीनामिति** ॥ दुःखग्रहणं दृष्टान्तार्थम् । दुःखपक्षकानुमानेऽपि एवमेव दूषणं बोध्यमित्याशयेन च । अन्त्ययोराह – **स्वरूपेति** ॥ द्वितीयानुमाने स्वरूपसुखैक्यवादिनस्तद्वृत्तिधर्मस्य जातित्वाभावेनाप्यसिद्धिर्बोध्या ।

तद्विरुद्धेत्यत्र तत्पदेन चैत्रशरीरचेष्टा गृह्यते । तच्चेष्टाविरुद्धचेष्टाकत्वादिति पाठः साधुः ॥ **सकलैकस्वामिकयोरिति** ॥ चेष्टाशब्देन स्पन्दनमात्रं कथ्यत इत्याशयः । अत एव शरीरत्वेन विशेषणेन हेतुशङ्काऽपि युज्यते । अत्र सकलपदं प्रामादिकम् । एकस्वामिकयोरित्यनेन साध्याभावस्य विरुद्धचेष्टादर्शनादित्यनेन हेतुसद्भावस्योपपादनात् । यद्वा ययोर्घट-पटयोर्मुख्यः स्वाम्येकोऽवान्तरस्वामिनौ च प्रत्येकं द्वौ तयोर्घटपटयोः साध्यमप्यस्तीति न व्यभिचारः स्यादतः सकलेति । सकलो मुख्योऽवान्तरो वा एक एव स्वामी ययोरिति ॥ **दृष्टान्ताभाव इति** ॥ आत्मैक्यवादिनो यज्ञदत्तादिशरीरेऽपि मैत्रशरीरस्वामिभिन्नस्वामिकत्वस्यासम्प्रतिपत्तेः । विशेषव्याप्तौ शरीरत्वविशेषितस्य हेतोर्दृष्टान्ताभाव इत्यर्थः । एवं सामान्यव्याप्तावपि शरीरत्वविशेषितहेतोदृष्टान्ताभावो बोद्धव्यः । एवमविशोषितहेतोरपि व्याप्तिद्वयेऽपि दृष्टान्ताभावो बोध्यः । एवञ्च शरीरत्वेन हेतुविशेषणे व्यभिचारवारणेऽपि दृष्टान्ताभावो दुरुद्धर[1] एवेति ग्रन्थार्थः । नत्वविशेषणे दृष्टान्तसत्त्वं विशेषणे दृष्टान्ताभाव इति भ्रमितव्यम् ॥ **विरुद्धधर्माधिकरणत्वादिति** ॥ अत्र विरोधो वध्यघातुकभावश्चेन् `न जात एकोऽन्यं हन्ति नाप्यन्याधार' इति न्यायेन समानाश्रययोरपि ज्ञानेच्छयोर्वध्यघातुकभावेनानैकान्त्यम् । प्रतियोग्यनुयोगिभावश्चेत्समाना-श्रययोरपि ज्ञानतत्प्रागभावयोस्तत्सम्भवेनानैकान्त्यम् । सहानवस्थान-नियमश्चेदेकात्मवादेऽसिद्धिरिति दूषणे सत्येव दूषणान्तरमाह – **पारमार्थिकेति** ॥

(३) (हु.) ॥ **आत्मत्वमिति** ॥ आत्मेतरावृत्तित्वमात्रं पक्षतावच्छेदकं

---

[1] `दुर्धर' मु. तथा कु१। कु२.पाठे एव अयं पाठः ।

न सकलात्मवृत्तित्वमपि । आत्मबहुत्वस्यासिद्धत्वेन प्रतिवादिन आश्रयासिद्धिप्रसङ्गात् । उक्तपक्षतावच्छेदकानुसारेण तु सामानाधिकरण्येन साध्यसिद्धिमात्रेणात्मनानात्वसिद्ध्या[1]कृतार्थत्वेनावच्छेदकावच्छेदेन साध्यसिद्धेरनपेक्षणात् आत्मेतरावृत्तित्वरूपोक्तपक्षतावच्छेदकाक्रान्तसुखदुःखादौ हेतुसाध्ययोरभावेऽपि न भागासिद्ध्यंशेबाधौ । निखिलात्मवृत्तित्वं वाऽऽत्मवृत्तिभेदप्रतियोगितावच्छेदकत्वाभाववत्त्वे सति वृत्तिमत्त्वरूपं (वा) पक्षतावच्छेदकमतो न पक्षासिद्धिः । द्रव्यत्वादिकमादाय सिद्धसाधनतावारणायावच्छेदकावच्छेदेन साध्यं साधनीयम् । अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वेऽप्यंशे सिद्धतादोष इति मताश्रयणे आत्मेतरावृत्तित्वमपि पक्षतावच्छेदककोटौ निवेश्यम् । नन्वेतत्पक्षे[2] सकलात्मवृत्तित्वमात्रस्य पक्षतावच्छेदकत्वपक्षे वा सकलात्मवृत्तिबहुत्वस्यापि[3] पक्षकोटिनिविष्टत्वात्परिक्ष्कियमाणजातित्वस्याप्यसम्भवात् भागासिद्धिः स्यात् । स्वमते तस्य बहुत्वस्य सिद्धत्वाद्विषयतासम्बन्धावच्छिन्नात्मत्ववृत्त्यवच्छेदकताकभेदस्यात्मनि सत्त्वेन तत्सङ्ग्रहाय भेदप्रतियोगितावच्छेदकतायां समवायसम्बन्धावच्छिन्नत्वस्यावश्यकत्वेनोक्तबहुत्वस्यावारणादिति चेन्न । आत्मनिष्ठसमवायसम्बन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावाप्रतियोगित्वस्यैव सकलात्मवृत्तित्वपदार्थत्वेन बहुत्वस्य वारणात् । स्वोत्पत्तिपूर्वक्षणे तदत्यन्ताभावस्याप्यात्मनि सत्त्वात् ध्वंसप्रागभावयोरत्यन्ताभावविरोधात् ॥ **नानाव्यक्तिनिष्ठमिति** ॥ स्वप्रतियोगिवृत्तित्वस्वानुयोगिवृत्तित्वोभय-

---

[1] `साध्यासिद्धि-' मु. २.

[2] `न चैतत्पक्षे' मु.

[3] सकलात्ममात्रवृत्ति-' मु.

सम्बन्धेन भेदविशिष्टमिति वा[1] स्वव्यापकत्वसम्बन्धेन द्वित्वविशिष्टमिति वाऽर्थः । तेन द्वित्वाश्रयवृत्तित्वस्य वा भेदवद्वृत्तित्वस्य वा साध्यत्वे घटात्मद्वित्वादिकं घटादिभेदमात्मनिष्ठं चादायात्मैक्येऽप्यात्मत्वे साध्यसम्भवेन सिद्धसाधनमर्थान्तरता वेति निरस्तम् ॥ जातित्वादिति ॥ अनवच्छिन्नसमवायसम्बन्धावच्छिन्नप्रकारताशालित्वादित्यर्थः । न तु नित्यत्वे सत्यनेकसमवेतत्वादित्यर्थः । अनेकवृत्तित्वस्यैवेदानीं साध्यत्वेन हेतुशरीरेऽधिकप्रवेशेऽपि साध्यावैशिष्ट्यापरिहारात् । न च साध्यावैशिष्ट्यं पक्षे साध्यसन्देहदशायां हेतौ सन्दिग्धासिद्धत्वपर्यवसायि,[2] तद्दोषं च जातित्वासिद्धेरिति स्वयमेव वक्ष्यतीति नेदानीं तदनुसन्धेयमिति वाच्यम् । आदावतिनिरभिप्रायकशङ्काया एवानुत्थानात् निश्चितासिद्धेरेव स्वमत-मालम्ब्य उत्तरत्र[3] वक्ष्यमाणतया सन्दिग्धासिद्धेरकथनाच्च । नापि जातित्वेन व्यवहारविषयत्वं तदर्थः । असदुत्तरेऽपि[4] तथा तान्त्रिकाणां व्यवहारेण तत्र व्यभिचारानिस्तारात् । नापि मुख्यतया तथात्वम् । कोशाद्यभावेन जातिपदमत्र मुख्यं तत्रामुख्यमिति निर्णयायोगात् । नापि व्यक्त्यभेदादि-बाधकषट्करहितत्वे सति धर्मत्वं तदर्थः । गगने व्यभिचारवारणाय धर्मत्वमितीति, गगनत्वादौ बाधकषट्कस्याप्यभावेन तत्र व्यभिचारात् । नापि बाधकाभावषट्कस्य[5] हेतुत्वमात्मैक्यवादिन एकव्यक्तित्वाभावस्यासिद्ध्या तद्घटितषट्कस्याप्यसिद्ध्यनिस्तारात् ।

---

1 'स्वप्रतियोगिवृत्तित्वस्वानुयोगिवृत्तित्वमिति वा' मु.

2 'हेतोरसन्दिग्ध-' मु. ३. इदं पदं मु.पाठे नास्ति ।

4 '-रेष्वपि' मु.

5 '-षट्कवत्त्वस्य' मु.

अस्मदुक्तार्थेऽन्त्यविशेषेषु स्वांशे तादात्म्येनानवच्छिन्नप्रकारताशालिषु घटरूपनिष्ठतद्व्यक्तित्वादीनामखण्डतया स्वरूपसम्बन्धे(-संसर्गेण) स्वरूपतो भानपक्षे तेषु (च) व्यभिचारवारणाय प्रकारतायां समवायसम्बन्धावच्छिन्नत्वस्य निवेशः । उक्तहेतुश्च घट इत्यनुभवबलाद्घट इवात्मेत्यनुभवबलादात्मत्वे(-बलादेवात्मत्वे) उक्तसाध्यसन्देहदशायामपि सिद्ध इति शङ्काभिमानः । समवायसंसर्गेण तदनुभवापलापेनोत्तरत्रासिद्धिरिति[1] ध्येयम् ॥ **आत्मन इति** ॥ आत्मनो निर्गुणत्वेनेति पाठः । निर्गुणत्वमात्मनो[2] व्यक्तिभेदस्य बाधितत्वे हेतुत्वेनोक्तम् । निर्गुणे परस्परव्यावर्तकधर्मरूपगुणाभावेन परस्परभेदो न घटते । अन्यथा घटः[3] स्वस्माद्भिद्येतेति भावः । नानाव्यक्तिभेदस्य बाधितत्वेनेत्यत्र नानेति प्रामादिकं जातित्वानङ्गीकारात् । समवेतत्वानङ्गीकारात् । तद्रूपत्वादाविव तस्य समवायावच्छिन्नानवच्छिन्नप्रकारता न सिद्धेति भावः ॥ **आत्मप्रतियोगिकेति** ॥ व्यासज्यवृत्तिधर्मावच्छिन्नभेदस्तदाश्रये नास्तीति[4] प्रतियोग्यवृत्तित्वं वा भेदे विशेषणं देयम् । अतस्तादृशं घटत्मोभयभेदमादाय न सिद्धसाधनतेति भावः ॥ **घटवदिति** ॥ आत्मन्यात्मभेदसाधनवेलायां तन्मात्रे विवादो नान्यत्रातो घटवदिति दृष्टान्तसङ्गतिः । अन्यथा सिद्धान्तग्रन्थस्थानामनुमानानां प्रायशो भेदघटितत्वादनुत्थितिरिति भावः । गुणाश्रयत्वरूपद्रव्यत्वस्य तज्ज्ञाप्यद्रव्यत्वस्य चासिद्धिरिति भावः । विकल्पपूर्वकमुभयविधद्रव्यत्वरूपहेतुदूषणपरत्वादेतत्फक्किकास्थलक्षणपदं

---

1 `-अपलापेनैवोत्तरत-' ह्.

२. `पाठे निर्गुणत्वम्-' ह्.

3 `घटोऽपि' ह्.

4 `नास्तीति' इत्यस्य स्थाने `नास्ति ।' इति पाठेन आभ्व्यमिति भाति ।

स्वरूपज्ञापकोभयार्थ(क)त्वेनापि योज्यम् ॥ सुखमिति ॥ अत्र नानाव्यक्तित्वरूपयथाश्रुतसाध्यस्य[1] पूर्वोक्तरीत्या सिद्धसाधनतावारणाय पूर्वोक्तनिष्कर्षकरणे कस्मिंश्चिदपि रूपे सुखे चाभावेन दृष्टान्तासिद्धिर्बाधश्च स्यातामिति न शङ्क्यम् । जगति नीलपीतादय एकैकाः सामग्रीबलात् तत्तद्व्यक्तिषु सम्बध्यन्ते वियुज्यन्ते च, तन्न्यायः सुखादावपीति मतमाश्रित्यैतदनुमानप्रवृत्तिः[2] ।

यद्वाऽत्र नानावृत्तित्वं नाम यत्किञ्चिद्वित्वव्यापकतावच्छेदकगुणत्वन्यूनवृत्तिजातिमत्त्वरूपं सुखत्वजातिमादाय सुखे साध्यमुपपादनीयम् । रूपे च रूपत्वमादायेदं चात्मभेदं विना न पर्यवस्यतीत्यात्मभेदसिद्धिः । गुणत्वसत्ते आदाय सिद्धसाधनतावारणाय गुणत्वन्यूनवृत्तीति ।

लाघवमनुसृत्यानुमानान्तरमाह – सुखत्वमिति ॥ स्वसमवायिसमवेतत्वसम्बन्धेन[3] यत्किञ्चिद्वित्वव्यापकमित्यर्थः साध्यपदस्यातो न कश्चित्क्षुद्रोपद्रवः । मनस्त्वे व्यभिचारवारणाय गुणनिष्ठेति । जातिपदं समवेतमात्रार्थकम् ॥ तदन्यत्वेनेति ॥ आद्यानुमाने शब्दान्यत्वेन द्वितीयानुमाने शब्दत्वादन्यत्वेनेत्यर्थः । यद्यप्येवमपि कत्वादिनिष्ठव्यभिचारो[4] दुर्वारस्तथाऽपि शब्दवृत्तिभिन्नत्वे तात्पर्यान्न कश्चिद्दोषः । शब्दान्यगुणसमवेतत्वादिति पर्यवसितो हेतुरितरांशस्य वैय्यर्थ्यात् । किमन्तःकरणरूपं सुखं पक्षः उतात्मरूपं सुखमिति[5] स्वमते[1] विकल्पं हृदि

---

1 `नानाव्यक्तिवृत्तित्वरूप-' मु. २. `-प्रवृत्तेः' मु.

3 `स्वसमवायिसमवायित्वादिसम्बन्धेन' हु.

4 `कत्वादिजातिषु व्यभिचारः' हु.

5 `किमात्मसुखमिति' मु.

कृत्वा क्रमाद्दूषयति – **सुखमिति** ॥ गुणत्वेनानेनासिद्धेरिति[2] ॥ गुणत्व-प्रकारकसिद्ध्यविषयत्वादित्यर्थः । तथा च गुणत्वरूपहेतुस्तत्रासिद्ध इति भावः । तस्यागुणत्वेनासिद्धेरिति पाठः सुगमः ।

॥ **चैत्रशरीरमिति** ॥ ननु चेतनस्यैव किञ्चित्स्वामित्वेन चैतन्यैक्य-वादिनां चैत्रशरीरस्वामिभिन्नस्वामिघटितसाध्याप्रसिद्धिः । न च व्यावहारिकभेदमादाय तत्प्रसिद्धिरिति वाच्यम् । हन्त तर्हि तत एव सिद्धसाधनतापत्तिः । तद्वारणाय भेदे पारमार्थिकत्वविशेषणदाने पुनर-प्रसिद्धविशेषणतेति चेन्न । चैत्रमैत्रपिण्डयोर्भेददर्शनेऽप्यन्तर्गतचेतनानां भेदादर्शनेन तत्र पारमार्थिकत्वाविशेषितभेदमात्रे विवादवेलायामुक्तानु-मानप्रवृत्तेर्न पारमार्थिकत्वघटनाप्रयुक्तसाध्या(प्र)सिद्धिः । न च तथाप्यप्रसिद्धविशेषणतोक्तेति वाच्यम् । स्वभिन्नस्वामिकत्वसम्बन्धेन मैत्रशरीरस्वामिन एव साध्यत्वात्सम्बन्धकोटौ स्वत्वस्य परिचायकतया भिन्नस्वामिकत्वमात्रस्य घटादिसम्बन्धतया प्रसिद्धत्वात् ॥ **तद्विरुद्धचेष्टा-वत्त्वादिति** ॥ तच्चेष्टाविरुद्धचेष्टावत्त्वादिति तदर्थः । नन्वत्र[3] विरुद्धत्वं तदधिकरणावृत्तित्वम् । चैत्रीयबाल्ययौवनकालीनयोः[4] शरीरयोः परस्परं भिन्नत्वेन परस्परविरुद्धचेष्टावत्त्वादुक्तसाध्याभावाद्व्यभिचारः । परिणाम-वादमवलम्ब्य तयोरभेदाङ्गीकारेऽपि पूर्वापरजन्मीयशरीराण्यादाय व्यभिचारः । चैत्रशरीरत्वरूप[5] सामान्यधर्मपुरस्कारेण हेतुशरीरघटकत्वे चिदैक्यवादिनां चैत्रशरीरस्यापि मैत्रशरीरत्वेन तद्घटितहेत्वसिद्ध्यापत्तेः ।

---

[1] `स्वमतेन' हु.

२. अनेनेति पदं हु.पाठे नास्ति ।

[3] `ननु तत्र' - हु.

४. `तच्चैत्रीय-' हु.

[5] `-शरीरस्वरूप-' मु.

तदतिरिक्तं तु प्रकृतोपयोगि[1] न निर्वचनार्हम् । किञ्च तद्देहावृत्तिमत्त्वमात्रं हेतुरस्तु । व्यभिचारस्तु न शङ्कार्हः । चेष्टात्वेन तस्या निवेशेऽपि व्यभिचारस्य वक्ष्यमाणत्वात् तस्येदानीमननुसन्धेयत्वादिति चेन्न । मैत्रशरीरस्य परिदृश्यमानशरीरत्वेनैव निवेशो न तु सामान्यरूपेणातो न प्रतिवाद्यसिद्धिः[2] । परिदृश्यमानशरीरचेष्टाकाल एव तदधिकरणावृत्ति-चेष्टावत्त्वं हेतुस्ततो न पूर्वजन्मशरीरबाल्यशरीरयौवनावस्थापन्न-शरीरा[3]ण्यादाय व्यभिचारः । अयोगिन[4] एव मैत्रस्य हेतुशरीरनिविष्टत्वा-द्योग्यवस्थापन्नतदीयैककालिकशरीरद्वयक्रियोपादानेन[5] न व्यभिचारः ।

चेष्टात्वेनानिवेशे तद्वृत्तिधर्माधिकरणवृत्तिधर्मत्वेन[6] निवेशेऽसिद्धिः । तच्छरीर(वृत्ति)प्रमेयत्वगगनाभावाद्याश्रयत्वस्य चैत्रशरीरे सत्त्वाच्चैत्र-शरीरक्रियायास्तत्र सत्त्वात्[7]। तदवृत्तिमात्रस्य हेतुत्वे मैत्रशरीरावृत्ति-रूपादिशालिषु बहुषु मैत्रवसनादिषु[8] स्फुटतरव्यभिचारवतो हेतूकरणायोगेन चेष्टात्वेन तन्निवेशः । तथात्वे शरीरद्वारा प्रयत्नसाध्यक्रियास्वेव तादृशचेष्टात्वं[9] वर्तते । ताश्च शरीरातिरिक्तेषु न सन्त्येव । शरीरान्तराणि तु पक्षतुल्यानीति न कुत्रापि व्यभिचार इति अनुमानप्रयोक्तुरभिप्रायः ।

---

[1] `प्रकृतानुपयोगि' इति पाठेन भाव्यमिति भाति ।

[2] हु.पाठे `सन्दिग्धासिद्धिः' इति विलिख्य `= =' इति चिह्नयित्वा उपरि प्रतिवाद्यसिद्धिरिति ऋजूकृतम् ।

[3] `-अवस्थानापन्नशरीर-' मु.।

४. `-चारो योगिन' इत्यवग्रहरहितः मु.पाठः ।

[5] `-अवस्थानापन्नतदीयैकैकशरीरक्रियोपादानेन' - मु.पाठः ।

[6] `-अधिकरणावृत्तित्व-' मु.

७. `सत्त्वादसिद्धिः स्यात् ।

[8] `मैत्रादिवसनादिषु' मु.

९. `-चेष्टावत्त्वं' हु.

तदवृत्तिचेष्टावत्त्वमात्रनिवेशे हेतुरप्रयोजकः स्यात् । एतच्छरीरक्रियाया अपि तदात्मना निष्पादयितुं शक्यत्वादित्याशङ्का स्यादतस्तत्काल एव तच्चेष्टाधिकरणावृत्तित्वरूपविरोधस्य हेतुभूतचेष्टायां निवेशः[1] । विरुद्ध-क्रिययोरेकदैकप्रयत्नेनोत्पादायोगादात्मनि युगपज्जीवनयोनियत्नं[2] विना विशेषगुणद्वयानुत्पादे तत्क्रियानुकूलप्रयत्नाश्रयोऽन्यो जीवात्मा सिध्यति । ईश्वरप्रयत्नस्य साधारण्यान्न तमादाय पर्यवस्यत्यतो न जीवभेद-रूपोद्देश्यासिद्धिरित्यनुमानं कर्तुं हृदयं[3]। भवतु भवदभिमतशरीरक्रियैव[4] तथाऽपि सा केन रूपेण हेतुशरीरे निवेश्यते । वैजात्येन तन्निवेशे माना-भावः । क्रियात्वेन निवेशे च यत्किञ्चित्क्रियाविरुद्धक्रियावत्त्वं[5] यत्र तत्स्वामिभिन्नस्वामिकत्वं तत्रेति सामान्यव्याप्तिः प्रकृतेऽभिमता । अथवा मैत्रशरीरवृत्तिक्रियाविरुद्धक्रियावत्त्वं यत्र तत्र तत्स्वामिभिन्नस्वामिकत्वमिति विशेषव्याप्तिः । नोभयमपि सम्भवति व्यैचारादित्याह[6] ॥ अत्रेति ॥ व्यभिचारमुपपादयति – **सकलैकेति** ॥ सकलस्य एकस्वामी ययोरिति विग्रहः । एकपदं मुख्यस्वामिपरम् । तथा चेश्वरमात्रस्वामिकतया मतद्वयसिद्धयोरित्यर्थः पर्यवस्यति । न च विशेषव्याप्तौ कथं व्यभिचारस्तत्रेति वाच्यम् । परमते सर्वं प्रत्यप्येकजीवस्यैव स्वामित्वाद् भिन्नस्वामिनः कस्याप्यभावात् व्यभिचारज्ञानाभावः ।[7] नन्वप्रसिद्ध-

---

1 `निवेश्यः' मु.  २. `-योनित्वं' मु.

3 `-अनुमानकर्तुर्हृदयम्' इति पाठेन भाव्यमिति भाति ।

4 `-अभिमता शरीर-' हु.  ५. यत्किञ्चिदिति पदं हु.पाठे नास्ति ।

6 `सम्भवतीत्याह' मु.

7 `सकलैकेति' इति प्रतीकधारणानन्तरं मुद्रितपाठे एवं दृश्यते — `सकलस्यैक इति

विशेषणतावारणाय[1] स्वभिन्न स्वामिकत्वसम्बन्धेन मैत्रशरीरस्वामिनः साध्यत्वाङ्गीकारान्न विशेषव्याप्तौ व्यभिचार ईश्वररूपस्वामिनमादाय साध्योपपादनसम्भवादिति चेन्न । परस्यैकजीववादिनो मते ईश्वरस्यापि स्वप्नदृष्टराजादिवत्स्वरूपत एव कल्पितत्वेन तन्मतरीत्यैव विशेषव्याप्तौ व्यभिचारस्याभिमतत्वात् । दृष्टान्ताभावस्तु परमतरीत्या क्रियात्वेन निवेशात्[2] सामान्यव्याप्तौ विशेषव्याप्तौ वा शरीरवृत्तिक्रियात्वेन निवेशे[3] वा दुरुद्धर एव । स्वमते च यथाकथञ्चिदीश्वररूपस्वामिनमादाय दृष्टान्तः सम्भवतीत्याशयेनैतदनुमानस्य शङ्काविषयता सम्भवति । अन्यथा स्वमतेऽपि[4] कथमपि दृष्टान्तरहितस्य निर्दलतया शङ्काऽनर्हतैव स्यात् । तर्हीश्वररूपस्वामिनमादाय सिद्धसाधनताकवलितत्वात्कथमस्य शङ्का-गोचरत्वमिति वाच्यम् । विरुद्धचेष्टा(द्वय)जनकासाधारणप्रयत्नयोर्युग-पदेकात्मन्युत्पत्त्यसम्भवरूपात्पूर्वोक्तरीत्येतरबाधरूपपक्षधर्मताबलाज्जीवमा दाय पर्यवस्यति । अतो जीवमादाय नोद्देश्यासिद्धिरित्याशयाच्छरीर-क्रियात्वेन[5] हेतुत्वेऽपीश्वररूपस्वामिनमादाय वा चैत्रशरीरमात्रस्य पक्षतावेलायां डित्थादिशरीरेषु साध्यं सूपपादमित्याशयेन वाऽनुमानस्य

---

विग्रहः । एकपदं मुख्यस्वामिपरम् । सकलस्यैकस्वामी ययोर्घटपटयोरीश्वरमात्र-स्वामिकयोरित्यर्थः । परमते च सर्वं प्रत्येकजीवस्य स्वामित्वाद्भिन्नस्य स्वामिनः कस्याप्यभावाद्व्यभिचार इति भावः । एतन्न्यायेनैव मैत्रस्वामिकघटपटादौ व्यभिचारो विशेषव्याप्तावनुसन्धेयः' - इति ।

1 `न त्वप्रसिद्ध-' मु.

२. `निवेश्यः' मु.

3 `-क्रियात्वेनानिवेशे' ह.

४. `स्वमते' मु.

5 `नोद्देश्यसिद्धि-' ह.

शङ्कापथारोहितत्वम् । वादिना त्वीश्वरानङ्गीकाराच्छरीरान्तरेष्व-प्युक्तसाध्यनिश्चये[1] बीजाभावाच्च दृष्टान्ताभावः स्थिर एवेत्याशयेन तस्यैव दृष्टान्ततया कथनमिति न कोऽपि दोषः । न चैवमनुमानशङ्कस्य साध्यप्रसिद्धावपि स्वरीत्या भ्रमसम्भवेन[2] यथाश्रुतसाध्यनिर्देशसम्भवात्तत्र[3] भवदुक्तसाध्यपरिष्कारोऽकिञ्चित्कर इति वाच्यम् । स्फुटतरप्रतिज्ञादोषं प्रथममेव वक्तव्यं विहाय[4] व्यभिचारादिकथनस्यात्यन्तसन्दर्भविरुद्धत्वेन साध्यस्यास्मदुक्तपर्यवसानपर्यन्तं ग्रन्थकाराभिमतत्वात् । अथवाऽनुमाने ईश्वरे[5] सिद्धसाधनतावारणाय स्वामिपदेन स्वनिष्ठस्वत्वनिरूपकत्व-प्रयुक्तसुखदुःखान्यतरवत्त्वरूपस्वामित्वावच्छिन्नमेव[6] साध्ये तत्सम्बन्धे च घटकं दृष्टान्तासिद्धिस्तु[7] शरीरान्तरेषु जीवान्तरं वर्तत इति स्वमतमात्रावलम्बनत्वभ्रमेण[8]। तथात्वे चेश्वरमात्रनियम्यघटादौ स्वमते(ऽपि) विशेषव्याप्तेर्व्यभिचारो द्रष्टव्यः । अथवाऽप्रसिद्धविशेषणता-वारणाय चैत्रशरीरे स्वस्वामिकत्वरूपपक्षविशेषणमुपादाय मैत्रशरीर-स्वामिनिष्ठस्वामितानिरूपकत्वाभाव एव साध्यः । पक्षे साध्यं च निविष्टं स्वामित्वमीश्वरव्यावृत्तमुक्तरूपं ग्राह्यम् । ईश्वरस्वामिकत्वेन पर्यव-

---

1 `-शरीरान्तरेषु उक्त-' हु.

२. `भ्रम-' मु.

3 `-निर्देशासम्भवात्' हु.

4 `-दोषमेव वक्तव्यं तद्विहाय' मु. । तद्विहायेति पदं हु.पाठे नास्ति । तत्रापि तच्छब्दः अनन्वित इति त्यक्तः ।

5 `ईश्वरमादाय' हु.

6 `-निरूपकत्वसुख-' मु. । प्रयुक्तपदं नास्ति । एवं `-स्वामित्वावच्छिन्नमेव' मु.

7 `दृष्टान्तसिद्धिस्तु' मु.

८. `-भ्रमेण' मु.

सानवारणाय बाधवारणाय[1] च पक्षे तद्विशेषणानुपादाने निःस्वामिकत्वेन पर्यवसानापत्त्याऽर्थान्तरता स्यादतस्तन्निवेशः । ग्रन्थोक्तसाध्यं तूक्तरीत्या पक्षविशेषणज्ञानरूपसामान्यज्ञान[2]सहकृतेतरविशेषबाधग्रहात्मकपरामर्शाधीधीनानुमितिविषयसाध्यपर्यवसानमादाय । उक्तं चैतत्प्रत्यक्षमणौ `बहुसाध्यकानुमाने वह्निव्याप्यवद्विशेष्यकत्वावच्छिन्नवह्नित्वप्रकारक-व्यापकदाहाजनकत्ववद्विशेष्यकत्वावच्छिन्नवह्नित्वप्रकारकत्वस्य बाधग्रह-रूपा वह्नित्वाभाववत्पुरोवृत्तिविशेष्यकत्वावच्छिन्नवह्नित्वप्रकारकत्वाभावस्य व्यतिरेकिमुद्रयाऽनुमितिसामग्रीव्यापकत्वावच्छेदकत्वेनागृहीतेनापि वह्नित्व-वद्विशेष्यकत्वावच्छिन्नवह्नित्वप्रकारकत्वेन प्रामाण्यं गृह्णाति । एकविशेष-बाधग्रहसहितसामान्यानुमितिसामग्र्या अपरविशेषानुमितिजननेन स यथा सिध्यति तद्वत्सामान्यवत्ताज्ञानसहितैकविशेषाभावानुमितिसामग्र्या अपि व्यापकत्वेनागृहीतोऽप्यपरविशेषः[3] सिध्यति । विशेषान्तरसंशयानु-त्पादस्योभयस्थलेऽप्यनुभवसिद्धत्वा'दिति । इदं च दीधित्याद्युक्तं सर्वमनूदितं ज्ञेयम् । इत्थं च चैत्रशरीरवच्छरीरान्तरेऽपि विप्रतिपत्तिसम्भवात्तेषां दृष्टान्तत्वायोगेन चेष्टापदेन किं क्रियामात्रं विवक्ष्यते । तथात्वे चारण्यस्थानानां[4] मैत्राद्यस्वामिकानामद्वैतमतेऽपि दृष्टान्तत्वासम्भवात् । किं किं वा शरीरवृत्तित्वं विशेषणं निवेश्य वेति विकल्पौ हृदि निधायाद्ये सामान्यव्याप्तौ विशेषव्याप्तौ च चैत्रमैत्रादिस्वामिकघटपटादाविव व्यभिचारः स्वमतेनैकजीववादिनोक्तः सकलैकस्वामिकयोरिति । तत्र हेतुगर्भ-विशेषणमनुमानदूषकेण दत्तमनुमानप्रयोक्तृमतेनापि सामान्यव्याप्ता-

---

[1] इदं पदं मु.पाठे नास्ति । .

२. सामान्यज्ञानेति हु.पाठे नास्ति ।

[3] `व्यापकत्वेन गृहीतः-' मु.

४. `चारण्यास्थानां' हु.

वीश्वरैकस्वामिकघटादौ व्यभिचारस्तन्निरूपितदुःखित्वघटितोक्तसाध्य-(शरीर)निविष्टस्वामितावतोऽप्रसिद्धेः । विशेषव्याप्तौ च मैत्रशरीर-क्रियाविरुद्धक्रियावति मैत्रस्वामिके घट एव व्यभिचार उक्तवाक्येनोप-पादितप्राय एव । द्वितीयकल्पानुसरणे च शरीरवृत्तिक्रियायाः शरीरातिरिक्तेष्वभावादितरशरीराणां पक्षतुल्यत्वान्न व्यभिचारः किन्तु दृष्टान्तासिद्धिः । क्रियामात्रनिवेशे च व्यभिचार एव न दृष्टान्तासिद्धिरिति न पूर्वोत्तरग्रन्थसन्दर्भविरोध इति ॥ **शरीरत्वेनेति** ॥ शरीरत्वे सतीति हेतुविशेषण इत्यर्थः । विशेष्यांशानुपादाने मैत्रशरीर एव व्यभिचार इति भावः । क्वचित्पुस्तके एकस्वामिकयोरिति पाठो दृश्यते । स च सुगमः ।[1]

॥ **विमताविति** ॥ ननूभयोर्भेदसिद्धेः प्राक् कथं द्वित्वेन पक्षता ? प्रतिवादिनः पक्षाप्रसिद्ध्यापातादिति चेन्न । (चैत्र)मैत्रशरीरवृत्तिद्वित्वस्य प्रत्यक्षसिद्धत्वेन[2] स्वाश्रयावच्छिन्नभोगवत्त्वसम्बन्धेन पक्षतावच्छेदकत्वा-नुसरणात् । तस्य चोभयशरीरावच्छेदेनैक एवात्मेति मतेऽपि बाधितत्वा-भावात् ॥ **विरुद्धेति** ॥ विरुद्धत्वं च नैकाधिकरणावृत्तित्वं भेदसिद्धेः प्राक् हेतोरुभयसिद्धत्वानुपपत्तेः । किन्तु परस्पराभावात्मकत्वं परस्पराभाव-व्याप्यत्वं वा । तच्च सुखविशेषतदभावदुःखादीनां लौकिकप्रतीति-बलात्परेणाप्यङ्गीकृतम् । अन्यथा (सर्व)लौकिकव्यवहारोच्छेदप्रसङ्गात् । तस्य च नासिद्धिर्मतद्वयेऽपीति भावः ॥ **अपारमार्थिकेति** ॥ पार-मार्थिकत्वविशेषणं परित्यज्य भेदत्वसामान्यरूपेण साध्यत्वे व्यावहारिकत्वघटितरूपेण साध्यत्वे चेत्यर्थः । भेदसाधकसकलानुमान-साधारण्यज्ञापनायानुमानदूषणावसान एव (तद्)दूषणोक्तिरिति ध्येयम् । न

---

[1] क्वचिदित्यादिवाक्यद्वयं हु.पाठे नास्ति । २. `-सिद्धत्वे' मु.

चैवं सति पूर्वानुमाने साध्यपरिष्कारस्यात्रानुमाने पक्षपरिष्कारस्य भवत्कृतस्य वैय्यर्थ्यमुक्तदूषणा(न)नुसन्धानेनैवापाततस्तदुक्तिसम्भवादिति वाच्यम् । तथा सति पूर्वानुमाने साध्यप्रसिद्धिमात्रेणानुमाने पक्षप्रसिद्धिमात्रेण कृतार्थतयाऽनुमानप्रवृत्तेरेव वैय्यर्थ्यापत्त्योक्तरीत्या परिष्कारस्यावश्यकत्वात् । तदुत्तरं त्वन्तःकरण एव दुःखादि-सत्त्वान्निर्धर्मिकात्मनि हेत्वसिद्धि(रिति)दूषणस्यैकजीववादबहुजीववादोभय-रीत्या स्फुटत्वात्तदनुक्त्वा बहुजीववादमतेनेदं दूषणम् । चेतन-भेदजडभेदसाधकसर्वानुमानसाधारणमुच्यते । कथञ्चिच्चेतनभेदसाधनमात्रेण तन्मात्रविषये एकजीववादनिरासेऽपि न भवदभिमतविश्वभिन्नत्वसिद्धिरिति ज्ञापनायेति सर्वं समञ्जसम् ।

(३) (का.) यद्यप्याद्यपद्योक्तमीश्वरधर्मिकविश्वप्रतियोगिकभेदसाधका-नुमानमेवादौ प्रतिक्षेप्यम् । तथापि सामान्यतश्चेतनभेदसाधकानुमानस्या-ऽभासत्वे विशेषतस्तत्साधकस्य सुतरामाभासत्वमित्येतत्सूचनाय सामान्यतश्चेतनभेदसाधकानुमानानि तावद्दूषयति – आत्मत्वमिति ॥ आत्मपदप्रवृत्तिनिमित्तमित्यर्थः । तेनात्मत्वस्य जातिरूपस्य पक्षत्वे पक्षाप्रसिद्धिः । तद्व्यक्तित्वरूपस्य तथात्वे च बाध इति शङ्कानवकाशः ॥ नानाव्यक्तिनिष्ठमिति ॥ अनेकसमवेतमित्यर्थः । [1]स्वाश्रयप्रतियोगिक-

---

[1] ॥ स्वाश्रयप्रतियोगिकेत्यादि ॥ दृष्टान्ते इत्थं समन्वयः - स्वं = पृथिवीत्वं, स्वाश्रयः = पटः, तत्प्रतियोगिकभेदः = घटः पटो नेत्याकारकः, तद्वान् = घटः, तद्वृत्ति = पृथिवीत्वं, तद्वृत्तित्वं पृथिवीत्वे - इति । पक्षे च - स्वम् = आत्मत्वं, स्वाश्रयः = तदात्मा, तत्प्रतियोगिकभेदः = एतदात्मा तदात्मा नेतिप्रतीतिसिद्धः, तद्वान् = एतदात्मा, तद्वृत्ति = आत्मत्वम् - इत्यादि ।

भेदवद्वृत्तीति यावत् । न चैवमात्मत्वस्यात्मघटोभयसमवेतत्वसिद्ध्याऽर्थान्तरमिति[1] वाच्यम् । आत्मत्वे घटादिसमवेतत्वस्य बाधितत्वेनासिद्धेः । सिद्धौ वाऽऽत्मत्वाश्रयनानात्वसिद्ध्योद्देश्यसिद्धेः । एतच्च तार्किकरीत्या । सिद्धान्ते जातेरननुगतत्वादिति ध्येयम् ।

वस्तुतो निरुक्तभेदवद्वृत्तित्वं तादृशभेदवद्वृत्तिभेदप्रतियोगितायां [2]स्वरूपतोऽनवच्छेदकत्वम् । आत्मत्वस्य च प्रतिव्यक्ति भिन्नत्वेऽप्य-

---

[1] ॥ अर्थान्तरमिति ॥ आत्मत्वस्य नानाव्यक्तिनिष्ठत्वं तदाश्रयाणां नानात्वेन सिध्यति । आत्मत्वाश्रयाश्च आत्मान इति उद्देश्यः आत्मभेदः सिध्यति इति अनुमानप्रयोक्तुः आशयः । किन्तु, एतदनुमानसाध्यं अन्यथापि पर्यवसितुमर्हति । अक्लृप्तानामनेकेषामात्मनां कल्पनापेक्षया क्लृप्तयोः एकस्मिन् आत्मनि तथा घटे चेत्येवं आत्मघटयोः आत्मत्वाङ्गीकारेऽपि साध्यपर्यवसानं सम्भवति । तथा च उद्देश्यसिद्धिं विना साध्यपर्यवसानात् अर्थान्तरता - इति । परिहारस्यायमाशयः - यथा प्रमाणबाधः न स्यात् तथा खलु साध्यपर्यवसानं करणीयम् । प्रकृते जडे घटे चैतन्यस्वभावः आत्मत्वं बाधितमिति न तथा साध्यपर्यवसानं सम्भवति । अथवा, आत्मघटोभयस्मिन् आत्मत्वसिद्धावपि नार्थान्तरता । आत्मत्वाश्रयाः नाना इत्यस्य साधनमत्र उद्देश्यम्, आत्मा एक एवेति अद्वैतिपक्षस्य प्रतिपक्षत्वात् । तथा च उद्देश्यस्यैव सिद्धेः नार्थान्तरता - इति भावः ।

[2] ॥ स्वरूपतोऽनवच्छेदकत्वमिति ॥ अत्र श्रीप्रह्लादाचार्याः - स्वरुपतोऽवच्छेदकत्वं च अवच्छेदकताविशिष्टान्यावच्छेदकत्वम् । अवच्छेदकतावैशिष्ट्यञ्च स्वनिरूपितत्व-स्वनिरूपकनिरूपितत्वान्यतरसम्बन्धेन । तथा च स्वाश्रयप्रतियोगिकभेदवद्वृत्तिभेद-प्रयोगितानिरूपिता अवच्छेदकताविशिष्टान्या या अवच्छेदकता तदभावः प्रकृते साध्य इत्युक्तं भवति। पक्षे च आत्मत्वे प्रकृतसाध्यपर्यवसानं तु इत्थम् - स्वम् आत्मत्वम् । स्वाश्रयः तदात्मा । स्वाश्रयप्रतियोगिकभेदश्च "एतादात्मा तादात्मा न" इति प्रतीतिसाक्षिको भेदः। भेदवान् एतदात्मा। तद्वृत्तिपूर्वोक्तभेदप्रतियोगिता च

यमात्मा नात्मेत्यादिप्रतीत्यभावेन स्वरूपतस्तत्तदात्मवृत्तिभेदप्रतियोगितानवच्छेदकत्वान्न दोषः । स्वरूपत इति विशेषणात्तत्तद्व्यक्तित्वेनात्मत्वस्यात्मान्तरवृत्तिभेदप्रतियोगितावच्छेदकत्वेऽपि न क्षतिः ॥ एवमग्रेऽप्यूह्यम् । हेतूकृतं जातित्वं च न नित्यानेकसमवेतत्वम् । [1]नित्यत्ववैयर्थ्यात् । साध्याविशिष्टत्वाच्च । किं त्वखण्डोपाधिर्जातिपदवाच्यत्वं वेति ध्येयम् ॥ इत्यस्यासिद्धेरिति ॥ इति [2]न्यायप्रतिपाद्यहेतोरसिद्धेरित्यर्थः । व्यक्तिभेदस्य स्वाभाविकात्मभेदस्य ।

---

तदात्मत्वाच्छिन्ना तदात्मनिष्ठा प्रतियोगिता। तन्निरूपिता आत्मत्वनिष्ठाऽवच्छेदकता च तत्वनिष्ठावच्छेदकताविशिष्टा। अत्र च मतद्वयम्। तदात्मप्रतियोगिकभेदीयप्रतियोगितानिरूपिता अवच्छेदकता आत्मत्वमात्रे। तादृशावच्छेदकतानिरूपिताऽवच्छेदकता तु तत्वे इत्येकं मतम्। अपरं तु, तादृशप्रतियोगितानिरूपिता अवच्छेदकता तत्वे आत्मत्वे चास्तीति। आद्यमतानुसारेणात्मत्वनिष्ठावच्छेदकता स्वनिरूपितत्वसम्बन्धेन तत्वनिष्ठावच्छेदकताविशिष्टा । द्वितीयमतानुसारेण च स्वनिरूपकनिरूपितत्वसम्बन्धेन। स्वं तत्वनिष्ठावच्छेदकता । स्वनिरूपिका तदात्मनिष्ठा प्रतियोगिता। तन्निरूपितत्वं चात्मत्वनिष्ठावच्छेदकतायामिति । एवं च उक्तान्यतरसम्बन्धेन अवच्छेदकताविशिष्टावच्छेदकतैव आत्मत्वे। न तु तादृशावच्छेदताविशिष्टान्यावच्छेदकता। "एतदात्मा आत्मा न" इति प्रतीतेरभावादिति।

1 ॥ नित्यत्ववैयर्थ्यादिति ॥ हेतुघटकविशेषणानां व्यभिचारवारकतयैव सार्थक्यमिति नियमात् यदि अनेकसमवेतत्वस्य व्यभिचारः स्यात् तर्हि नित्यत्वं निवेश्येत । परन्तु तथा नास्तीति तस्य वैयर्थ्यमिति भावः ।

2 ॥ न्यायप्रतिपाद्येति ॥ मूले अनुमानप्रयोगान्ते इत्यस्यासिद्धेः इति दृश्यते । सर्वनामशब्दानां समीपवृत्तिपरामर्शकत्वात् अनुमानस्यासिद्धिरुक्तेति भाति । तच्चासङ्गतम्, अनुमानस्य वादिना प्रयुक्तत्वेन प्रतिवादिना श्रुतत्वेन चासिद्धेर्वक्तुमशक्यत्वात् । अतस्तद्व्युदासाय अस्य इति शब्दस्य एतन्न्यायप्रतिपाद्यहेतोः इति व्याख्या कृता । एवं च

गगनत्वादेर्जातित्ववारणाय स्वाभाविकव्यक्तिभेदस्य जातिनियामकत्वादिति भावः । इदमुपलक्षणम् । साध्यशरीरे पारमार्थिकत्वविशेषितभेदनिवेशे साध्याप्रसिद्धिः । तदविशेषितभेदनिवेशे चापारमार्थिकभेदमादाय सिद्धसाधनमित्यपि बोध्यम् ।

॥आत्मेति॥ अत्र घटादिभेदसिद्ध्याऽर्थान्तरवारणायाऽत्यमप्रतियोगिकेति । आत्मत्वव्याप्यरूपावच्छिन्नप्रतियोगिताकेत्यर्थः । तेनात्मघटोभयभेदमादाय नार्थान्तरम् । [1]आत्मप्रतियोगिकप्रतियोग्यवृत्तिभेदः साध्य इत्यप्याहुः । यद्यप्यत्र प्रमेयत्वादेरपि हेतुत्वं सम्भवति । तथापि तद्धेतुकानुमानस्य द्रव्याद्रव्यसाधारणबहुतरभूयोदर्शनाधीनतया न सुकरत्वमित्याशयेन द्रव्यत्वस्यैव हेतुत्वमनुसृतम् । द्रव्यत्वस्य [2]जातित्वे विवादात् गुणाश्रयत्वलक्षणेत्युक्तम् । गुणाश्रयत्वस्याश्रयत्वापेक्षया [3]गुरुतया हेतुत्वानङ्गीकारे तु आश्रयतया गुणस्यैव हेतुत्वं बोध्यम् ।

---

हेतोरेवासिद्धिः = पक्षेऽसत्वं, न तु अनुमानस्य इति भावः ।

[1] ॥ आत्मप्रतियोगिकप्रतियोग्यवृत्तिभेद इति ॥ अत्र श्रीप्रह्लादाचार्याः - "आत्मा आत्मघटोभयं न" इति प्रतीतेः सद्भावात् आत्मघटोभयप्रतियोगिकत्वे नात्मप्रतियोगिकोऽयं भेदः प्रतियोगिभूतात्मवृत्तिरेवेति तद्व्युदासः। - इति ।

[2] ॥ जातित्वे विवादादिति ॥ आत्मव्यक्तिभेदे विवादात् आत्मत्वस्य जातित्वे विवाद इत्यर्थः ।

[3] ॥ गुरुतयेति ॥ इयमत्राशङ्का - नन्वेवं तर्हि आत्मा आत्मप्रतियोगिकभेदाधिकरणं गुणाश्रयत्वात् इत्यनुमानमुक्तं स्यात् । अत्र च हेतुत्वानुपपत्तिः दोषः । तथा हि । `सम्भवति लघौ गुरौ तदनङ्गीकरादि'ति नियमात्, प्रकृते लघोः आश्रयत्वस्यैव हेतुत्वसम्भवे (लघोः आश्रयत्वत्वस्यैव हेतुतावच्छेदकत्वसम्भवे) गुरोः गुणाश्रयत्वस्य हेतुत्वं (गुरोः गुणाश्रयत्वत्वस्य हेतुतावच्छेदकत्वं) न सम्भवति इति चेत्तर्हि अत्र गुणस्यैव

गुणाश्रयत्वं [1]लक्षणमभिज्ञकं यस्येत्यर्थाद्द्रव्यत्वजातेरेव हेतुत्वमित्यपि वदन्ति ॥ अनङ्गीकारादिति ॥ [2]यद्यपि स्वभावतो निर्गुणस्याप्यारोपितगुणाश्रयत्वान्नासिद्धिः । आरोपितधूमवत्त्वस्यैवाग्निसाधकत्वाभ्युपगमात् । तथापि सिद्धसाधनतावारणाय पारमार्थिकभेदस्यैव साध्यतया आरोपित-

---

हेतुत्वं, गुणत्वस्य च हेतुतावच्छेदकत्वम् । तथा च आत्मा आत्मप्रतियोगिकभेदाधिकरणं गुणादित्यनुमानम् । अत्र आश्रयत्वं हेतुतावच्छेदकसम्बन्धः । एतत्सूचनायैव गुणाश्रयत्वं हेतुतया निर्दिष्टमिति भावः ।

1 ॥ **लक्षणमभिव्यञ्जकमिति** ॥ प्राचीनानुमाने गुणाश्रयत्वलक्षणद्रव्यत्वमिति मूलस्य गुणाश्रयत्वरूपद्रव्यत्वमित्यर्थः । इदानीं लक्षणशब्दस्य अभिव्यञ्जकार्थकतया गुणाश्रयत्व-व्यङ्ग्यद्रव्यत्वमित्यर्थः । एवं चेदानीं द्रव्यत्वमेव हेतुः । तस्यात्मनि असिद्धिरित्युक्ते कुत इति जिज्ञासा स्यात् । तत्परिहाराय गुणाश्रयत्वव्यङ्ग्येत्युक्तम् । तथा चायमाशयः - द्रव्यत्वमत्र वर्तते, अत्र न वर्तत इत्यत्र गुणाश्रयत्वं लिङ्गम् । निर्गुणे व्यञ्जकस्य अभावात् व्यङ्ग्यं द्रव्यत्वमपि न सिद्ध्यतीति हेतोः असिद्धिरिति भावः ।

2 ॥ **यद्यपीति** ॥ आरोपितधूमवत्त्वस्यैवेति ॥ अयमत्र वादक्रमः - ननु मूले आत्मनो निर्गुणत्वात् न तत्र द्रव्यत्वसम्भव इति असिद्धिरुक्ता । किन्तु, स्वभावतो निर्गुणेऽपि आत्मनि आरोपितगुणाः स्वीक्रियन्ते । अतो नासिद्धिः । न च आरोपितस्य कथं हेतुत्वमिति वाच्यं, यो धूमः लोके वह्निसाधकतया स्वीकृतः सोऽपि मायावादिमते वस्तुतः ब्रह्मणि आरोपित इति आरोपितस्य साधकत्वं सिद्धमिति प्रकृतेऽपि आरोपितगुणानां हेतुत्वसम्भवः इति शङ्कितुराशयः । अत्र आरोपितधूमवत्त्वमित्यनेन बाष्पारोपितधूमः न ग्राह्यः । तस्याग्निसाधकत्वेनानभ्युपगमात् । तथापीत्यादिपरिहारग्रन्थस्यायमाशयः - आरोपितमपि हेतुर्भवतीति सत्यं । परन्तु तेन सिद्ध्यन् भेदोऽपि आरोपितः = व्यावहारिकः सिद्ध्यतीति सिद्धसाधनता स्यात् । अतः पारमार्थिकभेद एवात्र साध्य इति वक्तव्यम् । तत्साधने च आरोपितगुणाश्रयत्वमसमर्थमिति पारमार्थिकगुणाश्रयत्वं हेतुतया स्वीकार्यम् । तथा चासिद्धिः - इति ।

गुणाश्रयत्वस्याप्रयोजकतया तदपि पारमार्थिकमेव वाच्यमित्यसिद्धिरिति भावः ।

॥ सुखं नानाव्यक्त्याश्रितमिति॥ यद्यपि रूपादेः प्रत्येकं नानाव्यक्त्याश्रितत्वाभावात् दृष्टान्ते साध्यवैकल्यम् । संयोगादेर्दृष्टान्तत्वसम्भवेऽपि रूपादावनैकान्त्यम् । तथापि जात्या नानाव्यक्त्याश्रितत्वस्य [1]स्वाश्रयाश्रयनिष्ठभेदप्रतियोगितावच्छेदकवृत्तिगुणत्वव्याप्यजातिमत्त्वरूपस्य साध्यत्वान्न दोषः । रूपत्वादेः स्वाश्रयनीलघटादिनिष्ठभेदप्रतियोगिता-

---

1 ॥ स्वाश्रयाश्रयेति ॥ अयमत्र दृष्टान्ते समन्वयक्रमः - स्वं = रूपत्वं, स्वाश्रयः = नीलरूपं, स्वाश्रयाश्रयः = नीलघटः, तन्निष्ठभेदः = नीलघटः पीतघटो नेति प्रतीतिसाक्षिकः, तत्प्रतियोगी = पीतघटः, प्रतियोगिता = पीतघटनिष्ठा, प्रतियोगितावच्छेदकं = पीतघटत्वं । अवच्छेदककोटिप्रविष्टानामप्यवच्छेदकत्वमिति न्यायात् पीतघटत्वान्तर्गतं पीतत्वं = पीतरूपमपि अवच्छेदकम् । तद्वृत्ति गुणत्वव्याप्यजातिर्नाम रूपत्वं । तद्वत् भवति दृष्टान्तः रूपमिति । अत्रेदमवधेयम् - नीलशुक्लपीतादिशब्दाः गुणगुण्युभयवाचाकाः । तेन पीतघट इत्यस्य पीतरूपवान् घट इत्यर्थः । एवं च घटनिष्ठप्रतियोगितायां घटत्वं पीतरूपवत्वं चावच्छेदकं । पीतरूपवत्त्वं च पीतरूपस्वरूपं `विशिष्टात् भावप्रत्ययः विशेषणं गमयति' इति न्यायात् । तदेवं नीलघटः पीतघटो न इति भेदीयप्रतियोगितायां पीतरूपमवच्छेदकं भवति - इति ।

पक्षे चेत्थं समन्वयः - स्वं = सुखत्वं, स्वाश्रयः = एतत्सुखं, स्वाश्रयाश्रयः = एतत्सुखी, तन्निष्ठभेदः = एतत्सुखी तत्सुखी नेति भेदः, तस्य प्रतियोगी = तत्सुखी, तत्सुखिनिष्ठप्रतियोगितायां तत्सुखरूपं तत्सुखित्वमवच्छेदकम् । तन्निष्ठा गुणत्वव्याप्या जातिः = सुखत्वम् । तद्वत् भवति पक्षभूतं सुखमिति । पक्षे साध्यपर्यवसानाय यः `एतत्सुखी तत्सुखी ने'ति भेदः स्विकरणीय आपतितः स आत्मभेदरूप इति उदेश्यसिद्धिरिति भावः ।

वच्छेदकपीतरूपवृत्तेर्दृष्टान्ते सत्त्वात् । पक्षे च सुखत्वमादाय साध्यपर्यवसाने तदाश्रयाश्रयाणामात्मनां भेदसिद्धिः । गुणत्वादिजातिमादायार्थान्तरवारणाय गुणत्वव्याप्येति । न च गुणत्वस्यापि गुणत्वाभाववदवृत्तितया गुणत्वव्याप्यत्वादर्थान्तरतादवस्थ्यमिति वाच्यम् । गुणत्वव्याप्येत्यनेन गुणत्वन्यूनवृत्तित्वस्य [1]गुणनिष्ठभेदप्रतियोगितावच्छेदकत्वपर्यवसितस्य विवक्षितत्वात् । सुखत्वादेर्गन्धादिगुणनिष्ठभेदप्रतियोगितावच्छेदकत्वेन गुणत्वव्याप्यत्वादिति न कश्चिद्दोषः ।

एतत्पक्षे साध्यगौरवादाह – सुखत्वं वेति ॥ नानेत्यादेः स्वाश्रयाश्रयनिष्ठभेदप्रतियोगितावच्छेदकवृत्तीत्यर्थः । तेन नानाव्यक्त्याश्रितं यत्संयोगादिकं तदाश्रितत्वस्य रूपत्वादावभावेऽपि न पूर्ववद्दोषः । [2]जातित्वमात्रस्य मनस्त्वादौ व्यभिचारित्वाद्गुणनिष्ठेति । तावन्मात्रस्य

[1] ॥ गुणनिष्ठभेदप्रतियोगितावच्छेदकत्वेति ॥ गुणः = गन्धः, तन्निष्ठभेदः = गन्धः रूपं न, सुखं नेत्याद्याकारकाः, न तु गन्धः गुणो नेत्याकारकः । अतः तत्प्रतियोगी भवति रूपं सुखं च, न तु गुणः । प्रतियोगितावच्छेदकं भवति दृष्टान्तगतं रूपत्वं, पक्षगतं सुखत्वं, न तु गुणत्वमिति नार्थान्तरतेति भावः ।

[2] ॥ जातित्वमात्रस्य मनस्त्वादौ व्यभिचारादिति ॥ अत्र केचित् - आपाततः इदमसङ्गतमिति भाति । तथा हि - स्वं मनस्त्वं, स्वाश्रयः = एतन्मनः, तदाश्रयः = एतन्मनस्वी (एतदात्मा), तन्निष्ठभेदः = एतन्मनस्वी तन्मनस्वी नेति, तत्प्रतियोगी = तन्मनस्वी, प्रतियोगितावच्छेदकं = तन्मनः, तद्वृत्ति = मनस्त्वमिति जातित्वरूपहेतुमति मनस्त्वे साध्यमपि वर्तते इति कथं व्यभिचारशङ्का - इति । परन्तु, न्यायशास्त्रे नित्यद्रव्याणां क्वचिदप्याश्रितत्वं नाङ्गीकृतम् । तदुक्तं कारिकावल्ल्याम् - 'अन्यत्र नित्यद्रव्येभ्यः आश्रितत्वमिहोच्यते' इति । एवं च मनस्त्वाश्रयैतन्मनसः आश्रयः नास्तीति न मनस्त्वे साध्यसम्भव इति व्यभिचार इति भावः - इत्याहुः । परन्तु

तद्रूपत्वादौ व्यभिचारित्वाज्जातीति । [1]गुणसमवेतत्वोक्तौ तु तल्लाभायैव-जातिपदमित्यवधेयम् ॥ व्यभिचार इति ॥ शब्दाश्रयीभूतगगनस्यैकत्वेन शब्दे प्रथमसाध्यस्य, शब्दत्वे च द्वितीयसाध्यस्याभावादिति भावः । मीमांसकमतेनाह – तस्येति ॥ शब्दस्येत्यर्थः । तथाच शब्दे शब्दत्वे वा हेत्वभावादेव न व्यभिचार इति भावः । नैयायिकनयेऽप्याह – अद्रव्यत्व-पक्ष इति ॥ तदन्यत्वेनेति ॥ प्रथमे शब्दान्यत्वेन द्वितीये शब्दत्वान्यत्वेन चेत्यर्थः । न च द्वितीये कत्वादिजातौ व्यभिचारः । तत्कल्पे तदन्यत्वपदेन तद्वद्वृत्तित्वस्य विवक्षित्वात् । कत्वाद्यन्यत्वेनापि हेतुर्विशेषणीय इत्य-प्याहुः । वस्तुतः कल्पद्वयेऽपि तदन्यत्वेनेत्यस्य शब्दान्यत्वेनेत्येवार्थः । हेतुविशेषणादित्यस्य = हेतुघटकगुणविशेषणत्वादित्यर्थकतया शब्दमात्र-वृत्तिशब्दत्वादेः शब्दान्यगुणवृत्तित्वाभावान्नोक्तदोष इति भावः ।

अत्र वृत्तिसुखत्वं स्वरूपसुखत्वं वा पक्षतावच्छेदकम् । उभयानुगत-सुखत्वजातेर्द्रव्यत्वादिना सङ्करेणासम्भवादिति भावेनाद्यं दूषयति –

---

एतन्मनस्वी तन्मनस्वी नेति भेदस्य आत्मभेदस्वरूपतया तस्य च सन्दिग्धत्वात् तादृशभेदवद्वृत्तित्वघटितसाध्यं मनस्त्वे वक्तुमशक्यम् । अतः अत्र सन्दिग्धव्यभिचारः वाच्यः । तथा च काशिकायां व्यभिचारशब्दस्य सन्दिग्धव्यभिचार इत्यर्थः । अयं परिहारः अस्मद्गुरुभिः श्रीअनन्ततन्त्रिमहोदयैः कथितः ।

[1] ॥ गुणसमवेतत्वोक्ताविति ॥ गुणनिष्ठत्वं नाम गुणनिरूपिताधेयता । तस्यामेव समवायसम्बन्धावच्छिन्नत्वनिवेशे गुणनिरूपितसमवायसम्बन्धावच्छिन्नाधेयत्वं = गुणसमवेतत्वं भवति । एवं च उक्ताधेयतायामेव समवयनिवेशापेक्षया पृथक् जातित्वनिवेशे गौरवमिति शङ्काशयः । यच्छङ्कितं तदेव हेतुतया विवक्षितम् । गुणसमवेतत्वरूपविवक्षितार्थलाभायैव गुणनिष्ठजातित्वादिति जातिघटिततया निर्दिष्टमिति परिहाराशयः ।

सुखत्वं विहाय द्रव्यत्वं घटे द्रव्यत्वं विहाय सुखत्वं
वृत्तिसुखे उभयोः समावेशः स्वरूपसुखे

**सुखदुःखादीनामिति** ॥ **वृत्त्यात्मकेत्यादिः** । अत्र सुखस्यैव प्रकृतत्वेऽपि दुःखादिग्रहणं दुःखेच्छादिपक्षकानुमानान्तराणामपि निरासस्सूचनाय ॥ **अन्तःकरणाश्रितत्वादिति** ॥ तेषामन्तःकरणपरिणामत्वादिति भावः ॥ **सिद्धसाधनत्वादिति** ॥ यद्यपि सुखदुःखादीनामात्माश्रितत्वपक्षेऽप्यनिर्वचनीयात्मभेदमादाय सिद्धसाधनत्वं सम्भवत्येव । पारमार्थिकत्वेन भेदविशेषणे च साध्याप्रसिद्धेः । अन्तःकरणाश्रितत्वपक्षे सिद्धसाधनानुपपत्तेश्च । तद्भेदस्याप्यपारमार्थिकत्वात् । तथापि [1]वस्तुगतिमनुरुध्यैवान्तःकरणाश्रितत्वमुक्तम् । वस्तुतो वक्ष्यमाणरीत्या [2]धर्मिसत्तासम-

---

[1] ॥ **वस्तुगतिमनुरुध्यैवेति** ॥ अयमाशयः - मूले `सुखदुःखादीनामन्तःकरणाश्रितत्वात् ... सिद्धसाधनता' इति पठ्यते । तत्र प्रयोजकत्वार्थकपञ्चमीप्रयोगात् सिद्धसाधनतायां अन्तःकरणाश्रितत्वं प्रयोजकमिति लभ्यते । तेन `अन्तःकरणाश्रितत्वपक्षे एव सिद्धसाधनता न स्वरूपसुखपक्षे' इति ज्ञानं भवति । तन्न युक्तं स्वरूपसुखपक्षेऽपि सिद्धसाधनस्य सम्भवात् - इति शङ्काया आशयः । परिहारस्य चायमाशयः - मूले अन्तःकरणाश्रितत्वात् इति न व्यावर्तकतया उक्तं, किन्तु `अन्तःकरणाश्रितत्वपक्षे सिद्धसाधनता' इति वस्तुस्थितिरेव कथिता । अतः स्वरूपसुखपक्षे सिद्धसाधनं न निराकृतम् - इति । परन्तु अस्मिन् उत्तरे पञ्चमीप्रयोगः न उपपादित इति अरुच्या वस्तुतस्तु इति व्याख्यान्तरं काशिकाचार्यैः कृतमिति भाति ।

[2] ॥ **धर्मिसत्तासमसत्ताकभेदस्येति** ॥ सुखादिपक्षकानुमाने भेदे धर्मिसत्तासमसत्ताकत्वं निवेश्यम् । तथा चेत्थं साध्यपरिष्कारः - स्वाश्रयस्वाश्रयनिष्ठधर्मिसत्तासमसत्ताकभेदप्रतियोगितावच्छेदकवृत्तित्वमित्यादि । स्वपदेन सुखत्वमादत्तम् । तेन स्वाश्रयाश्रयतया आत्मा गृहीतः । एवं च भेदस्य धर्मी आत्मा । तत्सत्ता = पारमर्थिकी सत्ता । तत्समसत्ताकत्वेन सिध्यन् भेदः पारमार्थिक एव सिध्यतीत्याशयः । अन्तःकरणाश्रितत्वपक्षे तु धर्मि अन्तःकरणम् । तत्सत्ता = व्यावहारिकीति तत्समसत्ताकतया सिध्यन्

सत्ताकभेदस्य साध्यशरीरघटकतायामात्माश्रितत्वपक्षे सिद्धसाधनानवकाशादन्तःकरणाश्रितत्वपक्ष एव तदुक्तिः ॥ द्वितीयपक्षं दूषयति – **स्वरूपेति** ॥ आत्मस्वरूपेत्यर्थः । द्रव्यसमवेतस्यैव गुणत्वेन स्वरूपसुखस्यातथात्वात् स्वरूपासिद्धिरिति भावः । सिद्धान्ते तु तस्य स्वरूपत्वेऽप्यात्मविशेषतया गुणत्वमस्त्येवेति ध्येयम् ।

॥ **चैत्रशरीरमिति** ॥ अत्र तत्स्वामित्वं न तदवच्छिन्नभोगभोक्तृत्वम् । एकस्वामिकयोर्घटपटयोरित्यग्रिमग्रन्थविरोधात् । घटाद्यवच्छिन्नभोगाप्रसिद्धेः । किन्तु [1]स्वस्वामिभावव्यवहारनियामकः तत्सत्तानियामकत्वादिलक्षणो धर्मविशेषः ।

यद्यपि तत्स्वामिभिन्नस्वामिकत्वं परमतेऽप्रसिद्धम् । तथापि प्रसिद्धघटादिसाधारणस्य तत्स्वामिभिन्नत्वस्यैव साध्यतावच्छेदकत्वान्न दोषः । साध्यता च स्वस्वामिकत्वसम्बन्धेन । अतः फलतश्चैत्रमैत्रात्मनोर्भेदसिद्धिः । घटादेस्तादृशसम्बन्धेन सिध्ययोगात् ।

अत्र तद्विरुद्धचेष्टावत्त्वं तदवृत्तिक्रियावत्त्वं, तत्क्रियाविजातीयक्रियावत्त्वं वेति मन्वानो दूषयति – **इत्यत्रेति** ॥ [2]**एकस्वामिकयोरिति** ॥ मैत्र-

---

भेदोऽपि व्यावहारिक एव भवतीति तत्पक्षे सिद्धसाधनतेति भावः ।

[1] ॥ **स्वस्वामिभावव्यवहारनियामक इति** ॥ लोके चैत्रस्य घट, मैत्रस्य गृहम् इत्यादि व्यवह्रियते । अत्र षष्ठी स्वस्वामिभावे वर्तते । चैत्रादिः स्वामी, घटादि स्वमिति तस्याशयः । तत्र तत्स्वामित्वं नाम तत्सत्तादिनियामकत्वम् । तदेव अत्रापि विवक्षितमिति भावः ।

[2] ॥ **एकस्वामिकयोरितीति** ॥ मूले `एकस्वामिकयोरपि घटपटयोर्विरुद्धचेष्टादर्शनात्' इति व्यभिचारः कथितः । तस्य द्विधा आशयः काशिकाचार्यैः कथ्यते । तदित्थम् - अस्मिन् अनुमाने 'यः मैत्रशरीरविरुद्धचेष्टाश्रयः सः मैत्रशरीरस्वामिभिन्नस्वामिकः' इति विशेषव्याप्तेः मैत्रस्वामिकयोः उभयोरपि घटपटयोः युगपत् व्यभिचारः । यदि च यः

स्वामिकयोरित्यर्थः । तथाच मैत्रशरीरविरुद्धचेष्टावति घटादौ तत्स्वामिभिन्नस्वामिकत्वाभावात्, यो यद्विरुद्धचेष्टाश्रयः स तत्स्वामिभिन्नस्वामिक इति सामान्यव्याप्तौ घटविरुद्धचेष्टावति पटादौ तत्स्वामिभिन्नस्वामिकत्वाभावादपि व्यभिचार इति भावः । ननु शरीरत्वे सति तद्विरुद्धचेष्टावत्त्वमेव हेतुः । अतो नोक्तव्यभिचार इत्यत आह – **शरीरत्वेनेति** ॥ शरीरत्वविशिष्टनिरुक्तचेष्टावत्त्वस्य हेतुत्वेऽपीत्यर्थः । [1]यद्यपि साक्षात्प्रयत्नजन्यक्रियारूपचेष्टापदार्थविवक्षयैवोक्तदोषवारणसम्भवात् तादृशक्रियाश्रयत्वरूपशरीरत्वस्य [2]पृथगुपादानमनुचितम् । न च शरीरत्वस्य जातित्वान्न गौरवमिति वाच्यम् । पृथिवीत्वादिना सङ्करात् । तथापि [3]साङ्कर्यस्य जातिबाधकत्वानङ्गीकारे लाघवसम्भवाच्छरीरत्वं पृथगुपात्तम् ॥

---

यद्विरुद्धचेष्टाश्रयः सः तत्स्वामिभिन्नस्वामिक इति समान्यव्याप्तिर्विवक्ष्यते तर्हि मैत्रस्वामिकघटविरुद्धचेष्टावति पटे तत्स्वामिभिन्नस्वामिकत्वं नास्तीति केवलं पटे व्यभिचारः, न तु युगपत् उभयोः घटपटयोः व्यभिचारः । तदेवं व्यासवक्यगाम्भीर्यं सम्यगाविष्कृतम् ।

1 ॥ **यद्यपि साक्षात्प्रयत्नजन्येति** ॥ अत्र श्रीप्रह्लादाचार्याः - प्रयत्नजन्यक्रियाश्रयत्वमात्रस्य शरीरत्वरूपत्वे देवदत्तीयप्रयत्नजन्यगमनाश्रयस्य रथस्यापि देवदत्तशरीरत्वापत्तिः । अतः साक्षादिति । देवदत्तशरीरनिष्ठक्रियाद्वारा रथक्रियायाः देवदत्तप्रयत्नजन्यत्वेन साक्षात् देवदत्तप्रयत्नजन्यत्वाभावेन न रथादेः देवदत्तशरीरत्वापत्तिः ।

2 ॥ **पृथगुपादानमनुचितमिति** ॥ आदौ मैत्रशरीरविरुद्ध(चेष्टा=)क्रियाश्रयत्वं हेतुतया उपन्यस्तम् । एकस्वमिकघटपटयोर्व्यभिचारे सति शरीरत्वं हेतौ निवेश्य `(शरीरत्वे=) साक्षात्प्रयत्नजन्यक्रियाश्रयत्वे सति मैत्रशरीरविरुद्धक्रियावत्त्वम्' इति हेतुरुक्तः स्यात् । तदपेक्षया मैत्रशरीरविरुद्धसाक्षात्प्रयत्नजन्यक्रियावत्त्वं हेतुरित्युक्तौ क्रियायाः द्विधा अनिवेशेन लाघवं स्यादिति भावः ।

3 ॥ **साङ्कर्यस्य जातिबाधकत्वानङ्गीकार इति** ॥ साङ्कर्यस्य कुतो जातिबाधकत्वमिति अग्रे

दृष्टान्ताभाव इति ॥ तथाच व्याप्तिग्रहविरोधिव्यभिचारग्रहाभावेऽपि तत्कारणीभूतसहचारग्रहासम्भवेन व्याप्तिग्रहासम्भवान्नानुमानसम्भव इति भावः।

विप्रतिपन्नाशेषभेदसाधकानुमानप्रकारमाशङ्कते – विमताविति ॥ भिन्नत्वाभिन्नत्वाभ्यां विप्रतिपन्नौ जीवेश्वरावित्यर्थः । अत्र [1]द्वित्वमविवक्षितम् । विमतत्वमात्रस्य पक्षतावच्छेदकत्वात् ॥ भिन्नाविति ॥ [2]मिथो

(२३तममूले) शर्कराव्याख्यायां व्यक्तम् । तत्रोक्तनियमास्वीकारे साङ्कर्यं न जातिबाधकमिति भावः ।

[1] ॥ द्वित्वमविवक्षितमिति ॥ द्वित्वं भेदव्याप्तम् । व्यपकः भेदः प्रकृते सन्दिग्ध इति व्याप्यं द्वित्वं न पक्षतावच्छेदकं भवितुमर्हति, पक्षतावच्छेदकस्य निश्चितत्वावश्यंभावात् इति भावः ।

[2] ॥ मिथो भिन्नावित्यर्थ इति ॥ अत्र क्रमेण परिष्कारे हेतवः एतत्प्रघट्टिकान्ते काशिकायां निरूपिताः । तदनुसारेणायं परिष्कारक्रमः - भिन्नौ इति निर्देशेन यदि भेदमात्रं साध्यते तर्हि जीवेश्वरयोः घटभेदसिद्ध्याऽर्थान्तरता । तद्वारणाय मिथो भिन्नौ इति उक्ते ईश्वरभेदः जीवभेदश्च साध्य इत्युक्तं भवति । तत्र जीवे जीवभेदः, ईश्वरे ईश्वरभेदश्च बाधितः । तदर्थं विमतत्वव्याप्येत्यादिरूपेण परिष्कार्यम् । तस्येत्थं समन्वयः - जीवेश्वरयोः विमतिविषयत्वात् विमतत्वव्याप्यधर्मः = जीवत्वं, तदवच्छिन्नप्रतियोगिताकभेदः = ईश्वरः जीवो नेति, तद्वान् = ईश्वरः । एवं विमतत्वव्याप्यधर्मः = ईश्वरत्वं । तदवच्छिन्नप्रतियोगिताकभेदः = जीवः ईश्वरो नेति भेदः । तद्वान् जीवः - इति । एवं विरुद्धधर्माधिकरणत्वमित्यस्य परस्परवृत्त्यभावप्रतियोगिधर्मवत्त्वमर्थः । तेन जीवावृत्तिधर्मवत्त्वम् ईश्वरावृत्तिधर्मवत्त्वं च हेतुरिति लभ्यते । तत्र जीवावृत्तिधर्मवत्त्वं जीवे असिद्धम्, ईश्वरावृत्तिधर्मवत्त्वम् ईश्वरे असिद्धम् । तद्वारणाय विमतत्वसमानाधिकरणाभावप्रतियोगिधर्मवत्त्वमिति हेतुः परिष्करणीयः । तस्येत्थं समन्वयः - सामनधिकरण्यं नाम तदधिकरणवृत्तित्वम् । तथा च, विमतत्वाधिकरणं जीवः ।

भिन्नावित्यर्थः विमतत्वव्याप्यधर्मावच्छिन्नप्रतियोगिताकभेदवन्ताविति यावत् । विरुद्धधर्माधिकरणत्वात्-परस्परवृत्त्यभावप्रतियोगिधर्मवत्त्वात्-विमतत्वसमानाधिकरणाभावप्रतियोगिधर्मवत्त्वादिति यावत् । अत्र यो यद्धर्मसमानाधिकरणाभावप्रतियोगिधर्मवान् स तद्धर्मव्याप्यधर्मावच्छिन्नप्रतियोगिताकभेदवानिति सामान्यव्याप्त्या । दहनतुहिनोभयत्वाधिकरणदहनादिवृत्त्यभावप्रतियोगिशैत्यादिमत्तुहिनादेस्तदुभयत्वव्याप्यदहनत्वाद्यवच्छिन्नप्रतियोगिताकभेदवत्त्ववत् । प्रकृतस्येश्वरादेरुक्तविमतत्वाधिकरणजीवादिवृत्त्यभावप्रतियोगिस्वातन्त्र्यादिमत्त्वेन तादृशविमतत्वव्याप्यजीवत्वाद्यवच्छिन्नप्रतियोगिताकभेदवत्त्वं सिध्यतीत्याशयः ।

यद्वा, अयं तद्भिन्नस्तन्निष्ठाभावप्रतियोगिधर्मवत्त्वात् । स चैतद्भिन्न एतन्निष्ठाभावप्रतियोगिधर्मवत्त्वात् । यो यन्निष्ठाभावप्रतियोगिधर्मवान् स तद्भिन्नो दहननिष्ठाभावप्रतियोगिशैत्याधिकरणतुहिनवदिति समूहालम्बनानुमाने तात्पर्यम् । तेन जीवेश्वरोभयं पक्षीकृत्य भेदमात्रसाधने घटादिभेदमादायार्थान्तरं, परस्परभेदसाधनेऽपि तस्य प्रत्येकं जीवभेदादिरूपत्वादंशे बाधः, एवं जीवविरुद्धधर्मवत्त्वादेः प्रत्येकं भागासिद्धिः,

---

तद्वृत्त्यभावः स्वातन्त्र्याभावः । तत्प्रतियोगिधर्मः स्वातन्त्र्यम् । तद्वानीश्वर इति ईश्वरे हेतुसत्त्वम् । एवं, विमतत्वाधिकरणमीश्वरः । तद्वृत्त्यभावः दुःखाभावः । तत्प्रतियोगिधर्मः दुःखम् । तद्वान् जीव इति उभयोरपि जीवेश्वरयोः हेतुसत्त्वं सिद्धम् ।

नन्वथापि विमतत्वघटितसाध्यहेतू दृष्टान्ते न भवितुमर्हत इति अन्यविधावेव साध्यहेतू दृष्टान्ते वक्तव्यौ । ततश्च हेतुसाध्यौ पक्षदृष्टान्तयोः अननुगतौ इति चेत् तद्वारणाय यो यद्धर्मेत्यादिरूपा सामान्यव्याप्तिः वक्तव्या । अत्र दृष्टान्ते समन्वयावसरे यच्छब्देन दहनतुहिनोभयत्वं ग्राह्यम् । पक्षे च यच्छब्देन विमतत्वं ग्राह्यमिति न साध्यहेत्वननुगम इति भावः ।

पक्षदृष्टान्तयोः साध्यहेत्वननुगमश्चेत्यादिदोषानवकाशः ।

अत्र पारमार्थिकत्वविशेषितस्तदविशेषितो वा भेदः साध्यः । आद्ये दोषमाह – **पारमार्थिकेति** ॥ अन्त्ये दोषमाह – **अपारमार्थिकेति** ॥ पारमार्थिकत्वाविशेषितेत्यर्थः । न त्वपारमार्थिकत्वविशेषितेत्यर्थः । उभयाविशेषितभेदसाधनपक्षाप्रतिक्षेपेण न्यूनतापत्तेः । स चापरमार्थिकत्व-विशेषितो न वेत्यन्यदेतत् । आत्मभेदसाधकानुमाननिराकरणमुपसंहरति ॥ **तस्मादिति** ॥ उक्तरीत्या भेदसाधकानुमानमात्रस्याभासत्वादित्यर्थः । भेदे जीवेश्वरभेदेऽनुमानं न प्रमाणमित्यर्थः ।

(३) (श.) द्वितीयनिराकरणं प्रतिजानीते – **नापीति** ॥ जीवेश्वरभेद इति वर्तते तत्र तावदात्ममात्रभेदसाधकानुमानद्वयमनूद्य दूषयति – **आत्मत्वमित्यादिना** ॥ अत्रात्मत्वस्य नानव्यक्तिनिष्ठत्वमात्मनानात्वं विना न सम्भवतीत्यात्मभेदसिद्धिः ॥ **असिद्धेरिति** ॥ अन्यतरासिद्धेरित्यर्थः । तामेवोपपादयति – **आत्मैक्यवादिनामिति** ॥ मत इति शेषः । वादिनेति पाठे अनङ्गीकारादित्यन्वयः ॥ **व्यक्तिभेदस्येति** ॥ आत्माख्यव्यक्तौ भेदस्य नानात्वस्य प्रमाणबाधितत्वेनेत्यर्थः । आत्मनां भेदे ह्यनेकसमवेतत्वेना-त्मत्वस्य जातित्वं स्यात् । भेदाभावे च व्यक्त्यभेदाख्यबाधकसद्भावा-दाकाशत्ववन्नात्मत्वं जातिरिति भावः ॥ **निर्गुणस्येति** ॥ `साक्षी चेता केवलो निर्गुणश्चे'ति श्रुतेरिति भावः ॥ **गुणाश्रत्वलक्षणेति** ॥ समवायिकारणत्वरूपं तु निर्विकारत्ववादिना नाङ्गीक्रियत इति भावः । आत्मभेदेऽनु-मानद्वयमाशङ्कते – **अथेत्यादिना** ॥ अनुमानद्वये व्यभिचारमाशङ्क्य निराकरोति ॥ **नचेति** ॥ आकाशस्यैकत्वेन शब्दस्य नानाव्यक्त्याश्रितत्वं नास्तीति तत्राद्यानुमानस्य व्यभिचारात् । अत एव शब्दत्वस्य

नानाव्यक्त्याश्रिताश्रितत्वाभावेन द्वितीयानुमानस्य तत्र व्यभिचार इत्यर्थः । मीमासकमतमवलम्ब्याह – **तस्येति** ॥ नैयायिकमतमवलम्ब्याह - **अद्रव्यत्वेति** ॥ **तदन्यत्वेनेति** ॥ गुणत्वहेतौ शब्दभिन्नत्वे सतीति गुणनिष्ठजातित्वे शब्दत्वभिन्नत्वे सतीति विशेषणान्न व्यभिचार इत्यर्थः । किं प्राकृतसुखस्य नानाव्यक्त्याश्रितत्वं साध्यते उत स्वरूपसुखस्य । आद्ये दोषमाह – **सुखदुःखादीनामिति** ॥ `एतत्सर्वं मन एवे'ति श्रुतेरिति भावः । सुखमात्रपक्षीकारेऽप्यत्र दुःखादिग्रहणमुक्तरीत्या दुःखादिपक्षकानुमाननिरासार्थमिति ध्येयम् । द्वितीयमाशङ्क्य निराकरोति – **स्वरूपसुखेति** ॥ स्वरूपसुखस्य गुणत्वे आत्मनस्सगुणत्वापत्त्या निर्गुणश्रुतिव्याकोपादिति भावः ॥ अन्योन्यजीवभेदेऽनुमानमाशङ्क्य दूषयति – **चैत्रशरीरमिति** ॥ **मैत्रशरीरेति** ॥ मैत्रशरीरस्वामी मैत्रः तद्भिन्नो यस्तत्स्वामिकमित्यर्थः । अनेन चैत्रशरीरस्वामिनि चैत्रे मैत्रभेदः सिध्यति ॥ **तद्विरुद्धेति** ॥ मैत्रशरीरचेष्टाविरुद्धचेष्टेत्यर्थः । अत्र यत् यच्चेष्टाविरुद्धचेष्टाश्रयं तत् तत्स्वामिभिन्नस्वामिकं यथा पटचेष्टाविरुद्धचेष्टाश्रयो घटः पटस्वामिकुविन्दभिन्नकुलालस्वामिक इति सामान्यव्याप्तिर्द्रष्टव्या । व्यभिचारमुपपादयति – **एकस्वामिकयोरपीति** ॥ **शरीरत्वेनेति** ॥ भोगायतनत्वेनेत्यर्थः । दृष्टान्तासिद्धिः । दृष्टान्तस्यैवासिद्धिरित्यर्थः । दृष्टान्ताभावादित्यपि पाठः । जीवेश्वरभेदेऽनुमानमाशङ्कते – **विमताविति** ॥ पक्षे सर्वज्ञत्वाल्पज्ञत्वादिरूपविरुद्धधर्मौ दृष्टान्ते तूष्णत्वशीतत्वरूपौ द्रष्टव्यौ । दहनो वह्निः तुहिनं हिमम् । किमत्र पारमार्थिकभेदः साध्यः उत व्यावहारिकः । आद्ये आह – **पारमार्थिकेति** ॥ साध्यत्वेनाभिमतस्य पारमार्थिकभेदरूपस्य धर्मिविशेषणस्य मन्मतेऽप्रसिद्धत्वादिति भावः ।

द्वितीय आह – **व्यावहारिकेति** ॥ व्यावहारिकभेदस्य मयाऽभ्युपगमादिति भावः । अनुमाननिराकरणमुपसंहरति ॥ **तस्मादिति** ॥ **आत्मजीवभेद इति** ॥ परमात्मजीवभेदे जीवानामन्योन्यभेदे चेत्यर्थः ।

**(४) `द्वा सुपर्णा' `द्वे ब्रह्मणी' इत्याद्यागमो लोकसिद्धभेदानुवादकः । अनुवादश्च `नेह नानाऽस्ती'ति निषेधाय । एतेन घटपटादिभेदेऽपि प्रत्यक्षं प्रमाणं निरस्तं द्रष्टव्यम् । प्रत्यक्षस्य भ्रान्तित्वेनाप्रामाण्यात् । अत एव तन्मूलानुमानमपि न प्रमाणम् । अभेदे तु प्रत्यक्षं तावत्सुलभमेव । अहमित्येकाकारेणानुभवात् (आत्मनोऽनुभवात्) । अनुमानं च विमता आत्मानः परमार्थतः परमात्मनो न भिद्यन्ते आत्मत्वात् परमात्मवदिति ।**

(४) (भ.) एवं भेदे प्रत्यक्षानुमाने निराकृत्यागममपि प्रमाणत्वेनाशङ्क्य निराकरोति – **द्वा सुपर्णेति** ॥ जीवेश्वराख्यौ द्वौ सुपर्णावित्यर्थः ॥ **द्वे ब्रह्मणी इति** ॥ परापररूपे ईशजीवरूपे द्वे ब्रह्मणी ज्ञातव्य इत्यर्थः ॥ **लोकसिद्धभेदानुवादक इति** ॥ लोकव्यवहारसिद्धो यो जीवेश्वरभेदस्तस्यानुवादक एव न प्रतिपादको लोकव्यवहारस्तु अन्धपरम्पराप्राप्तो न प्रमाणमूलक इति भावः । नन्वधिकविधानाद्यभावेन वृथाऽनुवादायोगात् प्रतिपादकत्वमेवास्येत्यत आह – **अनुवादश्चेति** ॥ यथा कथायां वाद्युक्तस्य दूषणाय प्रतिवादिनोऽनुवाद इत्यर्थः । इदानीमचेतनानामपि परस्परभेदं प्रतिक्षिपति ॥ **एतेनेति** ॥ नेह नानेति श्रुत्या भेदमात्रस्य निराकृतत्वेनेत्यर्थः । केचित्तु जडानां परस्परभेदस्याप्रस्तुतत्वाद्घटादिभेद इत्येतद्घटपटादिभेदप्रतियोगिकेश्वरनिष्ठभेदे घटपटादिनिष्ठेश्वरप्रतियोगिकभेदे वेति व्याख्याय प्रसङ्गात्परस्परजडभेदप्रमाणनिरासोऽप्ययमिति वदन्ति ।

तच्चिन्त्यम् । जडानां परस्परभेदस्यापि प्रस्तुतत्वस्य प्राक् प्रदर्शितत्वादिति । घटपटादिभेद इत्युपलक्षणम् । चेतनाचेतनयोर्भेद इत्यपि द्रष्टव्यम् ॥ **प्रत्यक्षस्येति** ॥ घटः पटो नेति वा नाहं घट इत्यादेर्वा प्रत्यक्षस्येत्यर्थः ॥ **भ्रान्तित्वादिति** ॥ निर्दोषश्रुतिविरुद्धस्य प्रामाण्यायोगादिति भावः ॥ **अत एवेति** ॥ मूलभूतप्रत्यक्षस्यैव भ्रान्तित्वादित्यर्थः ॥ **अनुमानादिरिति** ॥ आदिपदेनागमग्रहः । तत्रानुमानं प्रत्यक्षसिद्धधर्म्यादिकत्वात्तन्मूलम् । आगमस्तु प्रत्यक्षसिद्धभेदानुवादित्वात्तन्मूल इति विवेकः । न केवलं विष्णोर्विश्वभिन्नत्वमुक्तरीत्याऽप्रामाणिकं किन्त्वभेदग्राहकप्रमाणविरुद्धं चेति भावेनाभेदे प्रमाणत्रयं क्रमेणाह – **अभेदे त्विति** ॥ जीवात्मपरमात्माभेदे त्वित्यर्थः । तावच्छब्दोऽत्रापि योज्यः । जडाभेदे प्रमाणस्य वक्ष्यमाणत्वात् ॥ **अहमित्येकाकारेणेति** ॥ सर्वेषामात्मा ह्यहमित्येकत्वेनानुभूयते । यदि परमात्माऽपि जीववत्प्रत्यक्त्वेन जीवेन सह विद्येत तर्ह्यावामित्यनुभवः स्यात् । न चैवमस्ति । तस्मादात्मनां परमात्मनो भेदाभावरूपाभेदसिद्धिरिति भावः ॥ **अनुमानं चेति** ॥ अभेद इति वर्तते । व्यावहारिकभेदस्य स्वेनाप्यङ्गीकृतत्वाद्बाधादिवारणाय परमार्थत इत्युक्तम् ।

(४) (मु.) ॥ **अनुवादक इति** ॥ निषेध्यकोटिसमर्पक इत्यर्थः । अप्राप्तनिषेधायोगाल्लोकसिद्धेत्युक्तम् । भ्रान्तप्रत्यक्षादिभिः सिद्धेत्यर्थः । यद्वा भेदवाक्यस्यापूर्वताराहित्यज्ञापनायैतत् ॥ **एतेनेति** ॥ पूर्ववद्दोषग्रासेनेति सामान्यतः परामर्शः । घटादिभेद इतीश्वराज्जीवात्परस्परं चेति ज्ञेयम् । यद्यपि जडे धर्मिसत्तासमानसत्ताककृतो[1] भेदोऽङ्गीक्रियते । तथाऽपि धर्मधर्मिणोरुभयोः पारमार्थ्यनिरासे तात्पर्यमिति ज्ञेयम् ॥ **भ्रान्तित्वेनेति** ॥

---

[1] '-सत्ताको' इति पाठेन भाव्यम् ।

एकत्र व्यभिचरितत्वेनाविश्वविषयत्वेनेत्यर्थः[1] । प्रबलागमविरुद्धत्वेनेति वा । ॥ अत एवेति ॥ मूलप्रत्यक्षस्य भ्रान्तित्वादित्यर्थः ॥ **अनुमानमपीति** ॥ घटः पटप्रतियोगिकभेदाधिकरणं पटावृत्तिधर्माधिकरणत्वात् व्यतिरेकेण पटवदित्यनुमानम् । `भिन्ना प्रकृतिरष्टधे'त्यागमश्चेत्यर्थः । ऐक्ये प्रमाणाभावादिति द्वितीयं पक्षं निराह – **अभेदे त्विति** ॥ **एकेति** ॥ सर्वेषामहमित्येवोल्लेखेन वैचित्र्यानुपलम्भादिति भावः ॥ **विमता इति** ॥ व्यावहारिकभेदेन वा पररीत्या वा ग्राह्यसन्देहस्यादूषणत्वात्सन्दिग्धेन वा भेदेन वा बहुवचनं पक्षदृष्टान्तादिभावश्चेति ज्ञेयम् । बाधापसिद्धान्तवारणाय परमार्थत इति ।

(४) (कु.) ननु –

`विरोधे गुणवादः स्यादनुवादोऽधारिते ।

भूतार्थवादस्तत्त्वानामनुवादस्त्रिधा मतः'

इत्युक्तेरधिकविधानार्थानुवादस्थले अर्थाबाधरूपप्रामाण्यदर्शनाच्चानुवादत्वेऽप्यर्थाबाधः किन्न स्यादित्यत आह – **अनुवादश्चेति** ॥ तथा च निषेधार्थानुवादेनार्थाबाध इत्याशयः । एवं चेतनरूपविश्वभिन्नत्वं निरस्याचेतनभिन्नत्वं निरस्यति ॥ **एतेनेति** ॥ घटपटादिभेदे घटपटादिप्रतियोगिकेश्वरनिष्ठभेदे घटपटादिनिष्ठेश्वरप्रतियोगिकभेदे वा प्रसङ्गात्परस्परप्रतियोगिकपरस्परनिष्ठभेदप्रमाणनिरासोऽप्ययम् ॥ **प्रत्यक्षस्येति** ॥ अहं घटो नेति घटोऽयं नेति घटः पटो नेति च प्रत्यक्षस्येत्यर्थः ॥ **अत एवेति** ॥ प्रत्यक्षस्याप्रमाणत्वाद्व्याप्तिग्राहकत्वेन पक्षग्राहकत्वे चैतन्मूलानुमानस्य शब्दस्वरूपादिग्राहकत्वेन तन्मूलशब्दस्य च न मानतेत्यर्थः । ननु भेदो नाम

---

[1] `-विश्वसनीयविषय-' इति पाठेन भाव्यम् ।

तादात्म्यनिषेधः । तादात्म्यं चाभेदस्तत्र प्रमाणाभाव एव भेदे प्रमाणं भविष्यति । न प्रमाणान्तरं वक्तव्यमित्यत आह – **अभेदे त्विति** ॥ एवञ्च न तत्र प्रमाणाभाव इति भावः । एतेन विश्वभेदाक्षेपस्य तत्र प्रमाणाभावसमर्थनेन सिद्धत्वादभेदे प्रमाणानां कथनमसङ्गतमिति शङ्का परास्ता वेदितव्या । ननु घटो घटोऽयमित्येकाकारेणानुभूतानामपि घटानां भेदवदहमित्येकाकारेणानुभूतानामात्मनामपि भेदः स्यात् । आकार-मात्रस्याहन्त्वस्य घटत्ववत्परमैक्यं स्यात् । तत्र घटत्वावच्छिन्नप्रति-योगिताकभेदाभाववदिहाप्यात्मत्वावच्छिन्नप्रतियोगिताकभेदाभावेऽपि तत्त-दात्मत्वेन भेदस्तु स्यादित्यरुचेराह — **अनुमानमिति** ॥ व्यावहारिक-भेदाङ्गीकारेण बाधवारणाय परमार्थत इति ।

(४) (हु.) ॥ **द्वा सुपर्णेति** ॥ ननु कथमस्य भेदे प्रमाणत्वम् । द्वित्वस्योक्तावपि भेदस्यानुक्तत्वात् । न च द्वित्वं भेदव्याप्तमिति तदुक्त्या भेदः सिध्यतीति वाच्यम् । तथात्वेऽस्यानुमानोत्थापकत्वापत्त्याऽऽगमतया प्रमाणत्वेनोपन्यासायोगात् । न च तयोरन्य इत्यंशेन भेदः शाब्दविषयो भवतीति वाच्यम् । तर्हि तदंशस्यैवोदाहरणीयत्वेनानुपयुक्तांशोदा-हरणासङ्गतिः । द्वे ब्रह्मणीत्युदाहरणस्य सर्वथाऽसङ्गतिरिति चेन्न । अत्र द्वौ द्वे इति शब्दस्यैव (परस्पर)भेदविशिष्टबोधकत्वमन्यथा सुपर्णाविति ब्रह्मणीति द्विवचनेनैतत्पदयोरन्यतरवैयर्थ्यापत्तेः । अन्यतरस्यानुवादकत्वा-श्रयणस्यागतिकागतित्वादित्यभिप्रायेणैतदुदाहरणसङ्गतेः । न च कया वृत्त्या द्विशब्दस्य भेदविशिष्टबोधकत्वमिति चेन्न निरूढलक्षणया शक्त्या वा । शक्तिस्तु `द्विशब्दो द्वित्वसङ्ख्यायां भेदे चापि प्रयुज्यत' इति नानार्थरत्नमालोक्तेरिति ब्रूमः । तत्कथमिति चेत् । द्वैतशब्दघटकद्विशब्दस्य

भेदवदर्थकतयैवानादिव्यवहारात् । अन्यथा द्विशब्दस्य भावप्रधानतया द्वीतिशब्दस्य भेदविशिष्टार्थकत्वेन तदुत्तरभावार्थकाण्प्रत्ययेन भेदबोधानुपपत्तेः । भावप्रत्ययस्य प्रकृत्यर्थतावच्छेदकबोधकत्वनियमेन द्वित्वबोधकत्वस्यैवापत्तेः । व्याख्यातश्चायंशब्दो `यत्र द्वैतमिव भवति' इति श्रुतिव्याख्यावसरे विष्णुतत्त्वविनिर्णयटीकादावुक्तरीत्या भेदपरतयैवेति न किञ्चिदत्रासमञ्जसम् ॥ **नेह नानेति** ॥ इह ब्रह्मणि नाना भेदविशिष्टं किमपि नास्तीति निषेधः भेदसामान्यनिषेधपर्यवसायी सन् प्रपञ्चस्य[1] ब्रह्मण्यध्यस्तत्वरूपं तदात्मकत्वं गमयतीति भावः ॥ **एतेनेति** ॥ निर्दोषागमेन समस्तभेदस्य निषिद्धत्वेनेत्यर्थः । ननु कथं प्रमाणनिरासः ? प्रत्यक्षस्य, तन्मूलकविरुद्धधर्माधिकरणत्वरूपानुमानानां च सत्त्वात्प्रत्युत तद्विरोधेन[2] श्रुतिरेव न स्वार्थपरेत्यत आह – **प्रत्यक्षस्येति** ॥ प्रत्यक्षरूपज्ञानस्येत्यर्थः ॥ **भ्रान्तित्वेनेति** ॥ भ्रान्तत्वेनेति पाठे भावे क्तः । भ्रान्तत्वसम्भावनाविषयत्वेनाप्रमाणत्वात्[3] प्रमाणत्वेन निश्चेतुमशक्यत्वात् । तथा च शुक्तिरजतादिप्रत्यक्षस्य करणदोषादिमूलत्वेन भ्रान्तित्वस्य दृष्टत्वादन्यत्रापि दोषसम्भावनया प्रमाणत्वेन निश्चयायोगात् । आगमस्यापौरुषेयत्वेन निर्दोषत्वेन निश्चितप्रामाण्यकत्वात्तेन प्रत्यक्षस्यैव बाधस्तन्मूलभूतानुमानस्य तु सुतरामेवेति भावः । एतेनेत्यस्योक्तार्थकत्वानङ्गीकारे वक्ष्यमाणस्यैव तद्विवरणरूपत्वाङ्गीकारे प्रमाणसामान्यनिरासं प्रतिज्ञाय प्रत्यक्षानुमानयोरुभयोरेव निराकरणे न्यूनताप्रसङ्गा(ङ्गता)पत्तेरिति ध्येयम् । घटपटभेदादौ प्रमाणनिराकरणं च प्रासङ्गिकतया वा परस्परं

---

1 `यस्तत्प्रपञ्चस्य' मु.

२. `तत्तद्विरोधेन' मु.

3 `भ्रान्तत्वं सम्भावना-' मु.

घटपटादीनामत्यन्तभेदे (तादृश)जगता सह कथं ब्रह्मणो भेदाभावः परस्परमत्यन्तभिन्नयोरेकवस्तुरूपत्वस्यानुभवविरुद्धत्वादिति शङ्कानिरासाय वेति बोध्यम् ।

ननु विश्वस्माद्ब्रह्मणो भेदे कथं प्रमाणाभावः । तयोरभेदे प्रमाणाभावरूपहेतुबलादेव भेदसिद्धेरित्याशङ्कामपाकर्तुमभेदे प्रमाणान्याह[1] ॥ अभेदे त्विति ॥ यद्वा[2] पूर्वपक्षी परपक्षे प्रमाणानि निराकृत्य स्वमते प्रमाणान्याह – अभेदे त्विति ॥ चैतन्यैक्यादावित्यर्थः ॥ अहमित्येकाकारेणेति ॥ अनुगतप्रतीतेरेकविषयकत्वं विनाऽनुपपत्तेः सर्वत्र तादृशप्रतीतौ भासमानचैतन्यैक्यं युक्तं विशेष्यांशे बाध एव । घट इत्यादिप्रतीतीनामिव प्रकारैक्यमादायानुगताकारत्वं वक्तव्यम् । प्रकृते च न तथा । प्रत्यक्षादीनां भेदविषये निरस्तत्वादिति भावः । (ब्रह्मणोऽपि) 'तदात्मानमेवावेदाहं ब्रह्मास्मी'त्यादिश्रुतिभिः 'यस्मात्क्षरमतीतोऽहमि'त्यादिस्मृतिभिश्चाहमिति प्रतीतेः सिद्धत्वात्तच्चेतनैक्यमतेऽपि प्रत्यक्षम् (एव) प्रमाणमिति भावः ॥ विमता इति ॥ व्यावहारिकभेदस्याङ्गीकृतत्वात् तदभावसाधने बाधवारणाय तत्त्वत इति पारमार्थिकत्वेनेत्यर्थः । न च व्यावहारिकभेदसत्त्वेऽपि तस्य मिथ्यात्वानुरोधेन तदभावस्याप्यङ्गीकृतत्वात् कथं बाध इति वाच्यम् । अव्याप्यवृत्तित्वमादायार्थान्तरतासिद्धसाधनतावारणाय भेदाभावे प्रतियोगिवैय्यधिकरण्यस्यावश्यमेव निवेशनीयतया बाधानिस्तारात् । यद्वा मिथ्यात्वशरीरनिविष्टोऽभावो न प्रतियोगिनो व्यावहारिक(सत्व)ज्ञानविरोधी । तस्येदानीमव्यावृत्तत्वान्न[3] तमादाय लोके विप्रतिपत्त्यादिप्रसक्तिः । इत्थं च परमात्मप्रतियोगिकभेदतदभावकोटिकविप्रतिपत्तेर्लौकसिद्धभेदविरोध्य-

---

[1] `प्रमाणमाह' मु. २. इदं वाक्यं हु.पाठे नास्ति ।

[3] `-आवृतत्वान्न' मु.

भावावलम्बनत्वात् तादृशभेदाभावस्य साध्यत्वेन तद्विरोधिव्यावहारिकभेदसत्त्वाद्बाधो भवत्येव । अन्यथा वह्निरनुष्ण इत्यादीनामबाधितत्वप्राप्त्याऽभावसाध्यकबाधितहेतुमात्रोच्छेदप्रसङ्गात् । अतस्तत्परास इति वक्तव्यमेव । न च पारमार्थिकत्वविशिष्टभेदरूपप्रतियोग्यप्रसिद्ध्या तदभावकोटेरप्रसिद्धिरेव । तार्किकादिवत्स्वमतेऽपि[1] प्रतियोगिसत्त्व एवाभावसत्त्वमित्यद्वैतसिद्धितट्टीकादावुक्तत्वादतः कथं तस्य विप्रतिपत्तिविषयता साध्यता चेति वाच्यम् । व्यधिकरणधर्मावच्छिन्नाभावस्यैवाभ्युपगमेन पारमार्थिकत्वावच्छिन्नभेदवृत्तिप्रतियोगिताकाभावस्य विप्रतिपत्तिविषयतायाः साध्यतायाश्च सम्भवात् । एतत्पक्षे (स्व)प्रतियोगितावच्छेदकावच्छिन्नस्वप्रतियोगिवृत्त्यवच्छेदकताकभेदवद्वृत्तित्वमेव प्रतियोगिवैय्यधिकरण्यं व्यधिकरणधर्मवच्छिन्नावच्छेदकताकभेदोऽभ्युपगम्यत इति ज्ञातव्यम् । तदनङ्गीकारे तु वक्ष्यमाणविप्रतिपत्तिविषयतावच्छेदकाक्रान्तेषु जीवात्मसु पारमार्थिकनिरूपितत्वपरमात्मप्रतियोगिकभेदनिरूपितत्वोभयाभाववत् स्ववृत्त्यधिकरण(ता)सामान्यकत्वं तदभावकोटिका विप्रतिपत्तिः । प्रथमकोटिरद्वैतिनां जीवनिष्ठाधिकरण(ता)सामान्यस्योभयाभाववत्त्वे जीवे परमात्मप्रतियोगिक(पारमार्थिक)भेदो निराकृत एव भवति । घटाभावादिनिरूपितजीवनिष्ठयत्किञ्चिदधिकरणतामादाय सिद्धसाधनतावारणाय सामान्यनिवेशः । पारमार्थिकनिरूपितत्वं ब्रह्मधर्मशुद्धत्वादिनिष्ठाधेयतादिष्वद्वैतमते प्रसिद्धम् । अभावकोटिर्भेदवादिनां तादृशाधिकरणतासामान्यकत्वाभावस्य जीवे परमात्मप्रतियोगिकपारमार्थिकभेदाधिकरणतां विना पर्यवसानायोगात् । तथा चोक्तसामान्यकत्वमेव साध्यमिति न कश्चिद्दोषः । यदि चात्र

---

[1] `तार्किकवत्स्वमते' मु.

स्वत्वस्याननुगतत्वात्साध्यस्याननुगम इति विभाव्यते तदा परमार्थत्व-निरूपितत्वपरमात्मप्रतियोगिकभेदनिरूपितत्वोभयस्य स्वावच्छिन्ननिरूप-कताधिकरणतानधिकरणत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभावः साध्यः । जीवे परमात्मप्रतियोगिकपारमार्थिकभेदसत्त्वे तादृशोभयत्वावच्छिन्न-निरूपकताकाधिकरणता तदुभयनिरूपिततादृशभेदाधिकरणतानिष्ठाधि-करणता तद्वदधिकरणता जीवनिष्ठतादृशभेदाधिकरणता भवति । तत्सम्बन्धेनोभयत्वसत्त्वात्तत्सम्बन्धावच्छिन्नप्रतियोगिताकतादृशोभयत्वा-भावरूपसाध्यं पक्षे दुरुपपादं स्यादतस्तस्मिंस्तादृशभेदनिराससिद्धिः । सम्बन्धकोटौ स्वत्वस्य परिचायकत्वान्नाननुगमः । उक्तसम्बन्धो द्वैतिनां मते उक्तोभयत्वस्य व्यधिकरण एव । घटनिरूपितत्वपटनिरूपितत्वोभयत्वादे-र्भूतलादौ सम्बन्धतया प्रसिद्धिः । न च परमात्मप्रतियोगिक-पारमार्थिकभेदस्य जीवे सत्त्वेऽप्युक्तसाध्योपपत्तिः । भेदस्यैव परमार्थत्वेन निरूपितत्वद्वयस्य भेदाधिकरणतायामभावेन तादृशोभयत्वाभावस्य पक्षे सम्भवादिति वाच्यम् । पारमार्थिकत्वावच्छिन्नभेदत्वावच्छिन्न-निरूपकताकत्वयोर्भेदात् । अभेदे वा पारमार्थिकत्वावच्छेद्यत्व-तादृशभेदत्वावच्छेद्यत्वैतदुभयत्वस्यैव स्वविशिष्टाधिकरणतावन्निरूपकता-निरूपिता(पका)धिकरणतासम्बन्धावच्छिन्नप्रतियोगिताकाभाव एव साध्य-मित्यदोषः । यद्वा जीववृत्त्यधिकरणतावच्छेदेन पारमार्थिकत्वावच्छिन्न-निरूपकताकत्वपरमात्मप्रतियोगिकभेदत्वावच्छिन्ननिरूपकताकत्वैतदुभया-भावसाधनेऽस्य तात्पर्यम् । तदनुसारेण हेत्वादिकमूह्यम् । एवमन्यत्रापि द्रष्टव्यम् ।

**(४) (का.)** अस्तु तर्हि द्वा सुपर्णेत्याद्यागम एवाऽत्मभेदे प्रमाणम् । तत्र जीवेश्वराख्यपक्षिणोर्द्वे ब्रह्मणीत्यत्र परापरब्रह्मतया उक्तयोः तयोरेव

भेदव्याप्तद्वित्वश्रवणात् । तयोरन्यः, [1]अनश्नन्नन्य इति साक्षादपि तयोर्भेदाभिधानात् । बह्वीः प्रजाः पुरुषात् सम्प्रसूता इति जीवानामपि नानात्वावगमादित्याशङ्क्याह – **द्वा सुपर्णेति** ॥ द्वौ सुपर्णावित्यौकारस्याकारादेशः । ननु भेदस्य मानान्तरासिद्धताया उक्तत्वात् कथमागमस्य तदनुवादकत्वमित्यतो लोकसिद्धेत्युक्तम् । लोकव्यवहारसिद्धेत्यर्थः । स च वक्ष्यमाणप्रमाणविरोधादप्रमाणमेवेति भावः । नन्वनुवादमात्रेण कथं भेदस्य निरासः । अन्यथा दध्यादिरूपगुणविधानाय [2]दध्ना जुहोतीत्यनूद्यमानयागादेरपि निरासप्रसङ्गादत आह – **अनुवादश्चेति** ॥ **निषेधायेति** ॥ ब्रह्मणि पारमार्थिकत्वाकारेण भेदनिषेधायेत्यर्थः । तथाच भेदानुवादस्य तन्निषेध एव तात्पर्यान्न तत्रागमस्य प्रामाण्यमिति भावः ।

एवमात्मभेदं निरस्य भेदमात्रस्यापारमार्थिकत्वसिद्ध्यर्थमात्मानात्मनोरनात्मनां च मिथो भेदं दूषयति – **एतेनेति** ॥ भेदमात्रस्य नेह नानास्तीति निषिद्धत्वेनेत्यर्थः ॥ **घटपटादिभेद इति** ॥ [3]घटपटादिभिरात्मनस्तेषां च मिथो भेद इत्यर्थः । तर्हि घटपटौ भिन्नावित्यादिप्रत्यक्षस्य

---

[1] ॥ **अनश्नन्नन्य इति साक्षादपि तयोर्भेदनिर्देशादिति** ॥ द्वे ब्रह्मणी इति श्रुतिः द्वित्वं वदन्ती तदन्यथानुपपत्त्या स्वव्यापकं भेदं समर्थयते । अनश्नन्नन्य इति श्रुतिस्तु अन्य इति साक्षात् = शक्तिवृत्त्यैव भेदं प्रतिपादयतीत्यर्थः ।

[2] ॥ **दध्ना जुहोतीतीति** ॥ जुहोतीति यत् तत् दध्ना इति अन्वयः ।अग्निहोत्रं जुहुयात् स्वर्गकामः इति वाक्येनादौ अग्निहोत्राख्यहोमः विहितः । ततः प्राग्विहितं होममनूद्य दधिरूपगुणः विधीयते ।

[3] ॥ **घटपटादिभिरात्मनस्तेषां च मिथो भेद इति** ॥ मूले घटपटादिभेदे इत्यत्र घटपटादिभिः भेदः = घटपटादिभेद इति, घटपटादीनां भेदः = घटपटादिभेद इति च विग्रहः । आद्येन आत्मानात्मभेदः द्वितीयेन मिथो अनात्मभेदः लभ्यत इति भावः ।

का गतिरत आह – **प्रत्यक्षस्येति** ॥ सम्भावितदोषस्य प्रत्यक्षस्य निर्दुष्टागमविरोधे सत्यप्रामाण्यस्यैव युक्तत्वादिति भावः ॥ **अत एव** ॥ भेदग्राहिप्रत्यक्षस्य भ्रान्तित्वादेव ॥ **तन्मूलकेति** ॥ तादृशप्रत्यक्ष-संवादसापेक्षेत्यर्थः । अनुमानादिरित्यादिना पौरुषेयागमपरिग्रहः । केवलस्यानुमानादेः शङ्किताप्रामाण्यकत्वेनासाधकत्वात्, प्रत्यक्षादि-प्रमाणसंवादेनैव प्रामाण्यं वाच्यम् । तस्य च प्रत्यक्षादेरप्रामाण्ये तत्समानविषयानुमानादिप्रामाण्यस्य दुर्लभत्वादिति भावः ।

व्याप्तिग्राहकसहचारप्रत्यक्षस्य भ्रमत्वान्न तन्मूलकानुमानादिः प्रमाणमित्यपि व्याचक्षते । तत्र यद्यपि वह्निवारिणोः सहचारभ्रमेऽपि पर्वतादौ वारिलिङ्गकवह्न्यनुमानस्य प्रामाण्यमस्ति । तथापि व्याप्तिपक्षधर्मताविरहे प्रामाण्यं दुरवधारणमित्याशयः ।

एवमभेदे बाधकप्रमाणं निरस्य दार्ढ्याय त्रिविधमपि साधकप्रमाणं दर्शयति – **अभेदे त्विति** ॥ यत्त्वभेदे प्रमाणाभाव एव भेदे प्रमाणं भविष्यतीत्यत आह – **अभेदे त्वितीति** ॥ तच्चिन्त्यम् । तुल्यन्यायेन भेदे प्रमाणाभाव एवाभेदे प्रमाणमिति वक्तुं शक्यत्वात् । अभेदे प्रमाणाभावस्यानुमानविधयैव भेदसाधकतया[1] तन्निरासावसर एव निरसनीयत्वाच्च ।

नन्वात्मान्तरप्रतियोगिकभेदस्य प्रतियोग्यप्रत्यक्षेणाप्रत्यक्षत्व-स्योक्तत्वात् कथं तदभावरूपाभेदस्य प्रत्यक्षत्वमित्यत आह – [2]**एकाकारेणेति**

---

[1] ॥ **अनुमानविधयैव भेदसाधकत्वादिति** ॥ भेदः सप्रमाणः तद्विरुद्धाभेदे प्रमाणा-भावादित्यनुमानमत्र विवक्षितम् ।

[2] ॥ **एकाकारेणेतीति** ॥ सर्वापि प्रतीतिः स्वविषयतादात्म्यमवगाहते । यथा घटप्रतीतिः

॥ एकवस्तुतादात्म्येनेत्यर्थः । अयं भावः । भेदाभावो हि प्रतियोगितादात्म्यम् । तथाचाहमित्येकाकारानुभवानामेकवस्तुविषयकत्वे लाघवेनैकचित्तादात्म्यावगाहिनोऽहमिति प्रत्यक्षस्य कथमभेदे प्रामाण्यासम्भव इति ॥ **विमता आत्मान इति** ॥ [1]बहुवचनमवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वसूचनाय । अन्यथा सर्वात्मनामैक्यासिद्धेः । जीवपरमात्मनोर्व्यावहारिकभेदाभ्युपगमात् सामान्यतो भेदनिषेधे बाधः स्यादतः – **परमार्थत इति** ॥ न चैवं [2]पारमार्थिकभेदाप्रसिध्या साध्याप्रसिद्धिरिति

---

घटतादात्म्यम् । तदनुसारेण प्रकृते अहमिति प्रतीतिः चित्तादात्म्यमवगाहते इत्यङ्गीकार्यम् । एकाकाराणामहमित्यनुभवानां भिन्नविषयकत्वे गौरवम्, एकविषयकत्वे लाघवमिति तर्कसहकारेण अहमित्यनुभावानामेकचित्तादात्म्यावगाहित्वं सेत्स्यति । यद्यपि तर्हि अनुगतानां घटानुभवानां एकघटतादात्म्यावगाहित्वं स्यादित्यापतति । तथापि तत्र तथाऽङ्गीकारे यथा प्रत्यक्षविरोधः तथा अत्र नास्तीति लाघवतर्कसहकृतप्रत्यक्षेण अभेदसिद्धौ न कापि हानिरिति भावः ।

[1] ॥ **बहुवचनमवच्छेदकावच्छेदेनेति** ॥ अवच्छेदकशब्देनात्र पक्षतावच्छेदकं विवक्षितम् । अनुमितिः द्विविधा - पक्षतावच्छेदकावच्छेदेन साध्यविषयिणी तथा पक्षतावच्छेदकसामानाधिकरण्येन साध्यविषयिणी चेति । पक्षतावच्छेदकावच्छेदेनेत्यत्र अवच्छेदेनेत्यस्य व्याप्त्या इत्यर्थः । तथा च यत्र यत्र पक्षतावच्छेदकं तत्र तत्र साध्यमिति साध्यविषयिणी प्रथमविधा । यथा मङ्गलं सफलमित्यनुमिः यद्यत् मङ्गलं तत्तत् सफलमित्यवगाहते । पर्वतो वह्निमानित्यनुमितिस्तु न तथा । सकलपर्वतेषु वह्नेरभावात् । अतस्तत्र पक्षतावच्छेदक=पर्वतत्वसामानाधिकरण्येन, अर्थात्, क्वचित् पर्वतत्ववति वह्निरस्तीति अनुमितिर्भवति । प्रकृते बहुवचनप्रयोगेन पक्षतावच्छेदकावच्छेदेनानुमितिरत्र उद्देश्या इति सूचितमिति भावः ।

[2] ॥ **न चैवं पारमार्थिकभेदाप्रसिद्ध्येति** ॥ अत्र श्रीप्रह्लादाचार्याः - परमात्मप्रतियोगिकस्य पारमार्थिकभेदस्याभावसाधनेऽद्वैतमते पारमार्थिकभेदस्यैवासिद्धेः साध्याप्रसिद्धिः। अतः

वाच्यम् । [1]पारमार्थिकत्वेन भेदाभावस्य साध्यत्वात् । तन्मते व्यधिकरण-धर्मावच्छिन्नाभावसत्त्वेन[2] साध्यप्रसिद्धेः ।

---

परमात्मप्रतियोगिकभेदस्य पारमार्थिकत्वेनाभावः साध्यः।अयं च व्यधिकरणधर्माव-च्छिन्नप्रतियोगिताकोऽभावः। तादृशश्चाभावः अद्वैतवादिनां सम्मत इति न साध्याप्रसिद्धिस्तन्मते । केचित्तु पारमार्थिकत्वम् अभेदविशेषणमिति वदन्ति। तत्तु न युक्तम्। पूर्वोक्तबाधस्य तदवस्थत्वात् । तथाहि- पारामार्थिकः परमात्मप्रतियोगिक-भेदाभावः साध्य इति हि तदर्थः । परमात्मप्रतियोगिकः व्यवहारिकभेदस्तन्मते जीवेऽङ्गीकृत इति परमात्मप्रतियोगिकभेदसामान्याभावस्य पारमार्थिकस्य जीवे तन्मतेऽभावात् बाधप्रसङ्गः।

नन्वेवं परमात्मप्रतियोगिकभेदस्य पारमार्थिकत्वेन योऽभावः तस्य प्रातिभासिकस्य जीवेऽङ्गीकरेणापि साध्यपर्यवसानसम्भवात् अर्थान्तरत्वमिति वाच्यम् । परमार्थत इत्यस्य तन्त्रेण भेदाभावेऽपि विशेषणत्वात्। तथा च परमात्मप्रतियोगिकभेदस्य पारमार्थिकत्वेन योऽभावः तस्य पारमार्थिकस्य साध्यतेति भावः।

1 ॥ पारमार्थिकत्वेन भेदाभावस्य साध्यत्वादिति ॥ परमात्मप्रतियोगिकपारमार्थिकभेदाभावः यथाश्रुतसाध्यः । तत्र साध्याप्रसिद्धिवारणाय परमात्मप्रतियोगिकभेदनिष्ठ-पारमार्थिकत्वावच्छिन्न-प्रतियोगिताकभेदः साध्यत्वेन विवक्ष्यते । इदानीं पारमार्थिकत्वं न भेदे विशेषणं, किन्तु प्रतियोगितायामवच्छेदकत्वेन विवक्षितमिति भावः ।

2 ॥ व्यधिकरणधर्मावच्छिन्नाभावसत्त्वेनेति ॥ व्यधिकरणेत्यस्य सापेक्षत्वात् प्रतियोगिताव्यधिकरणेत्यर्थः । प्रतियोगिताश्रयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावः व्यधिकरणधर्मावच्छिन्नाभावः । अयं भावः - घटो नास्तीत्यत्र अभावप्रतियोगी घटः । प्रतियोगिता घटनिष्ठा । घटनिष्ठप्रतियोगितावच्छेदकं घटत्वम् । तदेतत् घटत्वं प्रतियोगिताधिकरणे घटे वर्तत इति इदं प्रतियोगितासमानाधिकरणावच्छेदकम् । अयमभावः समानाधिकरणधर्मावच्छिन्नाभाव इति व्यवह्रियते । घटत्वेन पटो

एतेन पारमार्थिकत्वमभेदविशेषणमित्यपास्तम् । उक्तबाधानिस्तारात् । न च प्रतिभासिकाभेदसिद्ध्याऽर्थान्तरमिति वाच्यम् । [1]पारमार्थिकाभेदस्यैव साध्यत्वात् ।

परमार्थतो न भिद्यन्त इत्यनेन पारमार्थिकतादात्म्यस्यैव साध्यत्वं विवक्षितमिति तु न सत् । व्यवहारतोऽपि न भिद्यन्त इति वक्ष्यमाणाभाससाम्याननुगुणत्वात् । तत्र व्यावहारिकस्य परमात्मतादात्म्यस्य दृष्टान्ते परमात्मन्यसत्त्वेन साध्यत्वासम्भवात् ।

सामान्यतः पारमार्थिकभेदाभावस्य सिद्धान्तिनं प्रत्यसिद्धिरतः परमात्मप्रतियोगिकत्वं भेदविशेषणम् ।

(४) (श.) तृतीयं पक्षं निराकरोति ॥ **द्वा सुपर्णेति** ॥ `सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजाल' छन्दसि विषये सुपां स्थाने सुश्च लुक् पूर्वसवर्णश्च आ च आत् च शे च या च डा च ड्या च याज्च आल्च इत्येते आदेशाः स्युरिति सूत्रार्थः । उदाहरणन्तु । `ऋजवः सन्तु पन्था' इत्यादि । अत्र द्वावित्यौकारस्याकारादेशे द्वा इत्यादिभवति । ततश्चायमर्थः । सयुजौ संयुक्तौ । सखायौ मित्रे । द्वौसुपर्णौ वृक्षाश्रितत्वेन पक्षिरूपौ जीवेशौ ।

---

नास्तीत्यादिप्रतीतिसिद्धाः अभावाः अपि कैश्चित् अङ्गीक्रियन्ते । अत्र प्रतियोगी पटः । तन्निष्ठप्रतियोगितावच्छेदकं घटत्वं पुनः प्रतियोगिनि पटे अविद्यमानम् । अतोऽयं प्रतियोगिताव्यधिकरण इति सङ्क्षेपेण व्यधिकरणधर्म इति अभावश्च व्यधिकरणधर्मावच्छिन्नाभाव इति व्यवह्रियते । प्रकृते पारमार्थिकत्वेन भेदो नास्तीति प्रतीतिसाक्षिकोऽभावः विवक्षितः । अत्र प्रतियोगितावच्छेदकतया विवक्षितं पारमर्थिकत्वं प्रतियोगिनि भेदे न वर्तते । अतः अयमपि तथाविध इति भावः ।

[1] ॥ **पारमार्थिकाभेदस्यैव साध्यत्वादिति** ॥ तथा चायं परिष्कृतः साध्यः - परमात्मप्रतियोगिकभेदनिष्ठपारमार्थिकत्वावच्छिन्नप्रतियोगिताकपारमार्थिकाभावः - इति ॥

समानम् एकम् । वृक्षं देहाख्यमश्वत्थम् । परिषस्वजाते आलिलिङ्गतुः । तयोः सुपर्णयोर्मध्ये । अन्यो जीवः । पिप्पलरूपं देहजनितकर्मफलम् अस्वाद्वेव स्वादुत्वेनात्ति । अन्य ईश्वरः । तदनश्नन् । अभि अभितः । चाकशीति प्रकाशते । नतु स्वस्थित्यै तदपेक्षत इति । `द्वे ब्रह्मणी वेदितव्ये' इत्यस्य परापरब्रह्मशब्दावाच्ये ज्ञातव्ये इत्यर्थः । भेदानुवादको नतु भेदप्रतिपादकः । येनास्यागमस्य भेदेप्रामाण्यं स्यादिति भावः । ननु सिद्धस्यानुवादः सम्भवति । अत आगमस्यानुवादकत्वसिद्धये भेदस्य यत्प्रमाणसिद्धत्वमङ्गीक्रियतेतदेवास्माकं भेदसाधकप्रमाणमित्यत आह – **लोकसिद्धेति** ॥ लोकव्यवहारसिद्धेत्यर्थः । लोकव्यवहारस्तु न प्रमाणमिति भावः । नन्वधिकविधानार्थमनुवादः क्रियते यथा दध्नाजहोतीत्यत्राग्निहोत्रं जुहुयादित्यनेन प्राप्तयागं जुहोतीत्यनूद्य दध्नेति दधिलक्षणगुणो विधीयते । यज्जुहोति तद्दध्नेति नचात्राधिकविधानमस्ति येनागमस्य भेदानुवादकत्वं युज्यत इत्यत आह – **अनुवादश्चेति** ॥ चशब्दस्तुशब्दार्थः निषेधार्थमपि क्वचिदनुवादः क्रियते यथा नास्तीति निषेधाय इह भूतले घट इत्यनुवादः । तथाचेहापि नेहनानेत्यनेनेह जगति ब्रह्मणि वा किञ्चन किञ्चित् पदार्थप्रतियोगिकोऽपि नाना भेदो नास्तीत्येवं निषेधाय द्वासुपर्णेत्यागमेन लोकसिद्धभेदानुवादः क्रियत इत्यर्थः । एवमात्मभेदे प्रमाणं निराकृत्यानात्मभेदे तन्निराकरोति ॥ **एतेनेति** ॥ नेहनानेति वाक्यस्य भेदनिषेधकत्वकथनेनेत्यर्थः । कथमित्यत आह – **प्रत्यक्षस्येति** ॥ यत्प्राप्तं प्रमाणेन बाध्यते तज्ज्ञानं भ्रान्तिः । यथेदं रजतमित्यनेन प्राप्तरजतस्य रजतमित्याप्तवाक्येन[1] बाधितत्वात्तस्य भ्रान्तित्वम् । प्रकृते च घटः पटो

[1] `नेदं रजत-' इति पाठेन भाव्यमिति भाति ।

नेत्यनेन प्राप्तस्य घटपटादिभेदस्य नेह नानेत्यनेन बाधितत्वात्तस्य भ्रान्तित्वं दुर्वारमिति भावः । भ्रान्तत्वेनेति पाठे भावे क्तः । भ्रान्तित्वेनेत्यर्थः ॥ अत एवेति ॥ उपजीव्यप्रत्यक्षस्याप्रामाण्यादेवेत्यर्थः । न केवलमप्रामाणिकत्वेन भेदाभावः किन्तु प्रामाणिकतयाऽभेद एवाभ्युपगम्यत इत्याशयेनाभेदे प्रमाणत्रयमाह - अभेदे त्विति ॥ एकाकारेण एकत्वेन । भेदे आवां वयमिति वाप्रत्ययः स्यादिति भावः । परमात्मनः सकाशात्व्यावहारिकभेदस्य स्वेनाङ्गीकृतत्वेन परमार्थत इत्युक्तम् ।

**(५) ननु किमत्र पक्षतावच्छेदकम् । न तावदात्मत्वम् । परमात्मनोऽपि पक्षत्वापत्त्या अंशे सिद्धसाधनात् । नापि परमात्मेतरत्वविशिष्टम् । साध्येन साकं पक्षतावच्छेदकस्य विरोधात् । नापि भ्रान्त्या परमात्मेतरतया प्रतीयमानत्वविशिष्टम् । परमात्मन्यपि तदितरत्वभ्रान्तिसम्भवेनाऽद्यपक्षोक्तदोषानिस्तारादिति चेन्न । परमात्मनो भिद्यन्ते न वेति विप्रतिपत्तिगोचरत्वस्यैव पक्षतावच्छेदकत्वात् । अन्यथा तवापि परमात्मनो भिद्यन्त इति भेदसाधनस्याप्यसम्भवात् । आत्मत्वं च न जातिः । किन्तर्हि स्वप्रकाशत्वम् । तेन हेतुसाध्ययोर्न विरोधः ।**

(५) (भ.) नन्वत्रात्मान इत्यनेनैव धर्मिविशेषसिद्धौ विमतपदग्रहणं व्यर्थमित्यतस्तत्कृत्यं वक्तुमाक्षिपति ॥ **नन्विति** ॥ **अंशे सिद्धसाधनादिति** ॥ पक्षैकदेशे परमात्मनि परमात्मप्रतियोगिकपारमार्थिकभेदाभावस्य सिद्धत्वादिति भावः ॥ **परमात्मेतरत्वविशिष्टमिति** ॥ आत्मत्वमिति वर्तते । तथा च परमात्मनि परमात्मेतरत्वस्याभावेन पक्षत्वानापत्त्या नोक्तदोष इति भावः ॥ **साध्यपक्षतावच्छेदकयोरिति** ॥ साध्यं परमात्माभिन्नत्वं

पक्षतावच्छेदकं च तद्भिन्नात्मत्वं तद्विरोधादित्यर्थः ॥ **भ्रान्त्येति** ॥ परमात्मेतरत्वप्रकारकभ्रान्तिरूपप्रतीतिविषयत्वमित्यर्थः । तथा च साध्यस्य पारमार्थिकत्वात्परमात्मेतरत्वस्य भ्रान्तिकल्पितत्वान्न विरोध इति भावः ॥ **आद्यपक्षोक्तदोषेति** ॥ अंशे सिद्धसाधनतारूपदोषेत्यर्थः । यदर्थमित्थमाक्षेपस्तदिदानीं वक्ति – **परमात्मन इति** ॥ नान्यत्पक्षतावच्छेदकमत्र गवेषणीयमित्येवशब्दः । इदं च परमात्मन्यस्तीति नांशे सिद्धसाधनत्वं नापि विरोध इति भावः । गौरवान्नेदं पक्षतावच्छेदकं युक्तमित्यत आह — **अन्यथेति** ॥ आत्मत्वस्य पक्षतावच्छेदकत्वेंऽशे परमात्मनि बाधात् । तदतिरिक्तत्वेन विशेषणे तस्य सिद्धौ सिद्धसाधनात् । असिद्धौ पक्षाप्रसिद्धेरित्यर्थः । केचित्तु नात्मत्वमंशे बाधात् । नापि परमात्मेरत्वविशिष्टम् । तस्याधुनाऽप्यसिद्धेः । नापि परमात्मेतरतया भ्रान्त्या प्रतीयमानत्वम् । परमात्मनि पूर्ववदंशे बाधादिति भावमाहुः । तच्चिन्त्यम् । परमात्मेतरतया भ्रान्त्या प्रतीयमानत्वस्य पक्षतावच्छेदकत्वे परमात्माभिन्नत्वप्रतीतेरेव प्रमात्वापत्त्या साध्यपक्षतावच्छेदकयोर्विरोधस्यैवापत्तेरिति । अत्र हेतूकृतस्यात्मत्वस्य जातित्वे आत्मत्वं नानाव्यक्तिनिष्ठं जातित्वादिति प्राक् शङ्कितानुमानेऽसिद्धिकथनायोगात्प्रकारान्तरेणात्मत्वं निर्वक्तुमाह — **आत्मत्वं चेति** ॥ **स्वप्रकाशत्वमिति** ॥ अवेद्यत्वे सत्यपरोक्षव्यवहारगोचत्वरूपमित्यर्थः । आत्मत्वस्य जातिरूपत्वाङ्गीकारे किं बाधकं येन स्वप्रकाशत्वं तदित्युच्यत इत्यत आह — **तेनेति** ॥ यद्यात्मत्वं जातिः स्यात् तर्हि जातेरनेकानुगतत्वे वाच्येऽनेकात्मव्यक्तीनामङ्गीकार्यतापत्याऽनेकत्वस्य भेदव्याप्तत्वेन हेतुसाध्ययोर्विरोधः स्यात् । अतो जातिरूपं नेदमात्मत्वमिति भावः ।

हेतुसाध्ययोर्न विरोध इत्युपलक्षणम् । प्राक् शङ्कितानुमाने जातित्वस्यासिद्धिकथनविरोधोऽपि नेत्यपि ग्राह्यम् ।

(५) (मु.) विमतग्रहणसाफल्यं वक्तुमाह — **नन्विति** ॥ **अंशे सिद्धसाधनादिति** ॥ अत्र केचित् परमात्मनः परमात्मत्वेन रूपेण परमात्माभेदसिद्धावप्यात्मत्वेनासिद्धत्वान्नायं दोषः । पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरेव दोषत्वात् । अन्यथा यत्र हेतुस्तत्र साध्यमिति व्याप्तिग्रहणदशायामेव पक्षीयसाध्यस्यापि सिद्धेरनुमानमात्रोच्छेदप्रसङ्गात् । अतः पक्षतावच्छेदकनानात्वस्थल एव स दोष इत्याहुः । तन्न । पक्षतावच्छेदकवत्तद्व्याप्यव्यापकान्यतरधर्मपुरस्कारेण सिद्धिरपि दूषणमेव । वैय्यर्थ्यरूपदूषकताबीजसत्त्वात् । तत्र व्याप्यधर्मपुरस्कारेण चेदंशे सिद्धसाधनता । पर्वतत्वादिकं प्रति न धूमवत्त्वादिकं व्याप्यं व्यापकं वेति नातिप्रसङ्गः । पृथिवी इतरेभ्यो भिद्यत इत्यादौ तु घटादिषु घटत्वादिविशेषेण जलादिभेदसिद्धावपि घटत्वादेः पृथिवीत्वेन सह व्याप्यव्यापकभावाज्ञानदशायां पृथिवी जलादिभिन्ना न वेति विप्रतिपत्तिसत्त्वात्पृथिवीत्वेन पक्षीकारः सङ्गच्छते । तज्ज्ञाने तु घटादीतरस्थल एव विमतिरिति सामान्यतः पक्षीकारे दोष एव । इह च नात्मत्वविशेषेण विमतिः किन्तु जीवाः ॥ **परमात्मनो भिद्यन्ते न वेति ।** एवेति । परमात्मनोऽपि प्रवेशे दोष एवेति विरोधादिति ।[1] तदितरत्वेन विशिष्य तदभेदसाधने विरोधादिति ज्ञेयम् ॥ **आद्यपक्षोक्तदोष एवेति** ॥ सिद्धसाध्यतेत्यर्थः ॥ **विप्रतिपत्तीति** । अत एवादौ विमतपदप्रयोग इति

---

[1] `किन्तु जीवाः परमात्मनो भिद्यन्ते न वेत्येवेति परमात्मनोऽपि प्रवेशे दोष एवेति ॥ विरोधादिति ॥' इति पाठेन भाव्यम् ।

नान्यत्पक्षतावच्छेदकमत्र गवेषणीयमित्येवशब्दः । इदं च परमात्मन्यस्तीति नांशे सिद्धसाधनत्वं नापि विरोध इति भावः । गौरवान्नेदं पक्षतावच्छेदकं युक्तमित्यत आह — **अन्यथेति** ॥ आत्मत्वस्य पक्षतावच्छेदकत्वेंऽशे परमात्मनि बाधात् । तदतिरिक्तत्वेन विशेषणे तस्य सिद्धौ सिद्धसाधनात् । असिद्धौ पक्षाप्रसिद्धेरित्यर्थः । केचित्तु नात्मत्वमंशे बाधात् । नापि परमात्मेरत्वविशिष्टम् । तस्याधुनाऽप्यसिद्धेः । नापि परमात्मेतरतया भ्रान्त्या प्रतीयमानत्वम् । परमात्मनि पूर्ववदंशे बाधादिति भावमाहुः । तच्चिन्त्यम् । परमात्मेतरतया भ्रान्त्या प्रतीयमानत्वस्य पक्षतावच्छेदकत्वे परमात्माभिन्नत्वप्रतीतेरेव प्रमात्वापत्त्या साध्यपक्षता-वच्छेदकयोर्विरोधस्यैवापत्तेरिति । अत्र हेतूकृतस्यात्मत्वस्य जातित्वे आत्मत्वं नानाव्यक्तिनिष्ठं जातित्वादिति प्राक् शङ्कितानुमानेऽसिद्धि-कथनायोगात्प्रकारान्तरेणात्मत्वं निर्वक्तुमाह — **आत्मत्वं चेति** ॥ **स्वप्रकाशत्वमिति** ॥ अवेद्यत्वे सत्यपरोक्षव्यवहारगोचत्वरूपमित्यर्थः । आत्मत्वस्य जातिरूपत्वाङ्गीकारे किं बाधकं येन स्वप्रकाशत्वं तदित्युच्यत इत्यत आह — **तेनेति** ॥ यद्यात्मत्वं जातिः स्यात् तर्हि जातेरनेकानुगतत्वे वाच्येऽनेकात्मव्यक्तीनामङ्गीकार्यतापत्याऽनेकत्वस्य भेदव्याप्तत्वेन हेतुसाध्ययोर्विरोधः स्यात् । अतो जातिरूपं नेदमात्मत्वमिति भावः । हेतुसाध्ययोर्न विरोध इत्युपलक्षणम् । प्राक् शङ्कितानुमाने जातित्वस्यासिद्धिकथनविरोधोऽपि नेत्यपि ग्राह्यम् ।

**(५) (मु.)** विमतग्रहणसाफल्यं वक्तुमाह — **नन्विति** ॥ **अंशे सिद्धसाधनादिति** ॥ अत्र केचित् परमात्मनः परमात्मत्वेन रूपेण परमात्मा-भेदसिद्धावप्यात्मत्वेनासिद्धत्वान्नायं दोषः । पक्षतावच्छेदक-

सामानाधिकरण्येन साध्यसिद्धेरेव दोषत्वात् । अन्यथा यत्र हेतुस्तत्र साध्यमिति व्याप्तिग्रहणदशायामेव पक्षीयसाध्यस्यापि सिद्धेरनुमानमात्रोच्छेदप्रसङ्गात् । अतः पक्षतावच्छेदकनानात्वस्थल एव स दोष इत्याहुः । तन्न । पक्षतावच्छेदकवत्तद्व्याप्यव्यापकान्यतरधर्मपुरस्कारेण सिद्धिरपि दूषणमेव । वैय्यर्थ्यरूपदूषकताबीजसत्त्वात् । तत्र व्याप्यधर्मपुरस्कारेण चेदंशे सिद्धसाधनता । पर्वतत्वादिकं प्रति न धूमवत्त्वादिकं व्याप्यं व्यापकं वेति नातिप्रसङ्गः । पृथिवी इतरेभ्यो भिद्यत इत्यादौ तु घटादिषु घटत्वादिविशेषेण जलादिभेदसिद्धावपि घटत्वादेः पृथिवीत्वेन सह व्याप्यव्यापकभावाज्ञानदशायां पृथिवी जलादिभिन्ना न वेति विप्रतिपत्तिसत्त्वात्पृथिवीत्वेन पक्षीकारः सङ्गच्छते । तज्ज्ञाने तु घटादीतरस्थल एव विमतिरिति सामान्यतः पक्षीकारे दोष एव । इह च नात्मत्वविशेषेण विमतिः किन्तु जीवाः ॥ **परमात्मनो भिद्यन्ते न वेति ।** एवेति । परमात्मनोऽपि प्रवेशे दोष एवेति विरोधादिति ।[1] तदितरत्वेन विशिष्य तदभेदसाधने विरोधादिति ज्ञेयम् ॥ **आद्यपक्षोक्तदोष एवेति ॥** सिद्धसाध्यतेत्यर्थः ॥ **विप्रतिपत्तीति** । अत एवादौ विमतपदप्रयोग इति ज्ञेयम् । ननु विमतिविषयतावच्छेदकं किमप्यस्ति न वा । आद्ये तदेव पक्षतावच्छेदकमस्तु । द्वितीये तदीयतानवगमेन सिद्धसाध्यताद्यापातात् । न चाननुगतावच्छेदिका तृणारणिमणिन्यायेनाननुगतधर्म्याश्रया विमतिः सा सुग्रहेति वाच्यम् । तर्हि पक्षतावच्छेदकस्य वैय्यर्थ्यात् । मैवम् । पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे तदनुक्तावुद्देश्या-

---

[1] 'किन्तु जीवाः परमात्मनो भिद्यन्ते न वेत्येवेति परमात्मनोऽपि प्रवेशे दोष एवेति ॥ विरोधादिति ॥' इति पाठेन भाव्यम् ।

सिद्धिप्रसङ्गेन तस्यावश्यं वाच्यत्वाद्विमत्यवच्छेदकानुक्तावपि परमात्मादेर्विमतिविषयत्वव्याहत्यादिप्राप्त्या तदितरत्रैव सा सुग्रहेति नातिप्रसङ्गः । ननु तथाऽपि न विमतिः पक्षतावच्छेदिका । तस्या एव पक्षतात्वात् । यथाऽऽहुः । 'सन्दिग्धसाध्यवान्पक्ष' इति । सन्दिग्धपदस्य विमतार्थतावश्यम्भावादिति । मैवम् । साध्यवत्तया सिषाधयिषितत्वस्येह पक्षत्वात् । आत्मत्वमिति हेतूकृतमिति शेषः ॥ **न विरोध इति** ॥ जातित्वेऽनेकानुगतत्वनियमेन तदभेदरूपसाध्यविपरीतव्याप्तत्वरूपविरोधो नेत्यर्थः । यद्यप्यत्रात्मत्वस्य न विशेषरूपेण साध्यात्यन्ताभाव-व्याप्तिरवसितेति कथं विरोध इति भवति शङ्का । तथाऽपि साधनतावच्छेदकधर्मपुरस्कारेण साधानसाध्यात्यन्ताभावव्याप्तेरपि विरोध-पदार्थत्वेन यत्र जातिस्तत्र व्यक्त्यभेदाभाव इति सामान्यतो विरोधः स्यादिति भावः ।

(५) (कु.) विमतिविशेषास्फोरणे विमता इत्यव्यावर्तकमिति मन्वानः शङ्कते — **ननु किमत्रेति** ॥ **अंशे विद्धसाधनादिति** ॥ यद्यपि पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे परमात्मनि परमात्मप्रतियोगिकभेदाभावसिद्धावप्यात्मत्वावच्छेदेन तदसिद्धेर्नांशे सिद्धसाधनता । पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे तु सम्पूर्णैवेति नोभयथाऽप्यंशे सिद्धसाधनता । पक्षतावच्छेदकनानात्वे तु तदवकाशो न तु पक्षतावच्छेदकाभेद इति नेदं युज्यते । तथाऽपि यत्र पक्षतावच्छेदकव्यापकत्वं साध्यतावच्छेदकसम्बन्धश्च साध्यांशे संसर्गमर्यादया भासते सा पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिः । यत्र च पक्षतावच्छेदकवति साध्यतावच्छेदकसम्बन्धेन साध्यं भासते

पक्षतावच्छेदकवति सर्वत्र नोद्देश्यं सा पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धिः । एतदुभयभिन्ना या पक्षतावच्छेदकरूपेण सकलपक्षविशेष्यका साध्यतावच्छेदकसम्बन्धेन साध्यप्रकारिका सिद्धिर्यत्रोद्देश्या तत्रैकस्मिन्पक्षे साध्यसिद्धावप्यंशतः सिद्धसाधनता भवतीति प्राचीनाशयात् । एतादृशस्थलेऽप्यंशतः सिद्धसाधनता युज्यत एवेति भावः ॥ **साध्येन साकं पक्षतावच्छेदकस्य विरोधादिति** ॥ अभेदरूपसाध्यस्य भेदगर्भपक्षतावच्छेदकविरोधादित्यर्थः । साध्यो यः परमात्माभेदो यत्परमात्मेतरत्वं पक्षतावच्छेदकमनयोर्विरोधादित्यर्थः । क्वचित्तु साध्यभेदेन साकं पक्षतावच्छेदकस्य विरोधादिति पाठः । षण्णिग्रहादिपक्षे[1] तु प्रतिज्ञाविरोधोऽयं विरोधान्तर्भूतः । परपक्षे तु बाध एवायम् । वचनदोषस्तु व्याघातः । विमता इति पदोक्तं विमतिं स्फोटयति[2] — **परमात्मनो भिद्यन्ते न वेति** ॥ **अन्यथेति** ॥ आत्मत्वस्य पक्षतावच्छेदकत्वेंऽशे बाधात् । परमात्मेतरत्वविशिष्टस्य तत्त्वे विशेषणसिद्धौ सिद्धसाधनता । तदसिद्धौ पक्षाप्रसिद्धिरित्यर्थः । ननु हेतूकृतमात्मत्वं यदि जातिस्तदा तेनानेकाश्रयेण भवितव्यम् । तेन चाश्रयैक्यसाधने विरोध इत्यत आह — **आत्मत्वं चेति** ॥ स्वयंप्रकाशत्वमवेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वादिरूपमित्यर्थः[3] ।

(५) (हु.) ॥ **अंशे सिद्धसाधनादिति** ॥ अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वेऽपि अंशे सिद्धसाधनता दोष एव । पक्षसाध्या-

---

[1] षट् निग्रहेति पदच्छेदः ।

[2] `स्फुटयति' इति `स्फोरयति' इति वा पाठेन भाव्यमिति भाति ।

[3] `-व्यवहाराविषयकत्वादिरूप-' मु.

द्यंशेऽधिकावगाहिन्याऽनुमितेर्न्यूनावगाहिसिद्ध्यप्रतिबद्धत्वं[1] न तु यत्किञ्चिदधिकपदार्थावगाहित्वमात्रे । तथात्वे सिद्ध्यात्मकधूमपरामर्शबलाद्घटपरामर्शकाले घटवह्न्युभयानुमानापत्तेः । तथा च पक्षतावच्छेदकावच्छेदेनानुमितौ पक्षतावच्छेदकाश्रयनिखिलव्यक्तयो भासन्ते न तु (साध्यांशे) पक्षतावच्छेदकव्यापकत्वादिकं भासते । सामानाधिकरण्येनानुमितौ (तु) कतिपयव्यक्तय एव भासन्ते । एतावता तयोर्वैलक्षण्यमिति प्राचीनमताभिप्रायेणेदम् । नव्यमते तु साध्यकोटावधिकभानात्स न दोष इति ध्येयम् ॥ **साध्याभेदेति** ॥ साध्यभूतोऽभेदः साध्याभेदः स च पक्षतावच्छेदकं चेत्यनयोर्विरोधादित्यर्थः । व्यावहारिकभेदादेरद्याप्यप्रसिद्ध्या परमात्मेतर इत्युक्ते परमात्मप्रतियोगिकापारमार्थिकभेदस्यैव प्राप्त्या विरोध इत्यर्थः ॥ **विप्रतिपत्तिगोचरत्वस्यैवेति** ॥ अनतिप्रसक्ततयाऽनिर्वचनेनेति शेषः । पक्षतावच्छेदकत्वात् पक्षतावच्छेदकताया वक्तुं शक्यत्वात् ।

ननु विप्रतिपत्तेः पक्षतावच्छेदकत्वं न परमात्मभेदाभेदप्रकारकविप्रतिपत्तित्वेन । परमात्मन्यपीदन्त्वादिविशिष्टे उक्तोभयप्रकारकविप्रतिपत्तिसम्भवेनोक्तदोषानिस्तारात् । नापि तद्व्यक्तित्वेन । इतरव्यावृत्तत्वेन तद्व्यक्तेः परिचयायोगात् । तथा च तस्याः पक्षतावच्छेदकत्वोक्तिरयुक्तैवेत्यत आह — **अन्यथेति** ॥ एतादृशदूषणेन तस्याः पक्षतावच्छेदकत्वखण्डने ॥ **तवापीति** ॥ अपिशब्दो न केवलं ममाभेदसाधनसम्भव इत्यर्थं वक्ष्यमाणसम्भवे समुच्चिनोति — **भेदसाधनस्यापीति** ॥ अभेदसाधनसमुच्चायकोऽपिशब्दः । तथा हि ।

---

1 `-गाहिन्या अनु-' इति पाठेन भाव्यम् ।

आत्मत्वस्य[1] भेदसाधने पक्षतावच्छेदकत्वे तत्सामानाधिकरण्येन साध्यसाधने सर्वजीवेषु परमात्मभेदासिद्ध्योद्देश्यासिद्धिः । अवच्छेदकावच्छेदेन तत्साधने परमात्मनि परमात्मभेदाभावादंशे बाधः । परमात्मेतरत्वस्य पक्षतावच्छेदकघटकत्वे उक्तानुमानात्प्राक् तदसिद्ध्या पक्षतावच्छेदकविशिष्टपक्षाप्रसिद्धिरन्यथाऽनुमानवैयर्थ्यापत्तेः । परमात्मभिन्नत्वेन प्रतीयमानत्वं भ्रान्त्या परमात्मन्यपीति पुनरंशे बाधः स्यात् । अतस्त्वया दुःखिबद्धत्वाद्युपलक्षितचेतनत्वावच्छिन्नधर्मिकोक्तभेदप्रकारकविमतेरनुगतोक्तरूपेण वा तद्व्यतिरिक्तत्वेन वा पक्षतावच्छेदकत्वमुपगन्तव्यम् । तत्तुल्यं ममापीति भावः । यद्यपि तादृशदुःखित्वादेरेव पक्षतावच्छेदकत्वसम्भवः । तथाऽप्यनुमानप्रवृत्तेस्तदवच्छिन्ने अन्यतरकोटिनिश्चयदशायामयोगात्तादृशविप्रतिपत्तिसाध्यसंशयस्य नियमेनावश्यकत्वे लाधवात्तस्यैव तद्व्यक्तित्वेन पक्षतावच्छेदकत्वमुचितमिति हृदयम् ॥ **स्वप्रकाशत्वमिति** ॥ अवेद्यत्वे सत्यपरोक्षव्यवहारगोचरत्वरूपम् । यद्वा स्वातिरिक्तसंविदनधीनस्वविषयकयत्किञ्चिद्व्यवहारकत्वं मतद्वयेऽपि सुषुप्त्युत्तरकालीनव्यवहारमादाय सिद्धमित्यभिमानस्तेन पूर्वपक्षवादिमते आत्मनः स्वविषयकज्ञानरूपत्वाभावादसिद्धिरिति निरस्तम्[2]॥ **न विरोध**

---

[1] `तवाप्यात्मत्वस्य' इति `तथा हि'शब्दरहितः मु.पाठः

[2] `स्वविषयकयत्किञ्चिद्व्यवहारकत्वं मतद्वयेऽपि सुषुप्त्युत्तरकालीनव्यवहारमादाय सिद्धमित्यभिमानस्तेन पूर्वपक्षवादिमते आत्मनः स्वप्रकाशत्वमिति । अवेद्यत्वे सत्यपरोक्षव्यवहारगोचरत्वरूपम् । यद्वा स्वातिरिक्तसंविदधीनस्वविषयकज्ञानरूपत्वाभावादसिद्धिरिति निरस्तम् ।' इति स्वप्रकाशत्वमितीति प्रतीकधारणमारभ्य निरस्तमिति पर्यन्तस्य मु.पाठः ।

**इति** ॥ अन्यथाऽऽत्मत्वं जातिरित्यङ्गीकारेण हेतूकरणे व्यक्त्यैक्येन साध्येन तस्य विरुद्धत्वं स्यादिति भावः । आत्मत्वात् परमात्मवत्

विमताः आत्मानः परमात्मनः परमार्थतः न भिद्यन्ते

(५) (का.) अत्रानुमाने पक्षतावच्छेदकं दुर्निरूपमित्याशङ्कते — **नन्विति** ॥ [1]आत्मत्वस्य वक्ष्यमाणरीत्या पक्षतावच्छेदकत्वे दूषिते तद्व्यापकस्य सामान्यतो विवादविषयत्वरूपविमतत्वस्य तद्विशिष्टात्मत्वस्य च तद्दूषितप्रायमित्यभिप्रायेणात्मत्वस्यैव तद्दूषयति — **न तावदिति** ॥ **पक्षत्वापत्त्या** पक्षतावच्छेदकाक्रान्तत्वापत्त्या ॥ **अंशे सिद्धसाधनादिति** ॥ यद्यप्यवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यतायामंशतः [2]सिद्धसाधनं न अवच्छेदकसामानाधिकरण्येन

---

[1] ननु मूले विमतत्वविशिष्टात्मत्वस्यैव पक्षतावच्छेदकत्वं प्रतीयते न तु केवलमात्मत्वस्य । तत्कथमात्मत्वमात्रस्य पक्षतावच्छेदकत्वे दोषोऽभिधीयते इति शङ्कां परिहरति - **आत्मत्वस्य वक्ष्यमाणरीत्येति** ॥

[2] ॥ **सिद्धसाधनं न दोष इति** ॥ अयमत्र वादक्रमः - विमता आत्मानः इत्यनुमाने अंशतः सिद्धसाधनदोषः मूले उक्तः । स न युक्तः । पक्षतावच्छेदकावच्छेदेन अनुमितिं प्रति पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिरेव प्रतिबन्धिका, समानविषयकसिद्धेरेवानुमिति-प्रतिबन्धकत्वात् । प्रकृते `सर्वे आत्मानः परमात्मनः परमार्थतो न भिद्यन्ते' इत्यनुमितिं प्रति तादृशी सिद्धिरेव प्रतिबन्धिका न तु `कश्चन आत्मा (परमात्मा) परमात्मनो न भिद्यते' इति सिद्धिः । अतः मूलोक्ता अंशेसिद्धसाधनता न दोषाय । अथैवं वक्तव्यम् - अंशे सिद्धिः न अनुमितिप्रतिबन्धकतया दोषः किन्तु साध्यसंशयरूपपक्षताविघटकत्वेन दोषः । प्रकृते हि अवच्छेदकावच्छेदेन साध्यतदभावकोटिकः `सर्वे आत्मानः परमात्मनो भिद्यन्ते न वा' इति संशयः पक्षता । यदा `कश्चनात्मा परमात्मनो न भिद्यते' इति सिद्धिरस्ति तदा उक्तसंशयो नोपपद्यते इति भवत्येव अंशे सिद्धिः पक्षताविघटिका - इति । परन्त्विदमपि न युक्तम् । अनुमित्या योयः संशयः निवर्त्यते स सर्वोऽपि पक्षता भवितुमर्हति । प्रकृते `सर्वे आत्मानः परमात्मनो न भिद्यन्ते' इत्यनुमित्या `सर्वे आत्मानः न भिद्यन्ते वा, केचन आत्मानः भिद्यन्ते वा' इति संशयोऽपि निवर्त्यते इति सोऽपि संशयः पक्षता भवतीति न

दोषः । न्यूनविषयकसिद्धेरनुमित्यविरोधित्वात् । न चावच्छेदकावच्छेदेन साध्यतदभावकोटिकसन्देहलक्षणपक्षताविघटकत्वेन तस्य दोषत्वम् । अंशतः सिद्धिसत्त्वेऽप्यवच्छेदकावच्छेदेन साध्यं सामानाधिकरण्येन तदभावं चावगाहमानसन्देहसम्भवेन तस्यैव तत्र पक्षतात्वात् । न चैवमनित्ये वाङ्मनसे इत्यादौ वाङ्मात्रे साध्यसिद्धेरविरोधित्वप्रसङ्ग इति वाच्यम् । पक्षतावच्छेदकावच्छेदेन सिद्धेस्तदवच्छेदेनानुमितिविरोधितया वात्त्वावचछेदेन सिद्धेस्तदवच्छेदेनानुमितिविरोधित्वसम्भवात् । अत एवाऽह मणिकारः `पक्षतावच्छेदकनानात्वे ह्यंशतः सिद्धसाधनं दोष' इति । तथापि तद्विषयकानुमितौ तद्विषयकसिद्धिसामान्यस्य विरोधित्वमिति मतमनुसृत्येदमुक्तम् ।

अस्तु तर्हि परमात्मव्यावृत्तं तदन्यत्वविशिष्टात्मत्वमेव पक्षता-

---

पक्षताविघटकत्वेनापि दोषत्वम् । नन्वेवं तर्हि कुत्रापि अंशतः सिद्धसाधनं दोषः न स्यात् । न चेष्टापत्तिः । `वाङ्मनसे अनित्ये' इत्यत्र अंशतः सिद्धसाधनतायाः दोषतया दर्शनेष्वङ्गीकारात् इति चेन्न । तत्रापि अवच्छेदकावच्छेदेन सिद्धेरेव अनुमिति विरोधित्वात् । तत्र हि वात्त्वं मनस्त्वं चेति द्वयं पृथक् पक्षतावच्छेदकम् । तत्र वात्त्वावच्छेदेन अनित्यत्वं सिद्धमित्येव दोषः । पक्षीभूतयोः द्वयोः अन्यतरस्मिन् साध्यं निश्चितमिति हेतोः अंशतः सिद्धसाधनमिति व्यवह्रियते । वस्तुतः तत्रापि अवच्छेदकावच्छेदेन सिद्धिरेव प्रतिबन्धिका । अनेनैवाशयेन मणिकारेणाप्युक्तम् - `पक्षतावच्छेदकनानात्वे ह्यंशतः सिद्धसाधनं दोष' इति । तथा च कथं मूले अंशतःसिद्धसाधनोद्भावनम्? - इति शङ्कितुराशयः । परिहर्तुरयमाशयः - केचन `तद्विषयकानुमितिं प्रति तद्विषयकसिद्धिः प्रतिबन्धिका' इति सामान्यतः प्रतिबध्यप्रतिबन्धकभावमुररीकुर्वन्ति । न तु `अवच्छेदकावच्छेदेनानुमितिं प्रति अवच्छेदकावच्छेदेन सिद्धिरेव प्रतिबन्धिका । सामानाधिकरण्येन अनुमितिं प्रति तु अवच्छेदकावच्छेदेन सामानाधिकरण्येन च सिद्धिः प्रतिबन्धिका' इति विशेषनियममङ्गीकुर्वन्ति । तन्मतानुसारेणायं दोषः - इति ।

वच्छेदकमित्याशङ्कां निरस्यति — **नापीति** ॥ **विरोधादिति** ॥ भेदाभेदायोर्विरोधान्न पक्षतावच्छेदकसाध्यभावसम्भवः । [1]स्वविरोधिधर्मधर्मितावच्छेदककस्वप्रकारकपरोक्षज्ञानानभ्युपगमादिति भावः । यद्यपि तन्मते भेदसामान्यस्य न पारमार्थिकभेदाभावेन विरोधः । तथापि प्रातिभासिकभेदस्याव्यावर्तकत्वाद्व्यावहारिकभेदस्य च परं प्रत्यसिद्धेः पारमार्थिकभेदस्यैव पक्षकुक्षौ निवेश्यतया ध्रुवो विरोधः । वस्तुतः सिद्धान्ते सत्तात्रैविध्यानभ्युपगमेन भेदमात्रस्यैवाभेदविरोधितया तद्रीत्यैतदभिधानमिति ध्येयम् ।

विमतपदेन विमतिविशेषविषयत्वस्यैव विवक्षिततया तावन्मात्रस्य पक्षतावच्छेदकत्वं नानुपपन्नमित्याह — **परमात्मन इति** ॥ **चैत्राद्या इत्यादिः** । अत्र चैत्रत्वादीनामननुगतत्वात्तदवच्छिन्नधर्मिकसमूहालम्बनविमतिविषयत्वस्य पक्षतावच्छेदकत्वानुसरणम् । नन्वेवमात्मत्वादिकमेव पक्षतावच्छेदकीकृत्य परमात्मभेदवादिनं प्रति तदन्यधर्मावच्छिन्ने तदभेदसाधनमसङ्गतमत आह — **अन्यथेति** ॥ भेदवादिनाऽऽत्मत्वादि-

---

[1] ॥ **स्वविरोधिधर्मधर्मितावच्छेदककेति** ॥ वह्न्यभाववान् पर्वतो वह्निमान् इतिप्रतीतिवारणायायं नियमः स्वीकृतः । स्वं = वह्निः । स्वविरोधिधर्मः = वह्न्यभावः । सः अस्मिन् ज्ञाने धर्मितावच्छेदकः इति इदं ज्ञानं स्वविरोधिधर्मधर्मितावच्छेदककं जातम् । एवं स्वशब्दग्राह्यवह्निप्रकारकत्वमपि वर्तते । एवमेव प्रकृते `परमात्मनो भिन्ना आत्मानः परमात्माभिन्ना' इति उद्दिष्टानुमितौ स्वं = परमात्माभेदः । स्वविरोधिधर्मः = परमात्मभेदः । स भेदः धर्मितावच्छेदकः । तथा स्वशब्दग्राह्योऽभेदः प्रकार इति नेतादृशज्ञानसम्भव इति भावः ॥ **परोक्षज्ञानानभ्युपगमादिति** ॥ `घटाभाववद्भूतलं घटवत्' इत्यादि आहार्यज्ञानं सम्भवति । `बाधकालीनेच्छाजन्यज्ञानमाहार्यमि'ति तल्लक्षणात् । आहार्यज्ञानं च प्रत्यक्षात्मकमिति तद्वारणाय उक्तनियमे परोक्षज्ञानं निविष्टम् ।

पक्षतावच्छेदकीकरण इत्यर्थः ॥ **असम्भवादिति** ॥ परमात्मभेदस्यात्मत्वसामानाधिकरण्येन साधने यावज्जीवेषु तदसिद्धेस्तदवच्छेदेन साधने परमात्मनि बाधात्तदितरत्वेन पक्षविशेषणे च परं प्रत्यसिद्धेस्तदितरत्वेन प्रतीयमानत्वोक्तौ पुनरुक्तबाधप्रसङ्गाद्भेदवादिनाऽप्युक्तविमतिविषयत्वमेव पक्षतावच्छेदकीकर्तव्यमिति भावः ।

नन्वात्मत्वजातेर्व्यक्तिभेदनियतत्वेन व्यक्त्यभेदपर्यवसितनिरुक्तसाध्यव्याप्यत्वासम्भव इत्यत आह — **आत्मत्वमिति** ॥ स्वप्रकाशत्वमित्यवेद्यत्वमभिमतम् । न तु स्वविषयप्रकाशत्वम् । स्वस्यैवासिद्धेः । परस्यासिद्धिस्तु वक्ष्यते । नन्वीदृशानुमानेन जीवपरमात्माभेदसिद्धावपि कथं मिथो जीवाभेदसिद्धिरिति चेन्न । [1]सर्वेष्वेकाभेदस्य सर्वैक्यपर्यवसायित्वात् । एतच्चोपलक्षणम् । 'विमता आत्मानश्चैत्रात्मनो न भिद्यन्ते आत्मत्वाच्चैत्रात्मवदि'त्याद्यनुमानमपि ग्राह्यम् ।

(५) (श.) विमतपदप्रयोगप्रयोजनं वक्तुमाक्षिपति — **नन्विति** ॥ **अंशे सिद्धसाधनादिति** ॥ ननु यत्रानित्ये वाङ्मनसे इत्यत्र पक्षतावच्छेदकनानात्वं तत्रानित्या वागिति बुद्धेरुद्देश्यायाः सिद्धेरंशतः सिद्धसाधनमिति मणिकारेणोक्तत्वादत्रात्मत्वमेकमेव पक्षतावच्छेदकमिति कथमंशतः सिद्धसाधनमिति चेत् अत्र प्रष्टव्यम् । किं पक्षतावच्छेदकनानात्वमेवांशे सिद्धसाधने प्रयोजकमुतोद्देश्यप्रतीतिसिद्धिरपीति । नाद्यः । अन्वयतो

---

[1] ॥ **सर्वेष्वेकाभेदस्य सर्वैक्यपर्यवसायित्वादिति** ॥ यत् यदभिन्नाभिन्नं तत्तदभिन्नमिति न्यायः अत्र विवक्षितः । यः = चैत्रः, यदभिन्नाभिन्नः = मैत्राभिन्नपरमात्माभिन्नः, सः = चैत्रः, तदभिन्नः = मैत्राभिन्नः इति समन्वयः । एवं सर्वेष्वपि चेतनेषु अभेदः सिध्यतीति भावः ।

व्यतिरेकतश्च व्यभिचारात् । तथाहि । न तावत् यत्र पक्षतावच्छेकनानात्वं तत्रांशे सिद्धसाधनमिति नियमः । वनपर्वतौ वह्निमन्तौ धूमादित्यत्र वनपर्वतत्वरूपपक्षतावच्छेदकनानात्वेऽप्यंशतः सिद्धसाधनाभावात् । नापि यत्र पक्षतावच्छेदकनानात्वाभावः तत्रांशे सिद्धसाधनाभावः इति नियमः । द्रव्याण्यनित्यानि गुणाश्रयभावात् । नापि यत्र पक्षतावच्छेदकनानात्वाभावः तत्रांशे सिद्धसाधनाभावः इति नियमः । द्रव्याण्यनित्यानि गुणाश्रयत्वात् घटवदित्यत्र पक्षतावच्छेकस्य द्रव्यत्वस्यैकत्वेऽपि पृथिव्यादिकार्यद्रव्ये अनित्यत्वस्य सिद्धत्वेनांशतः सिद्धसाधनसद्भावात् । द्वितीये तूद्देश्यप्रतीतिसिद्धेरेव प्रयोजकत्वमस्तु । आवश्यकत्वाल्लाघवाद्यभिचारा-भावाच्च । नतु पक्षतावच्छेदकनानात्वस्यापि । अनावश्यकत्वा-द्गौरवाद्यभिचाराच्च । नन्वत्रोद्देश्यप्रतीतिसिद्धिरपि नास्ति । तथाहि । किमत्रात्मत्वसामानाधिकरण्येन सर्वत्रात्माभेदविषया समूहालम्बनरूपैका बुद्धिरुद्देश्या उत सार्वत्रिकत्वाद्युदासीना । द्वितीये परमात्मनि तदभेदसिद्धौ सिद्धसाधनमेव । नांशतः सिद्धसाधनं सार्वत्रिकत्वाद्युदासीनाया एव बुद्धेरुद्देश्यत्वेन तस्या एकदेशसिद्धावपि सिद्ध(साधन)त्वात् । आद्ये कथमंशतः सिद्धसाधनम् । एकदेशसिद्धावप्युद्देश्यायाः सर्वत्र समूहालम्बनबुद्धेरसिद्धेरिति चेत् उच्यते । उद्देश्यप्रतीतिसिद्धिरपि हि न स्वरूपेण सिद्धसाधनप्रयोजिका । किन्तु पक्षताविघटनद्वाराऽनुमिति-प्रतिबन्धकत्वेनैव । तच्च क्वचित्साध्यसिद्धेरप्यस्ति । क्वचित्साध्यनिश्चये तदंशे सन्देहसिध्यभावयोरसम्भवेन तदुभयघटितपक्षताविरहात् । अत्र च परमात्मनि साध्यसिद्धौ तदंशे पक्षताविरहेण न सर्वात्मविशेष्यका परमात्माभेदविशेषणका एका समूहालम्बनरूपाऽनुमितिरित्यनुमिति-

प्रतिबन्धकतया भवत्येवांशे सिद्धसाधनं दोषः । न च सिषाधयिषादशायां साध्यसिद्धेरनुमित्यप्रतिबन्धकत्वान्न तदंशेऽनुमिति-प्रतिबन्ध इति वाच्यम् । सिषाधयिषाभावदशायामेतदनवतारात् । अन्यथोक्तरीत्या सिद्धसाधनस्यापि दोषत्वं न स्यात् । नच परमात्मनि परमात्मत्वरूपेण परमात्माभेदे निश्चितेऽप्यात्मत्वेन तत्सन्देहादिः सम्भवतीति वाच्यम् । विशेषनिश्चयस्य सामान्यतः संशयादिविरोधित्वेन तादृशनिश्चयेसतितथाविधसन्देहाद्य-योगात् । अन्यथैतत्पर्वतत्वेन वह्निमत्तया निश्चिते पर्वतत्वेन तत्सन्देहापत्त्या तत्र वह्न्यर्थिनो निःशङ्कप्रवृत्तिर्न स्यात् । व्यक्तमेतत्सर्वं तर्कताण्डव इति सङ्क्षेपः ।

॥ **विशिष्टमिति** ॥ आत्मत्वमिति वर्तते । अत्र तु न पूर्वोक्तदोष इति भावः ॥ **साध्येनेति** ॥ साध्येनाभेदेन सह पक्षतावच्छेदकीभूतपरमात्मेतरत्वे सत्यात्मत्वस्य विरोधादित्यर्थः । तथाच वह्न्यादिसमानाधिकरणस्यैव पर्वतत्वादेः पक्षतावच्छेदकत्वदर्शनेन परमात्माभेदासमानाधिकरणस्य परमात्मेतरत्वे सत्यात्मत्वस्य न पक्षतावच्छेदकत्वमिति भावः ॥ **भ्रान्त्येति** ॥ तथाच परमात्मेतरत्वस्यावास्तवत्वान्न तस्य वास्तवाभेदेन विरोध इति भावः ॥ **भ्रान्तिसम्भवेनेति** ॥ उक्तभ्रान्तिकारणस्य परमात्मनः सकाशात्पृथगुपलभ्यमानत्वस्य तद्रूपेषु मत्स्यादिष्वपि साम्यादिति भावः । विमतपदप्रयोगलब्धमाह — **परमात्मन इति** ॥ ननु परमात्मनो भिद्यन्ते न वेति विप्रतिपत्तिगोचरत्वं न पक्षतावच्छेदकं गौरवादिति चेन्न । लघुभूतावच्छेदकान्तरे सत्येव गौरवस्य दोषत्वात् । यथा धूमत्वे लघुभूते सति गुरूभूतं नीलधूमत्वं न हेतुतावच्छेदकम् । न चात्रावच्छेदकान्तरं लघुभूतमस्ति येनास्य गौरवेण परित्याग इति भावः । इदमेव विपक्षे

बाधकेन द्रढयति — अन्यथेति ॥ उक्तपक्षतावच्छेदकानङ्गीकार इत्यर्थः । तत्ववादिना हि विमता आत्मानः परमार्थतो भिद्यन्ते तद्विरुद्धधर्मवत्त्वादिति साधनीयम् । तत्र प्रष्टव्यं किमत्रपक्षतावच्छेदकमिति । यद्यात्मत्वं तर्हि तदवच्छिन्नपरमात्मनोऽपि पक्षत्वापत्तौ तत्र परमात्मभेदाभावेनांशे बाधः । नापि परमात्मेतरत्वविशिष्टम् । परमात्मेतरत्वस्याधुनाप्यसिद्धेः । नापि भ्रान्त्या परमात्मेतरतया प्रतीयमानत्वम् । परमात्मन्यपि परमात्मेतरत्वभ्रान्तिसम्भवेन तस्यापि पक्षत्वेनाद्यपक्षोक्तदोषतादवस्थ्यात् । तस्मात्तेनापि परमात्मनो भिद्यन्ते न वेति विप्रतिपत्तिगोचरत्वस्यैव पक्षतावच्छेदकत्वमभ्युपेत्य उक्तरीत्या तत्र प्राप्तदोषः परिहरणीयः । एवमत्रापीति दोषपरिहारयोरुभयत्र साम्ये एकत्र पक्षपातायोगात् । यथाहुः

> `यत्रोभयोः समो दोषः परिहारोऽपि वा समः ।
> नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारण'

इति । नन्वात्मत्वजातेरनेकसमवेतत्वनिर्वाहायात्मनामनेकत्व-मङ्गीकार्यम् । अनेकत्वाभावश्च साध्यते । अतो हेतुसाध्ययोरन्योन्यविरोधेन व्याप्तिग्रहोऽनुपपन्न इत्याशङ्कां परिहर्तुमाह — आत्मत्वेति ॥ जातिर्न चेत् तर्हि किमिति पृच्छति — किन्तर्हीति ॥ उत्तरमाह — स्वप्रकाशत्वमिति ॥ आत्मनः स्वप्रकाशत्वमवेद्यत्वरूपमभिमतम् । नतु स्वविषयप्रकात्वरूपम् । कर्तृकर्मविरोधेन मायावादिभिरात्मनः स्वविषयप्रकाशत्वानङ्गीकारादिति ध्येयम् । ततः किमित्यत आह — तेनेति ॥ आत्मत्वस्य जातित्वानङ्गीकारेणेत्यर्थः ।

(६) किञ्च विमतानि शरीराणि देवदत्तस्यैव भोगायतनानि शरीरत्वाद्देवदत्तशरीरवत् । अत्र भोगायतनत्वात्यन्ताभावानधिकरणत्वं

**साध्यम् । तेन सुप्तमूर्च्छितमृतशरीरादिषु न बाधः । नापि व्यभिचारः । (न बाधो न व्यभिचारः) । ननु देवदत्तस्यैवेत्यत्र भोक्तृत्वेनाप्रसक्तस्याचेतनस्यैवकारेण व्यवच्छेदायोगाच्चेतनान्तरं तद्व्यावर्त्यं वाच्यम् । तेनात्मान्तरसिद्धिः । एवकारपरित्यागे च सर्वेषां शरीराणां प्रतिनियतभोक्तृकाणामपि देवदत्तभोगायतनत्वस्याप्युपपत्त्याऽर्थान्तरादिति चेन्न । परमतप्राप्तस्यैव भोक्त्रन्तरस्यैवकारेण व्यावर्त्यत्वात् ।**

(६) (भ.) आत्माभेदेऽनुमानान्तरमप्याह — **किञ्च विमतानीति** ॥ अत्र देवदत्तशरीरे सिद्धसाधनातावारणाय विमतानीत्युक्तम् । तथा च देवदत्तशरीरातिरिक्तशरीराणीति लभ्यते । तेषां च देवदत्तमात्रभोगायतनत्वसाधने यज्ञदत्तादिसर्वात्मनां देवदत्तेनाभेदलाभ इति भावः । ननु सुप्तमूर्च्छितमृतशरीराणां पक्षत्वे तत्र भोगायनत्वाभावेन बाधः पक्षातिरिक्तत्वे व्यभिचार इत्यत आह — **भोगायतनत्वात्यन्ताभावेति** ॥ सुप्त्यादिदशायां भोगायतनत्वाभावेऽपि तत्पूर्वं वा तदुत्तरं वा भोगायतनत्वसम्भवेन तदत्यन्ताभावानधिकरणतायास्तेष्वपि सद्भावेन पक्षकोटिप्रविष्टेष्वपि तेषु न बाधः । पक्षकोटिप्रविष्टत्वादेव व्यभिचारोऽपि नेत्यर्थः । नन्वात्मनामभेदसाधनार्थमिदमनुमानम् । तत्र देवदत्तस्यैवेत्येवकारेणैव तद्व्यावर्त्यं देवदत्तातिरिक्तचेतनसिद्धिर्भवति । अतः स्वव्याहतमेतदित्याशङ्कते — **नन्विति** ॥ **अचेतनमेव तद्व्यावर्त्यं किन्न स्यादित्यत उक्तं भोक्तृत्वेनाप्रसक्तस्येति** ॥ अचेतनस्येति शेषः । तर्ह्येवकारः परित्यज्यत इत्यत आह — **एवकारेति** ॥ प्रतिनियतभोक्तृकाणामपि भूतावेशन्यायेन देवदत्तभोगायतनत्वस्याप्युपपत्त्याऽर्थान्तरत्वमित्यर्थः ॥ **परमतप्राप्तस्येति** ॥ परमतप्रसक्तस्यैव चेतनान्तरस्य व्यावर्तनान्न स्वव्याघात इति भावः ।

(६) (मु.) **विमतानीति** ॥ यज्ञदत्तादिशरीराणीत्यर्थः । पक्षधर्मताबलादभेदसिद्धिरिति भावः । देवदत्तस्य परकायप्रवेशेनार्थान्तरवारणायैवकारः ॥ **न बाधो नापि व्यभिचार इति** ॥ पक्षत्वे बाधो न चेद्व्यभिचारश्च नेत्यर्थः । एवकारप्रयोगेऽप्यनुमानं दूषयति — **नन्विति** ॥ **आत्मान्तरसिद्धिरिति** ॥ अन्यथा स्वतो व्यावृत्तव्यावर्तकैवकारायोगादिति भावः । निषेधप्राप्तिरेव तन्त्रं न स्वरूपसत्त्वमिति भावः ।

(६) (कु.) ॥ **किञ्च विमतानीति** ॥ यद्यप्यनेनानुमानेन जीवानां परस्पराभेदसिद्धावपीश्वराभेदसिद्धौ न प्रकृतोपयोगः । तथाऽपि प्रसङ्गागतं बोध्यम् । यद्वा `शुभं पिबत्यसौ नित्यं नाशुभं स हरिः पिबेत्' इत्युक्तेर्भगवतस्तच्छरीरावच्छिन्नसारभोक्तृत्वमात्मभेदवादिभिरङ्गीकार्यम् । अनेन चानुमानेन देवदत्तमात्रभोगायतनत्वसाधने ईश्वराभेदः सिध्यतीति भावः ॥ **भोगायतनत्वात्यन्ताभावेति** ॥ यद्यप्यत्र व्याप्तिर्दैशिकी । तथा च सुप्तमूर्छितमृतशरीरेषु पक्षीकृतेषु सपक्षीकृतेषु च तत्तदवस्थायां भोगाभावे कदाचिद्भोगायतनत्वस्य विद्यमानत्वान्न बाधो न व्यभिचारः । न च वाच्यं परिमाणभेदेन द्रव्यभेदात्सुप्तादिशरीराणां पूर्वोत्तरशरीरभेदात्तेषां कदाऽपि भोगायतनत्वाभावात् भवति बाधो व्यभिचारश्चेति । तथात्वे विवक्षयाऽप्यनिस्तारात् । तेषां शरीराणां भोगतत्प्रागभावध्वंसाधिकरणत्वेन तदत्यन्ताभावानधिकरणत्वात् । तथाऽपि व्याप्तिद्वयेन प्रवृत्तमिदमनुमानमित्याशयेनेदम् ॥ **नन्विति** ॥ एवकारेण भोक्तृत्वेनाप्रसक्तस्य जडव्यावर्तनायोगेन[1] भोक्तृत्वेन प्रसक्तचेतनान्तरमेव व्यावर्तनीयम् । तथा च देवदत्तातिरिक्तचेतनभोगानायतनत्वे सति देवदत्तभोगायतनत्वं साध्यार्थः

---

[1] `जडस्य व्यावर्तन-' इति पाठेन भाव्यम् ।

फलितः । एवञ्च तादृशसाध्यस्य प्रसिद्धिसम्पादकेन प्रकृतानुमानेन वा[1] देवदत्तातिरिक्तचेतनसिद्धिः स्यात् । एवकारपरित्यागे च प्रतिनियतभोक्तृणामपि भूतावेशन्यायेन देवदत्तभोगायतनत्वसम्भवादभेदं विनाऽपि साध्यपर्यवासानादर्थान्तरतेत्यर्थः ॥ **परमतेति** ॥ तथा च देवदत्तातिरिक्तत्वेन पराभिमतचेतनान्तरभोगानायतनत्वे सति देवदत्त-भोगायतनत्वं साध्यार्थ इति नोभाभ्यां देवदत्तातिरिक्तचेतनसिद्धिः । परमतावच्छेदकत्वेन[2] साध्यकोटिनिवेशस्यायमेव वदतीत्यादेरिवार्थसत्ता-पर्यन्तत्वाभावादिति भावः ।

(६) (हु.) एवं परमात्मना सर्वजीवानामभेदं बहुजीववादेन प्रसाध्यैक-जीववादमवलम्ब्य सर्वशरीरस्य जीवैक्यं साधयति — **विमतानीति** ॥ परिदृश्यमानदेवदत्तपिण्डव्यतिरिक्तनिखिलशरीराणीत्यर्थः । देवदत्तीय-जन्मान्तरीयशरीरेषूक्तसाध्यस्य सिद्धत्वेऽप्यवच्छेदकावच्छेदेन साधने सिद्धसाधनता न दोष इत्याशयेनेदम् । अथवा देवदत्तसम्बन्धिपूर्वापर-निखिलशरीरव्यतिरिक्तान्यदीयसर्वशरीरसाधारणस्य रूपस्य ज्ञानिमुखादिना कथञ्चिदवगमे तद्रूपं वा तदवच्छिन्नधर्मिका विप्रतिपत्तिर्वा पक्षता-वच्छेदिकाऽतो नांशे सिद्धसाधनताऽवकाशः । अज्ञानिनां तु न तादृशधर्मो बुद्धिपथमारोढुमर्हति । सर्वशरीरिणां देवदत्तशरीरत्वपक्षे देवदत्त-कर्मानिर्मितत्वादिधर्माणां पक्षीभूतशरीरेष्वपि सम्भवात् । अथवैकजीववाद-पक्षे हिरण्यगर्भनामकशरीराभिमान्येक एव जीवः सर्वशरीराभिमान्य-नादितोऽनुवर्तते । एतावत्कालपर्यन्तं न कस्यापि मुक्तिस्तस्य मुक्त्यनन्तरं न

---

1 `-मानेनैव' इति पाठेन भाव्यम् ।

2 `पक्षता-' इति पाठेन भाव्यम् ।

किमपि जगदवशिष्यत इत्येकजीववादस्थितिः । तथा च देवदत्तपदेन न शरीराभिमानी प्रकृते विवक्षितः।[1] तथा च हिरण्यगर्भशरीररूप-पिण्डमनादितः स्थितमिति शास्त्रसिद्धम् । तदन्यशरीरत्वावच्छेदेन हिरण्यगर्भस्यैव भोगायतनत्वं साध्यत इति नांशे सिद्धसाधनताऽवकाश इति ध्येम् । एतेनैतत्प्रकारेण पूर्वापरग्रन्थेष्व-वच्छेदकावच्छेदेन साधनेऽप्यंशे सिद्धसाधनताया दोषत्वोपगमस्यैव सत्त्वान्मध्येऽत्रैव तदनङ्गीकारे सन्दर्भविरोध इति निरस्तम् ॥

॥देवदत्तस्यैवेति ॥ भोगायतनत्वं भोगावच्छेदकत्वम् । भोगोऽन्यः। सुखादिभूतावेशन्यायेन देवदत्तेतरभोगावच्छेदकेऽपि शरीरे देवदत्तभोग-सम्भवेन नोद्देश्यसकलजीवैक्यसिद्धिरित्यर्थान्तरवारणायैवेति । देवदत्तेतर-भोगायतनत्वाभावविशिष्टत्वं तदर्थः । ननु देवदत्तेतरचेतनाभावाज्जड-कर्तृकभोगाप्रसिद्धेरितरकर्तृकभोगरूपप्रतियोग्यप्रसिद्ध्याऽनुमातृमते तद-भावाप्रसिद्धिः । न च देवदत्तेतरचेतनत्वप्रकारकप्रतिवाद्यभिमत-विषयीभूतचेतनत्वेन निवेश्य तत्कर्तृकभोगायतनत्वाभावो निवेश्यः । पराभिमत्यवच्छेदकतया साध्यकोटिनिवेशस्यायमिह वदतीतिवदर्थसत्ता-पर्यन्तत्वाभावादिति वाच्यम् । पराभिमतेर्भ्रमत्वेऽपि तद्विषयता चेतने वा जडे वा वाच्या । आद्ये देवदत्तचेतनस्यैव स्वातिरिक्तत्वभ्रमगोचरतया तद्भोगायतनत्वाभावसाधने बाधानिस्तारात् । द्वितीये जडकर्तृक-भोगाप्रसिद्धेरिति चेन्न । स्वकर्तृकभोगवत्त्वसम्बन्धावच्छिन्नप्रतियोगिता-केतराभाववैशिष्ट्यस्यैव निविष्टत्वात् । न च तस्य व्यधिकरणसम्बन्धा-वच्छिन्नप्रतियोगिताक(काभाव)तया केवलान्वयितयाऽव्यावर्तकत्वमिति

---

[1] `देवदत्तपदेन हिरण्यगर्भशरीराभिमानी प्रकृतेऽपि विवक्षितः ।' ह्.

वाच्यम् । परेषां देवदत्तेतरकर्तृकभोगमङ्गीकुर्वतां तस्य व्यधिकरणसम्बन्धत्वाभावेन तन्मतप्रसक्तार्थान्तरनिरासकतया सार्थक्यादित्यनुपदमेव ग्रन्थकृता वक्ष्यमाणत्वात् । लोकायतमतरीत्यैकजीववाद्येकदेशिमते एकस्यैव शरीरस्य सजीवत्वमन्येषां स्वप्नदृष्टशरीरवन्न जीवत्वमित्यङ्गीकारात्तद्रीत्या वा निश्चेतनत्वेन पर्यवसानवारणाय विशेष्यभागः सार्थकः । नन्वेवमप्यर्थान्तरवारणमशक्यमेव । देवदत्तेतरभोगावच्छेदकेऽपि शरीरे समयविशेषे तदभावेन तद्घटितसम्बन्धावच्छिन्नतदभावोऽपि वर्तत एवेति तद्विशिष्टभोगायतनत्वरूपसाध्यस्य तत्राबाधात् । न च वाच्यमुक्तसम्बन्धावच्छिन्नप्रतियोगिताकाभावोऽत्यन्ताभाव एव प्रागभावादीनां प्रतियोगितायाः सम्बन्धानवच्छिन्नत्वात् । तस्य प्रतियोगिवत्तत्प्रागभावध्वंसाभ्यामपि विरुद्धत्वस्याग्रे ग्रन्थ एव स्फुटतया कदाचिदन्यभोगावच्छेदकत्वसत्त्वेन(सत्त्वे) तदत्यन्ताभावासत्त्वेन तद्घटितसम्बन्धावच्छिन्नेतरात्यन्ताभावः कथं तत्र वर्तेतेति भोगात्यन्ताभावस्य तत्रासम्भवेऽपि भोगस्यैव सम्बन्धघटकतया तत्प्रागभावध्वंसयोः सम्बन्धाघटकत्वेन तद्घटितसम्बन्धावच्छिन्नात्यान्ताभावस्यापि भोगानधिकरणकालदेशावच्छेदेन सत्त्वात् । घटसंयोगप्रागभावध्वंसादिमत्यपि भूतले संयोगशून्य(ता)दशायां संयोगेन घटो नास्तीति प्रतीत्यनुरोधेन घटात्यन्ताभाववत्संयोगसम्बन्धावच्छिन्नेन्धनत्वाद्यवच्छिन्नप्रागभावस्यापि पूर्वपक्षग्रन्थादौ गदाधरप्रभृतिभिरुपपादितत्वेन प्रागभावध्वंसयोरपि धर्मसम्बन्धावच्छिन्नत्वसत्त्वाच्च । तथाचार्थान्तरता दुर्वारे(रैवे)ति चेन्न । यावत्स्वाधिकरणकालावच्छिन्नत्वस्य साध्ये विशेषणत्वाङ्गीकारेण वा कालानवच्छिन्नस्वरूपसम्बन्धेन साध्यताङ्गीकारेण वोक्तविशिष्टसाध्यस्य

वोक्तसम्बन्धेन साध्यस्य वा यत्किञ्चित्काले विशेषणसत्त्वेऽसम्भवेनार्थान्तरप्रसक्तेरभावादित्याशयात् । तर्हि विशेष्यस्य सार्वकालिकत्वाभावाद्बाधो देवदत्तशरीरे व्यभिचारश्च । हिरण्यगर्भविवक्षायामपि तस्य प्रलये सुप्ततया भोगाभावाद्व्यभिचारश्चेत्यत आह — **भोगायतनत्वेति** ॥ भोगावच्छेदकत्वात्यन्ताभावस्य ध्वंसप्रागभावयोरत्यान्ताभावविरोधितामते कथमप्यसम्भवात्साध्यस्य तत्सम्बन्धस्य वा सार्वकालिकत्वेन न बाधव्यभिचारयोः प्रसक्तिः । उक्तविवक्षायामप्येवकारार्थरूपविशेषणं देयमेव । अन्यथाऽन्यकर्तृकभोगदशायामप्युक्तविशेष्यभागस्या(प्य)क्षततयाऽर्थान्तरानिस्तरात् ।

यद्वा देवदत्तस्यैव भोगायतनत्वमित्यत्रैवकारार्थाप्रसिद्धिपरिहाराय स्वावच्छिन्नभोगत्वव्यापकदेवदत्तवृत्तिकत्वं साध्यार्थः । स्वावच्छिन्नत्वस्वावच्छिन्नभोगवृत्तिभेदप्रतियोगितानिरूपिताधेयतासम्बन्धावच्छिन्नावच्छेदकतासम्बन्धावच्छिन्नस्ववृत्तिप्रतियोगिताकाभाववद्देवदत्तकत्वैतदुभयसम्बन्धेन शरीरविशिष्टभोगोऽवच्छेदकतासम्बन्धेन साध्यमिति पर्यवसितम् । कदाचिदन्यभोगावच्छेदकत्वे तदीयभोगे तत्र देवदत्तवृत्तित्वाभावेन व्यापकताभङ्गापत्त्याऽर्थान्तरतानिरासः । ननु देवदत्तादिसुप्त्यादिदशायां तादृशशरीरावच्छिन्नभोगाभावेन तद्घटितसाध्याभावेन बाधव्यभिचारौ स्यातामित्याशङ्कां परिहरति — **भोगायतनत्वेति** ॥ तादृशभोगायतनत्वात्यन्ताभावानधिकरण(त्व)मेव तदर्थः । तच्चोक्तरीत्या कालिक(का)व्याप्यवृत्तीति न बाधव्यभिचाराविति भावः । यद्यपि पक्षे हेत्वधिकरणे च यदा कदा वा साध्यसत्त्वमात्रेण न बाधव्यभिचारयोः प्रसक्तिर्बाधशरीरे व्यभिचारशरीरे वा साध्याभावे प्रतियोगिवैय्यधिकरण्यस्य निविष्टत्वात् । अन्यथा कपिसंयोग्येतद्वृक्षत्वादित्यस्यापि दुष्टत्वापत्तेः । तथाऽपि

प्रतियोगिवैय्यधिकरण्यादिप्रयोजनोक्तिपूर्वकं तच्छङ्कानिरासे गौरवं स्यादित्युक्तशङ्कामभ्युपेत्यैव व्याप्यवृत्तिसाध्ये पर्यवसानपूर्वकमुक्तशङ्का-निरासः कृत इत्यवधेयम् । अन्ये तु साध्यं साध्यतुल्यं साध्यसमनियतमित्यर्थः । तथा च गन्धवती पृथिवीत्वादित्यादे-र्बाधितत्ववारणाय बाधव्यभिचारयोरत्यन्ताभावस्यैव निविष्टतया कदाचिदु-क्तसाध्यरूपप्रतियोगिमति तदत्यन्ताभावसम्भवान्न बाधव्यभिचारौ । साध्यं तूक्तभोगायतनत्वरूपं यथाश्रुतमेवेति भाव इत्याहुः । केचिद् भोगायतनत्वात्यन्ताभावेति यद्यप्यत्र व्याप्तिर्दैशिकी । तथा च मूर्छितत्वादिदशायां भोगायतनत्वासत्त्वेऽपि कदाचित्पक्षसपक्षयोः सत्त्वादेव न बाधो न व्यभिचारश्च । न चावयवपरिमाणभेददर्शनादिना पूर्वापरशरीरभेदमङ्गीकृत्येदमिति वाच्यम् । तादृशेष्वेव कतिपयशरीरेषु भोगतत्प्रागभावतद्ध्वंसानां त्रयाणामप्यभावेनात्यन्ताभावस्यावश्यकतयोक्त-साध्यविवक्षायामप्येतद्दोषतादवस्थ्यात् । तथाऽपि व्याप्तिद्वयेन प्रवृत्तमिदमनुमानमित्याशयेनेदमित्याहुः । अत्रेदं विवेचनीयम् । द्वितीयव्याप्तिर्न कालिकी । अत्र शरीरत्वभोगायतनत्वयोः कालिकसम्बन्धेन हेतुसाध्यभावानापन्नतया तत्सम्बन्धेन व्याप्तेः प्रकृतानुपयोगात् । न च कालिकेन साध्यहेतुभावोऽप्यस्तीति वाच्यम् । शरीरे कालत्वाभावेन तत्र हेतुसाध्ययोः कालिकेनाभावात् । यथाकथञ्चित्तत्र कालोपाधित्वमङ्गीकृत्य तस्यापि कालिकसम्बन्धेन किञ्चिदधिकरणत्वमाश्रित्य तत्र कालिकसम्बन्धेन साध्यहेत्वङ्गीकारे घटादेरपि पक्षतासम्भवेन तत्परित्यागे बीजाभावः । कालिकसम्बन्धेन शरीरत्वस्य हेतुत्वे भोगतत्प्रागभावतद्ध्वंसानधिकरणत्वेन तदत्यन्ताभावाधिकरणे घटादिरूप(काले)निष्कृष्टसाध्यस्यापि व्यभिचारः । संसारस्यानादितयाऽनादिकालतः प्राप्तदेवदत्तभोगध्वंसादेः कालिक-

सम्बन्धेन सत्त्वेन न तदत्यन्ताभावस्तत्रेत्युच्यते तदा शरीररूपकाले देवदत्तेतरकर्तृकभोगसत्त्वेऽप्युक्तसाध्याबाधाच्चेतनैक्यासिद्ध्याऽर्थान्तरतैव । देवदत्तेतरभोगतद्ध्वंसादेः सत्त्वे तदत्यन्ताभावस्य कालेऽयोगेनैवकारार्थतया तदितरकर्तृकभोगात्यन्ताभावस्य साध्यकोटौ निवेशादेवार्थान्तरवारण-मित्यङ्गीकारेऽपि तावतैवेष्टसिद्धौ विशेष्यभागवैय्यर्थ्यं निश्चेतन-वादिनाऽप्यनुभवसिद्धभोगस्य कालेऽपलापस्य कर्तुमशक्यत्वेन भोग-सामान्याभावमादाय पर्यवसानायोगात् । किञ्च शरीरस्य कालत्वाङ्गी-कारेणानुमानप्रवृत्तौ कालरूपेषु सर्वशरीरेषु चेतनैक्यवादिनां यदा कदाचित्कालिकसम्बन्धेन देवदत्तभोगस्य सत्त्वात्कथं बाधप्रसक्तिः ।

ननु भोगसामान्यानधिकरणकालमात्रवृत्ति शरीरं प्रसिद्धं येन तत्र बाधप्रसक्तिः । सुप्तमूर्च्छादिदशापन्नतच्छशरीरेषु बाधोद्भावनं ग्रन्थकृता-मत्यन्तासमञ्जसं च स्यात् । अपि च काले ध्वंसप्रागभावाभ्यां सहात्यन्ताभावस्य विरोधेन सत्त्वेऽनित्यवस्तुप्रतियोगिताकात्यन्ता-भावसामान्यस्य कालासंस्पर्शप्राप्त्या तेषामलीकत्वप्राप्त्या तादृशमतस्य विचारासहत्वेन साध्यपरिष्कारायोगः । न हि 'विमतानि शरीराणी'ति न्यायवाक्ये कालिकसम्बन्धेन हेतुसाध्यभावज्ञापकं किमप्यस्ति । नापि परकीयैः स्वग्रन्थेषु तथोक्तमपि (।) येन ग्रन्थकृतां तदनुसारेण शङ्कासमाधानयोः प्रसक्तिरित्यपि वक्तुं शक्येत । अत एव यद्यत्कालावच्छेदेन शरीरत्वाधिकरणत्वं यत्र तत्कालावच्छेदेन देवदत्तस्यैव भोगायतनत्वं तत्रेति बलात्सेत्स्यमाने सर्वकालावच्छेदेनोक्तभोगायतनत्व-रूपसाध्ये बाधोद्भावनं व्याप्तौ व्यभिचारोद्भावनं (च) युक्तमिति परास्तम् । हेतुसाध्यशरीरे कालाप्रवेशेन तद्घटितसामान्यव्याप्तेर्वक्तुमशक्यत्वात् । अस्मदुक्तरीत्याऽर्थान्तरवारणाय साध्यस्य कालघटितत्वेऽपि हेतौ तन्निवेशे

प्रयोजनाभाव एव । हेतौ तन्निवेशे वैकस्या एव दैशिकव्याप्तेरनुमानाङ्गत्वप्राप्त्या व्याप्तिद्वयेन प्रवृत्तमिदमनुमानमित्यादेरसङ्गतिरेव । तस्मादेतदाशयं वयं न विजानीमः किन्तु महान्तः प्रष्टव्या इति । अत्रेदं प्रतिभाति । प्रतियोगिवैय्यधिकरण्यघटिताघटितव्याप्तिद्वयेनेत्यर्थः । साध्यस्य व्याप्यवृत्तित्वे व्याप्तिद्वयमपि घटत इति प्रतियोगिवैय्यधिकरण्याघटितव्याप्तौ व्यभिचारशङ्काबाधोक्तिरपि साध्याभावमात्रं पक्षे बाधो न तु तल्लक्षणे प्रतियोगिवैयधिकरण्यं निवेशनीयमित्याशयेनेति स्वरीत्यैवकारवैय्यर्थ्यमाशङ्क्य वादिप्रतिवादिनोरन्यतरमते प्रयोजनसद्भावमात्रेण तस्य प्रयोजनत्वमित्याशयेन प्रतिवादिमतरीत्याऽर्थान्तरवारणरूपं प्रयोजनं दर्शयति — **नन्वित्यादिना** ॥ चेतनैक्यसाधना(का)नुमानेन चेतनभेदस्यैव सिद्धावत्यन्तानभिमतपदार्थस्यैव सिद्ध्याऽभिमतासिद्ध्याऽर्थान्तरतैवेति भावः । यद्यप्येतदनुमानं जीवैक्यसाधकत्वाज्जीवेश्वरयोरैक्यासाधकत्वात्प्रकृताननुगुणमिव प्रतिभाति । तथाऽपि रामकृष्णादिशरीराणां लीलागृहीतेश्वरशरीराणामपि पक्षकोटिप्रविष्टत्वादभिमतार्थसिद्ध्या प्रकृतोपयोग इति हृदयम् ।

(६) (का.) अत्रैवानुमानान्तरमाह — **किं चेति** ॥ भोगोऽनुभवः । आयतनमवच्छेदकम् । तथाच देवदत्तभिन्नभोगानवच्छेदकत्वे सति देवदत्तभोगावच्छेदकानीत्यर्थः । सत्यन्तव्यावृत्तिः स्वयमेव वक्ष्यते । भोक्तुर्देवदत्तत्वसिद्धये विशेष्यभागः । अथैवं भोक्त्रैक्यसिद्धावपि कथमभोक्तुरीश्वरस्य जीवाभेदसिद्धिरिति चेदत्राह । [1]ईश्वरस्यापि तत्तच्छरीरा-

---

[1] ॥ **ईश्वरस्यापि तत्तच्छरीरावच्छिन्नरसभोक्तृत्वादिति** ॥ `तस्येदाहुः पिप्पलं स्वाद्वग्रे' इति (आथर्वणमाध्वभाष्योदाहृत)श्रुतेरिति भावः ।

वच्छिन्नरसभोक्तृत्वात्तदैक्यसिद्धिरिति । तच्चिन्त्यम् । अस्मदादिशरीरस्येश्वरभोगं प्रति साधनविशेषत्वरूपोवच्छेदकत्वासम्भवात् । अन्यथा देवदत्तशरीरस्याप्युभयभोक्तृकत्वेन दृष्टान्तत्वानुपपत्तेः । वस्तुतः [1]चैतनैक्ये लाघवरूपानुकूलतर्कबलात् सकलचेतनैक्यसिद्धावुद्धेश्यसिद्धिर्बोध्या । जीवैक्यसिद्धिमात्रमत्रोद्देश्यमित्यप्याहुः ।

नन्वत्र [2]विमतत्वावच्छेदकचैत्रादिशरीरत्वं विमतत्वमात्रं वा पक्षतावच्छेदकम् । आद्ये सुप्तिमूर्च्छावस्थाविशिष्टशरीरे बाधः । तत्काले साक्ष्यधीनसुखदुःखानुभवाङ्गीकारेऽपि शरीरस्य तदवच्छेदकत्वे प्रमाणाभावात् । मृतशरीरे बाधतादवस्थ्याच्च । एवं देवदत्तीयमृतशरीरे व्यभिचारः । न च विशिष्टस्य विशेष्यानतिरिक्ततया विशेष्यीभूतशरीरे च कदाचित् साध्यसत्त्वान्नोक्तदोष इति वाच्यम् । [3]विशिष्टस्यौपाधिकत्वेन

---

[1] ॥ **चेतनैक्ये लाघवरूपेति** ॥ यथा ईश्वरसाधकानुमाने `क्षित्यादिकर्तुरेकत्वे लाघवमि'ति लाघवतर्कसहकृतेनानुमानेन एकेश्वरसिद्धिः तथा प्रकृतेऽपि `चेतनैक्ये लाघवमि'ति तर्कसहकारेण चेतनैक्यमेव सिध्यतीत्याशयः ।

[2] ॥ **विमतत्वावच्छेदकचैत्रादिशरीरत्वमिति** ॥ विमतिविषयतावच्छेदकचैत्रादिशरीरत्वमित्यर्थः । अयं भावः - विमतानि शरीराणि इति पक्षनिर्देशः कृतः । तत्र विमतिः किंरूपा इति जिज्ञासायां `चैत्रमैत्रादिशरीराणि देवदत्तस्यैव भोगायतनानि न वा' इति वक्तव्यम् । तत्र विमतौ चैत्रादिशरीराणां विषयत्वात् विमतिविषयतावच्छेदकं चैत्रादिशरीरत्वम् । तादृशं चैत्रादिशरीरत्वं प्रकृते पक्षतावच्छेदकमुत उक्तरूपविमतिविषयत्वं पक्षतावच्छेदकमिति विकल्पस्याशयः ।

[3] ॥ **विशिष्टस्यौपाधिकत्वेनेति** ॥ शुद्धात् हि विशेषणसम्बन्धरूपोपाधिना विशिष्टमुत्पद्यते । अतः निरुपाधिकौपाधिकयोः भेदावश्यंभावात् `विशिष्टं शुद्धान्नातिरिच्यते' इति नियमः असाधुरिति भावः ।

केवलविशेष्यानतिरिक्तत्वायोगात् । न चैवं वृक्षः कपिसंयोगी एतत्वादित्यादावपि मूलावच्छिन्नवृक्षादौ साध्याभावसत्त्वाद्बाधादिप्रसङ्ग इति वाच्यम् । वृक्षत्वावच्छेदेन साध्यतायामिष्टापत्तेः । सामानाधिकरण्येन साधने तस्यादोषत्वात् । द्वितीये तु विशिष्टस्य विमत्यविषयत्वेन पक्षबहिर्भूततया बाधानवकाशेऽपि तत्रैव व्यभिचारः । न च मृतशरीरादौ चेष्टावत्त्वरूपशरीरत्वाभावादेव न व्यभिचार इति वाच्यम् । चेष्टाशून्यसुप्तादिशरीरेऽसिद्धिवारणाय पूर्ववज्जातिरूपस्य चेष्टात्यन्ताभावानधिकरणत्वरूपस्य वा शरीरत्वस्य हेतुत्वावश्यकत्वादित्यत आह — भोगायतनत्वेति ॥ न बाध इति ॥ सुप्तादिशरीराणां भोगायतनत्वध्वंसाधिकरणत्वेन तदत्यन्ताभावानधिकरणत्वादिति भावः ।

स्यादेतत् । देवदत्तयज्ञदत्तादीनां मिथो व्यावहारिकभेदाभ्युपगमेन यज्ञदत्तादिशरीराणां देवदत्तादिभिन्नभोगानवच्छेदकत्वाभावाद्बाधः । न च पारमार्थिकत्वेन भेदो विशेषणीयः । तथासति परमार्थतो देवदत्तभिन्नयज्ञदत्तादिसिद्धिप्रसङ्गेनापसिद्धान्तात् । न च वस्तुतो देवदत्तभिन्नघटादिभोगानवच्छेदकत्वेनापि साध्यपर्यवसानान्न जीवभेदसिद्धिप्रसङ्ग इति वाच्यम् । घटादिभोगस्य केनाप्यनभ्युपगतत्वेन तदवच्छेदकत्वस्याप्रसक्ततया तत्प्रतिषेधपर्यवसानानुपपत्तेरित्याशङ्कते — नन्विति ॥ ननूक्तसाध्ये सत्यन्तानुपादानान्नैतद्दोषावकाश इत्यत आह — एवकारेति ॥ प्रतिनियतभोक्तृकाणां मिथो विभिन्नभोक्तृकाणाम् । तथाचैकैकशरीरे भोक्तृद्वयसिद्ध्याऽप्यनुमानपर्यवसानान्न तदैक्यसिद्धिरित्यर्थः । न च सत्यन्तोपादानेऽपि शरीरानवच्छिन्नसौषुप्तिकभोगभोक्तुर्देवदत्ताभिन्नत्वासिद्ध्याऽर्थान्तरतादवस्थ्यमिति वाच्यम् । सुप्तोत्थितस्य सुखमह-

मस्वाप्समित्यैक्यानुसन्धानविरोधेन[1] तद्भेदासिद्धेरिति भावः ॥ **परमतप्राप्तस्येति** ॥ अयमाशयः । सत्यन्तघटकभेदस्य पारमार्थिकत्वेन विशेषणेऽपि न जीवान्तरसिद्धिप्रसङ्गः । निषेध्यत्वात् । पारमार्थिक-शुक्तिरजतं नास्तीतिवत् । न च भोगावच्छेदकत्वमात्रमत्र निषिध्यते, न तु भोक्रन्तरमिति वाच्यम् । भोगावच्छेदकत्ववति विशिष्टनिषेधस्य भोक्रन्तरनिषेध एव पर्यवसानात् । निषेधश्च परमतप्राप्तभोक्रन्तर-प्रतीतिनिरासार्थमिति ॥ यत्तु देवदत्तातिरिक्तत्वेन पराभिमतचेतन-भोगानायतनत्वे सति देवदत्तभोगायतनत्वमिह साध्यार्थ इति । तन्न । देवदत्तचेतनस्यैव तदतिरिक्तत्वेन [2]पराभिमतत्वमङ्गीकर्तुर्मायावादिनो बाधप्रसङ्गात् । उक्तरीत्यैवोपपत्तौ पराभिमतत्वपर्यन्तनिवेशवैयर्थ्याच्च ॥

(६) (श.) - अभेदसाधकानुमानान्तरं प्रतिजानीते — **किञ्चेति** ॥ अन्यच्चाभेदसाधकानुमानमुच्यत इत्यर्थः । किं तदनुमानमित्यत आह — **विमतानीति** ॥ अत्र शरीरमात्रस्य पक्षत्वेदेवदत्तशरीरस्यापि पक्षत्वा-पत्त्यांऽशे सिद्धसाधनम् । अतो विमतानीति । अत्र विमतानां शरीराणां

---

[1] ॥ **सुप्तोत्थितस्येति** ॥ अनुमानेन यद्यपि जाग्रत्कालीनानां भोक्तृचेतनानामेव अभेदः सिद्ध्यति । तथापि सुप्तोत्थितस्य यः `सुखमहमस्वाप्समि'त्यनुभवः तद्बलात् सुप्तजाग्रतोः चेतनयोरैक्यसिद्धिरिति आहत्य प्रत्यक्षसहकृतानुमानेन शरीरानवच्छिन्नभोक्तु-रप्यैक्यसिद्धिरिति भावः ।

[2] ॥ **पराभिमतत्वमङ्गीकर्तुर्मायावादिन इति** ॥ अयमाशयः - यज्ञदत्तः देवदत्तभिन्नः इति द्वैती वदति । सः यज्ञदत्तः वस्तुतः देवदत्त एवेति अद्वैती मनुते । तदाधारेण च `द्वैती देवदत्तमेव देवदत्तभिन्नत्वेन मन्यते' इति अद्वैती अङ्गीकरोति । एवं च मायावद्यङ्गीकाररीत्या देवदत्त एव देवदत्तभिन्नत्वेन पर=द्वैत्यभिमतो जात इति तस्यैव पक्षत्वप्राप्त्या बाधप्रसङ्ग इति भावः ।

देवदत्तभोगसाधनत्वं देवदत्तस्य विमतशरीरगतत्वं विनानोपपन्नम् । तच्चैकस्मिन् शरीरे भोक्तृजीवद्वयायोगेन तच्छरीरगतात्मैक्यं विना नोपपद्यत इति तत्सिद्धिः । ननु सुप्तमूर्छितमृतशरीराणां पक्षत्वं वा न वा । आद्ये तेषां भोगायतनत्वाभावेनांशे बाधः । द्वितीये साध्याभाववत्सुतेषु हेतुवृत्त्या व्यभिचार इत्याशङ्कां परिहर्तुमाह — **अत्रेति ॥ न बाधो न व्यभिचार इति ॥** पक्षत्वे बाधोऽपक्षत्वे व्यभिचार इति विवेकः । तेषां तदानीं भोगायतनत्वाभावेऽपि कालान्तरे तत्सत्त्वेन तेषु भोगायतनत्वा भावाभावेन तदनधिकरणत्वरूपसाध्यस्य सत्त्वादिति भावः ।

ननु सुखदुःखान्यतरसाक्षात्कारो भोगः । स च मृतशरीरेऽनुपपन्नोऽपि सुप्तमूर्छितयोरुपपन्न एव । एतावन्तं कालं सुखमहमस्वाप्समिति परामर्शेन सुप्तौ सुखसाक्षात्कारावगमात् । `मोहस्तु परिशेषतः । अर्धप्राप्तिरिति ज्ञेयो दुःखमात्रप्रतिस्मृते'रिति मोहे दुःखसाक्षात्कारावगमादिति चेन्न । मुक्तियोग्यसौषुप्तिकसुखस्यात्मस्वरूपतया अन्यस्य प्राज्ञालिङ्गनमात्र-जन्यत्वेन शरीरस्य तत्र हेतुत्वाभावात् । एवं मौर्छिकदुःखस्य प्राक्तनताडनादिजन्यत्वेन मूर्छावस्थापन्नशरीरस्य तत्राहेतुत्वात् । नन्वथा-प्यंशे बाधस्य कथं दोषत्वम् । वृक्षः कपिसंयोगीद्रव्यत्वादित्यत्र बाधितांश-मूलभागमविहायाबाधितांशेऽग्रभागेऽनुमित्युत्पत्तिदर्शनादिति चेन्न । तत्र वृक्षत्वसामानाधिकरण्येन क्वचिद्वृक्षांशे संयोगबुद्धेरुद्देश्यतया तदविघटकत्वेनांशे बाधस्यादोषत्वेऽपि प्रकृते विमतशरीरत्वसामानाधि-करण्येन सर्वशरीरेषु देवदत्तभोगसाधनत्वबुद्धेरुद्देश्यतया मृतादौ बाधस्य तदंशेऽनुमितिप्रतिबन्धकत्वेनोद्देश्यविघटकतया दोषत्वादिति ध्येयम् । देवदत्तस्यैवेत्यत्रैवकारस्यावश्यकत्वमुतानावश्यकत्वम् । आद्ये आह —

**नन्विति** ॥ एवकारोहिदेवदत्तान्यस्य भोक्तृत्वं व्यावर्तयति । तत्रान्यो नाचेतनः । तस्य सर्वथाऽभोक्तृत्वेनाप्रसक्तत्वात् । अप्रसक्तस्य प्रतिषेधायोगात् । अतश्चेतन एवदेवदत्तान्य एवकारेण व्यावर्त्यो वाच्यः । नच तद्युक्तम् । अपसिद्धान्तादित्यर्थः । इत्यत्र विद्यमानैवकारेण । तद्व्यावर्त्यम् एवकारव्यावर्त्यम् । तेन एवकारव्यावर्त्यचेतनान्तरकथनेन । द्वितीये त्वाह — **एवकारेति** ॥ एवकारपरित्यागे चार्थान्तरादित्यन्वयः । तदुपपादनाय सर्वेषामित्यादि । तत्तच्छरीराणां तत्तदात्मभोगसाधनत्वेऽपि देवदत्तभोगसाधनत्वमप्युपपद्यते । स्त्रीशरीराणां पुरुषभोगसाधनत्वस्य अश्वादिशरीणाणां साद्यादिभोगसाधनत्वस्य[1] च दर्शनादिति भावः ॥ **प्रतिनियतभोक्तृकाणामिति** ॥ प्रतिशरीरं भोक्तृत्वेन नियता य आत्मानस्तद्वतामपीत्यर्थः ॥ **परमतप्राप्तस्यैवेति** ॥ तत्ववादिमतेप्राप्तं यद्विमतभोक्तृशरीराणां भोक्रन्तरं देवदत्तान्योभोक्ताचेतनस्तद्व्यावर्तनादित्यर्थः । चेतनान्तरस्य मयाऽनङ्गीकारान्नापसिद्धान्त इति भावः ।

**(७) अपि च भेदो मिथ्या भेदत्वाच्चन्द्रभेदवत् । मिथ्यात्वं चाधिष्ठानयाथात्म्यज्ञाननिवर्त्यत्वम् । ननु प्रामाणिकाप्रामाणिकयोरनुगतसामान्याभावादसिद्धो हेतुरिति चेन्न । भेदत्वेन प्रतीयमानत्वस्यैव हेतुत्वात् । एवञ्च नोक्तदोषावकाशः । प्रतीयमानत्वं हि प्रतीतिविषयत्वम् । तच्च प्रतीतिसम्बन्धित्वम् । प्रतीतिसम्बन्धश्च स्वरूपमेवेत्यत्र प्रामाणिकत्वानपेक्षणात् । ननु प्रतीयमाने चन्द्रे चन्द्रान्तरस्यारोपितत्वेनारोपितानारोपितचन्द्रयोर्भेदस्य सत्यत्वेन (सत्त्वेन) साध्यविकलो दृष्टान्त इति चेन्न । चन्द्रे भेदारोपमात्रेण**

---

[1] सादी = अश्ववाहः

**(चन्द्रारोपमात्रेण) द्वित्वप्रतीत्युपपत्तौ चन्द्रान्तरस्यारोपाङ्गीकारे गौरवात् । तर्हि शुक्तिकायां रजताभेदारोपमात्रेणेदं रजतमिति प्रतीत्युपपत्तौ रजतारोपाङ्गीकारो व्यर्थ इति चेन्न । तत्राधिष्ठानस्यारजतत्वेन रजतोपस्थित्यर्थं रजतारोपाङ्गीकारात् । रजतानुपस्थितौ रजताभेदारोपासम्भवात् । नैवं प्रकृते । अधिष्ठानस्य चन्द्रत्वात् ।**

(७) (भ.) अनुमानान्तरं चाह — **अपि चेति** ॥ विमतः सर्वोऽपि भेद इत्यर्थः । तथा च भेदाभेदयोर्विरुद्धत्वाभेदमात्रस्य मिथ्यात्वे सिद्धे जीवेश्वरादीनामभेद एव सिध्यति । ततश्चाभेदे प्रमाणोपन्यासं प्रतिज्ञाय भेदमिथ्यात्वे प्रमाणोपन्यासोऽसङ्गत इति शङ्कानवकाश इति ध्येयम् । नन्वत्र किन्नाम मिथ्यात्वम् । असत्त्वं चेदपसिद्धान्तः । अनिर्वाच्यत्वं चेदप्रसिद्धविशेषणता । दृष्टान्ते साध्यवैकल्यं चेत्यत आह — **मिथ्यात्वं चेति** ॥ इदं चन्द्रभेदे सम्प्रतिपन्नमेवेति नोक्तदोषावकाश इति भावः । नन्वात्मत्वशरीरत्वादिवन्नेदं भेदत्वं हेतूकर्तुं शक्यते । तत्र पक्षदृष्टान्तयोरुभयोरपि प्रामाणिकत्वेनानुगतसामान्यसम्भवात् । अत्र विमतभेदस्य व्यावहारिकत्वेन प्रामाणिकत्वेऽपि दृष्टान्तभूचन्द्रभेदस्य प्रातिभासिकतयाऽप्रामाणिकत्वेनोभयानुगत भेदत्वरूपसामान्यासम्भवा-दित्याशङ्क्य निषेधति — **प्रामाणिकाप्रामाणिकयोरिति** ॥ **भेदत्वेन प्रतीयमानत्वस्येति** ॥ भेदत्वादित्यस्य भेदत्वेन प्रतीयमानत्वादित्यर्थस्य लक्षणया विवक्षितत्वादित्यर्थः । कथमनेनापि कथितदोषनिरास इत्यत आह — **प्रतीयमानत्वं हीति** । नन्वेवमप्युक्तदोषतादवस्थ्यमेव । प्रतीति-विषयतायाः प्रतीतिजनककरणसन्निकर्षाश्रयताऽसम्भवादित्यत आह —

**तच्चेति** ॥ **सम्बन्धश्च स्वरूपमेवेति** ॥ नातिरिक्तः संयोगरूपः किन्तु प्रतीतिव्यावर्तकतामात्ररूपः प्रतीत्युल्लेख्यत्वलक्षण एव विवक्षित इत्यर्थः । एतच्च प्रामाणिकाप्रामाणिकयोः साधारण एवेति भावः । शङ्कते — **प्रतीयमानस्येति** ॥ आरोपितानारोपितचन्द्रयोः प्रातिभासिकव्यावहारिक-चन्द्रयोः ॥ **भेदस्य सत्त्वेनेति** ॥ मिथ्यात्वे तयोरन्योन्यतादात्म्यापातादिति भावः । स्यादिदं साध्यवैकल्यं यदि चन्द्रान्तरमारोपितं पृथक् स्यात् । न चैवम् । चन्द्रान्तरारोपस्यैवाभावात् । इमौ चन्द्रावित्यादिद्वित्वप्रतीतिस्त्वेक-स्मिन्नेव चन्द्रे भेदारोपमात्रेणोपपद्यते । चन्द्रान्तरारोपमङ्गीकुर्वताऽपि तयोर्भेदप्रतीतिरवश्यमङ्गीकरणीया । इमौ भिन्नाविति प्रतीतेरप्यनुभव-सिद्धत्वात् । ततो वरमेकस्यैव भेदारोपस्य कल्पनम् । अन्यथा गौरवप्रसङ्गात् । तस्य च भेदस्य मिथ्यात्वात्क्वास्ति साध्यवैकल्यमिति परिहरति — **चन्द्रे भेदारोपमात्रेणेति** ॥ प्रतिबन्द्या शङ्कते — **तर्हीति** ॥ तथा च तत्र यथा रजताभेदवद्रजतस्याप्यारोपमङ्गीकृत्य प्रामाणिकत्वाद्गौरवं न दोषायेत्युच्यते । तद्वदत्राप्युभयारोपाङ्गीकार एवोचितः । तथा चारोपितानारोपितयोर्भेदस्य सत्यत्वात्साध्यवैकल्यं दुष्परिहरमिति भावः । न चैवं भेदाङ्गीकारे आरोपितस्य मिथ्यात्वनियमात्क्वास्ति साध्यवैकल्यमिति वाच्यम् । एकस्मिंश्चन्द्रे आरोपितभेदस्य मिथ्यात्वेऽप्यारोपितचन्द्रान्तर-प्रतियोगिकानारोपितचन्द्रधर्मिकभेदस्य सत्यत्वात्तद्विवक्षयैवात्र साध्य-वैकल्यकथनात् । चन्द्रे आरोपितभेदस्यैवात्र दृष्टान्तत्वेन विवक्षितत्वान्न तत्र साध्यवैकल्यशङ्कावकाश इति चेत् तर्हि माऽस्त्वारोपितभेदे साध्यवैकल्यम् । आरोपितानारोपितचन्द्रभेदे त्वनैकान्त्यं ब्रूम इत्याशयात् । नन्वेवं चन्द्रान्तरारोपाङ्गीकारे तस्याधिष्ठानादिकं वाच्यम् ।

` अधिष्ठानं च सदृशतथ्यवस्तुद्वयं विना ।
न भ्रान्तिर्भवति क्वापि स्वप्नमायादिकेष्वपि'

इति वचनात् । न चात्राधिष्ठानं तावदस्ति । चन्द्रस्यारोप्याद्भिन्नतया दृश्यमानत्वात् । न ह्यारोप्याद्भिन्नतया दृश्यमानस्याधिष्ठानत्वं सम्भवति । न हि शुक्तिभ्रान्तौ रजताद्भिन्नतया दृश्यते । न च चन्द्रातिरिक्तमधिष्ठानं सम्भवति । नाप्यत्र प्रधानमस्ति । सत्यस्य चन्द्रान्तरस्याभावात् । परिदृश्यमानचन्द्रस्य च प्रधानत्वेऽधिष्ठानस्य पृथगवाच्यत्वात् । तस्य चाभावात् । अतः कथं चन्द्रान्तरारोपाङ्गीकार इति । मैवम् । तादात्म्यभ्रमस्यैवाधिष्ठानादिनियमेन भ्रमे तदभावात् । अनवष्टब्धनयनरश्मिभिर्गृहीत एव चन्द्रोऽवष्टब्धनयनरश्मिभिर्व्यत्यस्तैः स्थानव्यत्यासेन पुनर्गृहीतो भवति । एवं नयनद्वयेनैकचन्द्रविषय एव ज्ञानद्वये जाते प्रत्येतुः पुरुषस्येमौ चन्द्रावित्यादिभ्रान्तिर्जायते । तत्र का नामाधिष्ठानाद्यपेक्षा । न च ज्ञानद्वये विवदितव्यम् । अनवष्टब्धनयननिमीलने चन्द्रद्वयप्रतीत्यभावात् । तदनिमीलन एव तद्भावात् । न चैवं प्रतीतिद्वयस्यापि सत्यचन्द्रविषयत्वेन प्रमात्वात्कथं भ्रान्त्यवकाश इति वाच्यम् । उभयप्रतीतिप्रतिसन्धातुरविवेकेन जायमानाया अस्याः प्रतीतेस्ताभ्यां भिन्नत्वेन भ्रान्तित्वोपपत्तेः । अत एव तृतीयप्रतीतौ भिन्नतया भासमानस्यारोपितत्वं तत्प्रतियोगिकसत्यचन्द्रानुयोगिकभेदस्य सत्यत्वेन साध्यवैकल्याद्युक्तिरपि युज्यत इत्यलम् । प्रतिबन्दीं मोचयति — **नेति** ॥ तत्र इदं रजतमिति भ्रान्तिस्थले रजतारोपस्थितिरेव कुतोऽभ्युपेयेति चेत् । तदभावे इदं रजतमिति सामानाधिकरण्यप्रतीतिरेव न स्यादिति ब्रूमः । रजताभेदारोपेणैव तदुपपत्तिरित्युक्तमेवेति चेत्तत्राह — **रजतानुपास्थिता-**

विति ॥ अधिष्ठानस्य चन्द्रत्वादिति ॥ तथा चाधिष्ठानदर्शनेनैव चन्द्रोपस्थितिसम्भवेन तदर्थं चन्द्रान्तरारोपो नाङ्गीकार्यः । भेदमात्रारोपस्तु चन्द्रान्तरारोपं विनाऽप्यधिष्ठानत्वेनोपस्थिते चन्द्रे युज्यत एवेति कथं साध्यवैकल्यचोद्यावकाश इति भावः ।

(७) (मु.) ॥ **भेद इति** ॥ किमत्र मिथ्यात्वम् । व्यावहारिकत्वं चेत्साध्यवैकल्यं दृष्टान्तस्याप्रातिभासिकत्वं चेद्बाध इत्यतोऽनुगतसाध्यं निर्वक्ति — **मिथ्यात्वमिति** ॥ हेतुश्च मिथ्याभेदत्वं चेदसिद्धिः सत्यभेदत्वं चेत्साधनवैकल्यम् । न च सामान्यं हेतुः । मिथ्यासत्ययोरनुगतसामान्याभावादित्याशङ्क्य समाधत्ते — **प्रामाणिकेति** ॥ ननु प्रतीयमानत्वं प्रतीतिकर्मकारकत्वम् । तदसतो न युक्तमित्यत आह — **प्रतीयमानत्वं हीति** । तदपि करणसन्निकर्षगोचरत्वं नासतो युक्तमित्यत आह — **विषयत्वं चेति** ॥ सम्बन्धित्वं सम्बन्धाश्रयत्वम् । तदप्ययुक्तमित्यत आह — **सम्बन्धश्चेति** ॥ असतः सकलशक्तिवैधुर्येऽपि ज्ञानं स्वसामग्रीमहिमायत्तस्वरूपसम्बन्धेन तद्विषयतयोच्यते । तदेवासतः प्रतीयमानत्वमिति भावः ॥ **आरोपितानारोपितचन्द्रयोरिति** ॥ प्रातिभासिकव्यावहारिकयोरित्यर्थः ॥ **सत्त्वेनेति** ॥ अप्रातिभासिकत्वेनेत्यर्थः ॥ **साध्यविकल इति** ॥ व्यावहारिकभेदस्य सर्वस्य पक्षतावच्छेदकावच्छिन्नतया सन्दिग्धसाध्यक इत्यर्थः ॥ **द्वित्वप्रतीत्युपपत्ताविति** ॥ प्रतीतेर्द्वावित्याकारकत्वोपपत्तावित्यर्थः । एवञ्च भेदस्यैवारोप्यत्वात्तस्यैव प्रातिभासिकत्वान्नोक्तदोष इति भावः ॥ **गौरवादिति** ॥ धर्मधर्मिणोर्धर्मिकल्पनस्य गुरुत्वादिति भावः । यद्वा द्वित्वप्रतीत्युपपत्तौ द्वित्वमात्रस्य तन्त्रत्वोपपत्तौ द्वित्वविशिष्टधर्मिद्वयस्य तन्त्रत्वे गौरवादित्यर्थः ॥ **इदं रजतमिति प्रतीत्युपपत्ताविति** ॥ प्रतीतेरिदं

रजतमित्याकारकत्वोपपत्ताविति व्याख्येयम् । तेनाभेदारोपस्यैवेदं रजतमिति प्रतीतित्वेन तदुपपत्तावित्युक्तिः कथमिति शङ्कानवकाशः ॥ **उपस्थित्यर्थमिति** ॥ आरोपोपस्थित्योरेकत्वेऽपि तदर्थाङ्गीकारादित्युक्तिः सामान्यविशेषाभिप्रायेणेति ध्येयम् । ननु स्मृत्युपस्थापितरजतस्य तादात्म्यारोपः किन्न स्यादिति चेन्न । तादात्म्यापरोक्षे प्रतियोग्यपरोक्षस्यैव तन्त्रत्वात् ।

(७) (कु.) ॥ **अपि चेति** ॥ भेदमात्रस्य मिथ्यात्वे विश्वविष्णुभेदस्यापि मिथ्यात्वसिद्ध्या प्रकृतोपयोगः । ननु मिथ्यात्वमसत्त्वं प्रातिभासिकत्वं वा यदि तदा बाधः । विमतभेदस्य व्यावहारिकत्वाङ्गीकारात् । आद्ये दृष्टान्ते साध्यवैकल्यं चेत्यत आह — **मिथ्यात्वं चेति** ॥ इदं च प्रातिभासिकव्यावहारिकसाधारणमिति नोक्तदोषावकाश इति भावः । प्रामाणिकाप्रामाणिकयोर्व्यावहारिकप्रातिभासिकयोर्भेदत्वेन प्रतीयमानत्वमपि कथमुभयानुगतमित्यत आह — **प्रतीयमानत्वं हीति** । भेदत्वेन प्रतीतिस्तत्सम्बन्धित्वं वा व्यावहारिक इव प्रातिभासिके सम्भवतीति भावः ॥ **प्रतीयमान इति** ॥ इमौ चन्द्रावित्यादौ प्रतीयमानस्य व्यावहारिकचन्द्रान्यचन्द्रस्य प्रातिभासिकत्वेन प्रातिभासिकव्यावहारिकयोः प्रतिवादिमते भेदस्य सत्त्वाद्दृष्टान्तः साध्यविकल इत्यर्थः ॥ **चन्द्राभेदारोपमात्रेणेति** ॥ इमौ चन्द्रावित्यत्र चन्द्रान्तरारोपं विनैव परिदृश्यमानचन्द्रे भेदारोपमात्रेण द्वित्वप्रतीत्युपपत्तौ न तत्कल्पना । तथा प्रतिवादिमतेऽपि तत्र भेदो मिथ्येति न तद्दृष्टान्तः साध्यविकलः । इदमत्र बोध्यम् । अङ्गुल्यवष्टम्भादिनेमौ चन्द्रावयं चन्द्रो नेति स्थले चन्द्रत्वावच्छिन्नप्रतियोगिताको भेदस्तु नारोप्यते । चन्द्रो नेत्यप्रतीतेः । तादृशभेदारोपेणेमौ चन्द्राविति

द्वित्वारोपोपपादानायोगाच्च । किन्तु तत्तच्चन्द्रत्वावच्छिन्नप्रतियोगिताकस्तत्र तत्र प्रदेशविशेषवृत्तिचन्द्रवृत्तिव्यावहारिकचन्द्रांशे चन्द्रोपस्थितिसद्भावेऽपि प्रदेशान्तरवृत्तिचन्द्रांशे चन्द्रोपस्थित्यर्थं चन्द्रान्तरारोपोऽङ्गीकर्तव्य एव । व्यर्थश्चायं चन्द्रान्तरारोपनिरासप्रयासः । विरुद्धोत्पादे चन्द्रभेदारोपादेः[1] प्रसिद्धत्वेन चन्द्रभेदे मिथ्यात्वस्य प्रतिवादिनः सम्प्रतिपत्तेः । न हि प्रतिवादी कस्मिन्नपि भेदे मिथ्यात्वं नाङ्गीकरोतीति युज्यते ॥ **तर्हीति** । इदमापाततः । यतो द्वैतवादिनस्तत्त्ववादिनश्च रजताभेदस्य रजतात्मकत्वेन तदारोपाङ्गीकारे रजतारोपो दुर्वारः । नैय्यायिकस्य तु रजताभेदो रजतभेदाभावो वा रजतत्वं तदारोपेण रजतारोपस्य नान्यथासिद्धिः । रजतत्वप्रकारकरजतोपस्थिति-समवहितभ्रमसामग्र्या रजतत्वारोपः । रजतत्ववृत्तिधर्मप्रकारकरजतो-पस्थितिसमवहिततत्तत्सामग्र्या रजतत्वारोपः । उभयसत्त्वे उभयारोप इत्यङ्गीकारात् । तेनारोपितानारोपितयोर्भेदस्य सत्यत्वानङ्गीकारेण तस्यैतद् ग्रन्थप्रवेशायोगाच्च ॥ **तत्राधिष्ठानस्येति** ॥ इदमपि पूर्वन्यायेनापाततः ॥ **रजतानुपस्थिताविति** ॥ इदमपि स्थवीयः । व्यावहारिकरजतोपस्थित्यैव रजताभेदारोपसम्भवेन तदर्थं प्रातिभासिकरजतारोपानपेक्षणात् ।

(७) (हु.) भेदसामान्यमिथ्यात्वसाधकैकानुमानेनैव सर्वस्वाभिमत-सिद्धिर्भवतीत्याशयेनाह — **भेद इति** ॥ अत्र चन्द्रभेदादिकमादायांशे सिद्धसाधनतावारणाय विमत इति पूरणीयम् । पक्षतावच्छेदकं तु ब्रह्मज्ञानेतराबाध्यभेदत्वं बोध्यम् । अवच्छेदकावच्छेदेन तस्यादोषत्वे तु भेदत्वमात्रं पक्षतावच्छेदकं बोध्यम् । ननु मिथ्यात्वमसत्त्वं चेदपसिद्धान्तोऽर्थक्रियाकारित्वाद्बाधश्चेत्यत आह — **मिथ्यात्वं चेति** ॥

---

[1] `विरलादेश्चन्द्र एव चन्द्रारोपादेः' मु.

**अधिष्ठानेति** ॥ याथात्म्यस्वनिवर्तकज्ञानविषयोऽ(या)साधारणाकारो[1] ब्रह्मणि स्वरूपमेव तादृशमन्यत्र शुक्तित्वादिः(दि) । तथा च ज्ञानत्वघटितधर्मावच्छिन्नकारणताकध्वंसप्रतियोगित्वं मिथ्यात्वमन्यत्स्वरूपकथनम् । शुक्तिज्ञानाद्रजतमुत्सन्नमित्यादिप्रतीतिबलाद्रजतस्य नाशस्वीकारान्नासम्भवः । मुद्गरपातादिना घटादेः कारणात्मनाऽवस्थानरूपतिरोभाव एव न ध्वंसः । स तु ब्रह्मज्ञानेनैवेत्यङ्गीकारान्न तत्राव्याप्तिः । आत्मविशेषगुणत्वेनोत्तरज्ञाननिवर्त्यपूर्वेच्छादौ मिथ्यात्वव्यवहारवारणाय ज्ञानत्वेत्यादि । अधिकं तु द्वैतद्युमणिनामकतत्त्वोद्योतटिप्पण्यां मत्कृतायामनुसन्धेयम् ॥ **भेदत्वेन प्रतीयमानत्वस्यैवेति** ॥

ननु प्रतीयमानत्वं (प्रतीतिकर्मत्वं ) कथमप्रामाणिकस्य[2] घटते ? तस्य सकलसामर्थ्यरहितस्य कारकत्वगर्भोक्तकर्मत्वायोगादित्यत आह — **प्रतीयमानत्वमिति** ॥ भेदत्वप्रकारकप्रतीतेर्विषयतया हेतुत्वाङ्गीकारादित्यर्थः । असतो भानाङ्गीकारान्नासिद्धिरिति भावः । ननु प्रागभावादिषु भेदत्वभ्रमसम्भवात्तत्र व्यभिचारः । न च तत्रापि मिथ्यात्वसत्त्वान्न व्यभिचार इति वाच्यम् । तथात्वे प्रतीतिविषयत्वादित्येतावता पूर्तेरिति वैयर्थ्यादिति चेन्न । तादात्म्यसंसर्गावच्छिन्नभेदत्वप्रकारतानिरूपितविषयताशालित्वस्य विवक्षितत्वात् । भेदत्वेन प्रागभावादेरन्यत्रारोपमादाय व्यभिचारस्तदवस्थ इति न शङ्क्यम् । तत्राप्यारोप्यमाणोऽयं भेद इति व्यवहारनिर्वाहाय तत्र[3] भेदत्वेन तादत्म्येन भेदभ्रमस्तत्रैव भेदत्वभानस्य स्वीकारात् । तत्र

---

1 `याथात्म्यं स्वनिवर्तकज्ञानविषयोऽसाधारणाकारः ।' इति पाठेन भाव्यमिति भाति ।'

2 `प्रथमं प्रामाणिकस्य' मु.

3 `यत्र' इति भाव्यमिति भाति ।

चारोप्यमाणभेदस्य मिथ्यात्वेन व्यभिचारप्रसक्तेः[1]। यत्र प्रागभावो मुख्यविशेष एव भासते तत्र तादात्म्येन भेदत्वं भेद एव भासते । तादृशभ्रमेऽपि भेदानवगाहित्वं न स्वीक्रियते किन्त्वयं भेद इति व्यवहारबलाद्भेदस्य(स्यैव) प्रागभावे भ्रमः । तत्रैव भेदत्वं भासत इत्याद्यभ्युपगमान्न कथमपि व्यभिचारशङ्का कालिकविषयत्वादिना भेदत्वेन ध्वंसज्ञानादिभेदमादाय[2]व्यभिचारवारणाय तादात्म्यसंसर्गावच्छिन्नेति भेदत्वप्रकारतायां निवेशः । विषयत्वं च ज्ञानासाधारणकारणकरण-सन्निकर्षाश्रयत्वं कथमसतस्तद्युज्यत इत्यत आह — **तच्चेति** ॥ एतदपि तादृगेवेत्यत आह — **स्वरूपमेवेति** ॥ ज्ञानस्वरूपमेवेत्यर्थः । अप्रामाणिकस्य स्वरूपायोगाद्विषयताज्ञानस्वरूपमेव तन्निरूपकत्वमेव विषयस्यायं विषय इति व्यवहारहेतुरिति मतेनेदम् । तत्रेति बुद्धिस्थतन्निरूपकत्वपरामर्शः प्रामाणिकत्वानपेक्षणादित्याकरे तथा व्यवस्थापितत्वादिति भावः । अप्रामाणिकत्वं च परमतेऽनिर्वचनीयस्यापीति न[3] तस्यापसिद्धान्त इति भावः ॥ **भेदस्य सत्त्वेनेति** ॥ अन्यथाऽऽरोपिता-नारोपितयोरभेदापत्तेरित्यर्थः । आरोपिते प्रतीयमानानारोपितभेदस्तदति-रिक्तोऽतः सत्य एवेत्यन्यत्र व्यवस्थापितम् ॥ **चन्द्रभेदारोपमात्रेणेति** ॥ चन्द्रस्वरूपमात्रसम्बन्धितया प्रतीयमानभेदमात्रारोपेण चन्द्रस्वरूप-प्रतियोगिकभेदमात्रारोपेण चेत्यर्थः । भेदो व्यासज्यवृत्तिरुभयधर्मो भवत्युभयत्र प्रतियोग्यनुयोगिभावोऽपीति[4] पक्षे चन्द्रस्वरूप एव

---

[1] `-अपिरसक्तेः' इति भाव्यमिति भाति ।

[2] `अध्यक्षज्ञानादिभानमादाय' ह्. ३. `मतेन' मु.

[4] `भावेति' मु.

व्यासज्यवृत्तिभेदरूपधर्मस्य तत्प्रतियोगिकत्वानुयोगिकत्वयोरारोपे इमौ चन्द्रावयमस्माद्भिन्न इति प्रतीत्युपपत्तिश्चन्द्रान्तरारोपं विनैव घटते । अव्यासज्यवृत्तितया भेदभाव(भान)पक्षेऽपि दोषवशात्प्रतियोगिकभेद-व्यक्तेरन्यत्रानुभूयमानायाः तच्चन्द्रसंसृष्टतयाऽऽरोपितत्वमात्रेण तादृश-व्यवहाराद्युपपत्तेर्न प्रदेशान्तरे चन्द्रस्यारोप इति भावः ।

नन्वेतस्मिन्नेवैतद्भेदस्यारोपेऽयमेतस्माद्भिन्न इति प्रतीत्यापत्तिर्न चन्द्रतद्व्यक्तिकत्वेऽपि[1] तदानीं दोषवशाद्भेदस्य भासमानत्वेन रूपद्वयस्य प्रतियोगितावच्छेदकत्वानुयोगितावच्छेदकत्वाभ्यां पृथगुल्लेखात् चन्द्र-स्वरूपधर्मस्य[2] (उक्त)प्रतियोगितावच्छेदकत्वेनाभानान्नायं चन्द्र इति न चन्द्रश्चन्द्र इति प्रतीत्यापत्तिः । न च चन्द्रान्तरस्यारोपः प्रदेशविशेषे कुतो न स्वीक्रियत इति वाच्यम् । तथात्वेऽनुभूयमानचन्द्रस्यारोपो वा स्मर्यमाणस्यारोपो वा । नाद्यः । अत्र भासमानचन्द्रस्य देशान्तरे संसर्गारोप एव वाच्यः । अनुभूयमानस्थले संसर्गारोपेण सर्वव्यवहारसम्भवे उभयारोपकल्पने गौरवात् । तत्र चात्र चैकचन्द्रस्यैव दीर्घतया भान-प्रसङ्गाच्च । समीपस्थयोराम्रपनसयोरेक एवायं महाचूत इतिवत् । किञ्च नेमौ चूतौ किन्त्वनयोरन्यतरश्चूतोऽयं तु पनस एवेति प्रकारे बाधाभावस्य चूततादात्म्यमात्रे बाधस्य ग्रहवत् न तत्र चन्द्रः किन्त्वत्रैवेति बाधोदयापत्तिर्नत्वेक एवायं चन्द्रो न द्वाविति भेदमात्रस्य बाधोत्पत्तिः । स्मर्यमाणारोपोऽपि संयोगेन न घटते । चन्द्रानुभवसामाग्र्या बलवत्यास्तत्र सत्त्वे तत्र स्मृतिरूपारोपहेतोरेव दुर्घटत्वात् । स्मृतिरूप-सन्निकर्षाधीनारोपस्थले आरोप्यविषयताया(याम्) इमं साक्षात्करोमीत्यनु-

---

1 `-व्यक्तित्वेऽपि' हु. २. `चन्द्रत्वरूप-' मु.

व्यवसायनिर्वाहकत्वादर्शनेन चन्द्रौ साक्षात्करोमीति प्रतीत्यनिर्वाहप्रसङ्गश्च । स्मर्यमाणरजतारोपस्थले तत्तादात्म्येन प्रतीयमाने विद्यमाना लौकिकविषयतयैव[1] रजतं साक्षात्करोमीति प्रतीतेर्निर्वाहिका । न चात्र स्मर्यमाणचन्द्रतादात्म्येन प्रतीयमानं चाक्षुषविषयभूतं किञ्चिद्वर्तते । शुद्धप्रदेशविशेष एव चन्द्रान्तरभानात्[2] । तस्य चन्द्रभिन्नत्वेनानुभवात् । तदुपपत्तिश्चन्द्राधिकरणप्रदेशेऽप्यङ्गुल्यवष्टम्भेन भेदभ्रमात् । एतेन दोषविशेषबलादेव तादृशप्रतीतिनिर्वाहकविषयता कल्प्यते । अन्यथा भेदस्वरूपमिथ्यात्वसिद्धये स्मर्यमाणारोपस्यैव वक्तव्यतया तवाप्यगतेरिति निरस्तम् । तादात्म्येन चन्द्रान्तराभानेऽधिष्ठानानिरूपणात् प्रदेशान्तरे चन्द्रप्रतीतेरुक्तरीत्यैवोपपत्तौ तदारोपे बीजाभावाच्च पूर्वोक्तबाधानुपपत्तिश्च । तस्माद्भेदारोपमात्रादेव सम्भवे चन्द्रान्तरारोपकल्पना वृथैव । अत्र यद्यप्ये-तच्चन्द्रभेदस्य चन्द्रभिन्नेष्वनुभूयमानस्य चन्द्रे संसर्गारोप एव वाच्यः । इत्थं च तस्य सत्यतया दृष्टान्तत्वायोगेन कथं तत्पक्षोत्कीर्तनमिति भाति । तथाऽपि संसृष्टरूपेण तस्य मिथ्यात्वदृष्टान्ततोपपत्तिः । वस्तुतस्तु व्यासज्यवृत्तिभेदमात्रमारोप्यते । स च दोषविशेषवशात्साक्षात्कारित्व-प्रतीतिनिर्वाहकविषयतावान्स्वरूपतो मिथ्या च भवतीत्यत्रैव ग्रन्थकृतो निर्भर इति द्रष्टव्यम् । यद्यपि पूर्वदृष्टचैत्रे कालान्तरे नायं चैत्र इति भेदभ्रमाणां निर्विवादतया तद्विषयाणां दृष्टान्तत्वसम्भवादुक्तप्रयासवैफल्यं भाति । तथाऽपि सति सम्भवे कण्ठोक्तपरित्यागे बीजाभावाच्छिष्य-व्युत्पादनार्थत्वाच्च न प्रयासवैफल्यम् । विरहिणश्चन्द्रे चन्द्रभेदभ्रमे निर्विवाद इत्युक्तप्रयासवैफल्यमित्येके ॥ तर्हीति ॥

---

1 `-विषयतैव' इति पाठेन भाव्यमिति भाति ।    २. `चन्द्रान्तराभावात्' मु.

ननु द्वैताद्वैतवादिनोर्मते रजताभेदस्य रजतस्वरूपत्वेन तदारोपे तदारोपः प्राप्त एवेति निर्दलेयं शङ्केति वाच्यम् । रजतस्याभेद इत्यादि-प्रतीतिनिर्वाहाय कल्पितभेदस्य विशेषस्य वा यथामतं स्वीकृत्वेनोक्त-शङ्कोपपत्तेः । तत्राप्यारोप्यस्य रजतस्याधिष्ठानत्वेनेति, तत्र रजतस्याधि-ष्ठानत्वेनेत्यपि क्वचित्पाठः । तत्रायमर्थः । इदं रजतं रजतमिदमित्याकार-द्वयोल्लोखाच्छुक्तिकायां रजततादात्म्यस्येव रजते शुक्तितादात्म्याध्यासोऽ-प्यावश्यकः । तथा चोक्तं सङ्क्षेपशारीरके `इदमर्थवस्त्वपि भवेद्रजते परिकल्पितं रजतं वस्त्विद'मिति ॥ तथा च शुक्तितादात्म्याधिष्ठानतया रजतभानार्थं भ्रमे रजतस्यापि शुक्त्यंशे आरोप इत्यर्थः । उपस्थितिपदार्थो भानम् । रजतस्यानधिष्ठानत्वेति, तत्रारजतस्याधिष्ठानत्वेऽपीति च पाठो युक्तः । तथात्वे चायमर्थो युक्तः । चन्द्रान्तरारोपानङ्गीकारस्तत्र चन्द्रस्यैवाधि-ष्ठानत्वेन तत्रोक्तरीत्या भेदारोपादिना द्वौ चन्द्रावित्यादिप्रतीतिसम्भवात् । प्रकृते च रजतस्यानधिष्ठानत्वेन शुक्तेरेवाधिष्ठानतया लौकिकसन्निकर्षेण तज्ज्ञानायोगात् । इदं रजतमिति व्यवहारानिर्वाहकज्ञानस्य तत्काले सिद्ध्यर्थं तत्काले रजतारोपाङ्गीकारस्य आवश्यकत्वान्न तत्प्रतिबन्दिरिति भावः । रजतारोपानङ्गीकारे न केवलमिदं रजतमिति व्यवहारानुपपत्तिः किन्तु भवदभिमतरजततादात्म्यत्वावच्छिन्नारोपोऽपि न सिद्ध्यतीत्याह — रजतानुपस्थिताविति ॥ उक्तभ्रमस्थले रजतविषयकज्ञानाभावेऽङ्गीक्रियमाणे भ्रमस्य रजताविषयकत्वेति यावत् ॥ रजताभेदेति ॥ रजतप्रतियोगिकाभेदत्वेन तज्ज्ञानासम्भवादित्यर्थः । न चेष्टापत्तिः । केवलतादात्म्यादिज्ञानेन रजतार्थिप्रवृत्त्यनुपपत्तिः(त्तेः) । न च तर्ह्यभेदांश एव प्रतियोगितया भासते(तां) शुक्तिकायां तदारोपो निष्फल इति वाच्यम् ।

भ्रमे रजतभानस्यावश्यकत्वे शुक्तिकायामेवाभेदसंसर्गेण भानकल्पन एव लाघवमधिकविषयत्वाकल्पनात् । लाघवेन तस्य (एव) रजतार्थं प्रवृत्तौ हेतुत्वाच्च । न तादात्म्यस्य शुक्त्यंशे प्रकारत्वमङ्गीकृत्य तत्र रजतस्य प्रकारत्वकल्पने लाघवम् । रजततदभेदयोरभेदशुक्तिकयोश्च संसर्गभाना- वश्यकतयाऽधिकविषयताकल्पनाप्रयुक्तगौरवं तादृशस्य प्रवृत्तकत्वानुप- पत्तिश्चेति[1] भावः । एतद्वाक्यस्य पूर्वं रजतानुपस्थितौ रजताभेदारोपा- सम्भवात्पूर्वं रजतारोपावश्यक इत्यर्थभ्रान्त्या पूर्वं रजतारोपाभावेऽपि व्यावहारिकरजतोपस्थितिमात्रेण तादृशतादात्म्यभानसम्भवान्न रजतारोप आवश्यक इति दूषणभ्रमेण मनःखेदो न कार्यः । अस्मदुक्तवाक्यार्थे उक्तदूषणासंस्पर्शात् । रजतार्थिप्रवृत्त्यादिहेत्वारोपे रजतप्रतीतिर्नास्तीति वदन्तं प्रति तत्पूर्वं रजतारोपोपपादनस्याकिञ्चित्करत्वादप्रसक्तत्वाच्चोक्त- वाक्यस्य तादृशार्थकत्वतात्पर्यभ्रमस्यैवातिसाहसिकत्वादिति दिक् ।

(७) (का.) सर्वाभेदसिद्धये भेदमात्रमिथ्यात्वानुमानमाह — **भेद इति** ॥ विमत इत्यादिः । तेन न पूर्ववदंशतश्चन्द्रभेदे सिद्धसाधनम् । नन्वत्र मिथ्यात्वमसत्त्वं चेदपसिद्धान्तः, जगतः सदसद्विलक्षणत्वाङ्गीकारादथ आह — **मिथ्यात्वं चेति** ॥ यद्वा सदसद्विलक्षणत्वरूपमिथ्यात्वसाधने परं प्रति साध्याप्रसिद्धिरत आह — **मिथ्यात्वं चेति** ॥ यद्वा यदि सत्त्वानधिकरणत्वं मिथ्यात्वं तदा [2]निर्धर्मकब्रह्मवत् सद्रूपस्यापि भेदस्य सत्त्वाधिकरणत्व-

---

[1] `प्रवर्तकत्व-' इति पाठेन भाव्यम् ।

[2] ॥ **निर्धर्मकब्रह्मवदिति** ॥ यथा निर्धर्मकत्वात् ब्रह्म सत्त्वरूपधर्मानधिकरणमपि सद्रूपं, न तु मिथ्या, तथा भेदोऽपि सत्त्वानधिकरणमपि सद्रूपं स्यादिति उद्देश्यमिथ्यात्वसिद्धिमन्तरा पक्षे सत्त्वानधिकरणत्वरूपसाध्यपर्यवसानादर्थान्तरतेति भावः ।

निषेधसम्भवादर्थान्तरमित्यत आह — **मिथ्यात्वं चेति** ॥ यद्वा बाध्यत्वमेव हि मिथ्यात्वम् । तच्चान्यथा विज्ञातस्य सम्यग्विज्ञातत्वमेवेति सिद्ध-साधनम् । क्षणिकत्वादिना विज्ञातस्य जगतः स्थायित्वादिना विज्ञातत्वा-भ्युपगमादत आह — **मिथ्यात्वं चेति** ॥

यद्वा, [1]अज्ञानतत्कार्यान्यतरत्वरूपमिथ्यात्वे साध्ये परं प्रति दृष्टान्तस्य साध्यवैकल्यं, तन्मतेऽत्यन्तासतश्चन्द्रभेदादेरज्ञानतत्कार्यान्तर्भावाभावादत आह - **मिथ्यात्वं चेति** ॥ निवर्त्यत्वमात्रस्य मुद्गरप्रहारदिना घटादेरिव सत्त्वपक्षेऽप्युपपत्तेर्ज्ञाननिवर्त्यत्वमिति । एतदप्युत्तरज्ञाननिवर्त्यपूर्वज्ञानवत् सत्त्वाविरोधीत्यधिष्ठानपदम् । अधिष्ठानयाथात्म्यज्ञाननिवर्त्यस्य शुक्ति-रजतादेः सत्त्वादर्शनेऽपि तद्भ्रमनिवर्त्यस्य सत्त्वसम्भवादर्थान्तरमित्यतो याथात्म्येति । न च मायिमते चन्द्रभेदादेः प्रातिभासिकत्वेन निवृत्तिसम्भवेऽपि सिद्धान्तिमते तुच्छत्वेन तस्य निवृत्त्ययोगा-द्दृष्टान्तवैकल्यमिति वाच्यम् । यतस्तन्निवर्त्यत्वं [2]तदधीनसिद्धिका-भावप्रतियोगित्वम् । चन्द्रभेदादेरभावश्चन्द्रैकत्वज्ञानाधीनसिद्धिक इत्यदोषः ॥ **प्रामाणिकेति** ॥ सिद्धान्ते सदसत्साधारणभेदत्वधर्मस्याप्रसिद्धत्वेनेत्यर्थः

---

[1] ॥ अज्ञानतत्कार्यान्यतरेति ॥ अद्वैतसिद्धान्ते एकया विवक्षया ब्रह्म अज्ञानं तत्कार्यं चेति त्रयः पदार्थाः । तत्र ब्रह्मैव सत् अन्ये मिथ्या । अतः अज्ञानतत्कार्यान्यतरत्वं मिथ्यात्व-मिति लक्षणं प्रवृत्तम् ।

[2] ॥ तदधीनसिद्धिकाभावप्रतियोगित्वमिति ॥ अधिष्ठानयाथात्म्यज्ञानाधीनसिद्धिविषया-भावप्रतियोगित्वमित्यर्थः । समन्वयश्चेत्थम् - चन्द्रभेदस्याधिष्ठानं = चन्द्रः । तस्य याथात्म्यज्ञानं = चन्द्रः एकः इति ज्ञानम्, तदधीना सिद्धिः = चन्द्रभेदः नास्तीति सिद्धिः, तद्विषयोऽभावः = चन्द्रभेदाभावः । तत्प्रतियोगी चन्द्रभेदः - इति ।

॥ **असिद्धो हेतुरिति** ॥ उभयानुगतभेदत्वस्य हेतुत्वे हेत्वप्रसिद्धिः । सन्मात्रवृत्तिभेदत्वस्य हेतुत्वे दृष्टान्तासिद्धिः । दृष्टान्तवृत्तिभेदभ्रमविषयत्वरूपभेदत्वस्य हेतुत्वे च स्वरूपासिद्धिरित्यर्थः ।

ननु प्रतीयमानत्वं हि प्रतीतिकर्मत्वम् । तस्य च प्रतीतिजन्यफलाश्रयत्वरूपस्य न सदसत्साधारण्यमत आह - **प्रतीतिविषयत्वमिति** ॥ एतदेव प्रतीतिकर्मत्वं, न तूक्तरूपम् । ज्ञाततारूपफलस्य निरस्तत्वेनासम्भवादिति भावः । ननु प्रतीतिजनकसन्निकर्षादिमत्त्वरूपं तद्विषयत्वमपि न सदसत्साधारणमित्याशङ्क्याह — **तच्चेति** ॥ ननु सम्बन्धस्य सम्बन्धिसत्तासापेक्षत्वात् कथमसतश्चन्द्रभेदादेः प्रतीतिसम्बन्धित्वमत आह — **सम्बन्धश्चेति** ॥ स्यादेवं यद्यन्यः सम्बन्धः स्यात् । अयं तु प्रतीतेः स्वरूपमेव । तस्य तु विषयसत्तानिरपेक्षत्वान्न दोष इति भावः । द्वैतमते

स्यादेतत् । परमते चन्द्रभेदस्य पारमार्थिकत्वाद्दृष्टान्तस्य साध्यवैकल्यम् । न चैवं चन्द्रभेदप्रतीतेः प्रमात्वप्रसङ्गः । चन्द्रभिन्नत्वेन भासमानचन्द्रस्यारोपितत्वेन [1]विशिष्टविषयबाधात् । चन्द्रभेदस्यैवारोपितत्वे चन्द्रद्वित्वप्रतीतेरनुपपत्तेः । तस्या विभिन्नवस्तुविषयकापेक्षाबुद्धिसापेक्षत्वादित्याशङ्कते — **नन्विति** ॥ **सत्यत्वेनेति** ॥ अन्यथाऽरोपितानारोपितयो-

---

[1] ॥ **विशिष्टविषयबाधादिति** ॥ चन्द्रः चन्द्रभिन्नः इति प्रतीतिः आरोपितचन्द्रे चन्द्रभिन्नतादात्म्यमवगाहते । तत्र यद्यपि आरोपितानारोपितयोः भेदः प्रामाणिकः तथापि चन्द्रभिन्नतया यमवगाहते स आरोपितः । अतः चन्द्रभिन्नतादात्म्यवच्चन्द्ररूपविशिष्टविषयः बाधित इति प्रतीतेः भ्रान्तित्वम् । यदि आरोपितमारोपितत्वेन अवागाहिष्यत तर्हि प्रमात्वमभविष्यत् । तदभावाद्भ्रान्तित्वमिति भावः ।

रैक्यप्रसङ्ग इति भावः । द्वित्वप्रतीतिं प्रति न वस्तुतो विभिन्नवस्तु-विषयकबुद्धिर्हेतुः । दूरस्थवृक्षयोर्भेदाग्रहेऽपि द्वित्वप्रतीत्यापत्तेः । अपि तु भेदग्रह एवेति चन्द्रे चन्द्रभेदारोपाङ्गीकारे नानुपपत्तिः । न च चन्द्रान्तरस्यारोपाङ्गीकारेऽपि बाधकाभावः । चन्द्रश्चन्द्रभिन्न इत्यादौ चन्द्रभेदस्यैव साक्षाद्धर्मिविशेषणत्वापेक्षया तादात्म्येन चन्द्रभिन्नस्य तथात्वे [1]विषयताधिक्येन गौरवादित्याशयेन समाधत्ते — **चन्द्रभेदारोपमात्रेणेति** ॥ अत्र प्रतिबन्दीमाशङ्कते — **नन्विति** ॥ यद्यपि रजतारोपापेक्षया विषयताधिक्येन रजताभेदारोप एव गौरवान्नैतत्प्रतिबन्द्यवकाशः । न च [2]धर्मिकल्पनातो धर्मकल्पना लघीयसीति शङ्क्यम् । धर्मिघटित-

---

1 ॥ **विषयताधिक्येन गौरवादिति** ॥ अत्र श्रीप्रह्लादाचार्याः - चन्द्रश्चन्द्रभिन्न इति प्रतीतौ चन्द्रभेदस्यैव प्रकारतेति कुतः? तादात्म्येन चन्द्रभिन्नस्यैव प्रकारत्वमस्तु। बाधकप्रामाणाभावात्। तथाच चन्द्रभेदस्यानया प्रतीत्याऽरोपितत्वासिद्ध्या दृष्टान्तः साध्यविकल इति शङ्कयाया इदमुत्तरम्। अस्यायमाशयः। चन्द्रश्चन्द्रभिन्न इति प्रतीतिः स्वरूपतः चन्द्रभेदप्रकारिका चेत् विषयताल्पत्वम्। यतो हि चन्द्रभेदप्रकारकत्वं नाम स्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्नचन्द्रनिष्ठप्रकारतानिरूपितस्वरूपसम्बन्धावच्छिन्नभेदनिष्ठप्रकारताकत्वम् । तथा च चन्द्रे भेदे च प्रकारतेति प्रकारताख्य-विषयताद्वयमङ्गीकृतं भवति। अस्याः प्रतीतेः तादात्म्येन चन्द्रभिन्नप्रकारकत्वे च विषयताधिक्यम्। यतो हि तादात्म्येन चन्द्रभिन्नप्रकारकत्वं नाम स्वनिष्ठप्रतियोगिता-निरूपकत्वसम्बन्धावच्छिन्नचन्द्रनिष्ठप्रकारतानिरूपितस्वरूपसम्बन्धावच्छिन्नभेदनिष्ठप्रकारतानिरूपिततादात्म्यसम्बन्धावच्छिन्नचन्द्रान्तरनिष्ठप्रकारतानिरूपकत्वम्। तथा च चन्द्रे भेदे चन्द्रान्तरे च प्रकारतेति प्रकारताख्यविषयतात्रयं स्वीकृतं स्यात्। तथा च गौरवमिति भावः॥

2 ॥ **धर्मिकल्पनात इति** ॥ रजतकल्पनातः रजताभेदरूपधर्मकल्पने इत्यर्थः ॥

धर्मकल्पनायाः लघुत्वायोगात् । तथापि रजताभेदस्य रजतत्वरूपत्वेन तद्विशिष्टारोपात् तदारोपे लाघवमित्यभिप्रायः । रजतत्वस्य च न स्वरूपेणारोप्यत्वम् । मिथ्यैव रजतं प्रत्यभादित्यनुस्मृतिविरोधात् । रजताभेदत्वेनारोपे च रजतारोपस्यावश्यकतेत्याह — **तत्रेत्यादिना** ॥ रजताभेदारोपाङ्गीकारेऽपि तत्कारणीभूतप्रतियोग्युपस्थित्यर्थं रजतारोपोऽवश्यमङ्गीकार्यः । न चैवं चन्द्रान्तरारोपस्याप्यावश्यकता । अधिष्ठानभूतचन्द्रप्रतीतेरेव प्रतियोगिज्ञानत्वात् । न चैवमिहाप्यापणस्थरजतोपस्थित्यैव निर्वाहः । तथासति तदभेदस्यैवारोप्यत्वापत्त्या [1]दर्शितानुस्मृतिविरोधात् । तथाचावश्यकरजतारोपेणैवोपपत्तौ तदभेदारोपाङ्गीकारे वैयर्थ्यं गौरवं चेत्याशयः ।

(७) (श.) अपिचेत्येतत्किञ्चेतिवत् व्याख्येयम् ॥ **भेद इति** ॥ विमतभेद इत्यर्थः । अन्यथा चन्द्रभेदस्यापिपक्षत्वापत्त्यांशे सिद्धसाधनात् । अत्र भेदस्य मिथ्यात्वे सिद्धे तद्विरुद्धोऽभेद एव सिध्यतीति ध्येयम् । ननु किमिदं मिथ्यात्वम् । असत्त्वमनिर्वचनीयत्वं वा । नाद्यः । अपसिद्धान्तात् । नद्वितीयः । तस्य कुत्राप्यप्रसिद्धत्वेनाप्रसिद्धविशेषणत्वादित्यत आह - **मिथ्यात्वं चाधिष्ठानेति** ॥ आरोपाधिष्ठानशुक्तिविषययथार्थज्ञाननिवर्त्यत्वं शुक्तिरजते प्रसिद्धमिति भावः । नन्वत्र विमतभेदत्वं हेतुश्चन्द्रभेदत्वं वा । नाद्यः । दृष्टान्ते विमतभेदत्वाभावेन साधनवैकल्यापातात् । न द्वितीयः ।

---

धर्मिघटितधर्मकल्पनात इति ॥ अयं भावः - धर्मिकल्पनातो धर्मकल्पना लघीयसी इति तदा स्यात् यदा धर्मः धर्म्यघटितः स्यात् । प्रकृते रजताभेदरूपधर्मः रजतरूपधर्मिघटित इति तस्य न लघुत्वसम्भव इति भावः ।

[1] ॥ **दर्शितानुस्मृतीति** ॥ मिथ्यैव रजतमित्यनुस्मृतिविरोधादित्यर्थः ।

हेतोः पक्षे अभावेन स्वरूपासिद्धेः । ननु यथा पर्वतीयधूमस्य हेतुत्वे साधनवैकल्यं महानसीयधूमस्य हेतुत्वे स्वरूपासिद्धिरिति शङ्कापरिहारायोभयधूमानुगतं धूमत्वसामान्यं हेतूक्रियते तथेहापि विमतभेदचन्द्रभेदानुगतं भेदत्वसामान्यं हेतुरिति चेन्न । तत्रोभयोरपि धूमयोः प्रामाणिकत्वेनोभयधूमानुगतसामान्यसम्भवात् । प्रकृते च विमतभेदस्य प्रामाणिकत्वेन चन्द्रभेदस्याप्रामाणिकत्वेन प्रामाणिका-प्रामाणिकानुगतभेदत्वसामान्याभावेनासिद्धिप्रसङ्गादित्याशङ्क्य निराकरोति ॥ **नन्विति** ॥ व्यावहारिकत्वेन वा तत्ववादिरीत्या वा विमतभेदस्या-प्रामाणिकत्वोक्तिः ॥ **एवं चेति** ॥ भेदत्वेन प्रतीमानत्वस्योभय-साधारण्यादिति भावः । ननु प्रतीयमानत्वं नामप्रमारूपप्रतीतिगोचरत्वम् इदमेव प्रामाणिकत्वमित्यप्रामाणिकचन्द्रभेदेकथमेतत्सम्भवतीत्यत आह - **प्रतीयमानत्वं हीति** ॥ प्रतीतिविषयत्वं नतु प्रमारूपप्रतीतिविषयत्वम् । येनोक्तदोष इति भावः । ननु यत्सन्निकृष्टकरणेन यज्ज्ञानं जायते स तस्य विषयो भवति । तथाचात्र प्रतीतिविषयत्वं प्रतीतिजनककरणसन्निकृष्टत्वं वाच्यम् । करणसन्निकर्षश्च संयोगादिरूपः । स च प्रामाणिकस्यैवेत्य-प्रामाणिकेकथमेतत्सम्भवतीत्यत आह — **तच्चेति** ॥ प्रतीतिसम्बन्धित्वं नतु प्रतीतिजनककरणसन्निकृष्टत्वम् । येनोक्तदोष इति भावः ।

ननु प्रतीत्यासाकं सम्बन्धस्य संयोगसमवाययोरन्यतरत्वावश्यं-भावादुक्तदोषतादवस्थ्यमित्यत आह — **सम्बन्धश्चेति** ॥ स्वरूपमेव नातिरिक्तः संयोगादिः । अतिरिक्तसम्बन्धमनपेक्ष्य विशिष्टधीनियामकत्वं स्वरूपसम्बन्धत्वम् । नन्वप्रामाणिकत्वेऽसत्त्वापत्त्या स्वरूपसम्बन्धोऽपि कथमिति चेन्न । प्रतीयमानचन्द्रभेदस्य प्रातिभासिकत्वाङ्गीकारेणा-

सत्त्वानङ्गीकारादिति भावः ॥ **इत्यत्रेति** ॥ एवं निरुक्तभेदत्वेन प्रतीयमानत्वे उक्तरीत्या प्रामाणिकत्वानपेक्षणादित्यर्थः । चन्द्रयोर्भेदस्य सत्यत्वं कुत इत्यत आह — **आरोपितानारोपितेति** ॥ आरोपितानारोपितचन्द्रयोर्भेदस्य मिथ्यात्वे तयोरन्योन्यं तादात्म्यं स्यात् । नचैतद्विरुद्धधर्माधिकरणयोः सम्भवतीति भावः । उभयोरप्यारोपितत्वं किं नाङ्गीक्रियत इत्यत उक्तम् ॥ **प्रतीयमाने चन्द्रे चन्द्रान्तरस्यारोपितत्वेनेति** ॥ चन्द्रान्तरस्यानारोपितत्वेऽङ्गुल्यवष्टम्भाभावेऽपि प्रतीतिः स्यादिति भावः । स्यादिदं यदि चन्द्रान्तरस्यारोपितत्वं स्यात् । नचैतदस्ति । नच तथात्वे इमौचन्द्राविति द्वित्वप्रतीत्यनुपपत्तिः । चन्द्रान्तरस्यारोपितस्यैवानङ्गीकारादिति वाच्यम् । एकस्मिन्नेव चन्द्रे भेदारोपमात्रेण द्वित्वप्रतीत्युपपत्तेः । नच चन्द्रान्तरस्यैवारोपः किं नस्यादिति वाच्यम् । धर्मिकल्पनातोवरं धर्मकल्पनमिति न्यायेन सिद्धेचन्द्रे भेदरूपधर्ममात्रारोपाङ्गीकारेण द्वित्वप्रतीत्युपपत्तौ चन्द्रान्तराख्यधर्म्यारोपे गौरवादिति परिहरति ॥ **चन्द्रे भेदारोपमात्रेणेति** ॥ चन्द्रे चन्द्रप्रतियोगिकभेदारोपमात्रेणेत्यर्थः । प्रतिबन्द्या शङ्कते — **तर्हीति** ॥ यदि चन्द्रे भेदारोपमात्रेण द्वित्वप्रतीत्युपपत्त्या चन्द्रान्तरारोपो नाङ्गीक्रियते तर्हि शुक्तिकायां रजतारोपो न स्यात् । नच तथात्वे इदं रजतमिति प्रतीत्यनुपपत्तिः । शुक्तिकायां रजताभेदारोपमात्रेण तदुपपत्तेः । नच रजतस्यैवारोपः किं नस्यादिति वाच्यम् । धर्मिकल्पनातो वरं धर्मकल्पनमिति न्यायेन सिद्धे शुक्तिकाशकले रजताभेदाख्यधर्मारोपमात्रेण तादृशप्रतीत्युपपत्तौ रजताख्यधर्म्यारोपाङ्गीकारे गौरवात् । यदि तत्र प्रामाणिकत्वेन गौरवस्यादोषत्वमङ्गीकृत्य रजतारोपोऽङ्गीक्रियते तर्ह्यत्रापि तथैवाङ्गीकृत्य चन्द्रे चन्द्रान्तरस्यैवा-रोपोऽङ्गीकार्य इति भावः ।

प्रतिबन्दीं मोचयति — नेति ॥ तत्र उदाहृतस्थले । अधिष्ठान-ज्ञानेनैवरजतोपस्थितिः किं न स्यादित्यत उक्तमधिष्ठानस्यारजतत्वेनेति । आरोपाधिष्ठानस्य शुक्तित्वेन तद्दर्शने रजतोपस्थित्ययोगादित्यर्थः । रजतोपस्थितिरेव कुत इत्यत आह — रजतानुपस्थिताविति ॥ सप्रतियोगिकपदार्थज्ञानेप्रतियोगिकज्ञानस्य कारणत्वेन रजतरूप-प्रतियोगिज्ञानाभावेतत्प्रतियोगिकाभेदारोपासम्भवादित्यर्थः । यद्यभेदस्य सप्रतियोगिकपदार्थत्वेन प्रतियोग्युपस्थित्यर्थं रजतारोपोऽङ्गीक्रियते । तर्हि भेदस्यापि तथात्वेन प्रतियोग्युपस्थित्यर्थं चन्द्रान्तरारोपोऽङ्गीकार्य इत्यत आह — नैवमिति ॥ यथा रजतोपस्थित्यर्थं रजतारोपोऽङ्गीकार्यः तथा चन्द्रोपस्थित्यर्थं चन्द्रान्तरारोपोऽङ्गीकार्यो नेत्यर्थः । कुत इत्यत आह - अधिष्ठानस्येति ॥ तत्र ह्यधिष्ठानस्य शुक्तित्वेन तद्दर्शने रजतोपस्थितेर-सम्भवाद्रजतारोपोऽङ्गीक्रियते । अत्र तु भेदारोपाधिष्ठानस्य चन्द्रत्वेन तद्दर्शने चन्द्रस्योपस्थितत्वेन तदर्थं चन्द्रातरारोपो व्यर्थ इति भावः ।

(८) अपि च ।

विमतं (तत्त्वतः) तात्विकस्वान्तर्भेदहीनं मतत्वतः ।
यदित्थं तत्तथा यद्वत्खं तथेदं ततस्तथा ॥

यथा गगनमन्योन्यपारमार्थिकभेदशून्यैर्घटमठाद्याकाशैः परमार्थतो न भिद्यते । तथा जगदाख्यः पदार्थोऽप्यन्योन्यं पारमार्थिकभेदशून्यैः स्वैकदेशैर्घटादिभिः परमार्थतो न भिद्यत इति ।

ननु घटमठाद्याकाशानामन्योन्यं पारमर्थिकभेदाङ्गीकारात् साध्यविकलो दृष्टान्त इति चेन्न । तेषां स्वभावतो भिन्नत्वे घटादिसम्बन्धात्प्रागपि भेदप्रतीतिः स्यात् । घटग्रहणे दीपादीनामिव

**घटादीनां व्यञ्जकत्वाददोष इति चेन्न । दीपादिव्यञ्जकाभावेऽपि कदाचित्स्पार्शनेन घटप्रतीतिदर्शनात् । कुङ्कुमगन्धस्य घृतमिवैतद्व्यञ्जकम् । तथा च घटाद्यभावेऽपि न प्रतीयते भेद इति चेन्न । तत्र पृथिवीत्वेन गन्धसिद्धावनुद्भूतगन्धाङ्गीकारे गौरवात् घृतमभिव्यञ्जकमङ्गीक्रियते । न चैवं प्रकृते । आकाशभेदे मानाभावात् ।**

(८) (भ.) अथाचेतनानां परस्परभेदाभावेऽनुमानं कारिकया सङ्गृह्णाति ॥ **विमतमिति** ॥ केचित्तु चेतनाचेतनजातं सर्वमपि विमतपदार्थ इत्याहुः । तच्चिन्त्यम् । पूर्वपक्षग्रन्थे वा सिद्धान्तग्रन्थे वाऽचेतनवाचकघटादिपदानामेव श्रवणेनोभयवाचकपदाश्रवणात् । असङ्गतिपरिहारस्य च सङ्गतत्वप्रदर्शनेन प्रागेव दर्शितत्वादिति कारिकां व्याचष्टे — **यथा गगनमिति** ॥ एतेन विमतं जकदाख्यवस्तु तात्त्विकस्वान्तर्भेदहीनम् । अन्योन्यं तात्त्विकभेदशून्यं स्वैकदेशिभूतघटादिमत् । मिथस्तात्त्विकभेदशून्यैः स्वैकदेशिभिर्घटादिभिः परमार्थतो न भिद्यत इति यावत् । कुतः ? मतत्वतो दृश्यत्वात् । यदित्थं दृश्यं तत्तथा तादृशं यद्वस्तु स्वम् । गगनमन्योन्यपारमार्थिकभेदशून्यैर्घटमठाद्याकाशैः परमार्थतो न भिद्यते । इदं च जगत्तथा दृश्यम् । ततो दृश्यत्वात्तथा तत्त्वतः स्वान्तर्भेदहीनमिति कारिकार्थः स्पष्टीकृतो भवति । तेषां स्वभावतो भिन्नत्वे । घटाद्युपाधिकत्वाभाव इति यावत् । न चाकाशांशानां स्वाभाविकत्वेऽपि घटादिसम्बन्धसत्त्व एव हि प्रतीतिः । तेषां प्रदीपवद्व्यञ्जकत्वाङ्गीकारादिति भावेन शङ्कते — **घटादीनामिति** ॥ दीपादिव्यञ्जकाभावेऽपीति । तथा च तद्वदेवात्रापि कदाचिद्घटाद्यभावेऽप्याकाशांशप्रतीतिः स्यात् । न चैवम् । अत एतेन व्यञ्जकाः किन्तूपाधय एवेति भावः । नन्वेते दीपादिवन्नानियतव्यञ्जकाः किन्तु

कुङ्कुमगन्धादिव्यञ्जकघृतवन्नियतव्यञ्जका एव । अतस्तदभावे आकाशे विद्यमानोऽपि भेदो न प्रतीयत इत्याशङ्क्य निषेधति — **कुङ्कुमगन्धस्येति** ॥ युक्तं घृतस्य कुङ्कुमगन्धं प्रति नियताभिव्यञ्जकत्वकल्पनम् । तत्र गन्धस्य सत्त्वेन तदनुपलब्धेः कारणान्तरादर्शनात् । न च कुङ्कुमे गन्ध एव नास्ति । सत्त्वेऽपि पाषाणादाविवानुद्भूतोऽस्तु । अतो घृतसम्बन्धात्तन्निष्ठगन्ध एव कुङ्कुमेऽवभासत इति वाच्यम् । पृथिवीत्वेन हेतुना कुङ्कुमे गन्धस्य सिद्धत्वात् । तस्यानुद्भूतत्वकल्पने मानाभावात् । घृतसम्बन्धेन कुङ्कुमे उद्भूतगन्धस्यैवोपलभ्यमानत्वेन तस्य घृतमात्रनिष्ठत्वकल्पनत्वस्याप्य-प्रामाणिकत्वात् । न चैवं प्रकृते । आकाशे स्वाभाविकभेदसद्भावे प्रमाणा-भावात् । येन घृतवद्घटादेर्नियतव्यञ्जकत्वेन तदभावे भेदस्यानुपलब्धिः स्यादिति भावः ।

(८) (मु.) **विमतमिति** ॥ जगदित्यर्थः । **बाधवारणाय तात्त्विकेति** ॥ सर्वस्यापि जगत्त्वेन जगति जगद्भेदानधिकरणत्वस्य सिद्धत्वेन सिद्धसाधनत्वात् । **तद्वारणाय स्वान्तरिति** ॥ मतत्वतो ज्ञातत्वात् । यद्वत्वं यथाऽऽकाशस्तथेदमित्युपनयः । ततस्तथेति निगमनम् । दृष्टान्तं विवृणोति — **यथेति** ॥ **भेदेति** ॥ एकदेशिरीत्या[1] तु भेदशब्दो विशेषपर इति ज्ञेयम् ॥ **प्रागिति** ॥ उपाध्यभावकालोपलक्षणमेतत् ॥ **व्यञ्जकत्वादिति** ॥ एवञ्च भेदप्रतीतेरुपाध्यन्वयव्यतिरेकानुसरणनियमेऽपि न भेदस्योपाधिजन्यत्व-रूपौपाधिकत्वसिद्धिः । अन्वयव्यतिरेकयोरन्यथासिद्धत्वादिति भावः ॥ **स्पार्शनेनेति** ॥ तथा च दीपाद्यभावकालेऽपि घटसत्त्वं प्रमाणान्तर-

---

1 `दृष्टान्तं विवृणोति ॥ भेदेत्येकदेशरीत्या' मु. । हस्तलिखितपुस्तके `यथेति' इति प्रतीकधारणभागो न दृश्यते ।

वशादङ्गीक्रियते । प्रकृते उपाध्यभावकालीनभेदे प्रमाणाभावादुपाधिना तदुत्पत्तिरेवेति भावः ॥ **कुङ्कुमेति** ॥ यथा स्वाभाविकोऽपि कुङ्कुमगन्धो न कदाऽपि घृताख्यव्यञ्जकं विनोपलभ्यते । तथा भेदोऽप्यस्तु । अन्यथा सोऽपि न स्वाभाविकः स्यादिति भावः ॥ **पृथिवीत्वेनेति** ॥ एवञ्च तद्व्यञ्जकाभावकालेऽपि गन्धस्य प्रत्यक्षानुपलम्भेऽप्युपलम्भोऽस्त्येवेति भावः । नन्वस्तु पृथिवीत्वेन गन्धः स च पाषाणादाविवानुद्भूत एवास्तु । घृतसम्बन्धात्प्रतीयमानस्त्वन्य एव तात्कालिकोपाधिजन्यः । एवञ्च तत्रापि न स्वाभाविकस्योपाध्यनुसरणापत्तिरित्येवं कुतो नाङ्गीक्रियत इत्यत **उक्तमनुद्भूतेति** ॥ धर्मिकल्पनातो धर्मकल्पना वरेति न्यायेन स्थितस्यैव व्यक्तिमात्रतो गन्धान्तरोत्पत्तेर्गुरुत्वादिति भावः ।

(८) (कु.) ॥ **विमतमिति** ॥ तात्त्विकस्वान्तर्भेदतदभावकोटिकसंशयविषयीभूतं सर्वचेतनाचेतनजातमित्यर्थः । अत्र गगनस्य पक्षान्तर्भावेऽपि पृथिवीत्वावच्छिन्नपक्षकेतरभेदानुमाने घटस्यैव दृष्टान्तत्वोपपत्तिः । तद्वदेवांशतः सिद्धसाधनत्वाभावोऽपि पञ्चावयवोपन्यासस्तु न्यायदिशा तथा जगदाख्यपदार्थ इति जगद्रूपसमुदायस्य समुदायिप्रतियोगिकभेदाभावः प्रसङ्गात्साधितः । समुदायिना विष्णुजीवजडानां तात्त्विकभेदाभावस्तु प्रकृतोपयुक्त इति बोध्यम् । अनियतं नियतं वा व्यञ्जकं घटमठादीति विकल्पं मनसि निधाय नाद्य इत्याह — **दीपादीति** ॥ तथेहापि व्यञ्जकाभावेऽपि कदाचिद्भेदप्रतीतिप्रसङ्गादिति शेष इति । द्वितीयमाशङ्कते — **कुङ्कुमगन्धस्येति** ॥ **तत्र पृथिवीत्वेनेति** ॥ इदमुपलक्षणम् । प्रकृते औपाधिकभेदप्रतीतिवत्कुङ्कुमगन्धप्रतीतिरौपाधिकी नाङ्गीकर्तुं शक्या । उपाधौ घृते तादृगन्धाभावादिति बोध्यम् ।

(८) (हु.) जगन्निष्ठभेदसामान्यमिथ्यात्वसाधनं प्रकारान्तरेणाह — **विमतमिति** ॥ सत्यताशून्यस्वघटकपदार्थप्रतियोग्यनुयोगिकभेदसामान्यकत्वतदभावाभ्यां विप्रतिपत्तिविषयीभूतचेतनाचेतनघटितजगत्समुदायः पक्षः । समुदायश्च समुदायिभ्यो भिन्नाभिन्नः कश्चिदपेक्षाबुद्धिविषयत्वविशिष्टः । अतो गगनस्य तादृशविशिष्टरूपत्वाभावेन पक्षबहिर्भावादृष्टान्तत्वोपपत्तिः ॥ **तात्त्विकेति** ॥ पूर्वोक्तरीत्या परमार्थ इत्यर्थः । अनुमानस्य भास्कराभिमतत्वे तन्मते चापारमार्थिकभेदाभावेन तस्याव्यावृत्तत्वापत्त्याऽनौपाधिकत्वेनेत्यर्थः । मतद्वयेऽपि व्यधिकरणधर्मावच्छिन्नाभाव एव साध्यम् । भास्करमतेऽनौपाधिकभेदस्याप्रसिद्धेः ॥ **स्वान्तरिति** ॥ स्वांशप्रतियोग्यनुयोगिकभेदेत्यर्थः । घटं प्रति तन्तूनामिव जगद्रूपविशिष्टरूपसमुदायस्य समुदायिनां घटादीनामवयवस्थानीयानामंशत्वमेव महाकाशं प्रत्यौपाधिकघटाद्यवच्छिन्नाकाशानामेवेति हृदयम् । घटादिना भेदस्य गगने प्रतिवादिभिस्तात्त्विकस्य स्वीकाराद्दृष्टान्तासिद्धिवारणाय — **स्वांशप्रतियोगिकेति** ॥ समुदायरूपे विशिष्टैकदेशभेदानङ्गीकारात्सिद्धसाधनतावारणाय — **स्वांशानुयोगिकेति** ॥ स्वांशप्रतियोगिकस्वांशानुयोगिकभेदा यावन्तस्तत्तन्निष्ठतात्त्विकत्वावच्छिन्नभेदाभावकूटवदिति साध्यार्थः । उद्देश्यसर्वभेदमिथ्यात्वसिद्धये कूटस्य साध्यत्वानुसरणम् । घटे आरोपितस्य स्वभेदस्योक्तधर्मावच्छिन्नाभावस्य महारजनाद्युपाधिकभेदस्योक्तरूपाभावस्य[1] च सिद्धत्वेन सिद्धसाधनं स्यात् । अतस्तद्वारणं वा (तत्)प्रयोजनम् । मतत्वत इति दृश्यत्वादित्यर्थः । ब्रह्मण्यप्युक्तसाध्यं वादिप्रतिवादिनोः सम्मतमिति नोक्तसाध्यं प्रति

---

[1] `महारजताद्यौपाधिक-' मु.

दृश्यत्वहेतौ(तोः) व्यभिचारप्रसक्तिः । विषयतया ज्ञानमेव हेतुरतो न ज्ञानविषयत्वरूपहेतुघटकज्ञानवैय्यर्थ्यशङ्का । यदित्थं तत्तथेत्युदाहरणम् । गगने उक्तसाध्यं साधयित्वा तद्दृष्टान्तीकरिष्यामीत्यर्थः । तथेदमित्युपनयः । ततस्तथेति निगमनम् । कारिकां विवृणोति — **यथेत्यादिना** ॥ **भेदप्रतीतिप्रसङ्गादिति** ॥ इन्द्रियसन्निकर्षसद्भावे तदप्रतीतौ बीजाभावादिति भावः । गगनस्य चक्षुरवेद्यत्वेऽपि साक्षिवेद्यत्वादापादनं युक्तमेव । पटादेश्चक्षुर्वेद्यत्वेन तुल्यन्यायेन तत्रापि पटांशानां स्वाभाविकत्वाङ्गीकारे चाक्षुषत्वापादनसम्भवस्तत्र द्रष्टव्यः । व्यञ्जकत्वात्तत्प्रत्यक्षसामग्रीघटकत्वाद् व्यञ्जकस्यानुगतस्याभावेन यत्किञ्चिद्व्यञ्जकाभावस्तत्प्रत्यक्षाभावं प्रति प्रयोजकतया तं प्रति व्याप्य उत स्वव्यञ्जकसामान्याभाव इति विकल्पौ हृदि निधायाद्यं दूषयति — **दीपेति** ॥ द्वितीयं शङ्कते — **कुङ्कुमेति** ॥ घृतमेव यद्व्यञ्जकं तद्विना तत्प्रत्यक्षाभाव इत्यन्वयव्यतिरेकसिद्धव्यञ्जकताकघृताभावे स्वव्यञ्जकसामान्याभावप्राप्त्या तदभावकाले यथा न गन्धप्रत्यक्षं तथेहापि परिमाणविशेषवद्द्रव्यत्वेनांशविशेषप्रत्यक्षत्वावच्छिन्नं प्रति नियमेन हेतुत्वाङ्गीकाराद्घटाद्यभावे स्वव्यञ्जकत्वावच्छिन्नाभावसत्त्वात्प्रत्यक्षाभावो युक्त एवेति भावः । प्रत्यक्षकारणीभूतपदार्थप्राक्काले तस्य पूर्वं सत्त्वेन दृढतरप्रमाणसत्त्वे व्यञ्जकसमवधानात्प्रत्यक्षव्यञ्जकस्य तदुत्पत्तिप्रयोजकत्वबाधाद्व्यञ्जकस्य तत्प्रत्यक्षजनकत्वं कल्पयति । तदभावे तु तज्जनकत्वमेव कल्पयति । अन्यथा दण्डादिसामग्र्या घटप्रत्यक्षोत्पत्तिहेतुत्वमेव स्यान्न घटोत्पादकत्वम् । तथा च घटादिसम्बन्धात्पूर्वमंशसत्त्वे प्रमाणाभावाद्घटादिसम्बन्धकालेंऽशप्रत्यक्षम् । अंशस्य घटादिजन्यत्वमेव कल्पयतीत्याह — **तत्रेत्यादिना** ।

(८) (का.) सर्वाभेदसाधकानुमानान्तरं प्रदर्शयंस्तत्प्रयोगप्रकारज्ञापनाय तार्किकरीत्या [1]पञ्चावयवप्रयोगरूपां प्राचीनकारिकामुदाहरति — विमतमिति ॥ तां विवृणोति — यथेति ॥ तथाच विमतं जगत् [2]परस्परप्रतियोगिकपारमार्थिकभेदशून्यस्वैकदेशप्रतियोगिकपारमार्थिकभेदशून्यं दृश्यत्वात् । यद् दृश्यं तत्तादृशसाध्यवत् । यथा भूताकाशम् । दृश्यं च जगत् । तस्मात्तादृशसाध्यवदिति प्रयोगार्थ उक्तो भवति । अत्र [3]सामान्यतो भेदशून्यत्वमप्रसिद्धम् । अतः स्वैकदेशप्रतियोगिकेति ।

---

[1] ॥ पञ्चावयवप्रयोगरूपामिति ॥ विमतं तात्विकस्वान्तर्भेदहीनमिति प्रतिज्ञा । मतत्वत इति हेतुः । यदित्थं तत्तथा यद्वत् खमिति उदाहरणम् । तथेदमिति उपनयः । ततस्तथा इति निगमनम् ।

[2] ॥ परस्परप्रतियोगिकेत्यादि ॥ दृष्टान्ते गगने इत्थं समन्वयः - स्वं = गगनं, तदेकदेशाः = घटाकाशमठाकाशादयः । तेषु परस्परं प्रातिभासिकभेदसद्भावेऽपि पारमार्थिकभेदः नास्तीति ते परस्परप्रतियोगिकपारमार्थिकभेदशून्या जाताः । तेषां गगनस्य च पारमार्थिकभेदो नास्तीति तादृशस्वैकदेशप्रतियोगिकपारमार्थिकभेदशून्यत्वं गगने आयातम् । पक्षे जगति एवं समन्वयः - स्वं = जगत्, स्वैकदेशाः = घटपटादयः । तेषु परस्परं पारमार्थिकभेदो नेति ते परस्परप्रतियोगिकपारमार्थिकभेदशून्याः । तेषां जगतश्च पारमार्थिकभेदो नास्तीति जगति उक्तसाध्यमस्तीति ।

[3] ॥ सामान्यतो भेदशून्यत्वमप्रसिद्धमिति ॥ द्वैतमते सर्वपदार्थेषु तदितरभेदसद्भावात् भेदत्वावच्छिन्नभेदशून्यत्वमप्रसिद्धम् । अतः स्वैकदेशप्रतियोगिकत्वं भेदे निवेश्यम् । स्वैकदेशप्रतियोगिकभेदाभावः द्वैतिरीत्या परमात्मनि प्रसिद्ध इति न साध्याप्रसिद्धिः । किन्तु मायावादिरीत्या बाधः, एकदेशैकदेशिनोः व्यावहारिकभेदस्वीकारात् । अतः भेदे पारमार्थिकत्वं देयम् । एकदेशैकदेशिनोः पारमार्थिकभेदः न स्वीकृत इति तदभावसाधने न बाधः । तावत एव साधने अर्थान्तरता । प्रकृते खलु परस्परं एकदेशयोः एकदेशैकदेशिनोश्च भेदाभावः उद्देश्यः । स न सिध्यति, एकदेशानां परस्परं

तादृशव्यावहारिकभेदसत्त्वाद्बाधवारणाय पारमार्थिकेति । मिथो विभिन्नैकदेशैरभेदसिद्ध्याऽर्थान्तरवारणाय शून्यान्तमेकदेशविशेषणम् । पूर्ववदप्रसिद्धिवारणाय परस्परेत्यादि । न च पारमार्थिकभेदाप्रसिद्ध्या साध्याप्रसिद्धिः । [1]प्रतियोगिनः परप्रसिद्धिमात्रेण निषेधसाधनस्योक्तत्वात् । यदि तु मिथः स्वैकदेशभेदस्य यः पारमार्थिकत्वेनाभावस्तद्विशिष्टस्वैकदेशभेदस्य पारमार्थिकत्वेनाभावः साध्यस्तदा नाप्रसिद्धिशङ्काऽपि । व्यधिकरणधर्मावच्छिन्नभेदाभावप्रसिद्धेः । न च निरंशे गुणादौ व्यभिचारः । निरंशपदार्थस्यैवानभ्युपगमात् । अभ्युपगमे वा सांशत्वेन मतत्वस्यैव हेतुत्वात् ।

नन्वाकाशांशानां घटादिसम्बन्धात् पूर्वं भेदरूपविषयसत्त्वेऽपि कारणान्तराभावादेव न भेदप्रतीतिप्रसङ्ग इत्याशङ्कते — **घटग्रहणे दीपादीनामिवेति** ॥ **दीपादिव्यञ्जकाभावेऽपीति** ॥ एककारणाभावेऽपि कारणान्तरेण कार्योत्पत्तिदर्शनाद्घटादिव्यञ्जकाभावेऽपि कदाचिद्भेदप्रतीतिः स्यादिति भावः ।

व्यञ्जकत्वपदेन न [2]प्रतीतिविशेषकारणत्वमात्रं विवक्षितम् । किन्तु

---

भेदमङ्गीकृत्यापि प्रकृतसाध्यपर्यवसानसम्भवात् । अतः स्वैकदेशेषु परस्परप्रतियोगिकपारमार्थिकभेदशून्यत्वं देयम् ।ज् तत्रापि भेदशून्यत्वमात्रनिवेशे साध्याप्रसिद्धिः । तद्वारणाय परस्परप्रतियोगिकत्वस्य भेदे निवेशे पूर्ववद्बाधः । अतः पारमार्थिकत्वं भेदे निवेश्यम् - इति भावः ।

[1] ॥ **प्रतियोगिनः परप्रसिद्धिमात्रेण निषेधसाधनस्योक्तत्वादिति** ॥ पारमार्थिकशुक्तिरजतानङ्गीकारेऽपि यथा परप्रसिद्धिमात्रेण पारमार्थिकशुक्तिरजतं नास्तीति वक्तुं शक्यते तथेति प्राक्प्रदर्शितरीत्येति भावः ।

[2] ॥ **प्रतीतिविशेषकारणत्वमिति** ॥ दीपः घटचाक्षुषं प्रत्येव कारणम्, न तु

तत्सामान्यकारणत्वम् । अतो नोक्तदोष इत्याशयेन शङ्कते — कुङ्कुमेति ॥ स्यादेवं बाधकपरिहारो यदि कुङ्कुमगन्धादाविव भेदे प्रमाणं स्यात् । तदेव तु नास्तीत्याह — तत्रेति ॥ यद्यपि पृथिवीत्वं सुरभ्यसुरभ्यवयवारब्धावयविनि गन्धं व्यभिचरति । तथापि गन्धप्रतिबन्धकशून्यत्वे सति पृथिवीत्वस्य हेतुत्वं बोध्यम् । दर्शितस्थले च विरुद्धगन्धरूपप्रतिबन्धकसत्वान्न व्यभिचारः । नन्वेवं गन्धमात्रसिद्धावपि घृताभिव्यङ्ग्योद्भूतगन्धस्य कथं प्रमाणसिद्धत्वमत आह — अनुद्भूतेति ॥ गौरवादिति ॥ घृतसम्बन्धे सति पूर्वगन्ध-विनाशस्योद्भूतगन्धोत्पादस्य च कल्पनीयतया गौरवादित्यर्थः । न चाविद्यमान एवोद्भूतगन्धो घृतोपाधिसम्बन्धात् प्रतीयतामिति वाच्यम् । बाधकं विना प्रतीतेर्भ्रमत्वायोगात् । अत्र `परिशेषेणोद्भूतगन्धस्यैव सिद्ध्या घृतसम्बन्धात् प्रागपि तत्प्रतीतिवारणाये'ति पूरणीयम् ॥ मानाभावादिति ॥ न च घटमठाद्याकाशभेदप्रतीतिरेव तत्र मानमिति वाच्यम् । तस्य भ्रमत्वेनाप्युपपत्तेर्वस्त्वन्तरकल्पने गौरवादिति भावः । ||

(८) (श.) - इदानीमनात्मभेदसाधकं पञ्चावयवोपेतानुमानं बुद्ध्या-रोहाय कारिकया सङ्गृह्णाति — विमतमिति ॥ आत्माकाशाभ्यामन्य-दित्यर्थः । तत्वतः स्वान्तर्भेदहीनं परमार्थतोऽन्योन्यभेदरहितैकदेशैः परमार्थतो भेदरहितम् । मतत्वतो दृश्यत्वात् । यदित्थं यद्दृश्यम् । तत्तथा तत्वतः स्वान्तर्भेदरहितम् । यद्वत्खं यथाऽऽकाशम् । तथेदम् आकाशवदिदं दृश्यम् । ततो दृश्यत्वात्तथा तत्वतः स्वान्तर्भेदहीनम् । कारिकां विवृणोति

---

घटप्रतीतिसामन्यं प्रति, अन्धकारे घटस्पार्शनदर्शनात् । अतस्तस्य प्रतीतिविशेष-कारणत्वमात्रं वर्तते । प्रकृतेऽस्मभिः प्रतीतिसामन्यकारणत्वरूपं व्यञ्जकत्वं विवक्षितमिति भावः ।

— **यथेति** ॥ अङ्गीकारात् भेदवादिना मया । घटमठाकाशयोः परमार्थतो भिन्नत्वे परमार्थतोऽन्योन्यभेदशून्यस्वैकदेशैः परमार्थतो भेदराहित्य-रूपसाध्यस्याकाशेऽभावात्साध्यविकलो दृष्टान्त इत्यर्थः ॥ **घटादि-सम्बन्धात्प्रागिति** ॥ घटाकाशभेदस्य घटौपाधिकत्वे खलु घटाख्यो-पाधिसम्बन्धः प्रतीयते तदभावे तु नेति वक्तुं शक्यते । स्वाभाविकत्वे तूपाधिसम्बन्धानपेक्षणात्तदभावेऽपि प्रतीतिरनिवार्येति भावः ।

ननु घटाकाशभेदस्य घटौपाधिकत्वाभावेऽपि घटाधीनप्रतीतिकत्वं युज्यते । घटस्य तद्व्यञ्जकत्वात् । व्यङ्ग्यप्रतीतेः व्यञ्जकाधीनत्वात् । यथा घटस्य प्रदीपोपाधिकत्वाभावेऽपि प्रदीपाद्यभिव्यङ्ग्यत्वेन तदधीनप्रतीतिकत्व-मिति शङ्कते — **घटादीनामिति** ॥ **अदोष इति** ॥ तदभावेऽपि प्रतीतिप्रसङ्गाख्यदोषो नेत्यर्थः । अस्तु घटस्याकाशभेदव्यञ्जकत्वम् । तथापि घटाभावेऽपि तत्प्रतीतिः स्यादेव । नच व्यञ्जकाभावे कथं व्यङ्ग्यप्रतीतिरिति वाच्यम् । प्रदीपाख्यव्यञ्जकाभावेऽप्यन्धकारे त्वगिन्द्रियेण घटाख्यव्यङ्ग्यप्रतीतिदर्शनेन तादृशनियमाभावादिति परिहरति — **नेति** ॥ ननु द्विविधं व्यजकं नियतमनियतञ्च । व्यङ्ग्यप्रतीतौ यन्नियमेन वर्तते तन्नियतम् । यथा कुङ्कुमगन्धप्रतीतौ नियमेन स्थितं गोघृतम् ।

व्यङ्ग्यप्रतीतौ यन्नियमेन न वर्तते तदनियतम् । यथा घटस्य प्रदीपादिकम् । तत्र कुङ्कुमगन्धस्य गोघृतमिव घटकाशभेदस्य घटो नियतव्यञ्जकत्वेनाङ्गीक्रियते । अतस्तदभावेऽपि न तत्प्रतीतिप्रसङ्ग इति शङ्कते — **कुङ्कुमगन्धस्येति** ॥ भेदः घटाकाशभेदः । परिहरति — **नेति** ॥ सम्भवत्येव घृतस्य कुङ्कुमगन्धनियताभिव्यञ्जकत्वं तदभावे तस्यानुपलब्धेः । नच न घृताभावात्कुङ्कुमगन्धानुपलब्धिः किन्तु कुङ्कुमे गन्धस्यैवाभावादिति

वाच्यम् । कुङ्कुमं गन्धवत् पृथिवीत्वादित्यनुमानेन तत्र गन्धस्य सिद्धत्वेन गन्धाभावाद्गन्धानुपलब्धिरिति वक्तुमयुक्तत्वात् । नच कुङ्कुमगन्धस्यानुमानसिद्धत्वेऽपि तस्य पाषाणगन्धवदनुद्भूतत्वेन तदनुपलब्धिरपि सम्भवतीति वाच्यम् । घृतसम्बन्धेन गन्धप्रतीतेरनुभवसिद्धत्वेन गन्धस्यानुद्भूतत्वाङ्गीकारे प्रामाणिकपरित्यागाप्रामाणिककल्पनाख्यगौरवप्रसङ्गादित्यर्थः । नन्वत्राकाशभेदस्य प्रमाणसिद्धत्वेन घटस्याभिव्यञ्जकत्वं कल्प्यत इत्यत आह - **नचेति** ॥ येन घटस्य व्यञ्जकत्वं स्यादिति भावः ।

**(९) ननु कथमाकाशभेदे प्रमाणाभावः । इह पक्षी नेह पक्षीति प्रतीतिरेव मानमिति चेन्न । आलोकमण्डलविषयत्वात्तस्याः । इहाऽलोक इत्यत्रालोकावयवानामिहेति निर्देशात् । नेहाऽलोक इत्यत्र गगनस्य निर्देशात् । इहाऽलोक इति प्रतीतिरिह गगनमिति प्रतीतिवदौपचारिकी वा ।**

(९) (भ.) ॥ **इह पक्षीति** । तथाच पक्ष्याश्रय[1] एको भागस्तदभावाश्रय एको भाग इति भागभेदः सिध्यतीति भावः ॥ **आलोकमण्डलेति** ॥ तथा चेहेति नाकाशभागप्रतीतिः किन्त्वालोकमण्डलमेवेहप्रतीतिविषय इति भावः । एवं तर्हीहाऽलोक इत्यत्रेहप्रत्ययस्य का गतिः । नहि तत्राप्यालोकमण्डलमेवेहेति प्रतीयत इति वक्तुं शक्यम् । आत्माश्रयप्रसङ्गात् । अतस्तत्राकाशभाग एवेहप्रत्ययगोचर इति वाच्यम् । तद्वदिह पक्षीत्यत्रापि स एव विषयः किन्नाङ्गीक्रियत इत्याशङ्क्य तस्याप्यन्यथोपपत्तिमाह — **नेहाऽलोक इतीति** ॥ इह तन्तुषु पट इतिवदिहाऽलोकावयवेष्वालोक

---

[1] `पक्षाश्रय' मु.

इति प्रतीतिरुपपद्यत इति भावः । तर्हि नेहाऽलोक इत्यालोकाभावः प्रतीयते । न च तत्राप्यालोकावयवा इहप्रत्ययविषयः[1] । आलोकावयवेषु भासमानेषु सत्सु नेहाऽलोक इति प्रतीत्यनुपपत्तेः । अतस्तत्राकाशभाग एवेहप्रत्ययविषय इत्यङ्गीकार्यमित्यत आह — **नेहाऽलोक इति** ॥ तत्र गगनमेवेहप्रत्ययविषयो न तद्भाग इत्यर्थः । नन्विहाऽलोक इत्यत्रालोकावयवानां विषयता । नेहाऽलोक इत्यत्र गगनस्य विषयतेति द्वैविध्यकल्पने न किञ्चिन्मूलम् । विना स्वदृष्टिपक्षपातादित्यस्वरसादाह — **इहाऽलोक इति प्रतीतिरिति** ॥ यथा गगनस्य गगनाश्रयताभावेऽपीह गगनमिति गगनाश्रयताप्रतीतिरौपचारिकी एवमालोकस्यालोकाश्रयत्वाभावेऽपीहाऽलोक इत्यालोकस्यैवालोकाश्रयत्वेन प्रतीतेरौपचारिकत्वोपपत्त्या नानया प्रतीत्या गगने भागभेदसिद्धिरिति भावः । अत्र प्रतीतेरौपचारिकत्वं नाम भेदाभावेऽप्याधाराधेयभावावगाहित्वेनामुख्यार्थविषयकत्वम् । आधाराधेयभावो हि भेदसमानाधिकरणो मुख्यः । तदसमानाधिकरणस्त्वमुख्यो विवक्षितः । एवञ्चोपचारस्य शब्दधर्मत्वेन प्रतीतेरौपचारिकत्वं कथमिति शङ्कानवकाशः । केचित्त्वौपचारिकशब्दप्रयोगजनकीभूता बुद्धिरौपचारिकीत्युपचर्यत इत्याहुः । तन्न प्रतीतिसमानाकारस्य प्रयोगस्यौपचारिकत्वायोगेन तज्जनकबुद्धेरौपचारिकतायाः सुतरामयोगात् ।

(९) (मु.) ॥ **तस्या इहेति प्रतीतेरित्यर्थः** । यद्यप्यौपाधिकविषयत्वादित्येव वक्तव्यम् । परेण पक्षितदभावोपलक्षितयोरुपाधित्वाङ्गीकारात् । तथाऽप्यप्रत्यक्षत्वस्यापि घटनाय केषाञ्चिदुत्प्रेक्षावादोऽय-

---

1 '-वयवेहप्रत्यय' मु.

मित्यदोषः ॥ **इहाऽलोक इति** ॥ अत्र पूर्ववदालोकप्रवेशे आत्माश्रयादिति भावः । नन्विहाऽलोकावयव इत्यत्रानुपपत्तिरित्यस्वरसादाह — **इहेति** ॥ औपचारिकीति । इदं च स्वरीत्या वस्तुत'स्त्वीशो दिशश्च कालश्च स्वगता एव सर्वदे'ति वचनात्सा प्रतीतिर्मुख्यैवेति ज्ञातव्यम् ।

(९) (कु.) आकाशभेदे मानमाशङ्कते — **ननु कथमिति** ॥ यद्यप्यनया प्रतीत्याऽऽकाशे पाक्षितदभावौ गृह्येते न तद्भेद इति कथमियं भेदे प्रमाणम् । तथाऽपि प्राचीनमते द्रव्यस्य स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वरूपाव्याप्यवृत्तित्वाभावात् । एकत्र पक्षितदभावाधारत्वासम्भवात् अनुमानमुद्रयाऽनया भेदसिद्धिः । न चेयं पक्षिसंयोगतदभावविषयेति वक्तुं युक्तम् । शब्दस्येव प्रतीतेर्व्याख्यानायोगात् । इदं पक्षिमन्नेदं पक्षिमदिति भेदप्रतीतिरपि बोध्या ॥ **आलोकमण्डलेति** ॥ अधिकरणतयाऽऽलोकमण्डलविषयत्वादस्या नानया आकाशभेद इति भावः । नन्विहाऽलोको नेहाऽलोक इति प्रतीतिराकाशभेदसाधिका । न चात्रेहेत्यालोकनिर्देशः सम्भवति । आत्माश्रयादित्यत आह — **इहाऽलोक इति** ॥ अत्रापि न गगनमधिकरणतया विषयः । गगनस्य नीरूपत्वेन चाक्षुष्यामस्यां विषयताऽयोगात् । नियतोपनायकाभावेनोपनयकल्पनायोगात् । आलोकावयवानामेव विषयता[1] युज्यत इति भावः ॥ **औपचारिकीति** । ननूपचारो गौणी वृत्तिर्लक्षणा तदतिरिक्ता तदन्तर्भूता वा । सा तु शब्दवृत्तिः कथं प्रतीतौ स्यादिति चेन्न । यत औपचारिकशब्दप्रयोजकीभूता बुद्धिरौपचारिकीत्युपचर्यते । एवं नेह पक्षीत्यादौ गगनस्याधिकरणत्वं वदत इह गगनमिति प्रतीतावत्माश्रयेण गगनस्य गगनाधिकरणत्वासम्भवेन

---

[1] `विषयतया' मु.

यथाकथञ्चिद्भेदेऽप्याधाराधेयभावोऽमुख्यो वक्तव्यस्तद्वदेव प्रकृत इति भावः ।

(९) (हु.) ॥ इह पक्षीति । पक्षितदभावयोर्विरोधेनैकप्रतीतावेकदेश-भानानुपपत्तेरियं प्रतीतिराकाशांशरूपदेशयोर्भेदं विषयीकृत्य तत्र भावाभावौ विषयीकरोतीत्यंशभेदे प्रत्यक्षमेव मानमिति भावः । ननूक्तप्रतीतेरंश-भेदविषयकत्वेऽपि न स्वाभाविकांशभेदविषय(क)त्वं सिध्यति । पक्षिरूपो-पाधिकृतांशे भेदस्यैव विषयीकरणसम्भवात् । मैवम् । पक्षिसम्बन्धभागे पक्षिरूपोपाधिकृतभेदभानाङ्गीकारेऽपि तद्रहितभागे मूर्तद्रव्यसम्बन्धाभावेन तत्रैतद्देशभेदस्य वक्तुमशक्यत्वात्तत्राविद्यमानस्य तद्भेदकत्वेऽतिप्रसङ्गात् । न च पक्ष्यभाव एव भेदकः । पूर्वमपि तत्र सत्त्वेन तदापि[1] त्वन्मते भेदप्रसङ्गेन पूर्वमेव भिन्नतद्भानापत्तेः । न चेष्टापत्तिः । अनादितस्तत्सत्त्वे उपाधिकृतत्वकल्पने गौरवप्रसङ्गेन स्वाभाविकत्वसिद्धेरित्याशयात् ॥ **आलोकमण्डलेति** ॥ प्रतीतेश्चाक्षुषत्वानुभवेन चक्षुर्गोचरालोक-विषयकत्वस्यैव युक्तत्वाद्गगनस्याचाक्षुषत्वात् । न चैतत्प्रतीत्याऽऽलोके स्वाभाविकांशसिद्धौ गगनेऽपि तन्न्यायेन तत्सिद्धिरिति वाच्यम् । आलोकमण्डलस्य तज्जन्यत्वेन तदंशानां पटांशानामिव स्वांश्यालोक-मण्डलजनकाधीनत्वादिति भावः । नन्वेवमपीहाऽलोको नेहाऽलोक इत्यत्र गगनांशभेदभानं विना गत्यभावः । आलोके आलोकस्य वृत्तित्वाभावा-दालोकभेदमादाय तदुपपादनेनेहाऽलोक इति प्रतीत्यनुपपत्तिरित्याशङ्क्याधि-करणतया भासमानविषयभेदं दर्शयति — **इहाऽलोक इत्यादि** ॥ ननु आलोकावयवे[2] आलोकस्य समवायेन भासमानत्वेनेत्यत्र[1] गगनं निर्दिश्य

---

[1] `तदा' मु.

[2] `न चालोकावयवे' मु.

तत्सम्बन्धावच्छिन्नाभावो भासत इति वाच्यम् । तथा चालोकमण्डल-सम्बद्धगगनेऽप्युक्तसम्बन्धावच्छिन्ना-लोकाभावसत्त्वान्नेहाऽलोक इति प्रतीत्यापत्तिः । गगनस्याचाक्षुषत्वेनाधिकरणांशे चाक्षुषत्वानुभव-विरोधश्चेत्यत आह — **इह गगनमितिवदिति** ॥ प्रतीतिस्तु शाब्दी वा मानसी वेति अन्यदेतत् । सर्वथा स्वस्य स्वाधिकरणताया आत्माश्रयप्रसङ्गेन बाधिततया तद्देशस्थमूर्तान्तरं सम्बन्धं विषयीकरोतीति वक्तव्यम् । तद्वदिहाऽलोक इति प्रतीतिरिति भावः । औपचारिकी मुख्याधिकरणत्वाविषयिणी घटे ज्ञानं वटे गाव इति शब्दोल्लेखि-प्रतीतिवदमुख्यसम्बन्धान्तरविषयिणीत्यर्थः[2] । तेनोपचारपदार्थ-भूतामुख्यवृत्त्योः शब्दाश्रितत्वेन प्रत्यक्षे तदसम्भवेऽपि न क्षतिः ॥

(९) (का.) मानमित्यस्याकाशभेद इत्यादिः । यद्यपीह पक्षी, नेह पक्षीति प्रतीतेः पक्षितदभावयोराकाशवृत्तित्वावगाहितया नाकाशभेदे मानत्वम् । तथापि[1] तादृशप्रतीतिर्विभिन्नदेशवृत्तित्वविषया, विरुद्धधर्म-विषयत्वात् । इह घटत्वं नेह घटत्वमिति प्रतीतिवदित्यनुमानोत्थापकतया[3] मानत्वं बोध्यम् । वस्तुतः पक्ष्यभावस्य पक्षिमद्देशभेदसमनियततया तदभिन्नत्वात्तदवगाहिप्रतीतेस्तत्र मानत्वमित्यवधेयम् ।

अत्र यद्यपि अविद्यमानमेवाकाशभेदमालोकाद्युपाधिर्भासयतीति वक्तुं

---

1 `भासमानत्वेन नेहेत्यत्र' इति पाठेन भाव्यमिति भाति ।

2 `-णीत्याहुः' हु.

3 ॥ अनुमानोत्थापकतयेति ॥ दृष्टान्तभूतायां प्रतीतौ घटत्व-तदभावरूपविरुद्धधर्म-विषयकत्वरूपहेतुः वर्तते । तथा, इयं प्रतीतिः घटत्वं घटे, घटत्वाभावं घटेतरस्मिन् अवगाहते इति साध्यमपि वर्तते । तद्वत् इह पक्षी नेह पक्षीति प्रतीतिरपि इति भावः ।

शक्यम् । तथापि [1]लाघवमनुसृत्याह — **आलोकेति** ॥ नन्वेवमपीहाऽलोको नेहाऽलोक इति प्रतीतिरेव मानान्तरमास्ताम् । स्वस्य स्वाधारत्वानुपपत्त्या तस्याः पूर्ववदालोकमण्डलविषयत्वासम्भवादित्यत आह — **इहाऽलोक इति** ॥ [2]गगनस्यालोकाधारत्वाभावेन तद्विषयत्वासम्भवादिति भावः ॥ **गगनस्येति** ॥ आलोकावयवानाम् आलोकाभावाधारत्वासम्भवेन तद्विषयत्वायोगादिति भावः । नन्वेवमिहाऽलोक इति संयोगसंसर्गावगाहिप्रत्ययो न स्यात् । अवयवावयविनोस्तदभावात् । न च गगनस्यैव तद्विषयत्वम् । गगनालोकयोः संयोगसत्त्वेऽपि संयोगेनाधाराधेयभावाभावादत आह — **औपचारिकी वेति** ॥ गगनसम्बन्धित्वरूपेह शब्दगौणार्थविषयणीत्यर्थः । प्रयोजनाभावे कथमोपचारिकप्रयोग इत्यत उक्तम् — **इह गगनमिति प्रतीतिवदिति** ॥ यथा तत्रेदमित्यर्थ इहेति प्रयोगो रूढोपचारत्वान्न प्रयोजनविशेषमपेक्षते तथेहापीत्यर्थः । यद्वा, नन्ववयवावयविनोराधाराधेयभावव्यवहारोऽनुभवविरुद्धः । कपाले घट इत्यादिप्रतीतेरसिद्धेः । अतः कथमालोकावयवानामिहेति निर्देश इत्यत आह — **औपचारिकी वेति** ॥ अस्याप्ययमालोक इत्येवार्थ इति भावः ।

(९) (श.) कथमित्याक्षेपे । आकाशभेदे मानाभावः कथं न कथमपि । किं त्वस्त्येवेत्यर्थः । किं तन्मानमित्यत आह — **इह पक्षीति** ॥

---

[1] ॥ **लाघवमनुसृत्येति** ॥ इह पक्षीत्यत्र इहेति पदस्य आलोकोपाधिकाकाशः अर्थ इत्युक्ते गौरवम्, आलोको विषय इत्युक्ते लाघवमिति भावः ।

[2] ॥ **गगनस्यालोकाधारत्वाभावेनेति** ॥ द्रव्ययोराधाराधेयभावे ऊर्ध्वाधरीभावः प्रयोजकः । गगनालोकयोः स नास्तीति भावः ।

इयं हि प्रतीतिरिहेति निर्दिष्टाकाशे पक्षितदभावौ गृह्णाति । नह्येकस्मिन्नाकाशे तयोः सत्त्वं युक्तम् । प्रतियोगितदभावयोरेकत्र विरोधात् । अत आकाशप्रदेशे भेदसिद्धिरिति भावः । इयं प्रतीतिरालोकमण्डले पक्षितदभावौ गृह्णात्यतो नाकाशभेदे मानमित्याह — **आलोकेति** ॥ नन्विहाऽलोको नेहाऽलोक इति प्रतीतिरिहेति निर्दिष्टाकाशे आलोकतदभावौ गृह्णाति । न चात्रापीहेत्यालोकमण्डलनिर्देश इति वाच्यम् । तथात्वे आलोके आलोक इत्यापत्त्याऽऽत्माश्रयात् । अतोऽनया प्रतीत्याऽऽकाशभेदसिद्धिरित्यत आह — **इहाऽलोक इति** ॥ गगनस्येत्यनन्तरमिहेतीत्यनुवर्तते । ननूभयत्रापीहेत्येकनिर्देशस्यानुभवसिद्धत्वेनोक्तरीत्या व्यावस्थाभ्युपगमेऽनुभवविरोध इत्यपरितोषादाह — **इहाऽलोक इति** ॥ नेहाऽलोक इतिवदिहाऽलोक इत्यत्रापीहेति गगनस्यैव निर्देशः । नच प्रतियोगितदभावयोरेकाधिरणत्वानुपपत्तिः । गगनस्यालोकाधिकरणत्वानङ्गीकारात् । नचेहाऽलोक इति प्रतीत्यनुपपत्तिः । गगने गगनाभावेऽपीह गगनमितिवद्गगने आलोकाभावेऽपीहालोक इत्यौपचारिकप्रतीत्यङ्गीकारे बाधकाभावादिति भावः । यद्वेहाऽलोक इति प्रतीताविहेत्यालोकावयवनिर्देश इति वक्तुं न शक्यते । लौकिकानामवयवाश्रिततयाऽवयविबुद्धेरभावात् । नहि लोका हस्तादिषु शरीरमिति व्यवहरन्ति । किन्तु तदात्मतामेवेत्यत आह — **इहाऽलोक इति** ॥ इहाऽलोक इत्यत्रापीहेत्यालोकस्यैव निर्देशः । नचात्माश्रयः । अस्याः प्रतीतेरौपचारिकत्वाङ्गीकारात् । उपचारप्रयोजनं वाच्यमित्यत उक्तमिह गगनमिति प्रतीतिवदिति । गगने गगनाभावेऽपि यथेह गगने गगनमिति प्रतीतिस्तथेत्यर्थः । रूढोपचारत्वान्न प्रयोजनापेक्षेति भावः ।

(१०) नन्वथाऽपि घटादिरूपोपाधिः किं गगनमात्रं स्पृशति उत गगनैकदेशम् । नाद्यः सर्वोऽपि घटाकाशः स्यात् । द्वितीये स्वाभाविकांशसिद्धिरिति चेन्न । सर्वोऽप्याकाशो घटाकाशः स्यादिति कोऽर्थः । किं घटसम्बन्धी स्यादिति उत घटपरिमाणसदृशपरिमाणः स्यादिति, सर्वोऽपि महाकाशः घटाकाशः स्यादिति वा । नाद्यः । इष्टापत्तेः । न द्वितीयः । उपाधेः प्रतिबिम्बपक्षपातिस्वाभाव्येन (प्रतिबिम्बपक्षपातित्वेन) (प्रतिबिम्बपक्षपातित्वावश्यम्भावेन) घटस्योपाधेः प्रतिबिम्बस्थानीयाकाशे स्वगतपरिमाणप्रतीत्याधानात् । महाकाशं तु बिम्बस्थानीयमिति (बिम्बस्थानापन्नमिति) न तत्र स्वधर्मोपरञ्जकः । अत एव न तृतीयः । उपरञ्जितघटधर्मत्वस्य घटाकाशपदप्रवृत्तिनिमित्तस्य परिच्छिन्नाकाश इव महाकाशेऽभावेन तत्र तदव्यवहारात् । संयोगस्य स्वात्यन्ताभावसमानाधिकरणत्वं प्रमाणबलादङ्गीक्रियते । प्रमाणमेव विरोधं शमयिष्यति । `संविदेव हि भगवती विषयसत्त्वोपगमे नः शरण'मिति न्यायादिति ।

(१०) (भ.) ॥ अथापीति ॥ उक्तरीत्या गगने स्वाभाविकांशसिद्धावपि विकल्पद्वये द्वितीयविकल्पेऽङ्गीक्रियमाणे सति स्वाभाविकांशसिद्धिरिति योजना ॥ गगनमात्रमिति ॥ कृत्स्नगगनमित्यर्थः । तत्र प्रथमपक्षं तावत्कक्षीकृत्य तत्रोक्तं दूषणं परिहर्तुं विकल्पेन पृच्छति ॥ सर्वोऽप्याकाश इति ॥ सर्वोऽपि घटाकाशो महाकाशः स्यादिति वेति । सर्वोऽपि महाकाशो घटाकाशः स्यादिति योजना । क्वचित्तु तथैव पाठः । घटाकाशः स्यादित्यस्य घटाकाशपदेन व्यवह्रियमाणः स्यादित्यर्थः ॥ स्वगतपरिमाणप्रतीत्याधानादिति ॥ स्वगतवितस्त्यादिपरिमाणं घटाकाशे आदाय

तत्प्रतीतिजनकत्वादित्यर्थः । अत एव न तत्र स्वधर्मोपरञ्जक इति वक्ष्यति । वितस्त्यादिपरिमाणत्वरूपस्वधर्मासञ्जक इत्यर्थः । अत एवेत्युक्तमेव विवृणोति — **उपरञ्जितघटधर्मत्वस्येति** ॥ आसञ्जितवितस्त्यादिपरिमाणरूपघटधर्मकत्वस्येत्यर्थः ॥ **तत्र तदव्यवहारादिति** ॥ महाकाशे घटाकाशपदव्यवहाराभावादित्यर्थः । यद्यप्याद्यपक्षो नाद्वैतवादिनः सम्मतस्तथाऽपि तत्रोक्तदूषणमलग्नकमित्युपपादनार्थं तत्कक्षीकरणमिति ज्ञातव्यम् । अत एव द्वितीयपक्षमभ्युपेत्य तत्रोक्तं दूषणं परिहरति — **संयोगस्येति** ॥ अयमाशयः । घटद्युपाधिर्गगनैकदेशं स्पृशतीति पक्षमेवाङ्गीकुर्मः । न च तर्हि स्वाभाविकांशसिद्धिरिति सन्तोष्टव्यम् । गगनैकदेशं स्पृशतीत्यस्य गगनैकदेशेन संयोगवानित्यर्था-नङ्गीकारात् । किन्तु घटसंयोगो गगने स्वात्यरन्ताभावसमानाधिकरण इत्यत्र तात्पर्यम् । न च तथात्वेऽपि स्वाभाविकांशसिद्धिर्दुर्वारा । प्रतियोगितदत्यन्ताभावयोर्विरुद्धत्वेन सामानाधिकरण्यासम्भवेन विरोधपरिहारार्थमंशभेदस्यावश्यमङ्गीकार्यत्वादिति वाच्यम् । वृक्षे कपिसंयोगतदत्यन्ताभावयोरिव गगनेऽपि घटतदत्यन्ताभावयोर्युगपदेव प्रत्यक्षेण दर्शनात् । **प्रमाणसिद्धे चार्थे विरोधशङ्कानवकाशादिति** ॥ अत्र नैय्यायिकन्यायसम्मतिमाह — **संविदेवेति** ॥ भगवती मान्या । अपलापानर्हेति यावत् ।

(१०) (मु.) स्वाभाविकभेदेऽनुपपत्तिमुक्त्वौपाधिकभेदवतामैक्यं परिहरति — **नन्विति** ॥ घटस्याकाशो घट इवाकाशो घटस्यैवाकाश इति त्रेधाऽभिप्रेत्य पृच्छति — **घट इत्यादिना** । तृतीयपक्षस्य घटाकाशो मठाकाश इति व्यवहारभेदो न स्यादित्यर्थः ॥ **प्रतिबिम्बेति** ॥ इदमत्र रहस्यम् । उपाधिरेकमेव बिम्बं द्वेधा प्रदर्शयति । अत्र प्रतिबिम्ब-

परिमाणादिकमादधाति । एवञ्च एक एव महाकाशो घटाकाशतया प्रतिबिम्बतामाकाशान्तरत्वमापद्यते । स एव घटपरिमाणतयोच्यत इति ॥ अत एवेति ॥ प्रतिबिम्बपक्षपातित्वादेवेत्यर्थः ॥ **प्रवृत्तिनिमित्तस्येति** ॥ एवञ्च घटसम्बन्धमात्रस्यानिमित्तत्वान्न व्यभिचार इति भावः । सर्वाकाशस्यापि घटसम्बन्धित्वे प्रदेशान्तरे तदभावधीर्न स्यादित्यत आह — **संयोगस्येति** ॥ तत्र प्रदेशे आकाशो घटसंयोगी अत्र तु नेति सामानाधिकरण्ये प्रमाणाभावादित्यर्थः । न चात्र भिन्नाधिकरणत्वमेव दृश्यत इति वाच्यम् । आकाशः संयोगी आकाशो न संयोगीत्युभयत्राकाशस्य विशेष्यतया भानात् । अत्र तत्रेत्यवच्छेदकमात्रत्वादिति ॥ प्रमाणमेव विरोधंशमयिष्यतीति । वैय्यधिकरण्यप्रमाणेन किल विरोधो ग्राह्यः । यदि तदेव सामानाधिकरण्यग्राहि तदा कथं विरोध इति भावः ।

(१०) (कु.) गगनमात्रं कृत्स्नगगनम् ॥ **स्वाभाविकांशसिद्धिरितीति** । तथा च दृष्टान्ते साध्यवैकल्यमिति भावः ॥ **सर्वोऽपि घटाकाशो महाकाशः स्यादिति वेति** ॥ सर्वोऽपि महाकाशो घटाकाशो घटाकाशपदवाच्यः स्यादिति योजना । क्वचित्तथैव पाठः ॥ **उपाधेः प्रतिबिम्बपक्षपातित्वेति** ॥ दर्पणाद्युपाधेः स्वगतमालिन्यादेः प्रतिमुख एवोन्मज्जनदर्शनेन तथा स्वभावकल्पनमिति भावः । स्वधर्मोपरञ्जको घट उपाधिरिति विभक्तिविपरिणामेनावृत्त्याऽन्वयः । ननु परिच्छिन्नाकाशमहाकाशयोर्न मुखप्रतिमुखन्यायेन बिम्बप्रतिबिम्बभावः । घटस्यास्वच्छद्रव्यत्वेनाकाशस्य च नीरूपत्वेन तत्र तस्य प्रतिबिम्बत्वायोगात् । योगे वा दर्पणस्थमालिन्यं यथा समस्तमुखप्रतिबिम्बे भासते न तु तदेकदेशे कर्णादौ तथाऽत्रापीति सर्वं मुखं मलिनमितिवत्सर्वाकाशो घटपरिमाण इति बुद्धिः स्यात् । तस्माद्घटसम्बन्ध

आकाशैकदेशवृत्तिरिति वक्तव्यम् । तस्याप्येकदेशस्यौपाधिकत्वेऽनवस्थानात् स्वाभाविक इति वक्तव्यम् । तथा च दृष्टान्ते साध्यवैकल्यमित्यत आह — **संयोगस्येति** ।

(१०)(हु.) ॥ **गगनमात्रमिति** ॥ कृत्स्नं गगनमित्यर्थः ॥ **घटपरिमाणेति** ॥ महाकाश इत्यादिः । महाकाशे घटपरिमाणसमानपरिमाणत्वप्राप्तौ तस्य महत्त्वाभावाद्घटातिरिक्ते तत्प्रतीत्यभावापात इति भावः ॥ **महाकाशः स्यादिति वेति** ॥ घटावच्छिन्नाकाश एव महत्त्वबुद्ध्यापात इति भावः । स्वनिमित्तकाकाशांश एव स्वधर्माधायकत्वेन घटपरिमाणस्य महाकाशे प्राप्तौ बीजाभावः । तयोर्भेदस्यैवोपाधिना कृतत्वादिति समाधिं दृष्टान्तप्रदर्शनपूर्वकं वक्ति ॥ **उपाधेरिति** ॥ **प्रतिबिम्बेति** ॥ बिम्बप्रतिबिम्बयोरैक्येऽप्युपाधिना तत्र भेदावभासपूर्वकं[1] प्रतिबिम्ब एव स्वकीयमालिन्यादिधर्मावभासकत्वदर्शनेनोपाधेः प्रतिबिम्बपक्षपातित्वस्वाभाव्येनेत्यर्थः । भवतु प्रकृते किमायातम् । महाकाशघटाकाशयोर्बिम्बप्रतिबिम्बभावाभावाद्घटादेरस्वच्छत्वादित्यत आह — **प्रतिबिम्बस्थानीयेति** ॥ स्वनिमित्तकभेदवत्त्वादिना प्रतिबिम्बसदृश इत्यर्थः । तथा चोपाधेर्भेदवत्त्वेन स्वकल्पितत्वावच्छेदेन स्वधर्माधायकत्वं लाघवात्स्वीक्रियते न तु तद्विशिष्टप्रतिबिम्बत्वावच्छेदेन गौरवात् । न तु प्रतिबिम्बत्वावच्छेदेन स्वकल्पितप्रतिबिम्बेष्वपि तथात्वापातादिति भावः ॥ **स्वाधर्मोपरञ्जक इति** ॥ उपाधेरित्यतः प्रथमान्ततयाऽनुवर्तते ॥ **उपरञ्जितघटधर्मत्वस्येति** ॥ घटेनोपरञ्जित उपरञ्जितघटः । राजदन्तादिवत्तृत्तीयातत्पुरुषेऽपि परनिपातः । स चासौ धर्मश्चेति विग्रहः । अथवोपञ्जितघटको घटो यस्मिन्धर्मे

---

[1] '-पूर्वके' मु.

घटाकाशत्वादौ स उपरञ्जितघटः स चासौ धर्मश्चेति विग्रहः । तथा च घटरूपोपाध्युपरागात्प्रतीयमानस्य घटाकाशपदार्थतावच्छेदकीभूतघट-वृत्तित्व(घटित)घटाकाशत्वरूपधर्मस्य महाकाशेऽभावेन घटाकाशत्व-महत्त्वयोः सामानाधिकरण्याभावेन घटाकाशो महान्स्यादित्यापादन-मयुक्तमिति भावः । कुतो महाकाशे तदभावः । उपाधेः प्रतिबिम्ब-पक्षपातित्वेन बिम्बे स्वधर्मानाधायकत्वस्योक्तत्वात् ॥ **तत्र तदव्यवहारादिति** ॥ घटाकाशे महत्त्वव्यवहाराभावादित्यर्थः । अ(त)त्रैव पूर्ववाक्योपपादितो महत्त्वघटाकाशत्वयोः सामानाधिकरण्याभावो हेतुः।[1] पूर्ववाक्यै-तावत्पर्यन्ताभिप्रायो[2] वक्तव्यः । महाकाशे घटाकाशत्वं कुतो न स्वीक्रियत इत्यत आह — **तत्रेति** ॥ महाकाशे घटाकाशत्वव्यवहाराभावादित्यर्थः । व्यवहारपदं व्यवहारतन्मूलप्रतीत्यादिप्रमाणोपलक्षणम् । स्वाभा-विकांशानङ्गीकारे आकाशे घटासंयोगदशायामेव प्रतीयमानतदभावो न घटेत । एकत्र भावाभावयोर्विरोधादंशभेदस्य स्वाभाविकस्याङ्गीकारे व्यवस्थया तदुभयसत्त्वसम्भवादित्यत आह — **संयोगस्येति** ॥ केचित्तु परिच्छिन्नाकाशमहाकाशयोर्न मुखप्रतिमुखन्यायेन बिम्बप्रतिबिम्बभावः । आकाशस्य नीरूपत्वाद्घटस्यास्वच्छत्वात् । योगे वा सर्वं मुखं मलिनमितिवत्सर्वाकाशे घटपरिमाणधीः स्यादतो घटस्याकाश-सम्बन्धित्वमेव वक्तव्यम् । तस्य चांशवृत्तित्वासिद्ध्यर्थं[3] स्वाभाविकांशोऽ-पेक्षित इत्यत आह — **संयोगस्येति** ॥ (तथा च) संयोगस्य

---

1 `यद्वा' इति मु.पाठे वाक्यादौ पठ्यते ।

2 `-वाक्यस्यैतावत्-' इति पाठेन भाव्यमिति भाति ।

3 `-वृत्तित्वसिद्ध्यर्थम्' इति पाठेन भाव्यमिति भाति ।

प्रदेशवृत्तित्वानङ्गीकारान्नांशापेक्षेति भाव इत्याहुः । प्रथमपक्षमाशङ्क्येष्टा-पत्तेरिति । घटसंयोगाङ्गीकारे त्वेतद्दूषणेन[1] तद्व्यवस्थापनमप्रयोजनम् । प्रतिबिम्बस्थानीयत्वस्य तल्लक्षणस्यैवोक्तत्वेन[2] प्रतिबिम्बत्वानुक्त्या तद्दूषणासङ्गतिः । अङ्गीकृत्योपाधेर्दूषणपक्षे च[3] प्रतिबिम्ब एव सर्वमुखं मलिनमिति व्यवहारादिजनकत्ववदत्रापि घटाकाशे तत्परिमाणप्रतीति-जनकत्वं वर्तत एव महाकाशे तदापादकं तु नास्त्येव । आलोकस्थदर्पणे आलोकत्वप्रतिबिम्बदर्शनेन तत्प्रतिबिम्बकत्वस्य तत्सम्बन्धाविरोधितया तत्सम्बन्धव्यवस्थापनाय तत्प्रतिबिम्बकत्वनिराकरणं चानुपयुक्त-मित्यादिकमत्र कथं परिहर्तव्यमिति चिन्त्यम् । स्वात्यन्ताभावेत्याद्यंशभेदं विनाऽपीत्यादिर्विरुद्धद्वयं कथं प्रमाणबलादङ्गीक्रियते । स्वविषयी-भूतार्थविरुद्धार्थावगाहिनः[4] प्रमाणत्वस्यैव[5] दुर्घटत्वादित्यत आह — **प्रमाणमेवेति** ॥ शमयिष्यति निराकरिष्यति । विरोधो नामैकाधिकरणा-वृत्तित्वं तच्च न सिध्यति । एकज्ञाने उभयोः सामानाधिकरण्याभानात् । तथा च तयोर्विरुद्धत्वमेव नास्तीत्यर्थः । तर्हि निर्वह्निर्वह्निमानित्येकज्ञाने भानादेतत्प्रतीत्या सर्वाभावयोर्विरोधोच्छेदापत्तिरित्यत आह — **संविदेव हि भगवतीति** । अबाधितसंविदित्यर्थः । तथा चाबाधितबुद्धिरेव वस्तुव्यवस्थापिका न बुद्धिमात्रम् । निर्वह्निर्वह्निमानित्यादेरुत्तरत्रैक-तरबाधप्रमादर्शनेन नाविरोधोपपादकत्वमत्र तूभयांशेऽप्युत्तरत्र बाधा-दर्शनादविरोध एवेति भावः ।

---

1 `-अङ्गीकारादेतत्-' मु.

२. तल्लक्षणस्येति मु.पाठे नास्ति ।

3 `अङ्गीकत्यदूषणपक्षे चोपाधेः' ह्.

४. `-भूतार्थस्य विरुद्ध-' मु.

5 `प्रमाणस्यैव' मु.

(१०) (का.) स्यादेतत् । घटादेर्घटाकाशादिव्यवहारहेतुत्वान्यथानुपपत्त्यैवाकाशभेदः सेत्स्यति । तथाहि — आकाशासम्बद्धस्य सर्वाकाशसम्बद्धस्य वा घटादेर्घटाकाशादिव्यवहारहेतुत्वे सर्वाकाशस्य घटाकाशत्वापत्तेरेकदेश सम्बद्धस्यैव तथात्वं वाच्यम् । एकदेशस्यौपाधिकत्वे चैवमेवानवस्थानात् स्वाभाविकत्वस्यैव वाच्यतया तन्निर्वाहकस्वाभाविकभेदसिद्धिरित्याशङ्कते — **नन्विति** ॥ अथापि उक्तप्रतीत्यापि भेदसिद्ध्यनङ्गीकारेऽपि । उपाधिर्घटाकाशादिव्यवहारहेतुः ।

[1]गगनमात्रं स्पृशतीत्यस्य किमखिलं गगनं स्पृशतीत्यर्थः किं वा निखिलावयवेषु गगनमित्युत निखिलोपाध्यवच्छेदेन गगनमित्याहोस्विदुपाध्यनवच्छिन्नं गगनमिति ? नाद्यः । [2]गगनस्यैकत्वात् । न द्वितीयः । निरवयवत्वात् । न तृतीयः । अनुभवविरोधात् । चतुर्थस्तावदङ्गीक्रियते । तत्र च नोक्तदोष इत्यत आह — **नेति** ॥ **धटपरिमाणसमानपरिमाणः स्यादिति** ॥ तादृशपरिमाणवत्त्वेन व्यवहर्तव्यः स्यादित्यर्थः । उपाधेः [3]स्वोपहिते स्वधर्मव्यवहारहेतुत्वादिति भावः ॥

---

[1] ॥ **गगनमात्रं स्पृशतीत्यस्येति** ॥ अत्र चतुर्णां विकल्पानामित्थं प्रसक्तिः - मात्रशब्दः एवार्थकः । एवकारस्य अशेषार्थकत्वं `जगदेव दुःखपङ्कनिमग्नमि'त्यादौ दृष्टम् । अतस्तत्समानार्थकमात्रशब्दस्यापि निखिलार्थकत्वं भवति । तथा खिलशब्दस्य अवयवार्थकतया द्वितीयस्य प्रसक्तिः । खिलशब्दस्य उपाध्यर्थकतामाश्रित्य तृतीयस्य । मात्रशब्दस्य अवधारणार्थकत्वमाश्रित्य चतुर्थस्य प्रसक्तिः ।

[2] ॥ **नाद्यः गगनस्यैकत्वादिति** ॥ पञ्चलक्षणीगादाधर्युक्तदिशा अनेकत्वे सति अशेषत्वस्य निखिलत्वरूपत्वात् अनेकत्वरहिते गगने तादृशनिखिलत्वासम्भव इति भावः ।

[3] ॥ **स्वोपहिते स्वधर्मव्यवहारहेतुत्वादिति** ॥ यथा दर्पणं स्वोपहिते = प्रतिबिम्बे

**महाकाशो घटाकाशः स्यादिति** ॥ उपाध्यनवच्छिन्नोऽपि घटाकाशत्वेन व्यवहर्तव्यः स्यादित्यर्थः । व्यवहारनिमित्तस्योपाधिसम्बन्धस्य महाकाश एव प्राप्तेरिति भावः । ननु बिम्बप्रतिबिम्बभावस्थले ह्युपाधेः प्रतिबिम्बपक्षपातित्वम् । दर्पणादिना प्रतिमुख एव स्वगतमालिन्याधानदर्शनात् । प्रकृते च तदभावात् महाकाशेऽपि घटपरिमाणाधानापत्तिरित्याशङ्क्योक्तम् – **प्रतिबिम्बस्थानीयेति** ॥ [1]उपाधेः काल्पितभागमात्रपक्षपातित्वस्वाभाव्यादिति भावः ॥ **अत एवेति** ॥ घटाद्युपाधेः स्वोपहित एव स्वधर्माधायकत्वादित्यर्थः । एतदेव विवृणोति ॥ **उपरञ्जितेति** ॥ तथाच तत्पदप्रवृत्तिनिमित्ताभावादेव तदव्यवहारः इति भावः ॥

नन्वेवमाकाशे घटादिसंयोगस्याव्याप्यवृत्तित्वं न स्यात् । तस्य स्वात्यन्ताभावसमानाधिकरणत्वरूपस्य प्रदेशभेदनिर्वाह्यत्वादित्यत आह — **संयोगस्येति** ॥ **प्रमाणबलादिति** ॥ इह घटसंयोगो, नेहेति प्रतीतिबलाद्धटगगनसंयोगः [2]स्वाधिकरणयावन्निष्ठाभावप्रतियोगी संयोगत्वात्,

---

स्वधर्म=मालिन्यस्य `प्रतिमुखं मलिनमि'ति व्यवहारनिमित्तं तथा प्रकृते स्वं = घटः स्वोपहिते = गगने स्वधर्मस्य = परिमितपरिमाणस्य व्यवहारनिमित्तं भवेदिति भावः ।

1 ॥ **उपाधेः कल्पितभागमात्रपक्षपातित्वस्वाभाव्यादिति** ॥ तथा च `उपाधेः प्रतिबिम्बपक्षपातित्वमि'ति विशेषः । `उपाधेः कल्पितभागपक्षपातित्वमि'ति सामन्यनियम इति भावः ।

2 ॥ **स्वाधिकरणयावन्निष्ठाभावेति** ॥ यावच्छब्दः सकलार्थकः । तथा च स्वाधिकरणसकलनिष्ठाभावप्रतियोगित्वं घटगगनसंयोगे साध्यते । दृष्टान्तभूतः वृक्षवानरसंयोगस्य अभावः सकलयोः स्व=संयोगाधिकरणयोः = वृक्षवानरयोः वर्तते । तत्प्रतियोगी भवति वृक्षवानरसंयोगः । एवं घटगगनसंयोगस्य अभावोऽपि यावत्संयोगाधिकरण-

वृक्षवानरसंयोगवदित्यनुमानबलाच्चेत्यर्थः ।

एवमुपाधिर्गगनमात्रं स्पृशतीत्याद्यपक्षाङ्गीकारेण समाधाय गगनैकदेशमिति द्वितीयपक्षाङ्गीकारेण तद्विवरणमेव स्वात्यन्ताभावेत्यादिना कृतमिति तूपचिन्त्यम् । गगनावयवसम्बन्धित्वरूपमुख्यार्थाभिप्रायेण गगनैकदेशं स्पृशतीति विकल्पितत्वात् । निरुक्तगौणार्थाङ्गीकारमात्रेण तत्पक्षाङ्गीकारायोगात् । प्रथमपक्षेऽप्येतदङ्गीकारेणैतस्य पक्षान्तरत्वा-सम्भवाच्च । नन्वेवं सति यो यत्प्रतियोगी स तद्विरोधीति सामान्यतः प्रतियोग्यभावयोर्विरोधग्राहकमानविरोध इत्यत आह — **प्रमाणमेवेति ॥ विरोधं शमयिष्यति ॥** तद्ग्रहं निवर्तयतीत्यर्थः । [1]विशेषप्रमाणेन सामान्यव्याप्तेराभासीकरणादिति भावः । इममेव वृद्धसम्मत्या द्रढयति — **संविदेव हीति ॥** भगवतीत्यबाधितत्वेनादरणीयत्वमाह । **शरणं** हेतुः ।

(१०) (श.) प्रकारान्तरेणाऽकाशभेदं शङ्कते — **नन्विति ॥** अथापि उक्तरीत्याऽऽकाशभेदासिद्धावपि वक्ष्यमाणप्रकारेण सिध्यतीत्यर्थः । कोऽयं वक्ष्यमाणप्रकार इत्यत आह — **घटेत्यादि ॥** असम्बद्धस्य भेदकत्वे पटासम्बद्धमहारजनस्यापि तथात्वापत्त्या सम्बद्धस्यैव भेदकत्वं वाच्यम् । तथाच घटाख्योपाधियोगः किं सर्वाकाशवृत्तिः उतैकदेशवृत्तिरित्यर्थः ॥ **सर्वोऽपीति ॥** उक्तमहारजनस्य सर्वपटसम्बन्धित्वे सर्वस्यापि

---

भूतघटगगनयोरुभयोरपि वर्तते इति सिद्ध्यति । तदेवं संयोगाभावस्य संयोगाधिकरण-यावद्वृत्तित्वं अनुमानेनापि सिद्ध्यतीत्याशयः ।

[1] **॥ विशेषप्रमाणेन सामान्यव्याप्तेराभासीकरणादिति ॥** यो यत्प्रतियोगी स तद्विरोधी इति सामान्यव्याप्तिः । `संयोगभावाभावयोः गगने सहावस्थानम्' इति साधयन्ती `इह घटसंयोगः नेह घटसंयोगः' इत्यादिप्रतीतिः विशेषप्रमाणमिति भावः ।

रक्तपटत्वदर्शनादिति भावः ॥ **स्वाभाविकांशसिद्धिरिति** ॥ ननु मास्तु गगने स्वाभाविकांशः नच तथात्वे घटस्य गगनैकदेशं सम्बध्य भेदकत्वायोगः । औपाधिकांशाङ्गीकारेण तं सम्बध्य भेदकत्वोपपत्तेरिति चेन्न । औपाधिकांशाङ्गीकारेऽनवस्थाप्रसङ्गात् । तथाहि । उपाधिकृतो ह्यंश औपाधिकः । तत्र प्रष्टव्यं किमयमुपाधिः सर्वाकाशं स्पृशत्युतैकदेशमिति । नाद्यः । सर्वस्याप्याकाशस्यौपाधिकत्वप्रसङ्गात् । द्वितीये प्रष्टव्यं स चैकदेशः स्वाभाविक उतौपाधिकः । नाद्यः । अनङ्गीकारात् । द्वितीये सोऽप्युपाधि-स्सर्वमुतैकदेशमिति विकल्पदूषणपरम्परापर्यवसानादिति भावः । प्रथमविकल्पमङ्गीकृत्य तत्रोक्तदूषणं निराकर्तुं पृच्छति ॥ **सर्वोऽपीति** ॥ घटाकाश इति आकाशो घटाकाशपदेन व्यवहर्तव्यः स्यादित्यर्थः ॥ **इष्टापत्तेरिति** ॥ आकाशे एकदेशानङ्गीकारात् घटसम्बन्धः सर्वाकाशवृत्तिरिति भावः ॥ **उपाधेः प्रतिबिम्बेति** ॥ प्रतिबिम्ब एव स्वधर्मासञ्जकत्वं ह्युपाधेः स्वभावः । यथा दर्पणरूपोपाधिः प्रतिबिम्बे प्रतिमुखे स्वगतमलिनत्वादिधर्ममासञ्जयति । दर्पणस्य मलिनत्वे प्रतिमुखेऽपि मलिनतत्वप्रतीतेः । दर्पणस्य मलिनत्वेऽपि मुखे स्वच्छत्व-प्रतीतेः । तथात्रापि घटोपाधिः प्रतिबिम्बे घटाकाशे स्वगतपरिमाणमा-सञ्जयति । नतु बिम्बे महाकाशे । अतो न तस्य घटसमानपरिमाणत्वमिति भावः । आधानात् आसञ्जनात् । तत्र महाकाशे ॥ **अत एवेति** ॥ घटस्योपाधेर्महाकाशे स्वगतपरिमाणासञ्जकत्वाभावादेवेत्यर्थः । ननु घटेनोपाधिना महाकाशे स्वगतपरिमाणानासञ्जनेऽपि महाकाशपदव्यवहारः किं न स्यादित्यत आह — **उपरञ्जितघटधर्मत्वस्येति** ॥ उपरञ्जितः आहितः घटधर्मः परिमाणरूपो यस्य स तथा तस्य भावस्तत्वम् । तस्येत्यर्थः ।

परिच्छिन्नाकाशे घटाकाशे । तत्र महाकाशे । तद्व्यवहारात् घटाकाशपदव्यवहाराभावात् । अयमर्थः । पदव्यवहारो हि पदप्रवृत्तिर्निमित्तं कारणम् । यथा हि परिच्छिन्नाकाशे घटाकाशपदप्रवृत्तिनिमित्तस्य घटाहितपरिमाणाख्यधर्मस्य सत्त्वेन तत्र घटाकाशशब्दव्यवहारः । नच महाकाशे आहितघटधर्मरूपं घटाकाशपदप्रवृत्तिनिमित्तमस्ति । येन महाकाशे घटाकाशपदप्रयोगः स्यादिति । एवमाद्यपक्षमङ्गीकृत्य समाधायेदानीं घटसंयोगस्याकाशैकदेशवृत्तित्वमिति द्वितीयपक्षमङ्गीकृत्य नैयायिकरीत्या समाधत्ते ॥ **संयोगस्येति** ॥ घटसंयोगस्यैकदेशवृत्तित्वं हि नैकदेशे विद्यमानत्वम् । किन्तु स्वात्यन्ताभावसमानाधिकरणत्वम् । अस्यार्थः । स्वः संयोगः तत्प्रतियोगिको योऽत्यन्ताभावः संयोगात्यन्ताभावः । तेन समानमेकमधिकरणं यस्य स तथोक्तः तस्य भावस्तत्वमिति । समानपदस्यैकार्थकत्वं `समानं वृक्ष'मित्यत्र दृष्टम्[1] । ननु प्रतियोगितदत्यन्ताभावयोरेकत्र विरोधात्कथमेतदित्यत उक्तं प्रमाणबलादिति । इह घटाकाशसंयोगो नेह मूले कपिसंयोगो नाग्रे इत्यादिप्रतीतिरूपप्रमाणबलादित्यर्थः । प्रमाणप्रमितेविरोधाप्रसरादिति भावः । अत्र नैयायिकन्यायसम्मतिमाह — **संविदेव हीति** ॥ नोऽस्माकम् । विषयसत्त्वोपगमे पदार्थसत्वाङ्गीकारे । भगवती पूज्या । संविदेव प्रतीतिरेव । शरणं रक्षकम् । प्रमाणमिति यावदिति न्यायार्थः । एवमाकाशभेदे मानाभावान्न घटस्याकाशभेदव्यञ्जकत्वमिति स्थितम् ।

---

[1] `द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।' इत्याथर्वणमन्त्रे इत्यर्थः ।

**(११) ननु विद्यमान एव भेदो घटादिभिर्नाभिव्यज्यते चेत्तर्ह्युत्पद्यत इति वक्तव्यम् । तच्चायुक्तम् । भेदस्यौत्पत्तिकत्वेनानागन्तुकत्वादिति चेत् तर्हि दोषद्वयपरिहारायाविद्यमानमेव भेदं घटाद्युपाधिः (घटादिः) प्रतिभासयतीत्यस्तु । एवं चेद्द्वयं चरितार्थाः । श्रुतयश्च (श्रुतयस्तु) नेह नानाऽस्तीत्याद्या अभेदबोधिकाः । तस्मान्न स्वभावतो विष्णोर्विश्वभिन्नत्वमिति पूर्वपक्षसङ्क्षेपः ।**

(११) (भ.) एवं घटाद्युपाधेर्गगने विद्यमाने भेदे व्यञ्जकत्वमुपपद्यत इत्युक्तम् । तत्राशङ्कते — **नन्विति** ॥ अत्र यदीत्यध्याहार्यं तर्हीति श्रवणात् ॥ **उत्पद्यत इति वक्तव्यमिति** ॥ अभिव्यक्त्युत्पत्ती विनोपाधेः कार्यान्तरादर्शनादिति भावः ॥ **औत्पत्तिकत्वेनेति** ॥ धर्मिसमसत्ताकत्वेनेत्यर्थः । अनागन्तुकत्वात् मध्ये प्राप्तत्वाभावात् । तथाचाभिव्यक्तिपक्षमेवाश्रित्य तत्रोक्तदोषः कथमपि परिहरणीय इति भावः । पक्षद्वयोक्तदोषस्याप्यपरिहार्यत्वात्तृतीयपक्षावलम्बेन शङ्कां समाधत्ते ॥ **तर्हीति** ॥ दोषद्वयेति । अभिव्यञ्जकत्वपक्षे कदाचिद्घटादीनामभावेऽपि भेदप्रतीतिप्रसङ्गः । उत्पत्तिपक्षे भेदस्यानागन्तुकत्वभङ्गप्रसङ्ग इति दोषद्वयेत्यर्थः । न च तथैवास्त्विति वक्तुं शक्यमित्याशयेनाह — **एवं चेदिति** ॥ अविद्यमानस्यैव भेदस्य प्रतिभासाङ्गीकारे शुक्तिरूप्यवन्मिथ्यात्वस्यैव सिद्ध्या दृष्टान्ते साध्यवैकल्याभावेनोक्तानुमानमस्मदीयं निर्दुष्टमेव जातमिति भावः । एवमाद्यानुमानद्वयेन जीवेश्वरयोर्जीवानां चाभेदं प्रसाध्य तत्स्थेम्ने तृतीयेन भेदमात्रस्य मिथ्यात्वमभिधाय चतुर्थेनाचेतनानामपि मिथो भेदाभावमभिधायेदानीं तत्रैव श्रुतीरपि प्रमाणयति — **श्रुतयश्चेति** ॥ इह चेतनाचेतनवर्गे किञ्चन नाना भिन्नं नास्तीत्यर्थः ॥ **अभेदबोधिका इति** ॥ जीवेश्वरयोर्जीवानां

जडानां च मिथः पारमार्थिकभेदाभावबोधिका इत्यर्थः । उपसंहरति ॥ **तस्मादिति** ॥ भेदे मानाभावादभेदे तद्भावाच्चेत्यर्थः ।

(११) (मु.) नन्वेवमपि पक्षे दृष्टान्ते च भेदस्यौपाधिकत्वमेवायातम् । न मिथ्यात्वमित्येतच्छङ्कासमाधिव्याजेन वदिष्यन्नाह — **नन्वित्यादिना** ॥ दोषद्वयेति । उपाध्यभिव्यङ्ग्यत्वे तदनुसरणनियमायोगः । तदुत्पन्नत्वे औत्पत्तिकत्वहानिरिति दोषद्वयेत्यर्थः ॥ **प्रतिभासयतीति** । शुक्तिरजतवत्प्रातिभासिकत्वान्मिथ्यात्वमिति भावः ॥ **चरितार्था इति** ॥ मिथ्यात्वसाधनायास्माभिर्न यतितव्यमित्यर्थः ।

(११)(कु.) उपाधिघटसम्बन्धस्य गगनेऽव्याप्यवृत्तित्वमेवाङ्गीक्रियते । नत्वेकदेशवृत्तित्वं येन गगने तात्त्विकस्वान्तर्भेदः स्यात् । किन्तु स्वात्यन्ताभावसमानाधिकरणत्वम् । न च प्रतियोगितदभावयोरवच्छेदकभेदं विनैकत्र विरोध इति वाच्यम् । भगवत्याः प्रतीतेरेव विरोधशामकत्वादित्यर्थः । औत्पत्तिकत्वेन कालतो धर्मिव्यापकत्वेन ॥ **श्रुतयश्चेति** ॥ तथाचाभेदे प्रमाणबाहुल्यादभेदे प्रमाणाभाव एव भेदे प्रमाणमिति नाशङ्कनीयमिति भावः ।

(११) (हु.) ॥ **औत्पत्तिकत्वेनेति** ॥ **स्वाभाविकत्वेनेत्यर्थः** ॥ **अनागन्तुकत्वादिति** ॥ अजन्यत्वादित्यर्थः । अत्यन्ताभावाभिन्नत्वे[1] सति नित्याभावत्वस्य तल्लक्षणत्वादिति भावः ॥ **दोषद्वयेति** । उपाधिकाल एव प्रतीयमानत्वेन पूर्वं स्थित्ययोगरूपदोषो नित्यत्वादुत्पत्तिदोष[2] इति दोषद्वयेत्यर्थः । अविद्यमानमाने प्रकृते किमगतमित्यत आह — **एवञ्चेति** ॥

---

[1] `अत्यन्ताभावभिन्नत्वे' इति पाठेन भाव्यमिति भाति ।

[2] `उत्पत्त्यनुपपत्तिदोषः' हु.

प्रतीयमानत्वे सति त्रैकालिक निषेधप्रतियोगित्वरूपमस्मदभिमतमिथ्यात्वं सर्वभेदानां प्राप्तमिति सिद्धमेवास्मदभिमतमिति भावः । शुष्कयुक्तीनामसाधकत्वमिति नाशङ्कनीयमित्याह — **श्रुतयश्चेति** ॥ आद्यपदेन `यत्र द्वैतमिव भवति' `विभेदजनके ज्ञान' इत्यादीनां ग्रहणम् । पूर्वपक्षं निगमयति — **तस्मादिति** ॥ इति पूर्वपक्षव्याख्यानं समाप्तम् ।

(११) (का.) भेदस्यौपाधिकत्वपक्षेऽनुपपत्तेः स्वाभाविकत्वसिद्धिरित्याङ्कते — **ननु यदीति** ॥ औत्पत्तिकत्वेन यावदाश्रयप्रतीतिभावित्वसिद्धान्तेन । अनागन्तुकत्वात् उपाधिजन्यत्वायोगादित्यर्थः । यद्युक्तानुपपत्त्या भेदस्यौपाधिकत्वासिद्धिस्तर्हि तत एव स्वाभाविकत्वस्याप्यसिद्धौ मिथ्यात्वमेव सिद्ध्यतीत्याह — **तर्हीति** ॥ **दोषद्वयपरिहारायेति** ॥ [1]अतिप्रसङ्गापसिद्धान्तरूपदोषद्वयपरिहारायेत्यर्थः । ततः किमित्यत आह — **एवं चेदिति** ॥ यद्याकाशभेदस्य मिथ्यात्वं तर्हीत्यर्थः । **चरितार्थाः सिद्धस्वपक्षाः** । प्रागुक्तानुमानस्य दृष्टान्ते साध्यवैकल्याद्यभावेन स्वान्तर्भेदहीनत्वरूपसाध्यसाधकत्वसम्भवादिति भावः ।

एवमभेदे प्रत्यक्षानुमाने उपपाद्यागममप्याह — **श्रुतयस्त्विति** ॥ `**नेह नानास्ति किञ्चन**', `**एकमेवाद्वितीय**'मित्यादिश्रुतीनां निषेधपरतया प्रागुक्तत्वात्तत एव प्राबल्याद्भेदश्रुतिबाधकत्वं सेत्स्यतीत्यभिप्रायेण तन्नोपपादितम् ।

---

[1] ॥ अतिप्रसङ्गापसिद्धान्तरूपदोषद्वयपरिहारायेति ॥ इदं वाक्यं मायावादिना द्वैतिनं प्रति कथ्यत इति हेतोः अत्रोल्लिख्यमानदोषद्वयं द्वैतिरीत्या प्रसञ्जनीयम् । तथा चायमर्थः - आकाशभेदस्य स्वाभाविकत्वाङ्गीकारे `घटाद्युपाधिसम्बन्धात् प्रागपि आकाशभेदप्रतीतिः स्यादि'त्यतिप्रसङ्गः । उपाधिजन्यत्वाङ्गीकारे भेदस्यौत्पत्तिकत्वमङ्गीकर्तुरपसिद्धान्तः - इति ।

पूर्वपक्षमुपसंहरति ॥ **तस्मादिति** ॥ उक्तरीत्या परपक्षे साधकस्य बाधकाभावस्य चाभावात्स्वपक्षे तद्भावाच्चेत्यर्थः । पूर्वपक्षसङ्क्षेप इत्यनेन निरसनीययुक्त्यन्तरसत्त्वं सूचितम् । तच्चाद्वैतश्रुतीनाम् उपक्रमादिषड्विध-तात्पर्यलिङ्गयुक्तत्वादिरूपमुपरिष्टात् प्रपञ्चयिष्यामः ॥ **इतिपूर्वपक्षग्रन्थः** ॥

(११) (श.) इदानीं विपक्षे बाधककथनेन घटस्याकाशभेदव्यञ्जकत्वं शङ्कते — **नन्विति** ॥ तर्हीत्यनन्तरं घटादिभिरित्यनुवर्तते । प्रकारान्तरा-भावादिति भावः । औत्पत्तिकत्वेन स्वाभाविकत्वेन । अनागन्तुकत्वात् मध्ये प्राप्तत्वाभावात् ॥ **दोषद्वयेति** ॥ घटादीनां भेदव्यञ्जकत्वे तदभावेऽपि कदाचित्प्रतीतिप्रसङ्गरूपो मयोक्तः अनभिव्यञ्जकत्वे उत्पत्यनुपपत्ति-रूपस्त्वयोक्तः एवं दोषद्वयेत्यर्थः । घटाद्युपाध्यपेक्षया पूर्वं भेदानङ्गीकारा-दाद्यदोषपरिहारः । घटादीनामुपत्त्यनङ्गीकारान्न द्वितीयदोष इति भावः । न केवलमेवमङ्गीकारे दोषद्वयपरिहारमात्रं किन्तर्हीत्यत आह — **एवं चेदिति** ॥ अविद्यमानं भेदं प्रतिभासयतीत्यङ्गीकारे भेदस्य मिथ्यात्वं प्राप्तं तथाचाभेदवादिनो वयं चरितार्थाः । भेदस्य पारमार्थिकत्वाभावेन दृष्टान्ते साध्यवैकल्याभावादिति भावः । एवमभेदे प्रत्यक्षानुमाने अभिधायागमं चाह — **श्रुतय इति** ॥ उपसंहरति — **तस्मादिति** ॥ भेदे मानाभावादभेदे तत्सद्भावाच्चेत्यर्थः ।

**(१२) अत्रायं परिहारः ॥ यत्तावदुक्तं प्रत्यक्षं न जीवेश्वरयोर्भेदे प्रमाणमिति तत्र ब्रूमः । ईश्वरधर्मिको जीवप्रतियोगिको भेद ईश्वरस्य प्रत्यक्षः । ( ईश्वरस्य) तस्य तादृशप्रत्यक्षसद्भावे ` उत्तमः पुरुषस्त्वन्य' इति तद्वचनं प्रमाणम् । ईश्वरस्य जीवाध्यक्षीकरणक्षमत्वान्न (जीवाध्यक्षीकरणे क्षमत्वान्न) चोद्यावकाशः । ईश्वरप्रतियोगिको**

जीवाधिकरणकस्तु (जीवधर्मिको भेदो) जीवस्य प्रत्यक्षः । सप्रतियोगिकपदार्थप्रत्यक्षे न प्रतियोगिप्रत्यक्षं प्रयोजकम् (तन्त्रम्) । इयं गौर्गवयसदृशी, इह स पटो नास्ति (इह घटो नास्ति), स्तम्भः पिशाचो नेत्यादौ व्यभिचारात् । एतेनाभावप्रत्यक्षयोग्यतायाः (अन्योन्याभावप्रत्यक्षयोग्यतायाः) प्रतियोगिप्रत्यक्षयोग्यताधीनत्वादयोग्येश्वरप्रतियोगिकान्योन्याभावस्य कथं प्रत्यक्षयोग्यतेति निरस्तम् । स्तम्भः पिशाचो न भवतीत्यादौ व्यभिचारात् (स्तम्भः पिशाचो न भवति इत्यनुभवात्)। अन्योन्याभावविषयत्वाच्च तस्याः (अन्योन्याभावविषयत्वात्तस्य) । एवं यज्ञदत्तप्रतियोगिको विष्णुमित्रधर्मिको भेदो विष्णुमित्रस्य, विष्णुमित्रप्रतियोगिको देवदत्तधर्मिको भेदो देवदत्तस्य प्रत्यक्ष इत्याद्यूह्यम् ।

(१२) (भ.) एवं प्राप्तं पूर्वपक्षं प्रतिषेद्धुमुपक्रमते — अत्रायमिति ॥ भेदप्रमाणविषये दूषणोद्धाररूपपरिहारोऽभेदप्रमाणविषये दूषणरूपपरिहारश्चायं वक्ष्यमाणो द्रष्टव्य इत्यर्थः ॥ तत्र ब्रूम इति॥ ईश्वरधर्मिकस्येश्वरप्रतियोगिकस्य वा भेदस्येश्वराप्रत्यक्षत्वेनाप्रत्यक्षत्वादिति यद्दूषणमुक्तं तत्रोत्तरं ब्रूम इत्यर्थः ॥ ईश्वरस्य प्रत्यक्ष इति ॥ ईश्वरप्रत्यक्षस्यास्माद्यप्रत्यक्षत्वेऽपि स्वं प्रति प्रत्यक्षत्वादिति भावः । नन्वीश्वरस्य तादृशप्रत्यक्षसद्भाव एव कुतः । परबुद्धेरप्रत्यक्षत्वादित्यत आह — तस्येति ॥ `यस्मात्क्षरमतीतोऽह'मित्युत्तरवाक्यमप्यत्रोदाहर्तव्यम् । तेन जीवादहमन्य इतीश्वरप्रत्यक्षसिद्धिः । नन्वीश्वरस्य धर्मिभूतस्वप्रत्यक्षसद्भावेऽपि प्रतियोगिभूतजीवप्रत्यक्षाभावात्कथं तत्प्रतियोगिकस्वधर्मिकभेदप्रत्यक्षमित्यत आह — ईश्वरस्येति ॥ अन्यथा तस्य

सार्वज्ञासिद्धेरिति भावः । यद्यपि वक्ष्यमाणरीत्या भेदप्रत्यक्षे धर्मिमात्रप्रत्यक्षं तन्त्रं न प्रतियोगिप्रत्यक्षमपि । तथाऽपि तुष्यत्विति न्यायेनाभ्युपेत्योक्तिरियम् ॥ **जीवधर्मिक इति** ॥ भेद इति वर्तते ॥ **जीवस्येति** ॥ प्रत्यक्ष इति वर्तते । ननु जीवस्येश्वरप्रत्यक्षाभावत्कथं तत्प्रतियागिकस्वधर्मिकभेदः प्रत्यक्ष इत्यत आह — **सप्रतियोगिकेति** ॥ अयं भावः । लोके सप्रतियोगिकाः पदार्थाः सादृश्यसंयोगादयो बहवस्सन्ति । तत्र संयोगप्रत्यक्षे प्रतियोगिप्रत्यक्षस्यावश्यकत्वेन सादृश्यादिप्रत्यक्षे तदावश्यकता नास्ति । तथा हि । इयं गौर्गवयसदृशीति तावत्सादृश्यप्रत्यक्षं जायते । न तत्र प्रतियोगिप्रत्यक्षमस्ति । वने प्राग्दृष्टस्य गवयस्य तदा व्यवहितत्वेन स्मृतिमात्रेणोपयोगितया प्रत्यक्षाभावात् । एवमिह न घटोऽस्तीति घटाभावप्रत्यक्षं जायते । न च तत्र प्रतियोगिभूतघटप्रत्यक्षमस्ति । तथा स्तम्भः पिशाचो नेति स्तम्भे पिशाचप्रतियोगिकभेदः प्रतीयते । न च तत्र पिशाचप्रत्यक्षमस्ति । किन्तु तद्विषयकपरोक्षज्ञानेनैव । अत एवं व्यभिचारदर्शनान्नेश्वरप्रतियोगिकभेदप्रत्यक्षे ईश्वरप्रत्यक्षं तन्त्रं किन्तु तज्ज्ञानमात्रम् । तत्तु `यः सर्वज्ञः स' इत्याद्यागमेन सिध्यतीति । क्वचित्त्विह न स पट इति पाठः । अत एव पटस्याप्रत्यक्षत्वस्फोरणाय स इति प्रयोग इत्याहुः । एवं गवयसदृशीत्यत्रापि तद्गवयसदृशीति बोध्यमित्यप्याहुः । अत्र यद्यपि स्तम्भः पिशाचो नेत्येकत्रैव व्यभिचारोद्भावनमुपयुक्तम् । भेदप्रत्यक्षमात्रे प्रतियोगिप्रत्यक्षस्य तन्त्रत्वेन शङ्कितत्वात् । नान्यत्र सादृश्यादिविषये प्रतियोगिप्रत्यक्षस्य तन्त्रत्वेनानाशङ्कितत्वात् । तथाऽपि शिष्यव्युत्पादनार्थं वा दृष्टान्तत्वेन वा तदुद्भावनमिति ज्ञातव्यम् । नन्वभावप्रत्यक्षे प्रतियोगिप्रत्यक्षमेव तन्त्रमिति न ब्रूमः । येनेह न घट

इत्यादौ व्यभिचारः स्यात् । किन्तु प्रतियोगिनः प्रत्यक्षयोग्यतामात्रम् । न च नेह घट इत्यादौ घटस्य तदानीं प्रत्यक्षत्वाभाववत्प्रत्यक्षयोग्यताऽपि नास्ति । प्रकृते चेश्वरप्रतियोगिकान्योन्याभावरूपभेदस्य प्रत्यक्षत्वाङ्गीकारे प्रतियोगिभूतेश्वरस्य प्रत्यक्षयोग्यत्वमङ्गीकार्यम् । न च तदस्ति । अतः कथं प्रत्यक्षायोग्येश्वरप्रतियोगिकभेदस्य प्रत्यक्षत्वं सम्भवेदित्याशङ्कामतिदेशेन निरस्यति — **एतेनेति** ॥ **प्रतियोगिप्रत्यक्षयोग्यताधीनत्वादिति** ॥ प्रतियोगिप्रत्यक्षयोग्यताधीनत्वादित्यर्थः ॥ **अयोग्येश्वरेति** ॥ प्रत्यक्षा-योग्येश्वरेत्यर्थः ॥ **कथं योग्यतेति** ॥ प्रत्यक्षयोग्यतेत्यर्थः । एतेनेत्युक्तमेव विशदयति — **स्तम्भः पिशाचो नेति** ॥ न हि पिशाचस्य घटादिवत्प्रत्यक्ष-योग्यताऽस्तीति भावः । ननु नायमनुभवोऽभावविषयकः किन्तु पिशाचप्रतियोगिकभेदविषय एव । अतः कथमत्र तदुदाहरणामिति मन्दाशङ्कां निराह — **अन्योन्याभावेति** ॥ अन्योन्याभाव एव हि भेदो नाम । अतः कथमयमनुभवोऽभावविषयो न भवेदिति भावः । एवमुभयविधजीवेश्वरभेदस्य प्रत्यक्षसिद्धत्वमुपपाद्येदानीं परस्परजीव-भेदोऽपि प्रत्यक्षसिद्धो मन्तव्य इत्याह — **एवमिति** ॥ चेष्टालिङ्गेन परदेहस्य सात्मत्वे साधिते तद्विरुद्धचेष्टावतो विष्णुमित्रस्य नाहं देवदत्त इत्यनुभवसद्भावादिति भावः ।

(१२) (मु.) सिद्धान्तयति — **अत्रेति** ॥ तद्वचनं प्रमाणमितीश्वरा-वतारेण कृष्णेनोत्तमः पुरुषस्त्वन्य इत्युत्तमत्वमुक्त्वा 'यस्मात्क्षरमतीतोऽ-हमि'त्युक्तत्वात्स्वभेदः स्वस्य प्रत्यक्ष इति भावः । न च वाच्यं तस्यापि भेदः श्रुतोऽनुमितो वा किं स्यादिति । धर्मिप्रत्यक्षतादिप्रत्यक्षसामग्र्_या बलवत्याऽनुमित्यादिप्रतिबन्धात् । वस्तुतस्त्वीश्वरस्य परोक्षज्ञानमेव

नास्तीति तत्त्वविदः ॥ न चोद्येति ॥ प्रतियोगिप्रत्यक्षाभावात्कथं प्रत्यक्षमिति चोद्येत्यर्थः । यद्यपि प्रतियोगिप्रत्यक्षं न तन्त्रमित्यनुपदमेव वक्ष्यति । तथाऽप्यङ्गीकारवादोऽयमित्यदोषः । किञ्च भेदो योगिनामपि प्रत्यक्षो `जुष्टं यदा पश्यत्यन्यमीशमस्य महिमान'मिति वचनात् । यद्यपीश्वरादिप्रत्यक्षं भेदमात्रे प्रमाणीकर्तुं शक्यते । तथाऽप्युक्तभेदस्यास्मदाद्यप्रत्यक्षत्वज्ञापनायैवमुक्तिः ॥ जीवस्येति ॥ तत्तज्जीवस्येत्यर्थः । नाहमीश्वरो न निर्दुःख इत्याद्यनुभवादित्यर्थः । ईश्वरवज्जीवस्य प्रतियोगिप्रत्यक्षाभावात्कथमित्यत आह — **सप्रतियोगिकेति** ॥ **गवयेति** ॥ तस्य तत्कालाप्रत्यक्षत्वादिति भावः । गवयप्रतियोगिकसादृश्यस्य भावत्वात्तदुपपत्तावप्यभावस्य नोपपद्यत इत्यत आह — **इहेति** ॥ नन्वन्योन्याभावस्यैवायं नियमः । किञ्च गवयादेस्तत्कालाप्रत्यक्षत्वेऽपि तद्योग्यतैव तन्त्रम् । ईश्वरे तु साऽपि नास्तीत्यत आह — **स्तम्भ इति** ॥ नन्वेवं वाय्वाकाशसंयोगस्याप्रत्यक्षत्वेऽपि वायुघटसंयोगस्य प्रत्यक्षत्वं स्यात् । वायुनिरूपितस्य घटधर्मिकस्य तस्य प्रत्यक्षयोग्यधर्मिकत्वात् । न ह्यस्माकं मते द्वयोरपि धर्मित्वमङ्गीकृतम् । `भिन्नाश्च भिन्नधर्माश्च पदार्था निखिला अपी'ति वचनादिति चेत् । सत्यम् । संयोगो ह्यन्यप्रतियोगिकोऽन्यधर्मिकोऽपि पदार्थद्वयसत्ताधीनसत्ताकः । अन्यतरनाशे संयोगनाशात् । सादृश्यादिकं नैवम् । नष्टेनापि गवयेन सदृशी गौरिति प्रतीतेः । किन्तु धर्मिसत्तामात्रसापेक्षसत्ताकम् । एवञ्च संयोगस्य धर्मिप्रतियोगिद्वयसत्तासापेक्षसत्ताकत्वात्तद्वयप्रत्यक्षस्यापि तद्वयप्रत्यक्षाधीनत्वम् । सादृश्यादिप्रत्यक्षं धर्मिमात्रप्रत्यक्षाधीनमिति न तत्प्रतिबन्दी ॥ **एतेनेति** ॥ पिशाचान्योन्याभावे व्यभिचारेणेत्यर्थः ॥ **अभावप्रत्यक्ष-**

**योग्यताया इति** ॥ भेदस्यान्योन्याभावरूपत्वादिति भावः । अनेनेयंशङ्का निरस्ता । तथाहि । न तावत्पृथक्त्वं विभागोऽनेकत्वं वैलक्षण्यं वा भेदः । तेषां भावत्वाच्च भेदस्य घटः पटो नेत्यादिनिषेधधीवेद्यत्वात् । नाप्यन्योन्याभावस्तादात्म्यप्रतियोगिकाभावत्वं वा तादात्म्यावच्छिन्नप्रतियोगिताकाभावत्वं वा संसर्गानवच्छिन्नप्रतियोगिताकाभावत्वं वा । नाद्यः । तादृशतादात्म्यात्यन्ताभावेऽतिव्याप्तिः । घटः पटो नेत्यत्र पटस्यैव निषेधविशेषत्वेन प्रतियोगित्वधीविरोधाच्च । समानन्यायेन संसर्गाभावेऽपि संसर्गस्यैव प्रतियोगित्वापत्तेः । न द्वितीयः । तदात्मना नास्तीति बोध्यमानात्यन्ताभावेऽतिव्याप्तेः । पटो न भवतीत्यत्र प्रतियोगिशरीरे पटपटत्वातिरिक्ततादात्म्यानुल्लेखाच्च । प्रतियोगिवृत्त्युल्लेख्यमानस्यैव प्रतियोगितावच्छेदकत्वात् । घटतादात्म्यस्य पटावृत्तित्वेन तस्यावच्छेदकत्वानुपपत्तेश्च । न्यायसाम्येन संसर्गाभावेऽपि संसर्गस्यैवावच्छेदकत्वप्राप्त्या घटत्वादेरनवच्छेदकतापाताच्च । न तृतीयः । घटः संसृष्टः पटो न भवतीति बोध्यमानान्योन्याभावेऽव्याप्तेः । उक्तन्यायेन संसर्गाभावेऽपि संसर्गस्यानवच्छेदकत्वेनातिव्याप्तेः । नापि तत्र प्रमाणम् । घटः पटो नेत्यादिप्रतीतेर्लाघवात्सविशेषणे हीति न्यायानुग्रहाच्च । घटे पटत्वस्य योऽत्यन्ताभावस्तेनैव चारितार्थ्यमिति तद्भेदशून्यस्यापि तन्निष्ठधर्मात्यन्ताभावाधिकरणत्वं धर्माणां स्वात्यन्ताभावसामानाधिकरण्यवादिनामनिष्टम् । अपि च पटान्योन्याभावस्य पटः पटत्वं तादात्म्यं वा प्रतियोगि । नाद्यः । तस्य पटसामानाधिकरण्याविरोधात् । विरोधित्वस्यैव प्रतियोगिशब्दार्थत्वात् । यत्किञ्चित्सम्बन्धमात्रेण प्रतियोगित्वेऽधिकरणादेरपि तथात्वप्राप्तेः । न द्वितीयतृतीयौ । **पटस्यैव**

निषेध्यत्वप्रतीतेरित्युक्तदोषानिस्तारादिति ॥ अत्र चकास्ति । अन्योन्याभावो हि भेदः । तत्त्वं तादात्म्यारोप्यसम्बन्धकाभावत्वम् । संसर्गारोप्यकश्च संसर्गाभावः । तादात्म्येन नास्तीत्यत्र तादात्म्यस्याव्छेदकत्वेऽपि नारोप्यसम्बन्धता संसर्गस्यैव । एवं संसृष्टो न भवतीत्यत्रापि वैपरीत्यमूह्यम् । तादात्म्यं च न प्रतियोगि नापि तत्रावच्छेदकं संसर्गान्योन्याभावयोश्चारोप्यसम्बन्धभेदाद्भेदः । अन्योन्याभावस्य प्रतियोगितावच्छेदकेनैव विरोधो न प्रतियोगिना । प्रतियोगित्वं चान्योन्याभावासमानाधिकरणधर्माधिकरणत्वमिति नातिप्रसङ्गः । यद्वाऽऽरोप्यभूततादात्म्यसम्बन्धेन प्रतियोगी न वर्तते तदन्योन्याभाव एव भेद इत्यस्त्येव प्रतियोगिना विरोधः । तादात्म्यं वा पटादेर्धर्मः संसर्गतुल्ययोगक्षेमः । तदुल्लेखश्च घटः पटो न भवतीत्यत्र पदद्वयसामानाधिकरण्येन व्युत्पत्तिवशात्संसर्गाभावेऽपि संसर्गस्य संसर्गत्वेनाभानेऽपि संसर्गमर्यादया भानमात्रेणैवात्रापि तादात्म्येनाभानेऽप्यारोप्यसम्बन्धत्वोपपत्तेः । नापि तत्र प्रमाणाभावः । घटे पटत्वं नास्तीति बोध्यमानस्य पटत्वत्वावच्छिन्नपटत्वसंसर्गारोप्यकत्वेन घटः पटो न भवतीति बोध्यमानस्य पटत्वावच्छिन्नपटतादात्म्यारोप्यकत्वेन प्रतियोग्यवच्छेदकारोप्यकाणां त्रयाणां भेदो नास्य तेनैव चारितार्थ्यात् । अङ्गीकृतश्चैकैकभेदेन घटाभावात्पटाभावस्य द्रवत्वावच्छिन्नघटाभावाद्घटत्वावच्छिन्नाभावस्य च[1] भेदो न स्यादित्यलम् ।

यदत्र वल्गितमाधुनिकेन भेदप्रत्यक्षे बाधकम् ।

'न प्रमाणं मनोऽस्माकमयोग्यानुपलब्धिगम् ।
औपाधिकस्थो भेदोऽयं नाध्यक्षमतिगोचरम् ।

[1] चकारः मु.पाठे न दृश्यते ।

प्रमाणसहकारित्वाद्विषयस्याप्यभावतः ।

अप्रमाणं मनोऽस्माकं प्रमादेराश्रयत्वतः'

इत्यादिना । तस्यायं निष्कर्षः । मनो नैवमतत्वेऽपि नेश्वरभेदग्राहि । तथात्वेऽपि भेदो नासौ शुद्धचैतन्यगत इति । तत्तुच्छम् । मनसोऽप्रामाण्ये आत्माद्यसिद्धिप्रसङ्गात् । तस्य साक्षिवेद्यत्वे तद्भेदोऽपि तथैवेति किं मनःप्रामाण्यनिरासविस्तरेण । कुतश्च तदप्रामाण्यं प्रमाणसहकारित्वात् कालवदिति चेन्न । उपनीतप्रत्यक्षसहकार्युपनायके वाक्यसहकार्युपक्रमादिलिङ्गे च व्यभिचारात् । यावत्प्रमाणसहकारित्वादिति वाच्यम् । साक्षिणं स्वं प्रत्यन्यथात्वेनासिद्धेः । न च यावद्बाह्यप्रमाणसहकारित्वादिति वाच्यम् । त्वदीयसाक्षिणि व्यभिचारात् । किञ्चाप्रसिद्धोऽयं हेतुः । अनिन्द्रियत्वं चोपाधिः । यच्चोक्तं मनसः क्वचिज्ज्ञानकारणत्वे लाघवाद्रूपादिज्ञाने तस्य कारणत्वापत्त्या चक्षुरादेरालोकवत्[1] सहकारिमात्रतापत्त्या तत्प्रामाण्यं न स्यादिति । तन्न । प्रत्यक्षत्वव्याप्यंयत्किञ्चिद्धर्मावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकजातिमत्त्वरूपातिशयस्य चक्षुरादावेव सत्त्वेन तस्यैव कारणत्वौचित्यात् । आलोकादेरपि चाक्षुषज्ञानं प्रत्यकारणत्वेन तदयोगात् । उक्तातिशयाभावेऽपि कारणत्वव्यवहारमात्रापादने शब्दकलह एवेत्युपेक्षणीयम् । यच्चाभाणि ।

`संयोगादेरयुक्तत्वात्तदन्यस्याप्रसिद्धितः ।

सन्निकर्षस्य तेनेदं भेदसंज्ञेव मान'

मित्यादिना मनोभेदयोर्न सान्निकर्ष इति । नैतज्ज्यायः । साक्षिणैव

---

[1] `चाक्षुषालोकवत्' मु.

भेदग्रहणेनोभयोरात्मस्वरूपत्वेन तादात्म्यस्यैव सन्निकर्षत्वात् । तादात्म्यं च न प्रत्यासत्तिमपेक्षत इति तदुक्तेश्च । माऽस्तु तादात्म्यसन्निकर्षः । आत्मनि साक्षिणा सुखाभावग्रहणे यो विशेषणतादिः सन्निकर्षस्तदेव तादात्म्याभावरूपभेदग्रहेऽप्यस्तु । अस्तु वा मनसैव भेदग्रहस्तत्र संयुक्तविशेषणतादिः सन्निकर्षः । यदुक्तं विशेषणतादेः प्रत्यासत्तित्वे मानाभावादिति । तन्न घटादिग्रहे संयोगादेरिवान्वयव्यतिरेकाभ्यां तथात्वसिद्धेः । यच्चात्र प्रलपितम् । योग्यानुपलब्धिरूपसहकार्यभावान्न प्रत्यक्षस्येश्वरान्योन्याभावग्राहकत्वमिति । तदसारम् । योग्यानुपलब्धेर्हेतुत्वेऽतीन्द्रियार्थोल्लेखविकल्पानां सामान्याभावप्रमाभावापत्तेः । परमाण्वाद्यनुपलब्धेर्योग्यानुपलब्धित्वाभावात् । तस्मादनुपलब्धिमात्रं हेतुः । प्रतियोग्यनुपलम्भेऽप्यधिकरणस्य प्रतियोग्याधारत्वयोग्यताज्ञानस्य प्रतिबन्धकत्वान्नातिप्रसङ्गः । संसर्गाभावग्रहे तथात्वेऽप्यन्योन्याभावग्रहेऽप्यनुपलब्धिमात्रस्यैव हेतुत्वान्न दोषः । अन्यथा स्तम्भः पिशाचो नेत्यनुमितिर्नैति चेन्न । प्रत्यक्षे धर्मिणि संसर्गरूपारोप्यसम्बन्धेन वस्तुसत्त्वेऽप्ययोग्यतया क्वचिदनुपलब्धिवृत्तितादात्म्यारोपसम्बन्धकस्थले धर्मिणस्तदात्मना क्वचिदनुपलम्भाभावेनात्र योग्यताविशेषणस्य वैय्यर्थ्यात् । घटादिप्रत्यक्षे तदात्मनः स्वस्यैव पुनरप्रत्यक्षतादर्शनात् । न च वाच्यं पर्वतस्य प्रत्यक्षत्वेऽपि तदात्मनो वह्निमतो योग्यतया प्रत्यक्षानुपलब्धिर्दृश्यत इति । पर्वतवह्निमतोर्जीवेश्वरवदत्यन्तभेदानङ्गीकारात् । न च रामग्रहे कृष्णग्रहो दृश्यत इति वाच्यम् । नेन्द्रियाणि नानुमानम् । शुक्लमत्पक्षस्यैवेश्वरग्रहे पटुत्वावधारणात् । रामकृष्णयोस्तादात्म्यग्रहप्रतिबन्धकविशेषस्य सत्त्वात् । जाम्बुवत्कर्तृकप्रत्यक्षं तूत्तेजकसमवधानान्न तत्प्रतिबन्धः । न चैवं निर्विशेषितचैतन्यवादिनः

परस्यातो लाघवादनुपलब्धिकत्वमेवावच्छेदकम् । **संसर्गाभावे त्वतिप्रसङ्गाद्योग्यताप्रवेश इति ॥** अस्तु वा तत्प्रवेशः । तत्र योग्यस्यानुपलब्धिरित्यर्थः । परमाणौ पृथिवीत्वाभावस्य प्रत्यक्षतापत्तेः । न चाधिकरणयोग्यताऽपि हेतुरिति वाच्यम् । गौरवात् । किं स्वप्रतियोगिसन्निकर्षेतरयावदुपलम्भयोग्यतासामग्रीसमानकालीनत्वमनुपलब्धियोग्यत्वम् । उपलम्भनयोग्यत्वं चातर्कितप्रतियोगिसत्त्व-प्रसञ्जितोपलम्भतात्वम् । अत्र यदि जीव एवेश्वरो जीवग्राहि मन इश्वरतयैव गृह्णीयादिति तर्कितोपलम्भताकमनः समानकालीनैवोपलब्धिरिति । यद्वा प्रतियोगिसत्त्वविरोधित्वमनुपलब्धियोग्यत्वम् । विरोधित्वं यदि प्रतियोगी स्यात् तर्हि स्वयं न स्यादित्यापादनीयाभावप्रतियोगित्वम् । यच्चोक्तमसतः प्रतियोगिसत्त्वस्य कथमापादकत्वमिति । तन्मन्दम् । तर्कमात्रेऽपि तथात्वात् । यच्चोक्तमसत आपादकत्वमर्थमहिम्नोत तद्व्याप्त्यादिज्ञानमहिम्ना । नाद्यः । असतः शक्तिमात्रविकलत्वात् । द्वितीये प्रतियोगी न तत्रानुपलब्धिरिति व्यतिरेकज्ञानपूर्वकत्वनैय्यत्येनानुपलब्धिरनुमानतयैवा-भावज्ञापकेति **न तत्र भेदप्रत्यक्षमिति ॥** तत्तु विभीषकामात्रम् । योग्यतालक्षणघटनाय व्याप्त्यादिस्वीकारेऽप्यनुपलब्धीयाभावबोधने तदनपेक्षणात् । अनुपलब्धौ ज्ञानकरणत्वे विवादात् । अङ्गीकृत्येदमुदितम् । वस्तुतस्तु प्रत्यक्षेणाभावग्रहे नानुपलब्धेः कृत्यमुपलभ्यते । न च प्रतियोगितदुपलम्भे[1] चाभावधीः स्यादिति[2] वाच्यम् । विषयस्यैवाभावात् । न च त्वन्मते विषयस्याकारणत्वात्किन्तेनेति वाच्यम् ।

---

[1] अग्रे चकारदर्शनात् `प्रतियोगिनि तदुपलम्भे' इति पाठः सम्भाव्यते ।

[2] `चाभावधीर्न स्यादिति' मु.।

विषयाभावेनेन्द्रियस्य सन्निकर्षरूपसामग्रीविघ्नात् । न च वाच्यं प्रतियोगिरहितस्थले प्रतियोगिप्रमादशायामभावाधीस्स्यादिति[1] योग्युपलम्भस्य प्रतिबन्धकत्वादिति । न चैवं प्रतिबन्धकाभावत्वेनानुपलब्धहेतुत्वं[2] प्राप्तमिति वाच्यम् । प्रतिबन्धकाभावस्य मन्मते हेतुत्वासम्मतेः । पूर्ववृत्तितानियमस्यैव कारणत्वशब्दार्थत्वात्[3] । कथं तस्य कारणत्वमिति चेन्न । कार्यजनकशक्तिवैषम्यस्यैव तदर्थत्वात् । अन्यथा तन्तुरूपादेरपि तत्त्वप्रसङ्गात् । न च तदन्यथासिद्धमिति वाच्यम् । अस्यापि तथात्वं वक्तुं शक्यत्वात् । ननु कारणतया सम्मतेन येन सहैव यस्य यं प्रति पूर्ववृत्तिग्रहस्तत्तेनान्यथासिद्धम् । अन्यं प्रति पूर्ववृत्तित्वे ज्ञात एव यस्य यं प्रति पूर्ववृत्तित्वमवगम्यते तत्तेनान्यथासिद्धम् । अन्यत्र क्लृप्तनियतपूर्ववृत्तिन एव कार्यसम्भवे तत्सहभूतमन्यथासिद्धमित्यन्यथासिद्धत्रयमध्येऽस्य काऽन्यथासिद्धिरिति चेदेषैवेति ब्रूमः । मण्यभावसमवहितो वह्निर्दाहपूर्ववृत्ती मण्यभावादेर्वह्न्यादिना सहैव पूर्ववृत्तिताग्रहणात् । मण्यभावो दाहकारणमिति पृथग्ग्रहणाननुभवात् । किञ्च प्रकृते भावग्रहे क्लृप्तेन्द्रियसन्निकर्षादिनैवाभावस्यापि ग्रहोपपत्तौ तत्सहभूतानुपलब्धेस्तृतीयान्यथासिद्धत्वं युज्यते । अन्यथा तत्राप्यभावानुपलब्धेः कारणत्वं स्यात् । अपि च प्रक्रियामात्रस्य निर्मूलत्वेनोक्तान्यथासिद्ध्ययोगे कार्याभावप्रयोजकीभूतं यद्वस्तु प्रतियोगिकत्वाभावत्वेन यस्य यं प्रति

---

1 `प्रतियोगिप्रमादशायामभावाधीनः स्यादिति' मु.। अत्र `प्रतियोगिभ्रमदशायाम्' इति पाठः सम्भाव्यते ।

2 `-अनुपलब्धिहेतुत्वम्' इति पाठः सम्भाव्यते ।

3 `पूर्ववृत्तितानियमस्यैवकारत्वशब्दार्थत्वात्' मु.

पूर्ववृत्तित्वग्रहस्तत्तेनान्यथासिद्धमिति चतुर्थान्यथासिद्धत्वं कल्प्यताम् । किं प्रतिबन्धकाभावस्य कारणगतशक्त्यावरणापसरणतामात्रं च तेन कार्यभावप्रयोजकीभूतावरणापसरणे कर्माभाववस्थाने स्वत एव कार्योत्पत्तिसम्भवे प्रतिबन्धकाभावस्यापि कारणत्वे गौरवम् । कारणगतशक्त्युत्तेजकत्वेनान्यथासिद्धश्च । तस्माद्योग्यानुपलब्धेरहेतुत्वेन प्रकृते तदभावेऽपि प्रतियोग्युपलम्भरूपप्रतिबन्धकाभावादन्योन्याभाव-प्रत्यक्षोपपत्तिरित्युक्तम् । यच्चोक्तं 'पुरुषग्रहेऽपि सहकार्यभावाद्ब्रह्मणत्व-स्यैवैक्यमात्रोपपत्तिरि'ति । तदसङ्गतम् । ऐक्यग्रहानुपपत्त्या भेदनस्य साधनात् । किन्तु नाहमीश्वर इति प्रत्यक्षेणेत्युक्तं भवति । प्रतीतजीवतन्मात्रैक्यवादिनस्तल्दृष्टान्तोऽप्ययुक्तः । एतेनैक्यान्तस्योप-निषदत्वादज्ञातत्वाद्वाऽनुपलब्धिरिति निरस्तम् । यच्चोक्तमहमित्यौपाधिक-प्रतीतेः नायं भेदोऽपरिच्छिन्नशुद्धात्मगत इति । तन्न । जडेशवृत्तित्वस्यैव जीवस्वभावत्वात् । नन्वत्रोक्तानुभवस्यैव मानत्वात् । न चापरिच्छिन्न-ब्रह्मात्मनः कथमयं स्वभाव इति वाच्यम् । तद्भावस्याप्यद्याप्यप्रसिद्धेः । यच्च प्रलपितं नाहमीश्वर इति अहङ्कारधीरिति तदिदमतिमान्दम् । अहं ब्रह्मास्मीत्यादिविलयापत्तेः । नाहमीश्वर इति वन्नामीश्वरेण स्थीयत इत्यादावहमुल्लेखाभावाच्च । अहमिति प्रयोक्त इत्यादिप्रयोगसिद्धोऽहं-शब्दस्यास्मच्छब्दाभिन्नार्थकत्वप्रसिद्धेश्चेत्यलं **दुर्बलहिंसया** ॥ **एवमिति** ॥ देवदत्तस्य योगेन परजीवाध्यक्षीकरणदशायामिति शेषः । एवं देवदत्तोऽहं न यज्ञदत्तो नाहं जडो घटो नेश्वर इत्याद्यूह्यम् ।

(१२) (कु.) तस्माद्भेदे प्रमाणाभावादीश्वरधर्मिकभेदस्या-स्मत्प्रत्यक्षाविषयत्वेऽपि तत्प्रत्यक्षविषयत्वं भविष्यतीत्यत आह — **ईश्वरधर्मिक इति** ॥ **ईश्वरस्येति** ॥ इदं प्रौढिवादेन । वस्तुतस्तु

जन्यलौकिकप्रत्यक्षे प्रतियोगियोग्यतादेस्तन्त्रत्वेनेश्वरप्रत्यक्षस्यानेवंविधत्वेनात्र न तदपेक्षा । अपेक्षायामपि वक्ष्यमाणरीत्या स्तम्भे पिशाजान्योन्याभावप्रत्यक्षदर्शनेन तर्कितप्रतियोगिसत्त्वसञ्जनप्रसञ्जितप्रतियोगिकानुपलब्धेरेवापेक्षितत्वेन तस्याश्च जीवाद्यक्षाभावेनापि सम्भवेन चोद्यानवकाशात् । जीवस्य प्रत्यक्ष इत्यनुषज्यते । नन्वीश्वरस्यायोग्यत्वेन तत्प्रतियोगिकभेदः कथं प्रत्यक्ष इत्याशङ्क्य प्रतियोगिप्रत्यक्षत्वस्य किं सति प्रतियोगिकपदार्थप्रत्यक्षत्वे कारणता किं वाऽभावप्रत्यक्षे उतान्योन्याभावप्रत्यक्षे इति विकल्पं मनसि निधायात्र क्रमेण व्यभिचारानाह — **सप्रतियोगिकेति** ॥ इदमुपलक्षणम् । वस्तुतस्तु विकल्पद्वयमपि बोध्यम् । स पट इति पटस्य प्रत्यक्षत्वस्फोरणार्थम् ॥ **स इति** ॥

**`इदं प्रत्यक्षगतं समीपतरवृत्ति चैतदो रूपम् ।**

**अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयादि'**

त्युक्तेः । एवं गवयसदृशीत्यत्रापि तद्गवयसदृशीति बोध्यम् । ननु यस्य पुंसोऽभावप्रत्यक्षं तत्पुरुषीयप्रत्यक्षयोग्यत्वं प्रतियोगिनस्तदभावप्रत्यक्षतायां तन्त्रम् । परोक्षघटाभावप्रत्यक्षे तु तदस्ति । नास्ति च जीवधर्मिकेश्वरभेदस्थल इति कथं प्रत्यक्षमित्याशङ्कामन्तिमपक्षोक्तदोषेण परिहरति ॥ **एतेनेति** ॥ प्रतियोगिप्रत्यक्षयोग्यता प्रतियोगिनः प्रत्यक्षयोग्यता । अत एवोत्तरत्रायोग्येश्वरेति ॥ **एतेनेत्युक्तं दर्शयति — स्तम्भ इति** ।

(१२) (हु.) भेदस्य व्यासज्यवृत्तित्वादिपक्षमवलम्ब्य पूर्वपक्षावसरे[1] दूषणकथनेऽपि सिद्धान्तकथनावसरे वस्तुस्थितिमालम्ब्यैव समाधानमाह —

---

[1] `पूर्वपक्षे' मु.

**ईश्वरधर्मिक इत्यादिना** । कस्यचित्प्रत्यक्षसत्त्वमात्रेण भेदे प्रत्यक्षं प्रमाणमित्युक्तेर्युक्तत्वान्न सर्वेषां तदसत्त्वं बाधकमिति भावः । अस्माकं तन्निश्चायकप्रमाणप्रश्ने तत्प्रत्यक्षोपन्यासोऽकिञ्चित्कर इति चेन्न । आप्तवाक्यसिद्धतत्प्रत्यक्षेण देशान्तरस्थवस्तुनिश्चयवदत्राप्युपपत्तेः । तत्प्रत्यक्षं नास्माकं प्रत्यक्षविधया घटप्रत्यक्षवत्संशयोच्छेदहेतुः किन्तु लिङ्गविधयेति चेत् । अत्रापि तथाऽस्तु का क्षतिः सभायां वस्तुविशेषे लौकिकप्रत्यक्षस्य मध्यस्थं प्रति प्रमाणत्वेनोपन्यासवदत्रापि तथोक्तौ बाधाभावात् । ईश्वरस्य प्रत्यक्षसद्भावे किं मानमित्यत आह — **ईश्वरस्येति ॥ तद्वचनमिति ॥** आप्तवाक्येन तत्प्रत्यक्षसिद्धिवदत्रापि तथेति भावः । ननु जन्यभेदलौकिकप्रत्यक्षे[1] प्रतियोगिप्रत्यक्षस्य कारणत्वं भेदस्य व्यासज्यवृत्तित्वेनैकस्यैवोभयवृत्तित्वपक्षे यावदाश्रयप्रत्यक्षं विना तत्प्रत्यक्षं न (सं)भवतीत्येव वक्तव्यम् । अन्यथा गगनघटद्वित्वसंयोगादिप्रत्यक्षापत्तेः । प्रतियोग्यवृत्तित्वेन धर्मिमात्रवृत्तित्वपक्षेऽप्यनुभवसाम्याय प्रतियोग्यनुयोगिप्रत्यक्षयो रूपान्तरेण कारणतयाऽवश्यं पूर्वं सत्त्वमावश्यकम् । अत एव स्तम्भे पिशाचभेदोऽपि न प्रत्यक्षः । मतान्तरे पिशाचरूपाश्रयप्रत्यक्षाभावेन तत्प्रत्यक्षाभावस्यावश्यकत्वेनैतन्मतेऽपि तादृशानुभवसाम्याय[2] तथाङ्गीकारौचित्यात् । तथैव भेदलौकिकप्रत्यक्षं प्रति तद्धर्मितत्प्रतियोग्युभयनिष्ठलौकिकविषयताशालिप्रत्यक्षत्वम्[3] । अयम् उभयोः समावेशेन लब्धः पाठः । व्यापकम् । अव्यभिचरितसहचारदर्शनेन

---

[1] अत्र जन्यपदं हु.पाठे नास्ति । २. `-वश्यकत्वेनानुभवसाम्याय' मु.

[3] `तद्धर्मितत्प्रतियोग्युभयनिष्ठलौकिकविषयताशालिप्रत्यक्षत्वं' हु. । `तद्धर्मिप्रतियोग्युभयलौकिकविषयताशालित्वं' मु.

वह्नेर्धूमव्यापकताया इव तस्य निश्चयात्[1] । एवञ्चेश्वरज्ञानस्य मायावृत्त्यात्मकत्वस्य जन्यत्वात्तं प्रति जीवेश्वरोभयप्रत्यक्षस्य पूर्वं सत्त्वमावश्यकम्[2] । तस्य नित्यत्वेऽप्युक्तव्याप्यव्यापकभावनिर्वाहाय तत्प्रत्यक्षेऽप्युभयोर्लौकिकविषयत्वमावश्यकम् । तच्चात्र न घटते । अणुत्वेन लौकिकचाक्षुषायोग्यस्य[3] जीवस्य परमात्मचाक्षुषेऽपि भानासम्भवात् । परमात्मनः परमानसविषयत्वादर्शनेनेश्वरमानसगोचरत्वस्याप्यसम्भवादित्यत आह[4] ॥ **ईश्वरस्य जीवाध्यक्षीकरणक्षमत्वादिति** ॥ क्षमत्वात् समर्थत्वादित्यर्थः । अन्यथाऽघटितघटनाशक्तिमत्त्वरूपेश्वरत्वस्यैव हानिप्रसङ्गात् । अत एवेश्वरस्येति हेतुगर्भविशेषणम्[5] ।

हन्त तर्हि चेतनमपि घटं कुर्याज्जीवमपि स्वात्मानं कुर्यात् । मैवम्[6]। प्रमाणसिद्धस्य लोकरीत्या घटनावैधुर्येण[7] प्रतीयमानस्य घटकतया `विचित्रशक्ति'रित्यादिप्रमाणैस्तच्छक्तौ सिद्धत्वात् । परमात्मनश्च `सर्वपदार्थविषयकसाक्षाद्द्रष्टृत्वं ' `साक्षी चेता केवलो निर्गुणश्च' यः सर्वज्ञः स सर्वविदि'त्यादिश्रुतिस्मृतिसहस्रसिद्धमिति भावः ॥ **न चोद्यावकाश इति** ॥ इदानीमीश्वरप्रत्यक्षे जीवाविषयकत्वमवलम्ब्य चोद्यस्योत्थाने खलु तन्निरासाय प्रतियोगिप्रत्यक्षकारणत्वखण्डनस्यान्यत्र[8] तादृशकारणत्व-

---

१ `तन्निश्चयात्' मु.   २. `पूर्वसत्वम्' मु.   ३. `-चाक्षुषविषयत्वायोग्यस्य' हु.

४ `परमात्मचाक्षुषेऽपि' इति पूर्ववाक्यस्थपदादारभ्य इतः पर्यन्तं हु.पाठे एवं दृश्यते - `लौकिकविषयता ईश्वरचाक्षुषेऽपि लौकिकभानासम्भवात् परमानसविषयत्वस्य परमात्मदर्शने नेश्वरमानसगोचरत्वस्याप्यसम्भवादित्यत आह' इति ।

५ `हेतुगर्भम्' हु.   ६. `इति चेन्न' हु.   ७. `घटनौवधुर्येण' मु.

८ `-प्रत्यक्षस्य कारणत्व-' मु. । अत्र एतद्वाक्यस्थ अन्यत्रेति पदमारभ्य अग्रिमवाक्यस्थम्

मङ्गीकृत्येश्वरप्रत्यक्षनित्यत्वविचारपूर्वकं तत्र प्रतियोगिप्रत्यक्षानुपयोगस्य वा कथनावसरः । आदौ तच्छङ्कैव नावतरति । तस्य मायिकसर्वज्ञत्वे वा स्वाभाविकसर्वज्ञत्वे वा तत्प्रत्यक्षाविषयवस्तुनः केनापि वादिनाऽनङ्गीकृतत्वात् । अत एवोक्तेश्वरवचनात् (तस्य) स्वव्यवहारप्रयोजकज्ञानसिद्धावपि तस्य प्रत्यक्षरूपत्वमसिद्धमिति निरस्तम् । प्रथमतस्तस्यैव प्राप्तत्वेन तत्परित्यागे बाधकाभावात् । तथा च तन्निरासार्थं प्रतियोगिप्रत्यक्षकारणत्वादिखण्डनस्यानाकाङ्क्षितत्वात्तन्निराकरणं न क्रियते किन्तु जीवस्य भेदप्रत्यक्षव्यवस्थापनावसर एवानुपदं क्रियते । तत इदानीमेवाकाङ्क्षितमकृत्योत्तरत्र[1] तत्करणे सन्दर्भाशुद्धिरिति मनः खेदो न कार्य इति भावः । केचित्तु जन्यप्रत्यक्षे प्रतियोगिज्ञानस्य कारणत्वेनेश्वरप्रत्यक्षे तस्य कारणत्वाप्रसक्त्या वक्ष्यमाणन्यायेन तस्य खण्डितत्वेन च चोद्यप्रसक्तिविरहेण जीवविषयकप्रत्यक्षरूपकारणकथनेन तदनवकाशकथनं प्रौढिवादमात्रमित्याहुः[2] । अस्मदुक्तरीत्यैतत्पङ्क्त्युत्थानसम्भवेनोत्तरग्रन्थे तत्कारणताखण्डनेऽपीदानीमीश्वरप्रत्यक्षस्य जन्यत्वभ्रमेण प्राप्तशङ्कामङ्गीकृत्य समाधिसौकर्येण परिहारकरणस्य च सम्भवेन चाविमर्शपूर्वकोक्तिपर्यवसायि प्रौढिवादत्वं कथमस्य ग्रन्थस्येति त एव प्रष्टव्याः[3] ॥

---

आदौ इति पदं यावत् हु.पाठे एवं पठ्यते - `वा ईश्वरज्ञाननित्यत्वादिविचारपूर्वकं तन्निरासोऽपेक्षितः' इति ।

1 `-आकाङ्क्षितमकृत्वा-' इति पाठेन भाव्यमिति भाति ।

2 `तदनवकाशः कथं तत्प्रौढिवादमात्रमित्याहुः' मु.

3 `अस्मदुक्तरीत्या तदुक्त्युपयोगेन पूर्वग्रन्थे तस्य कारणत्वाखण्डनेनेश्वरप्रत्यक्षे जन्यत्वभ्रमेण चोद्यस्याभ्युपगमवादेन परिहारस्य सम्भवाच्च कथमस्य प्रौढिवादत्वमिति त

**ईश्वरप्रतियोगिक इति** ॥ **जीवस्येति** ॥ जीवस्यापीत्यर्थः । ननु पूर्वपक्षोक्तरीत्या प्रतियोगिप्रत्यक्षकारणताया व्यवस्थापितत्वाज्जीवस्य तदभावात्कथं तत्प्रत्यक्षसम्भव इत्याशङ्क्य किं सप्रतियोगिक इति प्रत्यक्षमात्रे प्रतियोगिप्रत्यक्षकारणत्वमुताभावप्रत्यक्ष इति विकल्पौ हृदि निधायाद्ये व्यभिचारमाह — **इयं गौरिति** ॥ सन्निकृष्टगवि स्मृतारण्यकगवयसादृश्यप्रत्यक्षे व्यभिचारान्नेदं युक्तमिति भावः । द्वितीये दार्ढ्यायात्यन्ताभावस्थलेऽन्योन्याभावस्थलेऽप्युभयत्र व्यभिचारमाह — **इह स पट इति** ॥ पटस्य तत्काले परोक्षत्वद्योतनाय स इति निर्देशः । तेन (प्रतियोगि)प्रत्यक्षरूपकारणाभावस्य तत्काल उपपादनम् । सप्रतियोगिकप्रत्यक्षे वाऽत्यन्ताभावप्रत्यक्षेऽथवाऽन्योन्याभावप्रत्यक्ष इति विकल्पान् हृदि निधाय क्रमान्निराकरोतीति नावतरणं कार्यम् । अत्यन्ताभावप्रत्यक्षे प्रतियोगिप्रत्यक्षकारणत्वाकारणत्वयोः पूर्वपक्षसिद्धान्तयोरनुपयोगेनात्यन्ताभावप्रत्यक्षत्वेन विकल्पकोटौ निवेशासङ्गतेः । अभावप्रत्यक्षत्वेन द्वितीय(विकल्प)कोटिं परिकल्प्यान्योन्याभावप्रत्यक्षत्वेन तृतीयकोटिं निवेश्य क्रमान्निराहेत्यवतरणमपि युक्तम् ॥ **स्तम्भ इति** ॥ नन्वेतत्प्रत्यक्षरूपं न भवतीत्युक्तमेवेति वाच्यम् । यत एकस्यैव घटप्रतियोगिकत्वेन तदितरसर्वानुयोगिकत्वेनास्मदभ्युपगतभेदस्य व्यासज्यवृत्तित्वे द्वित्ववत्प्रतियोगिन्यनुयोगिकव्यक्तावेको भेदः । एवं प्रतियोगिनि तदन्यापरानुयोगिव्यक्तावेको भेद इत्युच्यते । उक्तप्रतियोगिनि (तदन्य)सर्वानुयोगिष्वेक एव भेद इत्युच्यते । आद्ये घटप्रतियोगिकभेदस्यैवानुयोगिकभेदेन नानात्वस्याप्रामाणिकस्यैव कल्पनाप्रसङ्गः । द्वितीये

---

एव प्रष्टव्याः ।' हु. ।

घटभेदस्याप्रत्यक्षत्वापत्तिः । जन्मसहस्रेणापि तदाश्रययावद्व्यक्तीनां युगपत्प्रत्यक्षासम्भवात् । पक्षद्वयेऽपि घटः स्वस्माद्भिन्न इति प्रतीतिवारणाय पूर्वोक्तरीत्या बिलक्षणाधिकरणत्वादिकल्पनागौरवं चेत्याद्युक्त्या तन्मतस्य हेयत्वेन तन्मताङ्गीकृतानुभवसाम्यस्याकिञ्चित्करत्वेन स्तम्भे पिशाचभेद-प्रत्यक्षस्य सर्वानुभवसिद्धस्यापलापानर्हत्वात् । तथा च प्रतियोगिप्रत्यक्षस्य भेदप्रत्यक्षहेतुत्वाभावात्तज्ज्ञानमात्रस्य हेतुत्वादीश्वरप्रत्यक्षं विनाऽप्या-गमजन्यज्ञानेन तत्स्मरणसम्भवान्नाहं सर्वज्ञः सर्वेश्वर इत्यादि-रूपमीश्वरभेदप्रत्यक्षं युक्तमेव(मेवेति भावः) । आगमस्य चिन्मात्र-परत्वान्नेश्वरनिश्चयः सम्भवतीति न युक्तम् । उत्तरत्रागमस्य भेदपरत्वव्यवस्थापनेन तस्य निरसनीयत्वात् । आगमतात्पर्यनिर्णयात्प्रागेव सार्वज्ञादिवैदिकपदैस्तज्ज्ञानमात्रेणाप्युक्तप्रतियोगिस्मृतिसम्भवाच्च । माऽस्तु तर्हि प्रतियोगिप्रत्यक्षमभावप्रत्यक्षत्वावच्छिन्नेऽन्योन्याभावप्रत्यक्षत्वावच्छिन्ने वा कारणम् । तथाऽप्यभावप्रत्यक्षत्वावच्छिन्नं प्रति लौकिकप्रत्यक्षविषय-प्रतियोगिज्ञानत्वेन हेतुता वाच्या । अन्यथा भूतलादौ पिशाचाभाव-प्रत्यक्षापत्तेः । तथा चेश्वरस्य प्रत्यक्षाविषयत्वात्तज्ज्ञानेन न तद्भेदप्रत्यक्ष-मित्याशङ्क्यात्यन्ताभावप्रत्यक्षस्थले तथा कार्यकारणभावो नान्योन्या-भावस्थले स्तम्भे पिशाचभेदप्रत्यक्षादौ व्यभिचारात् । किन्त्वधि-करणप्रत्यक्षत्वेन प्रतियोगिज्ञानत्वेन च कारणता । अनुभवानुसारेण सर्वपदार्थव्यवस्थाङ्गीकारात्प्रकृते न काऽप्यनुपपत्तिरित्याह — एतेनेत्या-दिना । एतेन पिशाचभेदप्रत्यक्षे व्यभिचारेण । अभावप्रत्यक्षयोग्यताया अभावनिष्ठप्रत्यक्षयोग्यतायाः । योग्यता च विषयता वा

यावद्द्रव्यपदार्थान्तरं[1] वेत्यन्यदेतत् । प्रतियोगिप्रत्यक्षाधीनत्वात् उक्तरीत्या प्रतियोगिप्रत्यक्षप्रयोज्यत्वात् । प्रत्यक्षविषयप्रतियोगिज्ञानत्वेन हेतुत्वे प्रतियोगिप्रत्यक्षस्य कारणतावच्छेदकघटकतया परम्परया भावविषयता-रूपकार्यतावच्छेदके तत्समशीलयोग्यतया वा प्रयोजकत्वमव्याहतम् ॥ **स्तम्भ इति** ॥ तस्याः = प्रतियोगिनिष्ठप्रत्यक्षयोग्यतायाः । चशब्दः पूर्वोक्तव्यभिचारसमुच्चायकः । अन्योन्याभावाविषयत्वात् अन्योन्याभाव-प्रत्यक्षेऽप्रयोजकत्वाभावात्[2] । तत्रैवानुभवादित्यन्तं हेतुः । तथा च पूर्वोक्तव्यभिचारादनुभवानुसारेणान्योन्याभावस्थले तथा कार्यकारण-भावाकल्पनाच्च तदवष्टम्भेन शङ्का निरस्तेति भावः । अन्योन्याभावविषयत्वाच्च तस्या इति स्त्रीलिङ्गान्तं प्रामादिकं, बहुपुस्तके पुल्लिङ्गान्तपाठदर्शनात् ।[3] तत्पक्षे चायमर्थः । एतेनेत्युक्तं विवृणोति ॥ **स्तम्भ इति** ॥ तादृशानुभवसत्त्वेऽपि प्रकृते किमायातमित्यत आह — **तस्येति** ॥ तस्य चेत्यन्वयः । चस्त्वर्थः । तथा च व्यभिचारान्नेदं युक्तमिति भावः । योग्यानुपलब्धेरभावप्रत्यक्षे हेतुत्वपक्षेऽप्यहं यदि सर्वज्ञः स्यात् [4] तथाऽनुभूतः स्यामित्यापादनयोग्योपलब्धिप्रतियोगिकानुपलब्धिरत्राक्षतैवेति न भेदप्रत्यक्षस्यानुपपत्तिः । अनुपलब्धिस्वरूपं तु द्वैतद्युमणौ प्रत्यक्षयोग्यसत्त्वनिरुक्त्यवसरे विचारितं तत्रैवानुसन्धेयम् । एवं

---

[1] `विषयतैव वा तदन्या यावत्स्वकालं विद्यमानं पदार्थान्तरं' हु.

[2] `-प्रत्यक्षेऽप्रयोजक-' मु.

[3] `इति स्त्रीलिङ्गान्तः क्वचित्तस्येति क्वचित्पुल्लिङ्गान्तस्तत्र स्त्रीलिङ्गान्तपाठो लेखक-दोषायत्तोऽसमवेतार्थत्वात्काचित्कत्वाच्च ।' मु.

[4] तर्हि

जीवधर्मिकेश्वरभेदेश्वरधर्मिकजीवभेदयोर्मुख्यतः प्राप्तयोर्विषये प्रत्यक्षं समर्थ्य प्रसङ्गतो वा परम्परया वा यथाकथञ्चित्तदुपयोगित्वेन (वा) प्राप्ते जीवप्रतियोगिकजीवधर्मिके भेदे तदुपपादयति — **एवमिति** ॥ एवं यज्ञदत्तप्रतियोगिकदेवदत्तधर्मिको भेदो देवदत्तस्य प्रत्यक्ष इत्याद्यूह्यमिति पाठः सार्वत्रिकः सुसङ्गत एव । क्वचित्तु विष्णुमित्रधर्मिकः यज्ञदत्त-प्रतियोगिकः भेदः इत्याद्यूह्यमिति पाठः ।[1] यद्यपि देवदत्तपरिदृश्यमानयोर्यज्ञदत्तविष्णुमित्रशरीरयोरेव भेदोऽनुभूयते न तच्चेतनयोर्भेदः साक्षात्क्रियते । चक्षुराद्ययोग्यत्वेन तच्चाक्षुषत्वायोगात् । तदीयजीवस्य देवदत्तसाक्ष्यवेद्यत्वेन साक्षिणोऽपि तत्राप्रवृत्तेः । तथा चेदमयुक्तमिति भाति । तथाऽपि तदिन्द्रियजन्याभावप्रत्यक्षे प्रतियोगिसत्त्वप्रसञ्जन-प्रसञ्जिततत्तदिन्द्रियजन्यप्रत्यक्षरूपप्रतियोगिकानुपलब्धिरेव हेतुरिति न । किन्तु यत्र यस्य प्रतियोगिनो यज्जन्यज्ञानयोग्यत्वं तत्सत्तयाऽऽपादन-योग्यतान्निश्चयरूपप्रतियोगिप्रतियोगिकाभाव एव योग्यानुपलब्धिपदार्थः । स एवाभावप्रत्यक्षे हेतुः । तत्सत्तायामपि तज्जन्यनिश्चयाभावस्तत्र तदभावप्रत्यक्षहेतुः।[2] एवञ्च यज्ञदत्तशरीरस्थचेतनस्य पूर्वकालोप-लक्षितस्यैतत्कालीनस्य च तदनुभूतस्मरणादिभिः(-दिना) तदाभिसंहित-फलविरोधिचेष्टाभावादिलिङ्गैश्चाभेदो[3] निश्चीयते । न च[1] यज्ञदत्त-

---

[1] `इत्याद्यूह्यमिति दाक्षिणात्यपुस्तकपाठः सुलग्न एव । देशान्तरस्थेषु बहुषु कोशेषु विष्णुधर्मिको यज्ञदत्तप्रतियोगिको भेदो देवदत्तस्याध्यक्ष इत्याद्यूह्यमिति पाठो दृश्यते । तत्र' मु.

[2] इदं वाक्यं मु.पाठे नास्ति ।

[3] `तद्विरुद्धचेष्टादिलिङ्गैश्चाभेदो' हु.

विष्णुमित्रयोरभेदोऽस्ति । अभेदे तादृशानुमापकलिङ्गानि तज्जन्यानुमितिश्च स्यादित्यापाद्यमानानुमित्यभावसहकृतचक्षुषैव तन्निष्ठभेदेन सह यथाकथञ्चित् संयुक्तविशेषणतासन्निकर्षसहितेन धर्म्युपस्थितिसहितेन धर्म्यंशे उपनयरूपं भेदांशे लौकिकं विष्णुमित्रचेतने यज्ञदत्तचेतनभेद इत्याकारकं प्रत्यक्षं भवतीति भावः । अधिकरणस्याप्रत्यक्षत्वेऽपि गगने उद्भूतरूपाभाव इति प्रत्यक्षानुभवबलेनात्यन्ताभावप्रत्यक्षे नाधिकरणस्य योग्यत्वं तन्त्रं किन्तु योग्यानुपलब्धिमात्रमिति स्वीकारवद्गगने उद्भूतरूपवद्भेद इति प्रत्यक्षानुभवबलेनात्रापि तथा(त्वा)ऽङ्गीकारस्यावश्यकत्वात् । न च तत्रोद्भूतलिङ्गकानुमितिविषय एवोद्भूतरूपवद्भेदो न प्रत्यक्षविषय इति वाच्यम् । विनिगमकाभावेन वैपरीत्यस्यापि वक्तुं शक्यत्वात् । व्याप्यवृत्तिधर्मात्यन्ताभावतदवच्छिन्नप्रतियोगिताकभेदयोः समनियतत्वेनैक्यपक्षे तस्यावर्जनीयत्वाच्च । यद्वा यज्ञदत्तपिण्डे विष्णुमित्रपिण्डे च चेष्टालिङ्गेन सात्मकत्वसिद्ध्यनन्तरं तत्तदात्मविशिष्टपिण्डयोः परस्परं (भेदस्य) लौकिकप्रत्यक्षे विशेषणतावच्छेदकयोरुभयोर्भेदोऽप्यलौकिकसन्निकर्षेण भासते । तदुत्तरं स्वात्मतदात्मनोरिव तयोरपि परस्परमभेदसंशयानुदयानुभवात् । अन्यथा लौकिकानां त्वच्छास्त्रजनिताप्रामाण्यशङ्कां विना संशयादिना व्यवहारोच्छेदप्रसङ्गात् ।

---

[1] इतस्तृतीयवाक्यगत'धर्म्यंशे'तिपदपर्यन्तं मु.पाठे एवं दृश्यते - 'न च तथा यज्ञदत्तविष्णुमित्रशरीरावच्छिन्नचेतनयोरभेदानुमापकलिङ्गान्यनुभूयन्ते । ततश्च घटोऽत्र यदि स्यात्तर्ह्युपलभ्येतेतिवदनयोरभेदो यदि स्यात्तत्कार्यलिङ्गकतन्निश्चयापत्तिः । यज्ञदत्तीयशरीरावच्छिन्नचेतनाभेदस्येत्यापादिततत्तन्निश्चयाभावसहकृतेन तन्निष्ठभेदेन सह धर्म्यन्तरघटितसंयुक्तविशेषणतारूपसन्निकर्षवता धर्म्युपस्थितिसहितेन चक्षुषैव' ।

तथा च तयोर्भेदेऽपि देवदत्तप्रत्यक्षं प्रवर्तत एव । परन्तु तदंशे लौकिकत्वशून्यम् । तच्चानुपयुक्तमस्माभिर्लौकिकमेवेत्यप्रतिज्ञानात् । न चालौकिकप्रत्यक्षस्याप्यर्थसाधकत्वे गगने कालत्वसिद्धिरपि स्यात् कदाचित्तादृशोपनीतभानस्यापि सम्भवादिति वाच्यम् । प्रबलप्रमाणान्तर-बाधे स्यादेव । न च तथाऽस्ति । प्रकृते तु प्रबलप्रमाणान्तरबाधो नास्त्येव । प्रत्युताहमेतस्माद्भिन्न इत्यादि-तद्वाक्यैर्विरुद्धधर्मवत्त्वादिलिङ्गैश्च भेदस्यैव सिद्ध्या तत्संवादस्यैवात्र सत्त्वात् । यद्वा देवदत्तो योगी चेत् चेतनद्वयभेदविषयकं प्रत्यक्षं युक्तमेव ईश्वरवत् ।[1] योगिप्रत्यक्षस्यापि साक्षात्करोमीति तदीयव्यवहारनिर्वाहकत्वात् । लौकिकप्रत्यक्षतुल्यत्व-मेवेतीश्वरप्रत्यक्षवत्तस्यापि प्रकृते प्रमाणत्वेनोपन्यासो युक्तः । स्वात्म-धर्मिकान्यात्मप्रतियोगिकभेदस्तु सर्वेषां (स्वीय)लौकिकप्रत्यक्षविषयो भवत्येवेति नोपपादनापेक्षाऽत्रेत्याशयवानाह — **इत्याद्यूह्यमिति** ॥

(१२) (का.) सिद्धान्तं प्रतिजानीते ॥ **अत्रायमित्यादिना** ॥ अत्र पूर्वपक्षेऽयं वक्ष्यमाणः **परिहारो** दूषणोद्धार इत्यर्थः । पूर्वपक्षक्रमेणैव सिद्धान्ताभिधानमिति ज्ञापनाय प्रथमतः प्रथमदूषणोद्धारं प्रतिजानीते ॥ **यत्तावदिति** ॥ **ईश्वरधर्मिक इति** ॥ यद्यपि भेदसामान्यमीश्वरप्रत्यक्षविषयः । [2]तत्प्रत्यक्षे च `द्वाविमौ पुरुषौ लोक' इत्यादि तद्वचनमेव प्रमाणम् । तथापि

---

[1] `यद्वा शेषधर्मादौ कथितो देवदत्तो योगी ग्राह्यः । तस्येश्वरभेदवच्चेतनद्वयभेदद्वयविषयकं प्रत्यक्षं युक्तमेव ।' मु.

[2] ॥ तत्प्रत्यक्षे च द्वाविमौ पुरुषौ लोक इत्यादि तद्वचनमेव प्रमाणमिति ॥ `इदमः प्रत्यक्षगतं समीपतरवर्ति चैतदो रूपम्' इति इदमादिशब्दशक्तिग्राहकप्रमाणे इदंशब्दस्य प्रत्यक्षविषये शक्तिरुक्ता । तेन कृष्णप्रयुक्तस्य इमौ इति शब्दस्य प्रत्यक्षौ इत्यर्थः । औ

`स्वधर्मिकस्वेतरप्रतियोगिकभेदः स्वप्रत्यक्ष' इति सामान्यतो नियममभिप्रेत्येदं निदर्शितम् । प्रथमश्लोक ईश्वरधर्मिकभेदस्यैव प्राधान्येन प्रस्तुतत्वाद्वा । यद्यपि तत्र जडप्रतियोगिकभेदोऽपि प्रकृतः । तथापि प्रथमं जीवेश्वरभेद एव प्रत्यक्षप्रमाणाभावस्य शङ्कितत्वाज्जीवप्रतियोगिक इत्येवोक्तम् । एवमुत्तरत्रेश्वरप्रतियोगिकादिग्रहणस्य सङ्गतिरवसेया ।

नन्वीश्वरस्यैतादृशभेदप्रत्यक्षसद्भावे प्रमाणभावः । परबुद्धेरप्रत्यक्षत्वात् । न चेश्वरः [1]स्वधर्मिकस्वेतरभेदप्रत्यक्षवान्, आत्मत्वात् अस्मदादिवदित्यनुमानं मानमिति वाच्यम् । अनुकूलतर्काभावेनाप्रयोजकत्वात् । नाप्यागमः । तस्य तादृशार्थे प्रामाण्यानवधारणादित्यत आह — ईश्वरस्येति ॥ तद्वचनमिति ॥ कृष्णरूपेश्वरवचनमित्यर्थः । तथाचेदं वाक्यं वाक्यार्थविषयकेश्वरीयप्रत्यक्षपूर्वकम् । ईश्वरीयप्रमाणवाक्यत्वात् । [2]तादृशवाक्यान्तरवत् । [3]परोक्षज्ञानरहित ईश्वरो वैतद्वाक्यार्थज्ञानवान् ।

---

इति द्विवचनस्य भेदव्याप्यद्वित्वे शक्तिरिति तद्वाचकशब्दप्रयोगात् तत्प्रत्यक्षानुमानं सुलभमिति भावः ।

[1] ॥ स्वधर्मिकस्वेतरप्रतियोगिकभेदः ..... नियममभिप्रेत्येति ॥ नियमः = व्याप्तिः । यः यद्धर्मिकस्वेतरप्रतियोगिकः भेदः सः तत्प्रत्यक्षविषय इति व्याप्तिः । तथा च, स्वशब्देन चैत्रग्रहणे चैत्रधर्मिकचैत्रेतरप्रतियोगिकभेदः चैत्रप्रत्यक्षविषय इति व्याप्तिसमन्वयः ।

[2] ॥ तादृशवाक्यान्तरवदिति ॥ `अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा' इत्यादिवाक्यवदित्यर्थः ।

[3] ॥ परोक्षज्ञानरहित ईश्वर इति ॥ अत्र `ईश्वरः एतद्वाक्यार्थज्ञानवान् एतद्वाक्यप्रयोक्तृत्वात्' इत्याद्येव प्रयोगः अभिप्रेतः । परोक्षज्ञानरहित इत्येतन्न पक्षान्तर्गतम् । अनुमानेन सामान्यतः वाक्यार्थज्ञाने सिद्धे तत् ज्ञानं परोक्षं कुतो न स्यादिति जिज्ञासायामीश्वरस्य

एतद्वाक्यप्रयोक्तृत्वात् । यो यद्वाक्यप्रयोक्ता स तदर्थज्ञानवान् । यथा यज्ञदत्त इत्याद्यनुमानमीश्वरस्य जीवप्रकृतिभिन्नत्वरूपवाक्यार्थप्रत्यक्षसद्भावे प्रमाणम् । एतद्वाक्यप्रामाण्यं चोभयवादिसिद्धम् । एतादृशागमानुगृहीतत्वात् [1]उक्तानुमानमपि प्रमाणमेवेत्याशयः । यद्यपि भेदप्रतिपादकतद्वाक्येन तत्प्रत्यक्षं प्रसाध्य तेन भेदसाधनापेक्षया तद्वाक्येनैव भेदसाधने लाघवम् । तथापि परेण जीवेश्वरभेदे प्रत्यक्षप्रमाणासम्भवस्योक्ततया तन्निषेधाय परम्पराश्रयणम् ।

अथ व्यावहारिकभेदस्यैवेश्वरीयप्रत्यक्षविषयत्वान्न ततः पारमार्थिकभेदसिद्धिरिति चेत् स किं पारमार्थिकत्वेन प्रतीयते व्यावहारिकत्वेनैव वा । नाद्यः । ईश्वरस्यापि भ्रान्तत्वापातात् । द्वितीये च तद्व्यावहारिकत्वं बाध्यमबाध्यं वा । आद्ये बाध्यार्थग्राहित्वात् [2]स एव दोषः । तत्त्वतो भेदस्य व्यावहारिकत्वापत्तिश्च । अन्ते त्वपसिद्धान्तः ।

किञ्चोक्तवचनानां [3]वक्ष्यमाणरीत्या व्यावहारिकभेदपरत्वानुपपत्तौ तदनुमेयतदर्थभूतभेदप्रत्यक्षस्य कथं व्यावहारिकविषयत्वमिति दिक् ।

ननु प्रतियोग्यादिप्रत्यक्षाभावेन जीवेश्वरभेदप्रत्यक्षं प्रागेव दूषितमतः

---

परोक्षज्ञानरहितत्वात् परिशेषतः प्रत्यक्षसिद्धिरिति परिशेषोत्थापनसूचनाय परोक्षज्ञानरहित इत्युक्तम् ।

[1] ॥ उक्तानुमानमपि प्रमाणमेवेत्याशय इति ॥ ईश्वरः स्वधर्मिकस्वेतरभेदप्रत्यक्षवान् आत्मत्वात् अस्मदादिवदिति यदनुमानं प्राक् अनुकूलतर्काभावेन अप्रयोजकत्वात् निराकृतं तदत्र अभिप्रेतम् ।

[2] ॥ स एव दोष इति ॥ ईश्वरस्य भ्रान्तत्वापातदोषः ।

[3] ॥ वक्ष्यमाणरीत्येति ॥ अग्रे २७तम२८तममूलयोः ।

कथमेतदित्यत आह — **ईश्वरस्येति** ॥ अन्यथा सर्वज्ञत्वानुपपत्तेरिति भावः । एतच्चाभ्युपेत्यैवोक्तम् । उक्तप्रतियोगिप्रत्यक्षापेक्षाया अनुपदमेव दूष्यत्वादीश्वरप्रत्यक्षस्य कारणानपेक्षत्वाच्चेति सूचनाय न दोषावकाश इत्यनुक्त्वा न चोद्यावकाश इत्युक्तम् । जीवाधिकरणकस्तु भेदो जीवस्य प्रत्यक्ष इति सम्बन्धः । नाहं सर्वज्ञो नाहं निर्दुःख इत्यनुभवादिति भावः ।

IMP नन्वीश्वरस्याप्रत्यक्षत्वात्कथं तत्प्रतियोगिकभेदस्य प्रत्यक्षत्वमिति चेत् तत्किं प्रतियोगिप्रत्यक्षं सप्रतियोगिकपदार्थप्रत्यक्षमात्रेऽभावप्रत्यक्षमात्रेऽन्योन्याभावप्रत्यक्ष एव वा कारणम् ? किं वा [1]योग्यानुपलब्धेरभावप्रत्यक्षहेतुत्वादभावयोग्यत्वे प्रतियोगियोग्यतायाः प्रयोजकत्वमिष्यते ? आद्यपक्षत्रयं दूषयति — **सप्रतियोगिकेति** ॥ इत्यादौ प्रत्यक्षे व्यभिचारात् । पूर्वक्षणे प्रतियोगिभूतगवयादिप्रत्यक्षाभावेऽपि तादृशप्रत्यक्षजननादिति भावः । चतुर्थं तृतीयदोषातिदेशेन दूषयति — **एतेनेति** ॥ एतदेव विवृणोति ॥ **स्तम्भ इति** ॥ 'प्रतियोगिनः पिशाचस्यायोग्यत्वेऽपी'त्यादिः । इत्यनुभवात् इत्याकारकप्रत्यक्षजननात् । तथाच तत्र व्यभिचारेण योग्यानुपलब्धेरभावप्रत्यक्षसामान्यहेतुत्वासम्भवान्नाभावयोग्यतायाः प्रतियोगियोग्यताधीनत्वमिति भावः ।

यद्वा, ननु पिशाचभेदप्रत्यक्षमेव नास्तीति नोक्तव्यभिचार इत्यत आह — **स्तम्भ इति** ॥ **इत्यनुभवात्** इति प्रत्यक्षस्यानुभवसिद्धत्वात् ।

---

[1] ॥ **योग्यानुपलब्धेरभावप्रत्यक्षहेतुत्वादिति** ॥ प्रत्यक्षयोग्यस्य = प्रतियोगिनः अनुपलब्धिः = प्रत्यक्षाभावः भवति चेत् तत्सहकारेण अभावप्रत्यक्षमुदेति । अत एव घटशून्ये भूतले `इह घटो नास्ती'ति प्रत्यक्षं भवति । न तु `इह परमाणुः नास्ति' इति प्रत्यक्षं भवति, प्रतियोगिनः परमाणोः प्रत्यक्षायोग्यत्वात् इति भावः ।

अन्यथाऽनुभवविरोध इति भावः । ननु पिशाचो न भवतीति प्रतीतिः [1]तद्विरोधविषयैवास्तु । विरोधस्यापि नञर्थत्वादत आह — **अन्योन्याभावेति** ॥ अर्थान्तरानुपस्थितावपि तस्यानुभवसिद्धत्वादिति भावः । नन्वभावयोग्यतायाः प्रतियोगियोग्यतानधीनत्वे गुरुत्वाद्यभावप्रत्यक्षापत्तिः । न च संसर्गाभावप्रत्यक्षे प्रतियोगियोग्यत्वम्, अन्योन्याभावप्रत्यक्षे चाधिकरणयोग्यत्वं प्रयोजकमिति वाच्यम् । स्तम्भे पिशाचत्वात्यन्ताभावस्य वायावुद्भूतरूपवद्भेदस्य च प्रत्यक्षानुपपत्तेरिति चेन्न । अनुभवानुसारेण तत्तदभावत्वस्यैव तत्तद्योग्यताप्रयोजकत्वात् ॥ **विष्णुमित्रस्येति** ॥ नाहं यज्ञमित्र इत्याद्यनुभवादिति भावः । इत्यादीत्यादिना सर्वस्यापि स्वधर्मिकस्वेतरप्रतियोगिकभेदः स्वप्रत्यक्ष इत्येतत्परिग्रहः ।

(१२) (श.) सिद्धान्तयति — **अत्रेति** ॥ अत्र भेदप्रमाणदूषणविषये । अयं वक्ष्यमाणः । परिहारः दूषणोद्धारप्रकारः । अत्राभेदसाधकप्रमाणविषये

---

[1] ॥ **तद्विरोधविषयैवास्त्विति** ॥

`तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता ।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः ॥'

इति कारिकोक्तदिशा नञः षडर्थेषु विरोधोऽन्यतमः । असुरशब्दस्य सुरविरोध्यर्थकतया नञः विरोधोऽप्यर्थतया स्वीकृतः । प्रकृतेऽपि स एवार्थः अस्त्विति आक्षेप्तुराशयः ॥ अर्थान्तरानुपस्थितावपीति ॥ नञः विरोधार्थकत्वं तत्रैव यत्र विरोधद्योतकमर्थान्तरमुपस्थितं भवति । यथा दैत्याः असुराः इत्यत्र दितिपुत्रत्वरूपधर्मोपस्थित्या असुरशब्दस्य सुरविरोध्यर्थकत्वम् । असुरशब्दमात्रप्रयोगेऽपि यत् सुरविरोध्यर्थोपस्थापकत्वं तत् सकृत् तथा ज्ञातवतां संस्कारसहकारेणैव । प्रकृते तथा अर्थान्तरोपस्थितिर्नास्तीति भावः ।

परिहारो निराकरणप्रकार इति चार्थः । तत्र तावद्भेदप्रमाणदूषण-परिहारप्रकारं दर्शयति — **यत्तावदित्यादिना** ॥ **ईश्वरस्य प्रत्यक्ष इति** ॥ तस्य नाहं जीव इत्यनुभवसिद्धत्वादिति भावः । नन्वीश्वरबुद्धेर-प्रत्यक्षत्वेनेश्वरस्य तादृशप्रत्यक्षं वर्तत इत्यस्माभिः कथं ज्ञातव्यमित्यत आह — **तस्येति** ॥ कृष्णरूपेणेशेन 'द्वाविमौ पुरुषौ लोक' इत्यादिना क्षराक्षरपुरुषद्वयं निरूप्य उत्तमः पुरुष आभ्यामन्यो न त्वेनयोरन्यतर इत्यभिहितम् । नच तस्यातादृशप्रत्यक्षाभावे एवंविधवचनप्रयोगः सम्भवति । अतो ज्ञायते अस्तीशस्यैतादृशप्रत्यक्षमितीति भावः । जीवस्याणुत्वेनाप्रत्यक्षात्कथं तत्प्रतियोगिकभेदस्य प्रत्यक्षत्वमित्यत आह — **ईश्वरस्येति** ॥ क्षमत्वात् समर्थत्वात् । सर्वज्ञत्वादिति भावः । इदं चाभ्युपेत्योक्तम् । सप्रतियोगिकेत्यादिनाऽनुपदमेव तादृशनियम-निराकरणादिति ध्येयम् ॥ **जीवस्येति** ॥ तस्य नाहं सर्वज्ञो न निर्दुःख इत्यनुभवसद्भावादिति भावः । प्रतियोगिभूतेश्वरस्याप्रत्यक्षत्वे कथं तत्प्रतियोगिकभेदस्य प्रत्यक्षत्वमित्यत आह — **सप्रतियोगिकेति** ॥ प्रतियोगिनिरूप्येत्यर्थः ॥ **इयमिति** ॥ वने गवयमनुभूय नगरगतस्य गोदर्शने इयं गौर्गवयसदृशीति गवयप्रतियोगिकसादृश्यप्रत्यक्षं जायते । नच तत्र प्रतियोगिभूतगवयप्रत्यक्षमस्ति । तस्य वनस्थितत्वेन व्यवहितत्वात् । अतोऽत्र व्यभिचारान्नोक्तनियम इत्यर्थः । नन्वभावरूपसप्रतियोगिक-पदार्थप्रत्यक्षे प्रतियोगिप्रत्यक्षनियमोऽङ्गीक्रियते । सादृयस्य भावरूपत्वान्न तत्प्रत्यक्षे व्यभिचार इत्यत आह — **इह घटो नेति** ॥ इह भूतले घटो नास्तीति घटप्रतियोगिकाभावप्रत्यक्षं जायते । नच तत्र प्रतियोगि-भूतलघटप्रत्यक्षमस्ति । भूतले घटाभावेन तत्सन्निकर्षाभावात् । अतोऽत्र

व्यभिचारान्नोक्तनियम इति भावः । नन्वन्योन्याभावरूपसप्रतियोगिकापदार्थप्रत्यक्षे प्रतियोगिप्रत्यक्षनियमोऽङ्गीक्रियते । इह घटो नास्तीति प्रत्यक्षं च घटसंसर्गाभावविषयमतो न तत्र व्यभिचार इत्यत आह — **स्तम्भ इति** ॥ स्तम्भः पिशचो नेति पिशाचप्रतियोगिकान्योन्याभावप्रत्यक्षं जायते । न च तत्र प्रतियोगिभूतपिशाचप्रत्यक्षमस्ति । तस्यातीन्द्रियत्वात् । अतोऽत्र व्यभिचारान्नोक्तनियम इत्यर्थः । नन्वभावप्रत्यक्षयोग्यतायां प्रतियोगिप्रत्यक्षयोग्यता प्रयोजिका । यथा घटस्य प्रत्यक्षयोग्यत्वेन तदभावस्य प्रत्यक्षयोग्यत्वं परमाणोः प्रत्यक्षायोग्यत्वेन तदभावस्य प्रत्यक्षायोग्यत्वम् । अतः प्रतियोगिभूतेशस्य प्रत्यक्षायोग्यत्वात्कथं तत्प्रतियोगिकान्योन्याभावस्य प्रत्यक्षयोग्यत्वम् । प्रत्यक्षयोग्यताभावे च कस्य प्रत्यक्षत्वमित्याशङ्क्यातिदेशेन दूषयति — **एतेनेति** ॥ **अयोग्येति** ॥ प्रत्यक्षायोग्येत्यर्थः । एतेनेत्युक्तं विवृणोति ॥ **स्तम्भ इति** ॥ पिशाचप्रतियोगिकान्योन्याभावस्य तावत्प्रत्यक्षयोग्यत्वमस्ति । नच तत्र पिशाचस्य प्रत्यक्षयोग्यताऽस्ति । अतोऽत्र व्यभिचारान्नोक्तनियम इत्यर्थः । ननु तर्हि परमाण्वभावप्रत्यक्षं स्यादिति वाच्यम् । किं परमाणुसंसर्गाभावस्य प्रत्यक्षत्वमापाद्यते उतान्योन्याभावस्य । नाद्यः । संसर्गाभावप्रत्यक्षयोग्यतायां प्रतियोगिप्रत्यक्षयोग्यतायाः कारणत्वेन तत्र तदभावात् । न द्वितीयः । इष्टापत्तेः । घटः परमाणुर्नेति परमाण्वन्योन्याभावप्रत्यक्षाभ्युपगमादिति भावः । परस्परं जीवभेदस्यापि प्रत्यक्षसिद्धत्वमाह — **एवमिति** ॥ विष्णुमित्रस्य नाहं यज्ञदत्त इत्यनुभवसद्भावादिति भावः ।

**(१३) ननु 'नाहं निर्दुःखो न सर्वज्ञ' इति निर्दुःखत्वादिसंसर्गाभाव एवात्मन्यनुभूयते नेश्वरप्रतियोगिकान्योन्याभाव इति चेन्न । मयि**

निर्दुःखत्वं सर्वज्ञत्वादिकं वा नास्तीत्यनुभव एव तत्संसर्गाभाव-विषयकः । निर्दुःखत्वस्यैव प्रतियोगितया तत्रोपादानात् (प्रतियोगि-तयोपादानात्)। न चास्य निर्दुःखत्वात्यन्ताभावो विषयः । धर्मिप्रतियोगिनोस्तादात्म्यं सामानाधिकरण्येन प्रसज्य तस्यैव निषेधात् । प्रत्यक्षप्रामाण्यं तु सुदृढमन्यत्रोपपादितमस्माभिः ।

(१३) (भ.) नन्वीश्वरप्रतियोगिको जीवधर्मिको भेदस्तु जीवस्य प्रत्यक्ष इति यदुक्तम् । तन्न । नाहमीश्वर इति कस्याप्यनुभवाभावात् । न च नाहं निर्दुःखो न सर्वज्ञ इत्यस्ति तावत्सर्वेषामनुभवः । स एव हि नाहमीश्वर इत्यनुभवः । तल्लक्षणत्वादीश्वरस्येति वाच्यम् । अस्यानुभवस्य निर्दुःखत्वादिसंसर्गाभावविषयकत्वेन निर्दुःखादिरूपेश्वरप्रतियोगिका-न्योन्याभावविषयकत्वाभावादित्याशङ्कते — नन्विति ॥ एवं शङ्कमानो न लौकिको नापि परीक्षक इति भावेन समाधत्ते ॥ मैवमिति ॥ इह घटो नास्तीतिवन्मयि निर्दुःखत्वं सर्वज्ञत्वं वा नास्तीति निर्दुःखत्वादिकं प्रतियोगितयोपादाय यद्ययमनुभवः प्रवर्तेत स्यात्तदा संसर्गाभावविषयकः । न चैवम् । किंत्वहं निर्दुःख सर्वज्ञ इति सामानाधिकरण्येन धर्मिप्रतियोगिनोर्जीवेश्वरयोस्तादात्म्यं प्रसज्य तन्निषेधविषयत्वादन्योन्या-भावविषयक एवेति भावः । अत्र सामानाधिकरण्यं नामाहन्त्व-निर्दुःखत्वयोरेकाधिकरण्यं न त्वेकविभक्त्यन्तत्वम् । प्रतीतौ विभक्त्यादे-रभावात् । तस्य शब्दधर्मत्वात् । तथाऽपि केचिदेकविभक्त्यन्तत्वमेव सामानाधिकरण्यमत्र विवक्षितमिति व्याचक्रुः ।

ननु 'नाहं निर्दुःख' इत्याद्यनुभवस्य भेदविषयत्वेऽपि नानेन तत्सिद्धिः । तस्याभेदसाधकबहुप्रमाणविरुद्धत्वेन प्रामाण्याभावादित्यत आह —

**प्रत्यक्षप्रामाण्यं त्विति** ॥ अन्यत्र न्यायामृते प्रथमपरिच्छेदे प्रत्यक्षस्य जात्योपक्रमादिन्यायैश्च प्राबल्यव्युत्पादनवादमारभ्य प्रत्यक्षस्य पारमार्थिकसत्वग्राहित्वव्युत्पादनवादपर्यन्तं नवप्रकरणेषु निपुणतर-मुपपादितमित्यर्थः । तत्रायं विवेकः । बाह्यप्रत्यक्षस्य बलवत्प्रत्यक्षेतरेण न बाधः । **साक्षिप्रत्यक्षस्य न केनापि बाध इति** ॥ तत्र नाहं निर्दुःखो न सर्वज्ञ इति तु साक्षिप्रत्यक्षमेव । अतो न केनापि तस्य बाधोऽस्तीति । निर्बाधसाक्षिप्रत्यक्षप्रामाण्यस्य नियतत्वात्तेन जीवेशभेदः सिध्यत्येवेति भावः ।

(१३) (मु.) ॥ **संसर्गाभाव इति** ॥ सविशेषणे हीति न्यायानुग्रहात् दुःखाभावादिरूपयोग्याप्रतियोगित्वेन प्रत्यक्षवत्त्वसम्भवादभावैकविध्यरूप-लाघवाच्चेति भावः । नन्वेवमपीश्वरीयधर्मादभेदः प्राप्त इति वाच्यम् । तथाऽपि भेदप्रत्यक्षताभङ्गात् । वस्तुतस्तु तद्धर्माणां स्वात्यन्ता-भावसमानाधिकरणताङ्गीकारेण न कश्चिद्दोषः । तादात्म्यं सामानाधि-करण्येन प्रसज्येत । नाहं निर्दुःख इत्यत्राहंनिर्दुःखपदयोः समामानाधि-करण्येन तयोस्तादात्म्यमारोप्येत्यर्थः । एवञ्च मयि निर्दुःखत्वं सर्वज्ञत्वं वा नास्तीत्यत्र व्यधिकरणान्वयस्य संसर्गव्युत्पन्नतयाऽस्य संसर्गारोप्यकत्वेन संसर्गज्ञापकत्वं युक्तम् । उक्तप्रतीतेस्तु तादात्म्यारोप्यकत्वेन तद्विलक्षणाभावविषयत्यमेव वाच्यमित्यदोषः । भेदप्रत्यक्षं भ्रान्त-मित्युक्तमित्यत आह — **प्रत्यक्षेति** ॥ अन्यत्रेति । न्यायामृत इत्यर्थः । तथा हि । प्रत्यक्षप्रामाण्यं बाधकं तूष्णीं वा । आद्ये प्रत्यक्षेणानुमानेनागमेन बाधकशङ्कामात्राद्वा । नाद्यः । तदभावात् । भावे वा वैपरीत्यसम्भवात् । आद्यस्यासञ्जातविरोधित्वेन बलवत्त्वाच्च । न द्वितीयः । कालात्ययापदिष्ट-

मात्रोच्छेदापत्तेः । प्रत्यक्षस्य धर्मिग्राहकत्वेनोपजीव्यत्वाच्च । न तृतीयः । यजमानः प्रस्तर इति श्रुत्या तद्भेदप्रत्यक्षबाधोपपत्तेः । चन्द्रपादेशप्रत्यक्षं त्वागमविरोधात्प्रागेवान्यत्र क्लृप्तपरिणामसामग्रीविरहादपटुतया जातं पश्चादागमेन बाध्यते । न तुर्यः । अतिप्रसङ्गात् । अत एव न द्वितीयः । वर्तमानमात्रग्राहिप्रत्यक्षेणोत्तरकालिकसत्ता न सिध्यतीति चेन्न । तावताऽपि त्रिकालनिषेधरूपमिथ्यात्वासिद्धेरिति ।

(१३) (कु.) ॥ मयीति । अनुयोगिनि सप्तम्याः संसर्गाभावोल्लेक्ष-नियतत्वादिति भावः । ननु नाहं निर्दुःख इत्यादिकमस्तु भेदविषयकं तथाऽपि नानेन तत्सिद्धिरस्याप्रमाणत्वादित्यत आह — **प्रत्यक्षप्रामाण्यमिति** ॥ साक्षिरूपत्वादस्य प्रत्यक्षस्य साक्षिणश्च प्रमाणरूपत्वाद्बाधका-भावाच्च । 'नेह नानाऽस्ति' 'तत्त्वमसी'त्याद्यागमस्य त्वन्मतेऽखण्डार्थ परत्वेनाबाधकत्वात् । उपजीव्यप्रत्यक्षविरोधेन यजमानः प्रस्तर इत्याद्यागमवद्गौणार्थतासम्भवात् ।

**`भिन्ना जीवाः परो भिन्नस्तथाऽपि ज्ञानरूपतः ।**
**प्रोच्यन्ते ब्रह्मरूपेण वेदवादेषु सर्वशः' ।**

**`तद्गुणसारत्वात् तद्व्यपदेश'** इति स्मृतिसूत्रयोर्गौणार्थताया उक्तत्वाच्चेत्यादिना न्यायामृते प्रत्यक्षप्रामाण्यमुपपादितमित्यर्थः । ननु प्रतियोगिप्रत्यक्षस्य व्यभिचारेणाहेतुत्वेऽभावप्रत्यक्षे किं प्रयोजकम् । इन्द्रियसम्बद्धविशेषणतादिकमेवेति चेन्न । पिशाचाभावादेः प्रत्यक्षता-पातात् । न च योग्यप्रतियोगिकत्वं संसर्गाभावे तन्त्रम् । योग्याधिकरणत्वं चान्योन्याभावप्रत्यक्षे तेन न पिशाचाभावादेः प्रत्यक्षत्वम् । न वा स्तम्भे पिशाचान्योन्याभावस्याप्रत्यक्षत्वमिति वाच्यम् । घटे मनस्त्वात्यन्ता-

भावादेरप्रत्यक्षतापातात् । घटे परमाणु भेदादेः प्रत्यक्षतापातात् । किञ्च यत्किञ्चित्प्रतियोगियोग्यत्वं यावत्तद्योग्यत्वं वा तन्त्रम् । आद्ये मूर्तसामान्याभावप्रत्यक्षापातः । द्वितीये महति वायौ रूपसामान्याभावप्रत्यक्षापातः । एवमधिकरणयोग्यतायामपि विकल्पः । आद्य मूर्तसामान्ये पिशाचान्योन्याभावप्रत्यक्षप्रसङ्गः । द्वितीये महति वायौ रूपवदन्योन्याभावप्रत्यक्षापात इति चेत् । अत्रोदयनाचार्याः । प्रतियोगितद्व्याप्येतरयावत्प्रतियोग्युपलम्भकसमवधानं संसर्गाभावे योग्यता । तेन नातीन्द्रियान्योन्याभावाप्रत्यक्षापातः । न वा पिशाचाभावादेः प्रत्यक्षताप्रसङ्ग इति वदन्ति । तन्न । अन्योन्याभावप्रत्यक्षे योग्यतान्तरस्यानुक्तत्वेन तत्रेन्द्रियसम्बन्धविशेषणादेरेव हेतुत्वाङ्गीकारे गुरुत्ववदन्योन्याभावाप्रत्यक्षतापत्तेः । किञ्च यावत्तदुपलम्भकसमाधाने सम्भवति यावत्तदुपलम्भकतावच्छेदकं यत्तदवच्छिन्नसमवधानमपि तथा । भूतले घटाभावप्रत्यक्षस्थले यावद्घटोपलम्भकतावच्छेदकानां तत्तत्परामर्शत्वतत्तच्छब्दज्ञानत्वतत्तसंस्कारत्वादीनामाश्रयाणामभावात् । किञ्च प्रतियोगिव्याप्यत्वं कालिकेन दैशिकेन वा सम्बन्धेन । नाद्यः । घटसन्निकर्षस्य घटाव्याप्यतापातात् । घटनाशोत्तरं तन्नाशात् । कालिकेन नित्यव्याप्येतराप्रसिद्ध्या नित्यप्रतियोगिकसंसर्गाभावात्प्रत्यक्षतापाताच्च । न द्वितीयः । घटेन्द्रियसन्निकर्षस्यापि घटाव्याप्यत्वापत्त्या तत्समवधानाभावेन घटाभावस्याप्रत्यक्षतापत्तेः । प्रतियोगिमदसाधरणकारणं व्याप्यपदेन विवक्षितमिति चेन्न । आलोकादिव्यावृत्तासाधारण्यस्य दुर्वचत्वात् । किञ्च यावत्तदुपलम्भकसमवहिताभावत्वेन वा । अभावसमवहितयावत्तदुपलम्भकत्वेन वा हेतुत्वमित्वत्र विनिगमनाभावः । इन्द्रियादेरभाव-

प्रत्यक्षहेतुतया योग्यतारूपकारणतावच्छेदककुक्षिनिक्षेपायोगात् । संयोगिनाशजन्यनाशाप्रत्यत्यक्षता च संयोगिनोस्तत्प्रक्षस्य वा संयोगाद्याप्यत्वेन संयोगोपलम्भकत्वेन समवधानाभावादिति दिक् । मणिकृतस्तु । प्रतियोगिसत्त्वप्रसञ्जन प्रसञ्जितप्रतियोग्युपलम्भकाभाववत्त्वं संसर्गाभावान्योन्याभावसाधारणी योग्यता । यत्राधिकरणे संयोग-तादात्म्यादिसम्बन्धावच्छिन्नप्रतियोगिसत्त्वेनापादितेन तत्सम्बन्धेन प्रतियोग्युपलम्भो यस्याभावस्यापादयितुं शक्यते सोऽभावोऽत्राधिकरणे योग्य इत्यर्थः । प्रतियोगिसत्त्वं चाविनश्यदवस्थप्रतियोगिसत्त्वं तेन संयोगिनाशजन्यसंयोगनाशप्रत्यक्षोपपत्तिः । पिशाचान्योन्याभाव-तदत्यन्ताभावयोः प्रत्यक्षाप्रत्यक्षोपपत्तिश्चेति वदन्ति । तदपि न । तथा हि । प्रतियोगिसत्त्वस्य प्रतियोग्युपलम्भप्रसञ्जकत्वं तदुपहितत्वं तद्योग्यत्वं वा । नाद्यः । तर्करूपस्य तस्याभावप्रत्यक्षात्पूर्वं नियमेनाभावात् । न द्वितीयः । व्याप्यत्वातिरिक्तस्य तस्यानिरुक्तेः । अस्तु तदेव किं बाधकमिति चेत् । उच्यते । शुद्धं प्रतियोगिसत्त्वं व्याप्यविशेषितं[1] वाऽभिमतम् । आद्ये पटाद्यभावप्रत्यक्षं न स्यात् । केवलसत्त्वस्योपलम्भाव्याप्यत्वात् । द्वितीये जलपरमाणौ पृथिवीत्वाभावाप्रत्यक्षापत्तेः । तत्रापि महत्त्वविशिष्टपृथिवीत्व-स्योपलम्भव्याप्यत्वात् । न च धर्म्यवृत्तिविशेषणावच्छिन्नप्रतियोगिसत्त्वं व्याप्यं विवक्षितं महत्त्वादिकं च परमाणववृत्तीति नोक्तदोष इति वाच्यम् । इन्द्रियसन्निकर्षपार्थिवाणुभिन्नत्वादिसमवहितपृथिवीत्वसत्त्वस्य तथात्वे-नोक्तदोषानिवृत्तेः । न च तत्राधिकरणे यत्प्रतियोग्युपलम्भकं तदतिरिक्तानवच्छिन्नं तत्तथा । पार्थिवाणुभिन्नत्वादेस्तदतिरिक्तत्वान्नोक्तदोष

---

[1] `-सत्त्वम् । व्याप्य-' मु.पाठः ।

इति वाच्यम् । तत्राधिकरणे प्रतियोग्युपलम्भातिरिक्तानवच्छिन्नंशुद्धं प्रतियोगिसत्त्वं तु न तथेति यावत्प्रतियोग्युपलम्भकावच्छिन्नं व्याप्यं वाच्यम् । तत्रापि यत्किञ्चित्प्रतियोग्युपलम्भकावच्छिन्नं न तथेति यावत्प्रतियोग्युपलम्भकावच्छिन्नतया वाच्यम् । एवञ्च प्राप्ताप्राप्तविवेकेन यावत्प्रतियोग्युपलम्भकसमवाधानमेव योग्यतेत्युक्तं स्यात् । स च प्राचीनैर्योग्यताऽत्र च दोषाणामुक्तत्वात् । किञ्चापाद्योपलम्भो लौकिकोऽलौकिको वा । नाद्यः । स्तम्भे पिशाचान्योन्याभावाप्रत्यक्षतापातात् । तत्र तादृशोपलम्भासिद्धेः । न द्वितीयः । तादात्म्येन पिशाचसत्त्वस्यालौकिकोपलम्भाव्याप्यत्वात् । न द्वितीयः । तादात्म्येन पिशाचसत्त्वस्य लौकिकोपालम्भाव्याप्यत्वात् । न चालौकिकोपालम्भकसमवहितं तत्सत्त्वं तथेति वाच्यम् । पिशाचात्यन्ताभावप्रत्यक्षापत्तेरिति दिक् । तस्मादिन्द्रियसन्निकर्षाद्यविशेषे कश्चिदेवाभावः कस्यचित्[1] प्रत्यक्ष इत्यत्र नियामकं दुर्वचनीयमितीश्वरान्योन्याभावप्रत्यक्षे का प्रत्याशेति चेत् । उच्यते । अनुगतनियामकमभावेषु नास्त्येव । किन्तु भावेष्विव तत्तदभावप्रत्यक्षे भिन्नभिन्नैव सामग्री नियामिका । गुरुत्वादिवत् केषाञ्चिदभावानां स्वरूपेण प्रत्यक्षायोग्यत्वादेवाप्रत्यक्षत्वम् । सामग्री चान्वयव्यतिरेकाभ्यां यथायथमुन्नेया । स्तम्भः पिशाचो नेति वन्नाहं सर्वज्ञ इत्यनुभावान्नेश्वरान्योन्याभावस्याप्रत्यक्षत्वसम्भावना । इतरथा घटान्योप्याभावप्रत्यक्षत्वेऽपि का प्रत्याशेति सर्वं सुस्थम् ।

(१२) (हु.) ॥ न चास्येति ॥ इदानीमहं न शिखीति प्रतीतेरिवा-

---

[1] `कश्चित्' मु.पाठः ।

नुयोगिनः सप्तम्यन्तपदेनानुपादानेऽपि[1] प्रतियोगिन आश्रयांशे भानेन प्रतियोगितया प्रथमान्तपदेनानुपादानेऽपि तत्संसर्गाभावविषयकत्व-सम्भवात् । न च दृष्टान्ते विवादः । भेदस्य व्याप्यवृत्तितया शिखिभेदस्य तत्र भानायोगादित्याशयः ॥ **तादात्म्यमिति** ॥ सामानाधिकरण्येन समानविभक्तिकपदेनोल्लेखबलेन । निषेधात् निषेधानुभवात् । तृतीयान्तमत्रैव हेतुः । तादात्म्याभाव एव हि भेदः । दृष्टान्ते त्वगत्या तत्र तादृशव्यवहारस्य पारिभाषिकत्वं वा यथाकथञ्चिदत्यन्ताभावबोधकत्वं वा भेद(स्य )व्याप्यवृत्तित्वं स्वीकृत्य तद्बाधकत्वं वाऽभ्युपगम्यत[2] इति भावः । ननु सर्वमपि प्रत्यक्षं श्रुतिविरोधादप्रमाणमेवेति न साधकम् । ईश्वरप्रत्यक्षस्यापि विक्षेपशक्तिमन्मायारूपदोषमूलकत्वादित्यत आह — **प्रत्यक्षप्रामाण्यमिति** ॥ प्रत्यक्षस्य श्रुतिं प्रत्युपजीव्यत्वनिरवकाशत्व-स्वभावप्राबल्यादिभिस्तत्प्रामाण्यं सुदृढतया न्यायामृते उपपादितमित्यर्थः ।

(१३) (का.) स्यादेवमुक्तभेदस्य प्रत्यक्षत्वं, यदि नाहं निर्दुःख इत्यादि प्रत्यक्षं भेदविषयं स्यात्, न त्वेवमित्याशङ्कते — **नन्विति** ॥ **प्रतियोगितयोपादानादिति** ॥ अभावांशे प्रतियोगितासंसर्गेण विशेषणत्वा-दित्यर्थः । अस्य नाहं निर्दुःख इत्यादिप्रत्यक्षस्य ॥ **धर्मिप्रतियागिनो-रिति** ॥ 'नाहं निर्दुःख' इति वाक्येनेत्यादिः । **धर्मिणि** जीवे **प्रतियोगिन** ईश्वरस्य तादात्म्यं धर्मिप्रतियोगिपदयोः **समानविभक्तिकत्वेनारोप्य** । तादृशतादात्म्यारोपजनकसमानविभक्तिकधर्मिप्रतियोगिपदे समुल्लिख्येति यावत् । **तस्य तादात्म्यस्यैव निषेधात्** अभावबोधनादित्यर्थः ।

---

[1] 'सप्तम्यन्तपदेनानभिलापेऽपि' ह. २. 'भेदव्याप्यवृत्तित्वं वा स्वीक्रियते' ह.

अयमाशयः । [1]यादृशशब्दाद्यादृशार्थस्य बोधस्तादृशशब्दोल्लिखितप्रतीतौ तादृशार्थ एव भासते । [2]नञसमभिव्याहारे यत्र यादृशधर्मः प्रतीयते नञ्समभिव्याहारे तत्र तदभावो बुध्यते । तथाच मयि निर्दुःखत्वमस्तीत्यादौ धर्मिणि निर्दुःखत्वभानात्तदभावस्यैव निर्दुःखत्वं नास्तीत्यादौ भानसम्भवः । न च मयि निर्दुःखत्वमस्तीत्यादिशब्दान्निर्दुःखत्वादौ धर्मिनिरूपितास्तित्वस्यैव बोधात् कथमुक्तप्रतीतौ धर्मिणि निर्दुःखत्वभानमिति वाच्यम् । निर्दुःखत्वे धर्मिनिरूपितास्तित्वभाने धर्मिणि निर्दुःखत्वभानस्याप्यनुभवसिद्धत्वात्[3] ।

---

1 ॥ यादृशशब्दाद्यादृशार्थस्येति ॥ अर्थं बुध्वा शब्दरचनेति नियमात् वक्तुः वाक्येन योऽर्थः भासते वाक्यप्रयोगकारणीभूतवक्तृज्ञानेऽपि सः अर्थः भासते इति अस्य हृदयम् । अस्य समन्वयः - यादृशशब्दात् = इह भूतले घटोऽस्ति इत्यस्मात्, यादृशार्थस्य = भूतले घटरूपार्थस्य बोधः, तादृशशब्दोल्लिखितप्रतीतौ = तादृशशब्दोल्लेखकारणीभूतप्रतीतौ तादृशार्थ एव = भूतले घटरूपार्थ एव भासते - इति ।

2 ॥ नञसमभिव्याहार इति ॥ समभिव्याहारः सहप्रयोगः । तथा च नञसमभिव्याहारे = नञ्राहित्ये भूतले घटोऽस्ति इत्यत्र, यत्र = भूतले, यादृशधर्मः = घटः, प्रतीयते, सञ्समभिव्याहारे = भूतले घटो नास्तीत्यत्र, तत्र = भूतले, तदभावः = घटाभावः प्रतीयते । प्रकृते, नञसमभिव्याहारे = मयि निर्दुःखत्वमस्ति इति कथने, यत्र = अस्मत्पदार्थे, यादृशार्थः = निर्दुःखत्वरूपोऽर्थः प्रतीयते, नञ्समभिव्याहारे = मयि निर्दुःखत्वं नास्तीति कथने, तत्र = अस्मत्पदार्थे, तदभावः = निर्दुःखत्वाभावः प्रतीयते - इति । एवमेव नाहं निर्दुःख इति प्रतीतावपि समन्वयः द्रष्टव्यः ।

3 ॥ अनुभवसिद्धत्वादिति ॥ अत्र श्रीप्रह्लादाचार्याः - `मयि निर्दुःखत्वमस्ति' इत्यादौ नञसमभिव्याहारस्थले अस्मच्छब्दार्थे धर्मिणि निर्दुःखत्वाभावात् `मयि निर्दुःखत्वं नास्ति'

[1]एवमहं निर्दुःख इत्यादौ धर्मिणि निर्दुःखतादात्म्यभानात् तदभावस्यैव नाहं निर्दुःख इत्यादौ भानमित्युक्तान्योन्याभावस्य प्रत्यक्षत्वमावश्यकम् । तादात्म्यनिषेधस्यैवान्योन्याभावत्वात् । न च निर्दुःखतादात्म्यस्य निर्दुःखत्वरूपतया तदत्यन्ताभाव एवायमिति वाच्यम् । तादात्म्यत्वेन तादात्म्यनिषेधस्यान्योन्याभावत्वात् । एवं नाहं निर्दुःख इत्यादौ निर्दुःखप्रतियोगिकत्वेन भासमानभेदे तत्तादात्म्यप्रतियोगिकत्वमपि

---

इत्यादिनञ्समभिव्याहारस्थले तस्मिन्नेव धर्मिणि निर्दुःखत्वाभावः बोध्यत इति यदुक्तं तन्न । शाब्दबोधो ह्युत्सर्गतः प्रथमान्तार्थमुख्यविशेष्यकः । `मयि निर्दुःखत्वमस्ति' इत्यत्र च प्रथमान्तार्थो निर्दुःखत्वम् । मयीत्यत्रास्मच्छब्दार्थो धर्मी । निरूपितत्वं सप्तम्यर्थे । तस्य च अस् धात्वर्थाधेयतायामाश्रयतासम्बन्धेनान्वयः । आख्यातार्थः आश्रयत्वम् । धात्वर्थस्य च निरूपितत्वसम्बेनाश्रयतायां , तस्याश्च प्रथमान्तर्थे निर्दुःखत्वे स्वरूप-सम्बन्धेनान्वय इति मन्निरूपिताधेयतानिरूपिताश्रयताप्रकारकः निर्दुःखत्वमुख्य-विशेष्यकः शाब्दबोधस्तत्र जायते । सति चैवं सप्तम्यन्तार्थधर्मिविशेष्यकनिर्दुःखत्व-प्रकारकबोधस्तस्माद्वाक्याज्जायते इति कथमिति शङ्का ।

समाधिस्तु- सत्यमिदं यत्-"मयि निर्दुःखत्वमस्ति" इत्यादौ निर्दुःखत्वविशेष्यक-धर्मिनिरूपितास्तित्वप्रकारकशाब्दबोधो भवतीति । तथापि तादृशशाब्दबोधानन्तरं तुल्यवित्तिवेद्यतया धर्मिणि निर्दुःखत्वभानमप्यनुभवसिद्धमवश्यं स्वीकार्यम् । तदनुरोधेनैव "मयि निर्दुःखत्वमस्ति" इत्यादौ धर्मिणि निर्दुःखत्वभानमित्युक्तं युक्तमिति ।

[1] ॥ अहं निर्दुःख इत्यादौ धर्मिणि निर्दुःखतादात्म्यभानादिति ॥ विशेषणविभक्तेः निरर्थकत्वं, शब्दसाधुत्वार्थमेव तत्प्रयोग इत्येकः पक्षः । अस्मिन् पक्षे विशेषणविशेष्ययोरभेदः संसर्गमर्यादया भासते । विशेषणविभक्तेः तादात्म्यमर्थ इत्यपरः पक्षः । तदनुसारेण अहं निर्दुःख इत्यत्र अस्मत्पदार्थे निर्दुःखतादात्म्यं प्रतीयते - इति भावः ।

भासते । निर्दुःखत्वं नास्तीत्यादौ तु न तथेति नैकविषयत्वमिति ध्येयम् ।

नन्वस्तु जीवेश्वरभेदप्रत्यक्षम् । किं त्वप्रमाणमेव । दर्शितप्रमाणबाधितत्वादित्यत आह — **प्रत्यक्षप्रामाण्यमिति** ॥ **सुदृढमुपपादितं** मानान्तराबाध्यत्वेनोपपादितं न्यायामृतादौ । अन्यथा वह्निरनुष्णः कृतकत्वादित्यादौ [1]बाधोच्छेदापत्तेरिति भावः । अस्यार्थस्य पूर्वाचार्यैरेवोक्तत्वादुक्तमित्यनुक्त्वोपपादितमित्युक्तम् । जीवेशाभेदप्रत्यक्षं तु नास्त्येवेति वक्ष्यते । यद्वा, प्रकृतस्य **जीवेश्वरभेदप्रत्यक्षस्यैव प्रामाण्यं सुदृढमव्यभिचार्युपपादितम्** । अस्य साक्षिप्रत्यक्षत्वात् साक्षिणश्च नियत-प्रामाण्यकत्वादिति भावः ।

(१३) (श.) यदुक्तमीशप्रतियोगिको जीवधर्मिको भेदो जीवस्य प्रत्यक्ष इति तन्न । तस्य तादृशप्रत्यक्षाभावात् । नच नाहं सर्वज्ञो न निर्दुःख इति प्रत्यक्षमेवेशभेदावगाहीति वाच्यम् । तस्य जीवे निर्दुःखत्वात्यन्ता-भावविषयकत्वेन निर्दुःखेशान्योन्याभावविषयकत्वाभावादिति शङ्कते — **नन्विति** ॥ यद्युक्तप्रत्यक्षस्य निर्दुःखत्वात्यन्ताभावविषयकत्वं स्यात् तर्हि मयि निर्दुःखत्वमिति निर्दुःखत्वं प्रतियोगित्वेनापाद्य तन्निषेधः क्रियेत । नचैवम् । किन्त्वहं निर्दुःख इत्यस्मच्छब्दवाच्यजीवस्य निर्दुःख-शब्दावाच्येनेशेनैक्यं प्रतियोगित्वेनापाद्य नेति निषिध्यते । तादात्म्य-निषेधरूपश्चान्योन्याभाव एव । अत ईशप्रतियोगिकान्योन्याभाव-विषयकत्वमेवास्येति ॥ परिहरति ॥ **मयीति** ॥ अस्य नाहं निर्दुःख इति प्रत्यक्षस्य ॥ **धर्मिप्रतियोगिनोरिति** ॥ धर्मी अस्मच्छब्दवाच्यो जीवः ।

---

[1] ॥ बाधोच्छेदापत्तेरिति ॥ प्रत्यक्षं दुर्बलं सत् अनुमानेनैव यदि बाध्येत तदा वह्निरनुष्ण इत्यनुमानमेव प्रत्यक्षबाधकं स्यात्, न तु स्वयं प्रत्यक्षबाध्यमिति भावः ।

प्रतियोगी निर्दुःखशब्दाभिधेय ईशः । तादात्म्यप्रसञ्जनज्ञापकमुक्तम् ॥ **सामानाधिकरण्येनेति** ॥ अत्र सामानाधिकरण्यमेकविभक्त्यन्तत्वम् । तथाच शुक्लः पट इत्यादिवदहं निर्दुःख इत्यनयोरपि प्रथमान्तत्वेन तादात्म्यप्रतिपादकत्वमिति भावः । ननु नीलं नभ इति नभोनैल्यग्राहि-प्रत्यक्षस्य नभो नीरूपं विभुत्वादात्मवदित्यनुमानविरुद्धत्वेन प्रादेशपरि-मितश्चन्द्रमा इति चन्द्रप्रादेशपरिमितत्वावगाहिप्रत्यक्षस्य

`अष्टाशीतिसहस्राणि विस्तीर्णो योजनानि तु ।
प्रमाणं तत्र विज्ञेयं कलाः पञ्चदशैव तु ।'

इत्याद्यागमबाधितत्वेन यथाऽप्रामाण्यं तथा जीवेशभेदग्राहिप्रत्यक्षस्य विमता आत्मानः परमात्मनस्तत्वतो न भिद्यन्ते आत्मत्वात् परमात्म-वदित्यनुमानबाधितत्वेन नेहनानेत्यागमबाधितत्वेन चाप्रामाण्यमित्यत आह — **प्रत्यक्षप्रामाण्यमिति** ॥ प्रत्यक्षस्यानुमानागमाबाध्यत्वं कुत्रापि न दृष्टम् । नभोनैल्यचन्द्रप्रादेशत्वावगाहिप्रत्यक्षं तु दूरस्थत्वादिदोषयुक्तत्वादपद्वे-वोत्पन्नम् । अनन्तरं प्रवृत्तावनुमानागमौ तेन दत्तावकाशौ तद्बाधका-विवोच्येते । नच भेदावगाहिप्रत्यक्षस्यापटुत्वे मानमस्ति येनोक्तरीत्या-ऽप्रामाण्यमित्यन्यत्र न्यायामृते समर्थितमित्यर्थः ॥

(१४) अनुमानानि च । जीवः ब्रह्मप्रतियोगिकधर्मिसत्ता-समानसत्ताकभेदाधिकरणं ब्रह्माननुसंहितदुःखानुसन्धातृत्वात् व्यतिरेकेण ब्रह्मवत् । ब्रह्म वा जीवप्रतियोगिकधर्मिसत्ता-समानसत्ताकभेदाधिकरणं जीवानुसंहितदुःखाननुसन्धातृत्वात् व्यतिरेकेण जीववत् । अत्र जीवब्रह्मप्रतियोगिकभेदयोः घटसत्तया

व्यावहारिक्या समानसत्ताकयो(र्व्यावहारिकयो)र्भेदयोर्घटे प्रसिद्ध-त्वान्नाप्रसिद्धविशेषणत्वम् । जीवब्रह्मणोश्च पारमार्थिकत्वात्त-त्सत्तासमानसत्ताकत्वेन सिध्यन् भेदः पारमार्थिक एव सिध्यतीति न सिद्धसाधनम् । दुःखादीनामन्तःकरणाश्रितत्वेऽपि जीवस्यानु-सन्धातृत्वात् । ब्रह्मणश्च दुःखानुसन्धातृत्वे तदभावलक्षणमुक्ते-रपुरुषार्थत्वप्रसङ्गात् निरञ्जन(त्व)श्रुतिविरोधाच्च तदभावावश्य-म्भावान्नासिद्धिः ॥

(१४) (भ.) एवं जीवेशयोर्जीवानां च मिथो भेदे प्रत्यक्षं प्रमाण-मभिधायानुमानान्यप्याह — अनुमानानि चेति ॥ जीवेश्वरयोर्जीवानां जडानां च भेदे प्रमाणत्वेनोपन्यस्यत इति शेषः ॥ धर्मिसत्तासमानसत्ताकेति ॥ धर्मी स्वयं जीवस्तत्सत्तासमसत्ताकेत्यर्थः ॥ ब्रह्माननुसंहितेति ॥ अत्रानुसन्धानं नाम न साक्षात्कारमात्रं येन सर्वज्ञत्वाद्ब्रह्मणः कथं दुःखस्य तदननुसंहितत्वमिति शङ्कावकाशः । किन्त्वहं सुखी दुःखीत्यनुभव एव । न हीश्वरस्यैतादृशो दुःखानुभवोऽस्ति । किन्नाम घटगतरूपादिकमिव जीवगतं सुखादिकं साक्षात्करोति । अतो ब्रह्माननुसंहितेति युक्तम् । केचित्तु दुःखादौ स्वात्मीयत्वाभिमानेनात्मनि तत्कृतनीचोच्चत्वलक्षणा विक्रियैवानुभव इति वदन्ति । तच्चिन्त्यम् । विक्रियाया अनुभवानन्तरिकत्वात् । न हि तज्जन्यस्य तत्त्वं सम्भवति । नाप्यहं सुखीत्यादौ सुखादिवन्नीचोच्चताऽ-वभासते । अनुभववद्विक्रियायाः सकर्मकक्रियात्वाननुभवाच्च । न हि दुःखं सुखं वाऽनुभवामीत्यनुव्यवसायविषयानुभवस्येव नीचोऽस्मीत्यादि-ज्ञानविषयनीचत्वादिविक्रियायाः सकर्मकता चकास्ति । `नीचोच्चतैव दुःखादेर्भोग इत्यभिधीयत' इति वचनं तु `त्रपुसं प्रत्यक्षो ज्वर' इतिवद्गौणम् ।

ज्ञानिनां दुःखाद्यनुभवेऽपि कदाचिन्नीचोऽस्मीत्यादिज्ञानानुदयाच्च । यथोक्तम् —

`ब्रह्मणोऽप्यल्पदुःखं स्यात्तदप्यनभिमानतः । नास्त्यात्मसम्बद्धतये'ति ।

`निद्रारतिर्मन्युरहं मदश्च देहेन जातस्य हि मे न सन्ती'ति भागवते जडभरतवचनाच्च । देहेन जातस्य देहाभिमानिन इत्यर्थः । नन्वहं सुखादिमानित्यनुसन्धानमीश्वरस्यापि सम्भवति । सुखादिमानित्यस्य सुखादिस्वामित्वमेवार्थः । न तु तत्समवायः । तेषामन्तःकरणधर्मत्वेन जीवेऽपि तदभावात् । अस्ति च तत्स्वामित्वं भगवतः । प्रत्युत जीवापेक्षया मुख्यं च । अतः कथं ब्रह्माननुसंहितेति विशेषणमिति चेन्न । अहं सुखीत्याद्यनुसन्धानं नाम मभेदं सुखमनुकूलं मभेदं दुःखं प्रतिकूलमित्यनुभवः । ` अन्यानन्दादिसादृश्यमानुकूल्यादिना पर'मित्युक्तेः । न चैतादृशं दुःखानुसन्धातृत्वमीश्वरस्यास्ति । जीवदुःखस्येशं प्रति प्रतिकूलत्वाभावात् । तस्माद्युक्तं ब्रह्माननुसंहितेति दुःखविशेषणम् । केचित्तु परतन्त्रदुःखानुसन्धानस्य वाऽसर्वविषयदुःखानुसन्धानस्य वाऽमुख्य-स्वामितासम्बन्धेन दुःखकृतनीचतावत्त्वस्य वा हेतुत्वं विवक्षितमित्याहुः । तदपि चिन्त्यम् । अनुसन्धानशब्दस्योक्तरीत्याऽनुभवविशेषार्थकत्वेन पारतन्त्र्यादिविशेषणकृत्यादर्शनात् । ननु सपक्षभूते जडे लक्ष्म्यां चास्य हेतोरभावादसाधारण्यमिति चेन्न । अनुकूलतर्कसद्भावे तस्य प्रतिपक्षानुन्नायकत्वेनादोषत्वात् । अनुकूलतर्काणां चात्र वक्ष्यमाणत्वात् । ननु चात्र दुःखानुसन्धातृत्वमात्रस्य हेतुत्वोपपत्तौ ब्रह्माननुसंहितेति विशेषणं व्यर्थमिति चेन्न । हेतोरप्रयोजकतापरिहारार्थमनुकूलतर्कस्फोरणार्थत्वात् । यथा `ईक्षतेर्नाशब्द'मित्यत्रास्त्वीक्षणीयत्वं माऽस्तु वाच्यत्वमित्य-

प्रयोजकताशङ्कायां प्रत्यक्षाद्यवेद्यत्वे सतीति विशेषणं हेतूच्छित्ति-रूपानुकूलतर्कव्युत्पादनार्थम् । तद्वदत्रापि यदि दुःखानुसन्धातृत्वेऽपि जीवस्य ब्रह्मभेदो न स्यात् तर्हि जीववत्तदभिन्नस्य ब्रह्मणोऽपि दुःखानुसन्धानं स्यादिति । जीवमात्रस्य पक्षीकृतत्वादन्वयदृष्टान्ताभावादाह — **व्यतिरेकेणेति** ॥ एवं जीवधर्मिकब्रह्मप्रतियोगिकभेदेऽनुमानमभिधाय ब्रह्मधर्मिकजीवप्रतियोगिकभेदेऽनुमानमाह — **ब्रह्म वेति** ॥ एवमनुमानद्वयेऽपि किं पारमार्थिकभेदः साध्यते । उत व्यावहारिकः । नाद्यः । अप्रसिद्धविशेषणत्वात् । न द्वितीयः । सिद्धसाधनत्वादिति शङ्कपरिहाराय साध्यद्वये धर्मिसत्तासमानसत्ताकेति विशेषणमुपात्तम् । तेन कथं दोषद्वयपरिहार इत्यतः क्रमेण तदुभयपरिहारं दर्शयति — **अत्रेति** ॥ **जीवब्रह्मणोश्चेति** ॥ धर्मिभूतयोरिति शेषः । ननु दुःखादेरन्तःकरण-धर्मत्वात्कथं जीवस्य तदनुसन्धातृत्वम् । ब्रह्मणो वा कुतस्तदननु-सन्धातृत्वम् । जीववद्दुःखानुसन्धातृत्वाङ्गीकारे बाधकाभावात् । अतोऽ-नुमानद्वयेऽपि हेत्वोरसिद्धिरित्यत आह — **दुःखादीनामिति** ॥ आदिपदेन सुखादीनां क्षुत्तृडादिदेहेन्द्रियादिधर्माणां च ग्रहणम् । अन्तःकरणादीत्य-त्रादिपदेन देहेन्द्रियादिग्रहणम् । दुःखस्यैकदेशस्यैव प्रकृतत्वेऽपि सुखादीनां दृष्टान्तत्वेन ग्रहणम् ॥ **जीवस्यानुसन्धातृत्वादिति** ॥ नाद्यानुमानेऽसिद्धि-रित्युत्तरेणान्वयः । न हि जीवगतमेव जीवेनानुसन्धेयं नान्यगतमिति नियमोऽस्ति । मभेदं प्रतिकूलमित्याद्यनुभवमात्रस्यानुसन्धानशब्दार्थत्वात् । तस्य चान्तःकरणगतदुःखादावपि सम्भवादिति भावः ॥ **तद्भावलक्षणेति** ॥ दुःखाद्यनुसन्धातृब्रह्मभावलक्षणेत्यर्थः । मायिमते ब्रह्मभावापत्तेरेव मोक्षत्वेनाङ्गीकारादिति भावः ॥ **तदभावेति** ॥ दुःखाद्यनुसन्धातृत्वा-

भावेत्यर्थः ॥ **नासिद्धिरिति** ॥ द्वितीयानुमानेऽपीत्यर्थः ।

**(१४) (मु.) ॥ जीवो ब्रह्मप्रतियोगिकेति ॥** जीवत्वोपलक्षिता चिद् ब्रह्मत्वोपलक्षितचित्प्रतियोगिकेत्यर्थः[1] । अप्रस्तुतजडभेदेऽर्थान्तरतावारणाय ब्रह्मप्रतियोगिकेति । सिद्धसाधनतावारणाय धर्मीत्यादि । धर्मी जीवचित् तत्सत्ता पारमार्थिकी तत्समानेत्यर्थः । समानसत्त्वं च सत्तात्वसाक्षाद्व्याप्यधर्मेणेति ज्ञेयम् । तेन व्यावहारिक्याः सत्तायाः पदार्थत्वेन धर्मेण तत्समानत्वात्सिद्धसाधनतेति निरस्तम् । पारमार्थिकेत्यप्रसिद्धिरित्येवमुक्तिः । तथाऽपि पक्षधर्मताबलात्पारमार्थ्यसिद्धिः । उपलक्षणमेतत् । धर्मिसत्तासमानसत्ताकेति पदस्थाने धर्मिज्ञानाकार्येति वा । धर्मिज्ञानाबाध्येति यावद्धर्मिकालमनुवर्तमानेति वाऽनौपाधिकेति वा पदप्रक्षेपेऽप्युक्तभेदसिद्धिरिति ज्ञेयम् । ब्रह्माननुसन्धातृत्वादित्येव हेतुः । दुःखपदं पक्षधर्मतास्फुरणार्थम् ।दुःखाननुसन्धातृत्वादित्येव हेतुः । शिष्टपदं प्रयोजकतास्फुरणार्थम् । अनुमानद्वयाभिप्रायेणैवमुक्तिः । यद्वाऽत्रानुसन्धानं नाम साक्षात्कारमात्रं विवक्षितम् । एवञ्च दुःखानुसन्धातृत्वं सर्वज्ञे ब्रह्मण्यस्मद्रीत्या व्यभिचरितम् । ब्रह्माननुसंहितं यथा तथा दुःखानुसन्धातृत्वादिति क्रियाविशेषणम् । ब्रह्मज्ञानविजातीयनीचताहेतुभूतज्ञानवत्त्वादित्यर्थः । एवमपि दुःखपदं व्यर्थमिति चेन्न । हेतुवाक्यपर्यवसितस्य दुःखभोक्तृत्वस्य विवक्षितत्वात् । एवमुत्तरप्रयोगेऽपि । यद्यपि द्वितीयप्रयोगे घटादावन्वयव्याप्तिरेव सुग्रहा । तथाऽपि कदाचित्पारमार्थिकेति विशेषणदानेऽप्यप्रसिद्धविशेषणताया न व्याप्तिविघटकत्वम् । व्यतिरेकव्याप्तिग्रहसम्भवादिति सूचयितुं व्यतिरेकप्रदर्शनम् । धर्मीत्यादिविशेषणाभिप्रायमाह

---

[1] `ब्रह्मत्वोपलक्षिता चित्प्रतियोगिकेत्यर्थः' मु.

— अत्रेत्यादिना । ननु तर्हि प्रथमप्रयोगे ब्रह्मप्रतियोगिकधर्मिसत्ता-समानसत्ताकभेदवति घटे हेतोरभावादसाधारण्यमिति चेन्न । वादिविप्रतिपत्तेः । असाधारण्यं न हेत्वाभास इत्येके व्याप्यत्वासिद्धावन्त-र्भवतीति केचित् । अन्ये त्वविद्यमानसपक्षस्यैव तथात्वेन विद्यमानसपक्षस्तु व्यभिचारी । अनुचितस्थलवृत्तित्ववदुचितस्थलावृत्तेरपि व्यभिचार-पदार्थत्वात् । एके तु सत्यप्यन्यत्र साध्यतत्सम्बन्धादर्शनेन व्याप्तिसन्देह-जनकत्वात्पृथग्घेत्वाभास इत्याहुः । वस्तुतस्तु नायं हेत्वाभासो व्यतिरेकमुखेन व्याप्तिसम्भवात् । नापि संशयजनकत्वमनुकूलतर्केण तन्निश्चयोपपत्तेः । अन्यथा धूमादेः कतिपयसपक्षवर्तिनोऽपि व्याप्तिसन्देहतौल्यादिति । अस्तु वाऽयं दोषः । दुःखानुसन्धातृत्वं नाम दोषाधिकरणत्वं विवक्षितम् । तच्च घटेऽस्तीति न कश्चिद्दोषः । ननु जीवब्रह्मणोरभेदवादे जीवगतानुसन्धानस्यैव ब्रह्मगतत्वेनासिद्धिरिति चेन्न । एवं सति कुत्रापि तुहिनदहनादौ विरुद्धधर्मेण व्यावहारिकभेदसाधनमपि न स्यात् । तत्रापि दहनगतोष्णत्वस्य तुहिनगतत्वादिति । किञ्च प्रकृतहेतुर्न निश्चितासिद्धः किन्तु साध्यभूतसन्देहाहितसन्देहग्रस्तः । एवञ्च साध्यसन्देहानाहितस्वारसिक एव । तथाच साध्यसन्देहाहितसंशये हेतुरसंशयादिविषयत्वं हेतोरसिद्धिर्नाम । अन्यथा वह्निसंशयाहितो धूमसंशयोऽपि तथा स्यात् । तत्रापि कारणीभूतवह्निसन्देहैतत्कार्य-धूमसन्देहस्य न्याय्यत्वात् । ननु सन्दिग्धोऽपि वह्निर्न प्रत्यक्षप्रमितधूमसन्देहस्येष्टे । किन्तु हेतुनिश्चयबलात्तत्सन्देह एव लीयत इति केचित्तर्ह्यत्रापि निरनिष्टादिश्रुतिबलादभेदसन्देह एव लीयत इति । ननु द्वितीयप्रयोगेऽननुसन्धानात्यन्ताभावरूपहेतोर्जीवे व्यभिचारः ।

अनुसन्धानस्य स्वात्यन्ताभावसमानाधिकरणत्वादिति चेन्न । प्रतियोग्य-समानाधिकरणात्यन्ताभावस्य विवक्षितत्वात् ॥ नासिद्धिरिति ॥ जीवस्यानुसन्धातृत्वादित्युक्त्याऽऽद्यनुमाने हेतुस्वरूपस्य हि द्वितीये तद्विशेषणस्य ब्रह्मणश्च तदभावावश्यम्भावादित्युक्त्याद्यविशेषणस्य द्वितीये तत्स्वरूपस्य नासिद्धिरित्यर्थः ।

(१४) (कु.) ॥ अनुमानानि चेति ॥ मुख्ये जीवेश्वरभेदे प्रासङ्गिके जीवानां परस्परभेदे जडानां च परस्परभेदे च प्रमाणानीत्यर्थः ॥ जीव इति ॥ पक्षविचारस्तु मूल एवाग्रे भविष्यति । ब्रह्माननुसंहितेति हेताव-नुकूलतर्कस्फोरणार्थम् । न तु हेतुशरीरान्तर्गतं वैय्यर्थ्यात् । न तु ब्रह्मणि व्यभिचारः । तस्य सर्वज्ञत्वेन सर्वदुःखानुसन्धातृत्वात् । न च तस्य दुःखानुसन्धातृत्वे तद्भावलक्षणमुक्तेरपुरुषार्थत्वापत्तिः । भवन्मते तद्भावस्यामुक्तित्वेन भवन्मतेऽनैकान्त्यात् । न च `निरनिष्टो निरवद्य' इति श्रुतिविरोधादस्माभिर्दुःखानुसन्धातृत्वं ब्रह्मणो नाङ्गीक्रियत इति वाच्यम् । `यः सर्वज्ञ' इत्यादिश्रुतिविरोधादपसिद्धान्ताच्च । न च भगवतः सर्वदुःखानुसन्धातृत्वेऽपि न मम दुःखमिति स्वामित्वसम्बन्धेन दुःखानुसन्धातृत्वं विवक्षितं तथाभूतं च जीव इति न व्यभिचारो न वाऽसिद्धिरिति वाच्यम् । भवन्मते परमेश्वरस्यैव मुख्यं सर्वस्वामित्वं तद्दत्तममुख्यं `जीवानामिति ज्योतिराद्यधिष्ठानं तु तदामननादि'त्यधिकरणे निरूपितत्वात् । न च —

`नरकेऽपि वसन्नीशो नासौ दुःखभुगुच्यते ।
नीचोच्चता हि दुःखादेर्भोग इत्यभिधीयते ।
नासौ नीचोच्चतां याति पश्यत्येव सदा प्रभुः'

इति वचनाद्दुःखादिकृतनीचोच्चतारूपदुःखादिभोक्तृत्वं दुःखानुसन्धातृत्वं जीवमात्रनिष्ठमिति न व्यभिचार इति वाच्यम् । नीचोच्चताया[1] अपीन्द्रियदेहादिनिष्ठायाः साक्षात्सम्बन्धेन जीवेऽभावात् । स्वामित्व-सम्बन्धेन भगवत्यपि सत्त्वात् । किञ्चेन्द्रगतशचीसंयोगादिजन्यसुखाननु-सन्धातु[2]रप्यर्जुनस्येन्द्राभेदवज्जीवगतदुःखानुसन्धानवतोऽपि ब्रह्मणो जीवा-भेदः किन्न स्यादित्यप्रयोजकता । किञ्च जडं लक्ष्मीश्च पक्षः सपक्षो वा । नाद्यः । तयोर्दुःखानुसन्धातृत्वाभावेन भागासिद्ध्यापत्तेः । न द्वितीयः । असाधारण्यापत्तेः । न चासाधारण्यस्यान्वयव्याप्तिग्रहे प्रतिबन्धकत्वेन दोषत्वान्न व्यतिरेकिणि दोषतेति वाच्यम् । यत्र साध्यं तत्र हेत्वभावे एतस्याः साध्याभावीयव्यतिरेकव्याप्तित्वेन सत्प्रतिपक्षोत्थापकत्वेन तत्रापि दोषत्वादिति चेत् । अत्रोच्यते । परतन्त्रदुःखानुसन्धानरूपत्वस्या-सर्वविषयदुःखानुसन्धानरूपत्वस्य वाऽत्र हेतुत्वम् । न च परतन्त्रत्वमसर्वविषयत्वं वा हेतुरस्तु विशेष्येण कृतमिति वाच्यम् । परतन्त्रासर्वविषयपदाभ्यां दुःखानुसन्धाननिष्ठवैजात्योपलक्षणात् । यद्वाऽमुख्यस्वामित्वसम्बन्धेन दुःखकृतनीचतावत्त्वं हेतुः । तदपि जीव एवेति न व्यभिचारः । प्रपञ्चितं चेदमस्माभिर्मध्वतन्त्रमुखालोके प्रथमाधिकरणे । न चाप्रयोजकता । अर्जुनस्य त्वन्मतेऽपीन्द्रावतारत्वेनेन्द्रजीवापादको-पाध्याक्रान्ततावश्यकत्वेन व्यावहारिकैकजीवतायास्त्वया वक्तव्यत्वेन शचीभोगादिजन्यसुखाननुसन्धानस्य मानुषान्नोपभोगभूतसम्बन्धादि-प्रयुक्ततावश्यकी । न चात्र ब्रह्मणो दुःखाननुसन्धानमुपाधिकृतं वक्तुं

---

[1] '-तायाम्' इति मु.पाठः असाधुः, देहादिनिष्ठाया इत्यग्रे विशेषणात् ।

[2] '-सुखानुसन्धातु-' मु.

शक्यते । सर्वोपाधिविनिर्गलितत्वात्तस्य । किञ्चेन्द्रगतोपासनादिजन्यं दुःखमर्जुनेन नानुभूयत एवार्जुनगतं च सर्वमिन्द्रियेणानुभूयते । न चैवं प्रकृत इति कथमभेदः । न चासाधारण्यम् । अनुकूलतर्काणां वक्ष्यमाणत्वेन व्यतिरेकिण्यसाधारण्योन्नीतसत्प्रतिपक्षानवतारात् । अत एवासाधारण्यं दशाविशेषे दोष इति वदन्ति वृद्धाः । असाधारण्यभयाद्वाऽऽह — **ब्रह्म वेति** ॥ अत्रापि जीवानुसंहितेत्यनुकूलतर्कस्फुरणार्थम् । पूर्वोक्तव्यभिचार-परिहारवदत्र स्वमते स्वरूपासिद्धिपरिहारः ।

(१४) (हु.) ॥ **अनुमानानि चेति** ॥ पूर्वोक्तभेदेष्वित्यादिः ॥ **ब्रह्मप्रतियोगिकेति** ॥ स्वस्मिन्व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगि(ताक)-भेदानङ्गीकारेणेदम् । अतो नोद्देशस्य ब्रह्मवृत्तितद्व्यक्तित्वब्रह्मत्वाद्यवच्छिन्न-प्रतियोगिताकभेदस्यासिद्धिप्रसङ्गेनार्थान्तरापातः । ब्रह्मप्रतियोगिकभेदस्य केवलान्वयितया तत्साधारणसाध्यतावच्छेदकावच्छिन्नाभावप्रसिद्ध्या व्यतिरेकव्याप्त्यनवकाशश्च । सिद्धसाधनता तु नास्ति । वक्ष्यमाणजीवत्वोप-लक्षितचैतन्ये स्वसमानसत्ताकस्य[1] कस्यापि (भेदस्य) परेण नङ्गीकृतत्वेन साध्यस्योभयसिद्धत्वाभावात् ॥ **ब्रह्माननुसंहितेति** ॥ दुःखानु-सन्धातृत्वमात्रस्य व्यभिचाराद्यभावेऽपि ब्रह्माननुसंहितेति दुःखादि-स्वरूपकथनमैक्ये जीवानुसंहितदुःखे ब्रह्मणोऽनुसन्धानाभावानुपपत्ति-रित्यनुकूलतर्कोत्थापनाय । एवमुत्तरत्रानुमानेऽपि । अथवा तस्य व्यभिचारवारकत्वेऽप्युक्तानुकूलतर्कोत्थापनद्वारा[2] व्याप्तिग्रहोपयोगित्वात् हेतुशरीरे निवेशो युक्त एव । तदनुपयोगिविशेषणमात्रस्य तु वैय्यर्थ्येन

---

[1] `वक्ष्यमाणजीवपदार्थे तत्समानसत्ताकस्य' हु.

[2] `व्यभिचारावारकत्वेन' इति पाठेन भाव्यमिति भाति ।

हेतुशरीरे निवेशो नास्तीति नव्यमताभिप्रायेणेदम् । प्रपञ्चितं च गुर्वद्वैतचन्द्रिकादौ सत्यत्वसाधकानुमानभङ्गावसरेऽस्माभिश्च तत्त्वोद्योतटिप्पण्यां द्वैतद्युमणौ मुक्तत्वहेतुविचारावसरे । धर्मिसत्तासमानसत्ताकत्वस्य साध्यद्वये निवेशस्तु जीवब्रह्मणोः परस्परव्यावहारिकभेदमादाय परं प्रति सिद्धसाधनतावारणाय । साध्यप्रसिद्धिर्घटादावेवेति स्वयं वक्ष्यति ।[1] व्यतिरेकेण जीववदितीति । अत्र घटादावन्वयव्याप्तेः सम्भवेऽपि सा शिष्यैरेव ज्ञातुं शक्येत्याशयेनानुक्त्वा पूर्वोत्तरानुमानसाहचर्यानुरोधाद्व्यतिरेकव्याप्तिरेवोक्ता । यद्वोक्तहेतोरसति सत्त्वेऽपि स्वधर्मिसत्ताघटितसाध्याप्रसिद्ध्या व्यभिचारवारणाय हेतौ चेतनत्वं लाघवान्निवेशनीयमतो नान्वयसम्भव इति व्यतिरेकव्याप्तिरेवोक्तेति द्रष्टव्यम् । ननु दुःखादेरन्तःकरणधर्मत्वात्स्वाश्रितदुःखज्ञातृत्वरूपं वा तत्प्रत्यक्षरूपं वा तदनुसन्धातृत्वं प्रथमानुमाने जीवेऽभावादसिद्धम् । द्वितीयानुमाने च जीवानुसंहितदुःखानुसन्धातृत्वाभावस्य जीवेऽपि सत्त्वाद्व्यभिचार इत्यत आह — दुःखादीनामिति ॥ अन्तःकरणाश्रितत्वेऽपि तादात्म्येन तन्निष्ठत्वेऽपि ॥ जीवस्येति ॥ तदनुसन्धातृत्वादिति ॥ अनुसन्धातृत्वशरीरे तादात्म्येन स्वाश्रितत्वस्य दुःखादावनिष्टत्वादिति भावः ·। ननु तदनुसन्धातृत्वं नाम तत्प्रत्यक्षवत्त्वमित्युक्तं स्यात् । ज्ञानत्वेन तन्निवेशस्यातिप्रसक्तत्वात् । इत्थं च ब्रह्मपदार्थभूतभवदीयेश्वरस्यापि साक्षाद्दर्शित्वात्तदननुसंहितदुःखाप्रसिद्ध्या प्रथमानुमाने हेतुस्वरूपस्यैवासिद्धिः । ब्रह्माननुसंहितेति विशेषणस्य हेतुशरीरनिवेशपक्षे तदभावपक्षे ब्रह्मण्येव व्यभिचारः । दुःखानुसन्धातृत्वस्य ब्रह्मण्यपि सत्त्वात् । द्वितीयानुमाने त्वसिद्धिरिति चेन्न । अनुसन्धानस्य

---

[1] इतो वाक्यद्वयं हु.पाठे नास्ति ।

तत्प्रत्यक्षापेक्षयाऽतिरिक्तत्वात् । तत्त्वं च तत्प्रत्यक्षप्रयुक्तनीचत्वादि-विक्रियावत्त्वम् । तच्च जीवस्वरूप एव वर्तते न परमात्मनि । तदुक्तं भाष्ये । `नीचोच्चतैव दुःखादेर्भोग इत्यभिधीयत' इति । सुधायां `मिथ्यात्वं यदि दुःखादे'रित्यनुव्याख्यानविवरणावसर एव `सत्ये एव नीचोच्चत्वलक्षणे विकृती अनुभवति । तादृशविक्रियायाश्च न जीवस्वरूपहानिसम्पादकत्व'मिति[1]। नन्वेतावता हेतुशरीरे कथं निवेशः । न च ब्रह्मवृत्तिविक्रियाजनकत्वा-भावाद्दुःखप्रत्यक्षाधीनविक्रियावत्त्वं हेतुर्निष्पद्यत इति वाच्यम् । तन्मते ब्रह्मवृत्तिविक्रियाप्रसिद्ध्या प्रामाणिकप्रतियोगिकाभावानङ्गीकारेण तज्जनकत्वाभावघटितहेतोरप्रसिद्धिः । स्ववृत्तिविक्रियाजनकत्वं संसर्गाव-च्छिन्नाभावं निवेश्य वा स्वजन्यविक्रियात्वावच्छिन्नाभाववद्ब्रह्मकत्वेन दुःखप्रत्यक्षं वा निवेश्य हेतुपरिष्कारे जीवस्वरूपे मया तदनङ्गीकाराद-सिद्धिरिति चेन्मैवम् । त्वन्मतेऽप्युपास्यब्रह्मरूपस्य सविशेषस्य रामकृष्णादेर्नित्यनिर्दुःखत्वस्य(-त्वेन) श्रुतिपुरणादिशतसिद्धत्वेन जीवानां दुःखितायाश्चानुभवसिद्धत्वेन तद्व्यवस्थायास्त्वयाऽप्यङ्गीकर्तव्यत्वेन मयाऽपि त्वत्सिद्धं निवेश्यैव हेतु(शरीर)परिष्कारस्य कर्तुं शक्यत्वात् । न च मया दुःखादिविषयकान्तःकरणवृत्त्यात्मकप्रत्यक्षवत्त्वं तदनुसन्धातृत्वम् । तच्च जीवानां वर्तते । ईश्वरप्रत्यक्षं तु मायावृत्त्यात्मकमिति न तस्यानु-सन्धातृत्वमिति[2] तस्यानुसन्धातृत्वमिति व्यवस्था क्रियत इति वाच्यम् । तस्योक्तिसहत्वे मया (मयापि) हेतुशरीरे तथैव निवेशः कर्तुं शक्य एव तदेव न सम्भवति । दुःखादेः साक्षिवेद्यत्वेन त्वया मयाऽपि तत्रान्तः-

---

[1] अर्थानुवादोऽयं न शब्दानुवादः ।

[2] `तच्च जीवानां वर्तते ईश्वरस्य तु तद्वृत्तेर्मायारूपत्वात् तदनुसन्धानमिति' हु.

करणवृत्तेरनङ्गीकारात् । अङ्गीकारे वा योगिनामपि परदुःखविषयकान्तः-करणवृत्तिरूपसाक्षात्कारादिव्यवहारभाजनस्य प्रत्यक्षस्य सत्त्वेन तेषामपि दुःखानुभवित्वापत्तेः । न च प्रत्यक्षे लौकिकविषयतां वा तदतिरिक्तवैजात्यं वा (किञ्चित्) योगीश्वरादिप्रत्यक्षव्यावृत्तं दुःखानुभवितृप्रत्यक्षे स्वीकृत्य तदवच्छिन्नमेवानुसन्धानमुच्यत इति वाच्यम् । दुःखादेः साक्षिवेद्यत्वमिति निष्कृष्टसिद्धान्ते गत्यभावात् । अङ्गीकारवादपक्षेऽप्यन्तःकरणवृत्ते-रन्तःकरणधर्मत्वेन जीवस्य तद्वत्त्वरूपतदनुसन्धातृत्वायोगाच्च ।[1] स्वामितासम्बन्धेन तद्वत्त्वस्यैव तथात्वे सर्वस्य वशी सर्वस्येशान इत्यादिश्रुतिरीश्वरस्य स्वामिताया भवदङ्गीकृततया तस्य दुःखित्वं दुर्वारम् । अन्याधीनस्वामित्वमेव तथात्वं चेन्ममापि हेतुशरीरे तदेव निविष्टमस्तु । दुःखादावन्तःकरणवृत्तिरूपप्रत्यक्षस्य मयाऽनङ्गीकारेऽप्यन्यायत्तस्वामिता-सम्बन्धेन दुःखप्रत्यक्षवत्त्वस्यैव मया हेतुशरीरे निवेश्यत्वात् । न च लक्ष्म्यास्त्वन्मते दुःखित्वापत्तिः । तत्स्वरूपभूतपरकीयदुःखप्रत्यक्षस्येश्वरा-धीनस्वरूपभूतस्वामितासम्बन्धेन लक्ष्म्यामपि जीव इव विशेषबलेन सत्त्वादिति वाच्यम् । तवापि कथम् ? अनेकश्रुतिपुराणसिद्धेश्वराधीनेतर-स्वामित्वनिर्दुःखत्वयोर्हातुमशक्यत्वात् । ननु परमार्थतो मया किमपि नासत्यापातत[2] एव सर्वव्यवस्थाऽङ्गीक्रियत इति नातिक्षोदो मद्यवस्थायामिति वाच्यम् । तथात्वे सर्वत्रापि क्षोदस्य परित्यागापत्त्या तव

---

1 `स्वीकृत्य' इति इतः प्राक्तनतृतीयवाक्यगतपदमारभ्य एतावत्पर्यन्तं हु.पाठे किञ्चिद्व्यत्यासेन एवं पठ्यते - `स्वीक्रियते । तदवच्छिन्नत्वमेवानुसन्धानमुच्यत इति वाच्यम् । तेषां साक्षिवेद्यत्वरूपनिष्कृष्टसिद्धान्ते तदसम्भवात् । तस्यान्तःकरणधर्मत्वेन जीववृत्तित्वसमाभवाच्च ।' - इति ।

2 `नास्त्यापातत' इति पाठेन भाव्यमिति भाति ।

विचारस्यैव वैय्यर्थ्यापातात् । भास्करेण सर्वप्रपञ्चसत्यतामभ्युपगच्छताऽवश्यं व्यवस्थायाः कर्तव्यत्वाच्च । उक्तानुमानयोस्तु तं प्रत्येव मुख्यतः प्रवृत्तिः । उक्तं ह्यन्यत्र टीकाकारैः — `**मायावादिना सर्वस्य कल्पितत्वाङ्गीकारात्काल्पनिकी व्यवस्था घटेतापि न तु भास्करस्यातस्तं प्रतीदं दुःखानुसन्धानाद्यापादन**'मित्यादि । उपाधिखण्डनेऽपि भास्करमतनिरासावसर एवेदं दूषाणमभिहितम् । एवं तत्त्वोद्योते । एवमनुव्याख्यानेऽपि जगत्सत्यत्वमभ्युपेत्य जीवपरमात्मनोर्भेदाभेदमतनिरासाय प्रवृत्तस्य '**अत एव चोपमा सूर्यकादिवदि**'ति सूत्रस्य व्याख्यावसर एवेदमुदितम् । गीतातात्पर्येऽपि सत्योपाधिपक्ष एवापरस्य सुखदुःखाद्यनुसन्धानप्रसङ्गादिदूषणान्युक्त्वा मिथ्योपाधिपक्षेऽप्येते दोषा भवन्त्येवेत्युक्तत्वात्तदनुसारेण मिथ्यात्ववादिनं प्रत्यपि दुःखानुसन्धानादिव्यवस्थायात्रापादनप्रसक्तिः । तथा च व्यावहारिकदशासिद्धव्यवस्थायास्तेनापि कर्तव्यत्वादुक्तानुपपत्तिर्वर्तत एवेति । न च परमात्मतद्भार्यारूपशक्त्युभयाधीनस्वामितासम्बन्धेन दुःखप्रत्यक्षवत्त्वमेव तदनुसन्धातृत्वं तच्च जीव एव वर्तत इति चेत् । तर्हि (मम) हेतुशरीरे तदेव घटकमस्तु । तावताऽपि मदिष्टसिद्धेः । वस्तुतस्तु परायत्तस्वामितासम्बन्धेन दुःखप्रत्यक्षं दुःखं वा हेतुरस्तु । लक्ष्म्यामुक्तसम्बन्धेन जैवदुःखप्रत्यक्षस्य वा तद्दुःखस्य वा सत्त्वेऽपि नास्माकं काचित्क्षतिः । सिद्धान्ताभिमतदुःखानुसन्धानाभावेन तस्या दुःखास्पृष्टचेतनत्वोपपत्तेः । न च दुःखप्रत्यक्षस्य हेतुत्वपक्षे प्रत्यक्षे दुःखविषयकत्वविशेषणं व्यर्थम् । उक्तसम्बन्धेन प्रत्यक्षमात्रस्य व्यभिचारासंस्पर्शात् (इति वाच्यम्)। दुःखस्यैव परायत्तस्वामिताकप्रत्यक्षकत्वसम्बन्धेन

हेतुत्वाङ्गीकारेण यथासन्निवेशो वैय्यर्थ्याभावात् । यद्वा स्वसाक्षात्कार-प्रयोज्यापकर्षवत्त्वसम्बन्धेन दुःखं हेतुरस्तु । मन्मते तादृशापकर्षस्तत्काले[1] जायते नित्यसिद्धाद्विलक्षणः । परैरपि दुःखित्वादिनाऽपकर्षस्याविद्यकस्य यस्मात्क्षरमतीतोऽहमित्यादिप्रमाणानुसारेणेङ्गीकर्तव्यतयोभयसाधारणापकर्ष त्वरूपेण हेतुतावच्छेदकसम्बन्धशरीरे निवेशान्न तं प्रति प्रत्यक्षसिद्धिः । वस्तुतस्तु प्रमाणबलेन परं प्रत्यपीश्वरव्यावृत्तमस्मदभिहि(म)तं विक्रियावत्त्वरूपं हेतुं प्रसाध्यैतदनुमानस्य प्रयोक्तव्यत्वान्न कोऽपि दोष इति तत्त्वम् । नन्वेवमपीन्द्राननुसंहितदुःखानुसन्धातृत्वमर्जुने वर्तते । अर्जुनाननुसंहितदुःखानुसन्धातृत्वमिन्द्रस्य वर्तते । तयोर्भेदस्याभावात् कथमेतद्युज्यते । मैवम् । अनेन किमुक्तं भवति । प्रकृतानुमित्यौपयिक-व्याप्तिविघटनाय व्यभिचारश्चेत् । स नास्त्येव । यो यदननुसंहितदुःखानु-सन्धाता स तस्माद्भिन्न इति सामान्यव्याप्त्यनुसरणे हि सा स्यान्न चैवं प्रकृते । प्रकृतसाध्यहेतुघटितव्यतिरेकव्याप्तेरेवोक्तत्वात् । तद्रीत्याऽयं हेतुरप्रयोजक इत्यभिप्रायश्चेत् । दृष्टान्त एवासिद्धः । इन्द्रस्यार्जुनशरीरा-वच्छिन्नसकलसुखदुःखानुसन्धानवत्त्वात् । अर्जुनस्यापीन्द्रशरीराव-च्छिन्नोपासनादिसाध्यमहाफलरूपसुखादिभोक्तृत्वसत्त्वात् । तदीय-यत्किञ्चिदल्पसुखदुःखाद्यननुसन्धानं तु मानुषान्नोपभोगादिना भगवतोऽघटितघटकेश्वरशक्त्युपबृंहितेन भवतीत्येतावतोत्सर्गतः प्राप्ता तदीयदुःखाद्यनुसन्धानस्य तद्भेदनिरूपिताव्याप्तिः किं भज्यते । व्यभिचारस्य सोपाधिकत्वात्तस्यादूषणताया –

---

1 `तादृशविक्रियारूपापकर्षः-' इ.

`उत्सर्गतोऽपि यत्प्राप्तमपवादविवर्जितम् ।
व्यभिचार्यपवादेन मानमेव भविष्यती'

ति भक्तिपादीयानुव्याख्यानेन तद्विवरणावसरे सुधायां चाभिहितम् ।[1] ननु सुधोक्तमपि सोपाधिकव्यभिचारस्यादूषकत्वं कथमुपपद्यते । व्यभिचारस्य सोपाधिकत्वेऽपि व्याप्तिविघटकताया दुर्वारत्वात् । अन्यथा निरुपाधिकस्याप्यदूषणं स्यादविशेषात् । मैवम् । यतोऽत्रेत्थं प्रतिभाति । व्याप्तिर्नाम साहचर्यनियमः । पद्धतौ तथैवोक्तत्वात् । साध्याभाववदवृत्तित्वाधिकरणतायोग्यतावत्त्वं यादृशहेतुतावच्छेदकाश्रयसामान्ये तादृशहेतुतावच्छेदकवत्त्वं व्याप्तिरिति पद्धत्यर्थः । यादृशदेशादिवृत्तित्वविशिष्टहेतुना यादृशदेशादिषु साध्यानुमितिरानुभाविकीतत्तत्स्थलीयव्याप्तिस्तादृऽशदेशादिकं निवेश्य निर्वाच्या ।[2] यत्र केवलान्वयिनि साध्याभावोऽप्रसिद्धस्तत्स्थले तद्धटिता व्याप्तिरप्रामाणिकप्रतियोगिकाभाववादिनां सुलभैव । सद्धेतुस्थले सर्वत्र तादृशयोग्यता वर्तते । व्यभिचाराद्यनुपलम्भादनुकूलतर्कसहितप्रत्यक्षादिप्रमाणैस्तन्निश्चयस्य सर्वलोकानुभवसिद्धत्वात् । क्वचिद्बलवन्मन्त्रौषधादिकारणविशेषाद्धेतुव्यक्तिविशेषस्य साध्याभाववद्वृत्तित्वप्राप्तावपि प्रमाणेन (हेतुसामान्ये) सिद्धा तादृशयोग्यता नापनीयते । यद्यपीयं व्यक्तिः

---

[1] अग्रे `ननु तथापीदमनुमानमयुक्तम्' इत्यारभ्य भेदस्याश्रयभेदेन भेदानङ्गीकारे पटवृत्तिघटभेदे जीवादिवृत्तित्वस्यापि सत्त्वेन तादृशोभयाभावस्य तत्रासत्त्वेऽप्यचेतनमात्रवृत्तिचेतनभेदे पारमार्थिकवृत्तित्वाभावादुभयाभावत्वं प्रसिद्धम् ।' इतिपर्यन्तो भागः हु.पाठे अत्र पठ्यते ।

[2] `यादृशसाध्यहेतुकानुमितौ यद्देशादिकं भासते तादृश देश एव व्याप्तिशरीरे निविष्टः ।' हु.

साध्याभावाधिकरणावृत्तित्वसम्बन्धयोग्यैव तथाऽपि बलवत्कारण-वशादस्याः साध्याभावसम्बन्धः प्राप्तः सर्वलोकानुभवात् । अन्यथा भोजनादिरूपसामग्रीसत्त्वेऽपि बलवन्मन्त्रौषधादिवशात्[1] तृप्त्यभावेऽपि तृप्तियोग्यमेवेदं बलवन्मन्त्रोषधादिबलात्तृप्त्यनुपाधायकं जातमिति सर्वव्यवहारस्याप्यप्रामाण्यापातात् । न चोक्तप्रतीतिव्यवहारयोः प्रामाण्ये[2] बलवद्बाधकमस्ति येनेष्टापत्तिः स्यात् । योग्यता च तत्तत्स्वभावभूतस्तत्त-न्निष्ठपदार्थविशेषः । स च तत्तन्निष्ठतादृशवृत्तित्वाधिकरणतां प्रति प्रयोजको भवति । कुतो धूमस्यैव वह्न्यभाववदवृत्तित्वं न घटादीनामिति प्रश्ने तत्स्वभाव एव नियामक इति सर्वैरपि वक्तव्यत्वात् । स्वभावस्य च –

`स्वभावजीवकर्माणि द्रव्यं कालः श्रुतिः क्रिया ।[3]

यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षये'

ति प्रमाणबलादीश्वराधीनत्वात् । न चोक्ताधिकरणता साक्षादीश्वर-नियम्याऽस्तु किं (मध्ये) स्वभावरूपशक्तेर्मध्येतन्नियामकत्वमल्पनेनेति वाच्यम् । भगवच्छक्तेर्बाह्यकारणद्वारैव पदार्थप्रयोजकस्य[4] बहुशो दर्शनात् । अन्यथा दण्डेऽपि घटानुकूलशक्तेरप्येवं प्रत्याख्यानप्रसङ्गात् । न च धूमत्वमेव तादृशयोग्यतारूपमस्त्येवेति वाच्यम् । धूमत्वस्यालोकादि-निष्ठतादृशाधिकरणतान्यूनवृत्तित्वेन तत्प्रयोजकत्वाभावात् । प्रत्युता-धूमत्वादयं तादृशावृत्तित्वयोग्य इति प्रतीत्या तादृशयोग्यताज्ञापकतयैव प्रतीतेस्ततोऽतिरिक्तत्वात् । इत्थं च स्व(स्वा)भावमप्यभिभूय

---

1 `कारणविशेषवशात्' हु.     २. `-प्रतीतिर्व्यवहारप्रामाण्ये' मु.

3 `द्रव्यं कर्म च कालश्च स्वभावो जीव एव च' हु.

4 `-कत्वस्य' इति पाठेन भाव्यमिति भाति ।

बलवत्कारणाधीनतादृशवृत्तित्ववत्यपि (हेतौ) तादृशयोग्यतासत्त्वान्न सम्भवः । तत एव व्याप्तिज्ञानस्य न प्रतिबन्धो विरोध्यविषकत्वात् । तादृशयोग्यताभावज्ञानस्यैव विरोधित्वात् । विषयाबाधाच्च न तत्स्थलीय-व्याप्तिज्ञानस्य भ्रमत्वम् । न च तस्य प्रमात्वे बाधानवतारदशायाम-पवादविषये जायमानानुमितिः प्रमा स्यात् । सलिङ्गपरामर्शस्य[1] भ्रमानुमितिजनकत्वाभावादिति वाच्यम् । साध्याभाववद्विषयकत्व-रूपदोषाहितभ्रमजननशक्त्या भ्रभजनकत्वसम्भवात् । नैय्यायिकैः पृथिवीत्वरूपसल्लिङ्गकपरामर्शजन्याया[2] अप्युत्पत्तिक्षणावच्छिन्नघटे गन्धानुमितेर्भ्रमरूपाया अङ्गीकृतत्वात् । नन्वपवादविषयहेतुभिन्नत्वमेव व्याप्यतावच्छेदककोटौ निवेश्यतां किमुक्तप्रयासेनेति चेन्न । ऐन्द्रियकानैन्द्रियकमन्त्रौषधादिरूपापवादानां भाविकालीनानां वर्तमान-कालीनानां चाभावस्य निश्चयायोगेन तत्समवहितभेदविशिष्टत्वावच्छिन्नस्य निश्चेतुमशक्यत्वेन तद्रूपावच्छिन्नहेतौ व्याप्तिग्रहानुपपत्तेः । अपवादादि-स्फूर्त्यभावकाले व्याप्तिप्रमानुत्पत्त्यापत्तेश्च । यत्र यत्रापवादस्य प्रवृत्तिस्तत्त-द्भेदकूटस्यासर्वज्ञदुर्ग्रहतया तदज्ञानिनामसर्वज्ञानां व्याप्तिप्रमाविलया-पातात् । न चेष्टापत्तिः । केषुचिद्भोजनेषु दृष्टिदोषादिना मरणादि-जनकत्वदर्शनात्केषुचिन्मन्त्रौषधादिबलात्तृप्त्यजनकत्वदर्शनाच्च (भोजन-मात्रस्य) बलवदनिष्टाजनकत्वविशिष्टेष्टसाधनत्वव्याप्यवत्ताज्ञानाद्भोजने तदनुमितिपूर्वकं प्रवर्तमानानामेवं भोजनमात्रस्य तृप्तिव्याप्यताज्ञानात् (-ज्ञानेन) भोजनलिङ्गेन तृप्त्यनुमितिमतामसर्वज्ञानां भ्रमत्वप्रसङ्गः । न च

[1] अग्रे एवं दर्शनात् अत्रापि `सल्लिङ्गकपरामर्शस्य' इति पाठेन भाव्यम् ।

[2] `पृथिवीत्वरूपसलिङ्गपरामर्शजन्याया' मु.

तत्रेष्टापत्तिः । प्रेक्षावता स्वोक्तनिर्वाहार्थमेव कर्तुं शक्यते । नानाभेद-कूटविशिष्टहेतुज्ञानत्वेन[1] कारणत्वे कारणतावच्छेदकस्यातिगुरुशरीरत्वं स्यादित्युक्तरीतिरेव सम्यक् । स्वरसव्यभिचारस्थलेऽप्येवं स्यादिति नापाद्यम् । प्रमाणबलेनोक्तयोग्यतारूपव्याप्तिसिद्ध्यनन्तरमेवोक्तरीत्या-श्रयणात् । तस्मात्सुधोक्तं युक्तमेव । तद्वाक्यस्थव्यभिचारपदमपि साध्याभाववद्वृत्तित्वपरमेव न तूक्तयोग्यत्वाभावपरम्[2] । अतोऽपवादविषये व्यभिचार एव नास्तीति तदङ्गीकारेण दूषणत्वकथनमसङ्गतमिति शङ्कानकाश इति । ननु तथाऽपीदमनुमानमुयुक्तम् । आश्रयत्वरूपधर्मित्वेनानुगतरूपेण निविष्टत्वेन घटरूपधर्मिसमानसत्ताकव्यावहारिकभेदस्य जीवादौ सिद्धत्वेनानुमानद्वयेऽपि सिद्धसाधनतैव ।तत्तद्धर्मिणां विशिष्य साध्यशरीरे निवेशे पुनः सिद्धसाधनतैव ।[3] ब्रह्मरूपधर्मिणो विशिष्य निवेशे तत्समानसत्ताकभेदाप्रसिद्ध्या पुनरप्रसिद्धविशेषणतैव । स्वधर्मीति निवेशोऽपि स्वपदेन ब्रह्मजीवमात्रधर्मिकजडभेद(दादि)ग्रहणे पूर्ववदप्रसिद्ध-विशेषणतैव । घटादिमात्रधर्मिकचिद्भेदग्रहणे जीवेषु ब्रह्मणि चाभावेनानु-मानद्वये बाध एव । चेतनजडोभयसाधारणभेदमादाय सिद्धसाधनता दुर्वारैवेति चेन्न । प्राचीनमते यथाकथञ्चित्स्वत्वस्यानुगतत्वेन स्वत्वेन (भेद)निवेशे साध्याप्रसिद्धिविरहात् । परन्तु ब्रह्मजडोभयसाधारणभेदमादाय सिद्धसाधनता(दि)वारणाय तत्तद्धर्मिकभेदस्य (तद्)वस्तुस्वरूपतयो-भयनिष्ठैकभेदो नास्तीति स्वपक्ष एवाश्रयणीयः । स्वत्वेन साध्ये निवेशस्थलेऽप्रसिद्धस्यापि साध्यस्य पक्षे सिद्धिप्रकारस्तु द्वैतद्युमणौ

---

[1] `-ज्ञानस्य' मु. २. `तूक्तयोग्यतावत्त्वपरम्' मु.

[3] इदं वाक्यं मु.पाठे नास्ति ।

दर्शितस्तत्रैवानुसन्धेयः । आधुनिकनैय्यायिकादिमनःसमाधानं तु[1] स्ववृत्तित्वसत्तासमानसत्ताकत्वोभयसम्बन्धेन धर्मिविशिष्टभेद एव साध्यः । घटवृत्तिभेदे उभयसम्बन्धेन घटरूपधर्मिवैशिष्ट्यस्य सत्त्वेन साध्यप्रसिद्धिः । सपक्षे चोक्तसाध्यसिद्ध्या पारमार्थिकभेदस्य सिद्धिः । अन्यवृत्तित्व-विशिष्टस्यान्यत्रावृत्तित्ववदाधेयतासम्बन्धेनान्यविशिष्टस्याप्यन्यत्र वृत्तेर-भावादुभयसम्बन्धेन धर्मिविशिष्टसाध्यस्य पक्षे सत्तायाः पक्षीभूतजीव-ब्रह्मरूपधर्मिणमादायैवोपपानीयतया पारमार्थिकत्वस्यावश्यं प्राप्तेः । भेदस्य धर्मिभेदेन भिन्नत्वमेकत्वं वाऽस्तु न काचित्क्षतिः । उक्तोभयत्वावच्छिन्नस्य संसर्गतया[2] भानमप्रमाणिकमित्यङ्गीकारे तु पारमार्थिकवृत्तित्वपारमा-र्थिकान्यत्वोभयाभावत्वमेव प्रकृते धर्मिसत्तासमानसत्ताकत्वेन विवक्षितम् । इत्थं च तादृशोभयाभाववद्भेदवत्त्वं साध्यम् । यद्वा पारमार्थिकान्य-निरूपितत्वपारमार्थिकवृत्तित्वोभयाभाववद्भेदाधिकरणत्वं साध्यम् । भेदस्याश्रयभेदेन भेदानङ्गीकारे पटवृत्तिघटभेदे जीवादिवृत्तित्वस्यापि सत्त्वेन तादृशोभयाभावस्य तत्रासत्त्वेऽप्यचेतनमात्रवृत्तिचेतनभेदे पारमार्थिक-वृत्तित्वाभावादुभयाभावत्वं[3] प्रसिद्धम् । अधिकरणतायाः साध्यत्वपक्षे भेदस्याश्रयभेदेन भेदाभावेऽपि तदधिकरणतानामाश्रयभेदेन भिन्नत्वात् । घटादिभेदनिरूपितपटादिनिष्ठाधिकरणतासु पारमार्थिकवृत्तित्वाभावदुभया-भावत्वं प्रसिद्धम् । तथा च नाप्रसिद्धविशेषणता । पक्षे उक्तसाध्यं तु भेदस्य पारमार्थिकत्वं विना न पर्यवस्यति । भेदे तदधिकरणत्वे वा

---

[1] अस्य एतत्प्रघट्टकान्तिमवाक्यस्थकर्तव्यपदेनान्वयः ।

[2] `-च्छिन्नसंसर्ग-' मु.

[3] `अपारमार्थिकवृत्तित्वादुभया-' हु.

पारमार्थिकवृत्तित्वस्यैव सत्त्वेनापारमार्थिकत्वाभावप्रयुक्तस्य वा पारमार्थिक-निरूपितत्वाभावप्रयुक्तस्य वोभयाभावस्य वक्तव्यत्वादिति रीत्या कर्तव्यमित्येषा दिक् ।

नन्वत्र लक्ष्म्या जीवत्वाभावेनापक्षत्वाद् यथाकथञ्चिदल्पशक्तित्वादिना तस्या अपि पक्षकोटौ निवेशे दुःखानुसन्धातृत्वरूपहेत्वभावेन भागासिद्धिप्रसङ्गात् सपक्षत्वे तत्र हेत्वभावादसाधारण्यमिति चेन्न । पक्षत्वेऽपि तत्साधारणानुसन्धातृत्वस्यैव हेतुत्वाङ्गीकारेण भागासिद्धि-(घ्यादि)विरहात् । तद्व्यावृत्तहेतुपरिष्कारपक्षे तस्याः पक्षबहिर्भावेऽपि तन्मात्रे उक्तसाध्यनिश्चये बीजाभावेन सन्दिग्धसाध्यवत्तया पक्षतुल्यत्वेन सपक्षत्वाभावेन तत्र हेतोरवृत्तावप्यसाधारण्यविरहात् । तत्र साध्यसिद्धे-रपेक्षितत्वे एतदनुमानसिद्धजीव[1]दृष्टान्तेनैवाल्पशक्तिकत्वादिनोक्तसाध्यस्य साधयितुं शक्यत्वात् न[2] दोषः । व्यतिरेकदृष्टान्तभूते ब्रह्मणि हेत्वभावो न सिद्ध इत्याशङ्क्य निषेधति ॥ **ब्रह्मणश्चेति** ॥ यद्वा ब्रह्माननुसंहितत्व-घटिताद्यानुमानहेतोर्ब्रह्मपक्षकानुमानहेतोश्चासिद्धिमाशङ्क्य निराकरोति ॥ **ब्रह्मणश्चेति** ॥ **अपुरुषार्थत्वप्रसङ्गादिति** ॥ संसारदशायां स्वकीयदुःख-मात्रभोक्तृत्वं ब्रह्मभावे तु तत्तादात्म्यापन्न सकलजीवदुःखभोक्तृत्वापत्त्या मुक्तेरत्यन्तहेयताप्रसङ्गश्च ज्ञातव्यः ॥ **निरञ्जनत्वश्रुतीति** । '**निरञ्जनः परमं साम्यमुपैती**'ति श्रुत्या निरञ्जनपदेन दुःखभोक्तृत्वादि सकलदोषराहित्योक्ते-स्तद्विरोध इति भावः । पञ्चम्यन्तद्वमवश्यम्भावे हेतुः ॥ **नासिद्धिरिति** ॥

---

[1] `एतदनुमानसिद्धसाध्यकजीव' मु

[2] `साधनान्न कोऽपि' मु.

उक्तावतारिकाद्वयानुरोधेन न दृष्टान्तासिद्धिः हेत्वसिद्धिरित्यर्थद्वयमनुसन्धेयम् ।

(१४) (का.) ॥ **अनुमानानि चेति** ॥ भेद इत्यादिः । उच्यन्त इति शेषः । यद्यपि पूर्वपक्षक्रमेण सामान्यत एवात्मनानात्वसाधकानुमानमादौ वक्तव्यम् । तथापि प्रधानसिद्धौ सुतरां गुणसिद्धिरिति भावेनाह — **जीव इति** ॥ अत्र दुःखेति स्वरूपकीर्तनम् । न तु हेतुघटकम् । एवं च नित्यसुखाद्यनुसन्धातरि ब्रह्मणि व्यभिचारवारणाय ब्रह्माननुसंहितेति सार्थकम् । न च ब्रह्मणः सर्वज्ञत्वेन ब्रह्माननुसंहिताप्रसिद्धिः । स्वीयत्वेनानुभवस्यैवानुसन्धानत्वात् । स्वीयत्वं च [1]स्वनैच्याद्यापादकत्वम् । न तु स्वधर्मत्वम् । अतो नान्तःकरणवृत्तिदुःखासङ्ग्रहः । एतल्लाभार्थं च दुःखपदमिति ध्येयम् । यद्यपि अर्जुनाननुसंहितकिञ्चित्सुखाद्यनुसन्धातुरिन्द्रस्य तदभेदवदत्राप्यभेदोपपत्तेरप्रयोजकत्वम् । तथापि भेदतत्प्रतिनिधिविशेषोभयसाधारणभेदव्यवहारविषयमात्रस्य साध्यत्वान्न दोषः । जीवब्रह्मणोर्बाधकाभावेन भेदस्यैव सिद्धेः । स्वाभाविकविशेषसिद्ध्याऽपि [2]परनिवृत्तेश्च ।

---

[1] ॥ **स्वनैच्याद्यापादकत्वमिति** ॥ दुःखेन दुःखी सुख्यपेक्षया नीचो भवति । तथा सुखे सति दुःख्यपेक्षया उच्चो भवति - इति भावः ।

[2] ॥ **परनिवृत्तेश्चेति** ॥ ब्रह्म सर्वथा निर्विशेषमिति पक्षस्य परैस्त्यक्तत्वात् इति भावः । यद्यपि अभेदेऽपि भेदकार्यकारी विशेषः जीवब्रह्मणोः द्वैतिनामसम्मत इति एतद्दोषकथनमसङ्गतं सिद्धान्तविरुद्धं चेति भाति । तथापि जल्पे तत्त्वानिर्णयेऽपि जयस्यैव फलतया तद्विवक्षया एतद्दोषोद्भावनमिति ध्येयम् ।

अत्रान्वयव्याप्तौ दृष्टान्ताभावादाह — **व्यतिरेकेणेति** ॥ यद्यपि प्रथममीश्वरधर्मिकभेद एव प्रत्यक्षस्योक्तत्वादनुमानमपि तत्रैवादौ वक्तुमुचितम् । तथापि जीवधर्मिकभेदस्य जीवप्रत्यक्षसिद्धत्वेन तत्रानुमानव्युत्पादनसौकर्यात्तदेवादावुक्तम् । पूर्वपक्षक्रमेण च पूर्वमीश्वरधर्मिकभेदे प्रत्यक्षं प्रदर्शितम् । पूर्वपक्षिणा च प्राधान्यात्तदेवादौ प्रतिक्षिप्तमिति नासङ्गतिः ।

॥ **ब्रह्म वेति** ॥ अत्र जीवत्वावच्छिन्नप्रतियोगिताकभेदः साध्यः । तेन जीवप्रतियोगिकभेदस्य जीवसाधरण्येऽपि न व्यतिरेकाप्रसिद्धिः । तत्तज्जीवप्रतियोगिकभेद एव साध्य इत्यप्याहुः । अत्रापि हेतौ दुःखपदं स्वरूपकीर्तनमेव । न चैवं जीवानुसंहितदुःखाभावानुसन्धातृत्वस्य ब्रह्मण्यपि सत्त्वादसिद्धिरिति वाच्यम् । दुःखध्वंसप्रागभावयोरेव जीवानुसंहितत्वात् । ईश्वरस्य च दुःखात्यन्ताभावानुसन्धातृत्वेन दोषाभावात् । एवं चाननुसन्धातृत्वमात्रस्य ब्रह्मण्यभावादसिद्धिरतो जीवानुसंहितेति सार्थकम् । न च व्यभिचारावारकत्वात्तद्वैयर्थ्यमिति शङ्क्यम् । व्यभिचारवदसिद्धेरप्यनुमितिविरोधित्वाविशेषेण 'विमतं कर्त्रजन्यं शरीराजन्यत्वादि'त्यादौ शरीरादिविशेषणवदसिद्धिवारकत्वेऽप्यवैयर्थ्यस्य शास्त्रे समर्थितत्वात् । [1]अखण्डाभावसम्पादकत्वेनावैयर्थ्यं चोभयत्र तुल्यम् ।

---

[1] ॥ **अखण्डाभावसम्पादकत्वेनेति** ॥ अयं भावः - यदि आदौ जन्यत्वाभावनिवेशे असिद्धौ सत्यां शरीरं जन्यत्वे स्वनिरूपितत्वसम्बन्धेन निवेश्यते इत्युच्यते तर्हि वैयर्थ्यं स्यात् । परन्तु नायं क्रमः । सामान्यतो जन्यत्वाभावात् भिन्नो यः अखण्डः शरीरजन्यत्वाभावः सोऽत्र हेतुः । तज्ज्ञापनाय शरीरघटिततया हेतुनिर्देशः कृतः - इति । इदमत्रावधेयम् - प्राक्सखण्डाभावसम्पादकत्वमाशङ्कितम्, इदानीं अखण्डाभावसम्पादकत्वमुच्यते इति न

केचित्तु दुःखानुसन्धातृत्वतदभावयोरेवात्र हेतुत्वम् । दुःखे ब्रह्माननुसंहितत्वाद्यभिधानं तु व्यतिरेकदृष्टान्ते हेत्वभावसत्त्वप्रदर्शनपरमित्याहुः । तच्चिन्त्यम् । तत्प्रदर्शनस्य दुःखादीनामित्यग्रिमग्रन्थेनैव लाभेन ब्रह्माननुसंहितत्वाद्यभिधानवैयर्थ्यस्य दुर्वारत्वात् । यद्यपि द्वितीयानुमाने घटादेरन्वयदृष्टान्तत्वं सम्भवत्येव । तथापि [1]अन्वयदार्ढ्यायैव व्यतिरेकेण जीववदित्युक्तम् । यद्यपि च प्रथमे ब्रह्मानुसंहितसार्वज्ञाद्यननुसन्धातृत्वस्य, द्वितीये जीवाननुसंहितसार्वज्ञाद्यनुसन्धातृत्वस्य च हेतुत्वं सम्भवति, तथापि परमते शुद्धस्यानुसन्धातृत्वाभावादसिद्धिः स्यादतो न तदनुसरणम् । न चैवं प्रथमे ब्रह्मानुसंहिताप्रसिद्ध्या [2]परस्य

---

भ्रमितव्यम् । यतो हि सर्वोऽप्यभावः अखण्ड एव । यथा भावधर्मेषु सखण्डाखण्डभेदः न तथा अभावे । अवान्तरधर्मघटितत्वं हि सखण्डत्वम् । यथा भूतत्वं बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वम् । अत्र इन्द्रिय-ग्राह्यत्वादयः घटकाः । न तथा घटत्वादिजातिषु अभावेषु वा । अतः अखण्डाभावसम्पादकत्वेन इत्यस्य अखण्डो यः अभावः तत्सम्पादकत्वेनेत्यर्थः । एवं च अखण्डत्वं न व्यावर्तकतयोपात्तम्, अपि तु स्वरूपसङ्कीर्तनम्, भावस्तु उक्त एवेति ध्येयम् ।

1 ॥ **अन्वयदार्ढ्यायेति** ॥ व्यतिरेकव्याप्तौ प्रदर्शितायां हेतोः व्यभिचाराभावः निश्चीयत इति अन्वयव्याप्तिः दृढा भवतीति भावः ।

2 ॥ **परस्य हेत्वप्रसिद्धिरिति** ॥ ब्रह्माननुसंहितेत्यादिहेतोः ब्रह्मनिष्ठानुसन्धानाविषयविषयकानुसन्धानवत्त्वमर्थः । तत्र ब्रह्मानुसन्धानविषयस्याप्रसिद्ध्या तद्भेदघटितहेतोः अप्रसिद्धिरिति शङ्कितुराशयः । परिहारस्यायमाशयः - ब्रह्मनिष्ठाभावप्रतियोग्यनुसन्धानविषयविषयकानुसन्धानवत्त्वं हेतुः । ब्रह्मनिष्ठानुसन्धानविषयस्याप्रसिद्धावपि ब्रह्मनिष्ठाभावप्रतियोगि भवति दुःखानुसन्धानम् । तद्विषयत्वं दुःखे प्रसिद्ध्यतीति न हेत्वप्रसिद्धिरिति भावः । तथा च प्राक् भेदवाचकनञ् उपात्तः । प्रकृते अत्यन्ताभावविषयकनञ् उपात्तः । प्राक् `अननुसंहितेति' भेदप्रतियोगितया अनुसन्धानविषयः उपात्तः । इदानीं `ब्रह्मनिष्ठा-

हेत्वप्रसिद्धिरिति वाच्यम् । ब्रह्माननुसंहितेत्यनेन ब्रह्मनिष्ठाभावप्रतियोग्य-नुसन्धानविषयत्वस्य विवक्षितत्वेन दोषाभावात् ।

अत्र साध्यशरीरे धर्मिसत्तासमानसत्ताकत्वविशेषणव्यावृत्तिं व्यञ्जयन् पारमार्थिकत्वेन भेदविशेषणाविशेषणयोः पूर्वपक्षोक्तसाध्याप्रसिद्धि-सिद्धसाधनरूपदोषानवकाशं दर्शयति — अत्रेति ॥ एतदनुमानद्वय इत्यर्थः । अस्य च `नाप्रसिद्धविशेषणत्वं' `न सिद्धसाधन'मित्याभ्यामन्वयः । अथ [1]सत्तात्वादिना ब्रह्मसत्तासमानसत्ताकव्यावहारिकभेदमादाय सिद्धसाधनवारणाय पारमार्थिकत्वेनैव समानत्वं विवक्षणीयम् । तथा च परं प्रति साध्याप्रसिद्धिस्तदवस्थैव । पारमार्थिकत्वव्यावहारिकत्वान्यतररूपेण समानत्वोक्तौ तु सिद्धान्ते व्यावहारिकत्वाप्रसिद्ध्या साध्याप्रसिद्धिः । सत्तात्वव्याप्यरूपेण तद्विवक्षणे च पारमार्थिकव्यावहारिकान्यतरत्वेन ब्रह्मसत्तासमानत्वमादाय सिद्धसाधनम् ।

यत्तु समानत्वमभेद एव । सिद्धान्ते भेदस्य धर्मिस्वरूपत्वेन तत्र धर्मिसत्तातिरिक्तसत्ताविरहादिति । तन्न । [2]परमते घटादौ साध्यप्रसिद्ध्य-

---

भाप्रतियोग्यनुसन्धानमि'ति अभावप्रतियोगितया अनुसन्धानमुपात्तमिति नञः अर्थः अन्वयश्च परिवर्तित इति ध्येयम् ।

[1] ॥ **सत्तात्वादिना ब्रह्मसत्तासमानसत्ताकेति** ॥ तृतीयायाः प्रयोजकत्वमर्थः । तथा च सत्तात्वप्रयोज्यधर्मिसत्तासमानत्वोपेतसत्ताकभेदः साध्यः इत्यर्थः । अथवा, तृतीयायाः व्यञ्जकत्वमर्थः । तथा च सत्तात्वव्यङ्ग्यधर्मिसत्तासमानत्वोपेतसत्ताकभेदः साध्यः इत्यर्थः ।

[2] ॥ **परमते घटादौ साध्यप्रसिद्ध्यनुपपत्तेरिति** ॥ अत्र श्रीप्रह्लादाचार्याः - समानत्वमभेद इति पक्षे धर्मिसत्तासमानसत्ताकभेदाधिकरणत्वं नाम धर्मिसत्ताऽभिन्नसत्ताक-भेदाधिकरणत्वम् । तथा च परमते घटादौ साध्याप्रसिद्धिः । तन्मते भेदस्य

नुपपत्तेः । मैवम् । तदधिकरणयावत्कालवृत्तित्वं[1] तत्समानत्वमित्यङ्गीकारात् । व्यावहारिकस्य व्यवहारनिवृत्तिकालावृत्तित्वेन सिद्धसाधनाद्यनवकाशात् । यद्वा, ब्रह्मसत्ताभिन्नत्वतदभिन्नत्वान्यतररूपेण समानत्वं विवक्षणीयम् । ब्रह्मसत्ताभिन्नत्वेन धर्मिसत्तासमानसत्ताकभेदस्य घटादौ प्रसिद्धत्वान्नाप्रसिद्धविशेषणत्वम् । ब्रह्मणि ब्रह्मसत्ताभिन्नत्वेन ब्रह्मसत्तासमानत्वासम्भवेन तदभिन्नत्वेन तत्समानसत्ताकभेदः सिध्यन् ब्रह्माभिन्नः पारमार्थिक एव सिध्यतीति दिक् ।

अत्र च घटादिसत्तासमानसत्ताकभेदस्य ब्रह्मण्यभ्युपगमात् सिद्धसाधनमतो धर्मीति । यद्यपि घटादेर्मेयत्वादिकं प्रति धर्मित्वमस्त्येव । तथापि स्वधर्मित्वं विवक्षितम् । स्वपदस्य च तत्तद्भेदपरत्वान्न दोषः । न चैवमात्मधर्मिकभेदस्य परमते स्वधर्मिसत्तासमानसत्ताकत्वाभावात् साध्याप्रसिद्धिरिति वाच्यम् । सजातीयसाध्यस्य घटादौ प्रसिद्ध्यैवानुमाननिर्वाहात् । अन्यथा पक्षीयवह्नेः प्रागसिद्धत्वेनानुमानोच्छेदप्रसङ्गात् । वस्तुतः स्वनिष्ठत्वस्वनिष्ठसत्तासमानसत्ताकत्वोभयसम्बन्धेन धर्मिविशिष्टो

---

धर्मिस्वरूपत्वानङ्गीकारेण घटनिष्ठभेदस्य घटसत्तया भिन्नसत्ताकत्वेन घटसत्तयाऽभिन्नसत्ताकभेदाधिकरणत्वस्य घटादावभवादिति भावः ।

1 ॥ तदधिकरणयावत्कालवृत्तित्वमिति ॥ अत्र श्रीप्रह्लादाचार्याः - तत्समानत्वं तदधिकरणयावत्कालवृत्तित्वमिति पक्षे जीवपक्षकानुमाने ब्रह्मप्रतियोगिकधर्मिसत्ताधिकरणयावत्कालवृत्तिसत्ताकभेदाधिकरणत्वं साध्यमित्युक्तं भवति । अत्र च ब्रह्मप्रतियोगिकव्यावहारिकभेदमादाय सिद्धसाधनता न वक्तुं शक्या । धर्मी जीवः व्यवहारनिवृत्तिकालेऽप्यस्ति । तदानीं च व्यावहारिक्याः सत्तायाः स्तितिर्नास्ति । तथा च धर्मिभूतजीवसत्ताधिकरणयावत्कालवृत्तिपारमार्थिकसत्ताधिकरणभेदमादायैव पक्षे साध्यपर्यवसानं करणीयं भवतीति भावः ।

भेदः साध्यः । एवं च साध्यस्यानुगतत्वाद्धटादौ तत्प्रसिद्धिः सुलभैव । एतेन भेदस्यानुगतत्वपक्षे घटादिसत्तासमसत्ताकतद्धर्मिकभेदस्यैवात्मन्यभ्युपगमेऽपि न सिद्धसाधनावकाशः । गुणादौ द्रव्यवृत्तित्वविशिष्टसत्ताया इव घटादिवृत्तित्वविशिष्टभेदस्यात्मन्यभावादिति ।

ननु ज्ञानसुखदुःखादीनामैकाधिकरण्यनियमेन दुःखानधिकरणे जीवे तदनुसन्धानस्याप्यभावात् प्रथमानुमाने स्वरूपासिद्धिः । अन्यथा ब्रह्मणोऽप्यविशेषेण दुःखानुसन्धानापत्त्या द्वितीये तद्दोष इत्यत आह — **दुःखादीनामिति** ॥ वृत्त्यात्मकानामेव ज्ञानसुखादीनामैकधिकरण्यनियमात् तदनुसन्धानस्य च साक्षिप्रत्यक्षत्वेन जीवगतत्वे बाधकाभावान्न प्रथमेऽसिद्धिः । ब्रह्मणश्च दुःखानुसन्धातृत्वे तद्भावं प्राप्तस्यापि तदापत्त्या, मुक्तित्वेन पराङ्गीकृतब्रह्मभावस्य पुरुषार्थत्वानुपपत्तेः 'निरनिष्टः' इत्यादिश्रुत्यप्रामाण्यप्रसङ्गाच्च ब्रह्मणो दुःखाननुसन्धातृत्वावश्यकत्वान्न द्वितीयेऽपि दोष इति भावः ।

**(१४) (श.)** — एवं जीवेशयोर्जीवानां च भेदे प्रत्यक्षप्रमाणमभिधायानुमानान्याह — **अनुमानानि चेति** ॥ भेदे सन्तीति शेषः । तत्र तावद्ब्रह्मप्रतियोगिकजीवधर्मिकभेदेऽनुमानमाह — **जीव इति** ॥ **धर्मिसत्तासमानसत्ताकेति** ॥ धर्मी जीवः । तस्य यादृशी सत्ता तत्समानसत्ताको यो भेदः तदधिकरणमित्यर्थः । ब्रह्माननुसंहितं यद्दुःखं तदनुसन्धातृत्वात् । तदनुभुवितृत्वादित्यर्थः । अत्रानुसन्धानशब्दोक्तानुभवो नाम दुःखादौ स्वात्मीयत्वाभिमानेनात्मनि तत्कृतनीचोच्चतालक्षणा विक्रियैव नतु ज्ञानमात्रम् । तथाच सर्वज्ञस्य ब्रह्मणः कथं दुःखानुभवाभाव इति न शङ्क्यम् । अन्वयदृष्टान्ताभावादाह — **व्यतिरेकेति** ॥ ब्रह्मणि

ब्रह्मप्रतियोगिकभेदाभावेन साध्याभावो दुःखानुसन्धातृत्वस्याभावेन हेत्वभावश्च द्रष्टव्यः । इदानीं जीवप्रतियोगिकेश्वरधर्मिकभेदेऽनुमानमाह — **ब्रह्म वेति** ॥ अत्र धर्मि ब्रह्म । शिष्टं पूर्ववत् । जीवानुसंहितम् । जीवेनानुसंहितम् अनुभूतं यद्दुःखं तदननुसन्धातृत्वात् । तदननुभवितृत्वा- दित्यर्थः ॥ **व्यतिरेकेणेति** ॥ जीवे जीवप्रतियोगिकभेदाभावेन साध्याभावः । जीवानुसंहितदुःखानुसन्धातृत्वस्यैव विद्यमानत्वेन तदननुसन्धातृत्वा- भावाद्धेत्वभावश्च द्रष्टव्यः । अत्रानुमानद्वये किं पारमार्थिकभेदः साध्यः उत व्यावहारिकः । नाद्यः । अप्रसिद्धविशेषणत्वात् । नद्वितीयः । सिद्धसाधनादिति शङ्कापरिहाराय साध्यद्वये धर्मिसत्तासमानसत्ताकेति विशेषणमुपात्तम् । तेन कथं दोषद्वयपरिहार इत्यतः क्रमेण तदुभयपरिहारं दर्शयति — **अत्रेत्यादिना न सिद्धसाधनमित्यन्तेन** ॥ घटो ब्रह्म नेति प्रतीतिबलात् घटे ब्रह्म प्रतियोगिकभेदस्तावदस्ति । तस्य धर्मी घटः तस्य यादृशी सत्ता व्यावहारिकी तत्समानसत्ताकत्वं प्रसिद्धमेव मायावादिनः । अतो नाद्यानुमानेऽप्रसिद्धविशेषणत्वम् । तथा घटो जीवो नेति प्रतीतिबलात् घटे जीवभेदः सिद्धः । तस्य घटरूपधर्मिसमानसमत्ताकत्वं प्रसिद्धमेवेति न द्वितीयानुमानेऽप्रसिद्धविशेषणत्वम् । तथा जीवस्य धर्मिणः पारमार्थिकत्वेन तत्समसत्ताकत्वेन सिध्यन्भेदः पारमार्थिक एव सिध्यतीति नाद्यानुमाने सिद्धसाधनम् । ब्रह्मणो धर्मिणः पारमार्थिकत्वेन तत्समसत्ताकत्वेन सिध्यन्भेदः पारमार्थिक एव सिध्यतीति न द्वितीयानुमाने सिद्धसाधन- मित्यर्थः । ननु दुःखस्यान्तःकरणवृत्तित्वाज्जीवे दुःखमेव नास्तीति तदनुसन्धातृत्वस्याप्यभावाद्धेतोः स्वरूपासिद्धिरित्यत आह — **दुःखादी- नामिति** ॥ अनुसन्धातृत्वादित्यस्य नासिद्धिरिति वक्ष्यमाणेनान्वयः ।

जीवस्य दुःखानुसन्धाने दुःखस्य जीवगतत्वं न प्रयोकजकम् । जीवावर्तिनोऽपि घटादेरनुसन्धानदर्शनादिति भावः । ननु ब्रह्मणोऽपि दुःखानुसन्धातृत्वे बाधकाभावाद्वितीयहेतोः स्वरूपासिद्धिरित्यत आह — **ब्रह्मण इति** ॥ मायावादिमते जीवस्य ब्रह्मभाव एव मोक्ष इत्यङ्गीक्रियते । तत्र यदि ब्रह्मणोऽपि दुःखानुसन्धानन्तर्हि तद्भावापन्नजीवस्यापि तत्स्यात् । तथाच तादृशमोक्षस्य पुरुषैरर्थ्यत्वाभावेन पुरुषप्रयोजनत्वं न स्यादित्यर्थः ॥ **निरञ्जनेति** ॥ 'निरनिष्टो निरवद्य' इत्यादिनिर्दुःखत्वादिप्रतिपादकश्रुतिविरोधादित्यर्थः ॥ **तदभावेति** ॥ दुःखानुसन्धातृत्वाभावेत्यर्थः ।

**(१५) नन्वत्र जीवशब्देनानवच्छिन्नचैतन्यविवक्षायां तस्य दुःखाननुसन्धातृत्वेनासिद्धिप्रसङ्गादन्तःकरणेन वाऽज्ञानेन वाऽवच्छिन्नचैतन्यं विवक्षणीयम् । न च तद्युक्तम् । अवच्छिन्नस्य मिथ्यात्वेन तत्सत्तासमानसत्ताकत्वेन सिध्यतो भेदस्य पारमार्थिकत्वासिद्धेरिति चेत् कस्तर्हि तवापि जीवशब्दार्थः । अवच्छिन्नमेवेति चेत् तर्हि जीव(स्य) मुक्तिर्मिथ्या स्यात् । ननु जीवभाव एव मिथ्या चैतन्यं तु सत्यमेवेति चेन्न यच्चैतन्ये (यत्र चैतन्ये) मिथ्याभूतो जीवभावस्तत्सत्यमेव । तच्चैतन्यं जीवशब्देनास्माभिर्विवक्षितमिति सन्तोष्टव्यम् । तदेव चैतन्यं दुःखानुसन्धात्रिति नासिद्धिः । दुःखानुसन्धातृत्वं मिथ्यैवेति चेत्किमनेनाकाण्डताण्डवेन । न ह्यस्माभिस्सत्यत्वं (तत्सत्यत्वं) हेतौ विशेषणीकृतम् । ननु जीवब्रह्मणोर्भेदसिद्धेः पूर्वं कथं पक्षदृष्टान्तभाव इति चेन्न । त्वयाऽभ्युपगतेन व्यावहारिकभेदेनैव पक्षदृष्टान्तभावोपपत्तेः ॥?११**

(१५) (भ.) नन्वत्राद्यानुमाने धर्मिसमसत्ताकेति भेदस्य विशेषणेऽपि न भवदभिमतपारमार्थिकत्वसिद्धिरित्याशयेन शङ्कते — **नन्वत्रेत्यादिना** ॥ परमुखेनैव समाधिप्रकारंसूचयितुं पृच्छति — **कस्तर्हीति** । तव जीवब्रह्मणोरभेद इति वदतः । मत इति शेषः ॥ **अवच्छिन्नमेवेतीति** । अन्तःकरणाद्यवच्छिन्नं चैतन्यमेवेत्यर्थः ॥ **तर्हीति** । अवच्छिन्नस्य मिथ्यात्वाङ्गीकारान्मिथ्याभूतस्य च ब्रह्मभावरूपसत्यमुक्त्ययोगाज्जीवस्य शास्त्रेषूच्यमाना मुक्तिर्मिथ्या स्यादिति भावः । नन्ववच्छिन्नस्य जीवत्वेऽपि तस्य मिथ्यात्वेऽपि न तस्योच्यमाना मुक्तिर्मिथ्याऽऽपद्यते । जीवशब्दार्थस्य सर्वस्यापि मिथ्यात्वे हि तथा स्यात् । न चैवम् । यत्र चैतन्ये जीवभाव आरोपितस्तच्चैतन्यं सत्यमेव । तस्य च मुक्तिः सम्भवत्वेवेति भावेन शङ्कते — **नन्विति** ॥ तर्हि वयमपि वदामस्तदेव चैतन्यं जीवशब्द वाच्यम् । यत्र जीवभाव आरोपित इति ब्रूष इति भावेन समाधत्ते ॥ **यत्र चैतन्य इति** ॥ तथा च धर्मिपदेन तादृशचैतन्यस्यैव लाभेन तत्समसत्ताकत्वसिद्धौ भेदस्य पारमार्थिकत्वमेव सिध्यतीति भावः । नन्वेवंसत्यचैतन्यस्यैव जीवशब्दार्थत्वेन विवक्षितत्वे तस्य मन्मते दुःखानुसन्धातृत्वाभावेन हेतोरसिद्धिः स्यादित्यत आह — **तदेवेति** ॥ आरोपितजीवभावं चैतन्यमित्यर्थः । तस्य च दुःखानुसन्धातृत्वं त्वयाऽप्यङ्गीकृतमेवेति भावः । नन्वङ्गीकृतमपि तस्य दुःखानुसन्धातृत्वं मन्मते न सत्यम् । किन्तु मिथ्यैवेति कथं नासिद्धिर्हेतोरिति शङ्कते — **दुःखानुसन्धातृत्वमिति** ॥ मिथ्यैवारोपितमेवेत्यर्थः । आरोपितमप्यनुसन्धातृत्वं चैतन्ये त्वयाऽङ्गीकृतमेवेति तस्य सत्यतानङ्गीकारमात्रेण कथमसिद्धिः । न हि तत्र सत्यत्वं विशेषणं दत्तमस्माभिरिति भावेन प्रत्याह — **किमनेनेति** ॥ **अकाण्डताण्डवेनेति** ॥

वाद्यादिविरहितनर्तनतुल्येनानुपयुक्तेन तन्मिथ्यात्ववर्णनेनेत्यर्थः ॥ **पक्षदृष्टान्तभाव इति** ॥ आद्यानुमाने जीवस्य पक्षत्वं ब्रह्मणो दृष्टान्तत्वम् । द्वितीयानुमाने ब्रह्मणः पक्षत्वं जीवस्य दृष्टान्तत्वमित्यर्थः ।

(१५) (मु.) **नन्वत्रेति** ॥ अनुमानद्वयेऽपीत्यर्थः ॥ **अन्तःकरणेन वेति** ॥ अज्ञानमात्रस्य जीवभावं प्रत्यप्रयोजकत्वादनुसन्धानं प्रत्यनुपयोगाच्च पक्षान्तरपरिग्रहः । परेणैव परिहारं वाचयति — **कस्तर्हीति** । वैदिकव्यवहारेष्विति शेषः ॥ **मुक्तिर्मिथ्या स्यादिति** ॥ अवच्छिन्नस्य मिथ्यात्वेन स्वरूपत एव तस्य बाध्यत्वे कस्य मुक्तिरिति भावः । **सन्तोष्टव्यमिति** ॥ उक्तानुमानदूषणाय वृथा व्यथा कार्येति भावः । नन्वत्राप्युक्तं दूषणमित्यत आह — **तदेवेति** ॥ सत्यचैतन्ये मिथ्याभूतो जीवभाव आरोप्यत इति त्वयैवोक्तत्वात् । दुःखानुसन्धातृत्वस्यैव जीवशब्दार्थत्वादिति भावः । शुद्धस्य मोक्षानङ्गीकारे दुःखानुसन्धानान्वयोऽपि तस्यैव । अन्यथा वैय्यधिकरण्यादिति भावः ॥ **अकाण्डेति** ॥ अविच्छिन्नेत्यर्थः ॥ **कथमिति** ॥ अन्योन्याश्रयादिति भावः । **व्यावहारिकेति** ॥ प्रतिभासिकाद्वैलक्षण्यमात्रेण परेण व्यवहाराङ्गीकारादिति भावः । वस्तुतस्तु सन्दिग्धेनापि भेदेन पृथिवी इतरेभ्यो भिद्यत इत्यादाविव पक्षदृष्टान्तभावोपपत्तिः । अस्य ग्राह्यसन्देहत्वेनाप्रतिबन्धकत्वादित्याद्यूह्यम् । प्रत्यधिकरणं[1] ब्रह्मभेदस्यान्यत्वे मानाभावेन जीवगतस्य व्यावहारिकब्रह्मभेदस्य व्यावहारिकघटेऽपि सत्त्वेन घटापेक्षया धर्मिसत्तासमानसत्ताकत्वेन पुनस्तेनान्यथासिद्धिः ।

---

[1] `न प्रत्यधिकरणम्' इति मु.पाठः ।

(१५) (कु.) ॥ **नन्वत्रेति** ॥ प्रथमानुमाने पक्षवाचकजीवशब्देनेत्यर्थः ॥ **पारमार्थिकत्वासिद्धिरिति** ॥ तथाच सिद्धसाधनमिति भावः । गूढाभिसन्धिः पृच्छति — **कस्तर्हीति** । जीवनिष्ठा मुक्तिर्मिथ्या स्यात् । न हि मिथ्याभूतधर्मिनिष्ठो मिथ्यात्वतत्समशीलधर्मातिरिक्तो धर्मो न मिथ्येति युज्यत इत्यर्थः । यद्वा, जीवस्य मुक्तिरिति वाक्यं मिथ्या स्यात् । अप्रामाण्यात् । यदि जीवो मिथ्याभूतस्तदा ब्रह्मज्ञानेन तन्निवृत्तिः स्यात् । तथा च ब्रह्मज्ञानेन जीवो मुच्यत इति वाक्यमप्रमाणं स्यात् । मुक्त्याधारस्य जीवस्याभावादिति भावः ॥ **नन्विति** ॥ तस्य मुक्त्याधारत्वान्नोक्तदोष इति भावः । आशयमुद्घाटयति — **यत्रेति** ॥ ननु तस्य दुःखानुसन्धातृत्वाभावादसिद्धिरित्यत आह — **तदेवेति** ॥ उपाधेर्जडस्यानुसन्धातृत्वायोगेनोपाधिना निमित्तेन चैतन्य एवानुसन्धातृत्वस्य वाच्यत्वादिति भावः ।

(१५) (ह्र.) पक्षनिष्कर्षार्थं शङ्कते — **नन्विति** ॥ **अनवच्छिन्नेति** ॥ अविद्ययाऽन्तःकरणोपाधिभिर्वाऽनवच्छिन्नेत्यर्थः । प्रसङ्गादिति विवक्षणीयमित्यनेनान्वेति तवापीति ।

> **'अदुःखमितरत्सर्वं जीवा एव तु दुःखिनः ।**
> **तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तत'**

इत्यादौ दुःखित्वेन मुक्तत्वरूपदुःखप्रहाणवत्त्वेन च प्रतिपाद्यते । जीवशब्दार्थः स क इत्यर्थः ॥ **अवच्छिन्नमेवेतीति** । अविद्ययाऽन्तःकरणेन चेत्यर्थः । जीवशब्दोक्तानामेव तेषामिति परामर्शेन मुक्तिर्दुःखप्रहाणरूपोच्यते । सा मिथ्या स्यात् प्रातिभासिकी स्यात् । इदमुक्तं भवति । अविद्याद्युपाध्यपगम एव जीवस्य मुक्तिरूपदुःखनाशहेतुस्तदपगमे तु विशेषणनाशेन तद्विशिष्टस्वरूपात्मकजीव एव नष्ट इति जीवनिष्ठमुक्ते-

रभावादुक्तश्रुतिर्घटस्य चैतन्यमिति वाक्यवदप्रमाणमेव स्यादिति ॥ **नन्विति** ॥ **जीवभाव एवेति** ॥ जीवत्वं चैतन्ये आरोपितं तत्तादात्म्यापन्नं विशिष्टं वेत्यर्थः । ॥ **चैतन्यं तु सत्यमिति** ॥ तथा च यो बालस्तस्यैदानीं स्थविरत्वमित्यादिवाक्येन यथा बाल्योपलक्षितपिण्ड एव स्थविरत्वं प्रतीयते न तद्विशिष्टे बाधात् । तथा प्रकृते तेषामिति जीवत्वोपलक्षितान्परामृश्य मुक्तिरुच्यते । तत्र मुक्तिसम्बन्धस्याबाधान्न तद्वाक्याप्रामाण्यमिति भावः । परं प्रति समाधिं वक्तुं तेन विवादं कर्तुमशक्यत्वस्थापनाय गूढाभिसन्धिना यत्पृष्टं तदिदानीमुद्घाटयति — **यत्रेत्यादिना** । जीवो जीवत्वविशिष्टो मिथ्याभूत आरोपित इति व्युत्क्रमेणोद्देश्यविधेयभावः ॥ **तच्चैतन्यमिति** ॥ तथा च जीवत्वोपलक्षितश्चैतन्यमेव पक्षः । जीवत्वविशिष्टस्य तादात्म्येन तत्राध्यासेन तद्धर्मभूतजीवत्ववत्त्वस्यापि तत्राध्यस्ततया तद्धर्मत्वादिति भावः ।

ननु जीववत्त्वस्य स्वोपहित एव सत्त्वात्तद्वत्त्वेनोपहितस्यैव पक्षत्वप्राप्त्या तत्रोक्तसाध्यत्वाभ्युपगमात्सिद्धसाधनतेति चेन्न । शुद्धे जीववत्त्वसंसर्गस्याभावे पूर्वोक्तजीवमुक्तिवचनाप्रामाण्यापत्त्या तस्मिञ्जीववत्त्वसम्बन्धस्यावश्यकत्वे स्वोपहितप्रतियोगिकेन स्वोपहितावृत्तिना तादात्म्येन जीववत्त्वस्य पक्षतावच्छेदकत्वे उपहितव्यावृत्तेः शुद्धसङ्ग्रहाच्च । उपहिते उपहितप्रतियोगिकत्वविशिष्टतादात्म्याभावाच्छुद्धे[1] तत्सत्त्वाच्च । तदुपहितत्वं स्वविषयताव्यापकतत्प्रकारकत्वरूपमेवोभयमतानुरोधान्निवेश्यम् । अतः सिद्धान्ते विशिष्टातिरिक्तोपहिताप्रसिद्धावपि न पक्षासिद्धिरिति ज्ञेयम् । तर्हि चैतन्ये दुःखानुसन्धातृत्वमसिद्धमित्यत आह — **तदेवेति** ॥ जडस्यानु-

---

1 `उपहितं प्रति प्रतियोगिकत्व-' मु.

सन्धानरूपज्ञानायोगात् । अन्यथा `ईक्षतेर्नाशब्द'मित्यत्रेक्षत्याश्रयत्वेन प्रधानव्यावृत्त्ययोगात् । अनुसन्धातृत्वमपि चेतन एव वक्तव्यममिति नासिद्धिरित्याशयः । असिद्ध्यभिप्रायेण शङ्कते — **दुःखेति** ॥ **मिथ्यैवेति** ॥ स्वात्यन्ताभाववत्येव प्रतीयमानमित्यर्थः । तथा चासिद्धिरिति भावः । किं वस्तुतो मिथ्येति कृत्वा स्वरूपासिद्धिरित्यभिप्रायः? उत सत्यत्वं हेतुविशेषणमवश्यं वाच्यम्, अन्यथाऽऽरोपितदुःखानुसन्धातृत्वमादाय ब्रह्मण्येव व्यभिचारापत्तेरतः साधनाप्रसिद्धिरिति ? ॥ नाद्यः । त्वन्मते सर्वानुमानस्थलेऽप्यसिद्धेर्बाधस्य च दुर्वारतयाऽनुमानप्रामाण्यवार्तोच्छेदापत्तेरतस्तद्वारणाय प्रतियोगिवैय्यधिकरण्यादिकं निवेश्यासिद्धिबाधादिलक्षणं[1]। परिष्कार्यमिति कथमसिद्ध्युद्भावनमित्याशयेनाह — **किमनेनेति** ॥ अनवसरेऽनुपयुक्तवचनेनेत्यर्थः । अनुमानदोषकथनावसरे तदनुपयुक्तमिथ्यात्वकथनमसङ्गतमिति भावः । द्वितीयं निराचष्टे ॥ **न हीति** । अनुसन्धातृत्वं चैतन्ये वर्तत इति तव मम च सम्मतम् । तत्र मिथ्यात्वसत्यत्वविषये पुनरावयोर्विवादः । तत्र विवादविषये सत्यत्वरूपं[2] वा मिथ्यात्वरूपं वा धर्ममविशेषणीकृत्यानुसन्धातृत्वमात्रस्य हेतुत्वेनोपादानान्न साधना[3]प्रसिद्धिरन्यतरमतेनोद्भावयितुं शक्येति भावः । त्वन्मते आरोपितधूममादाय धूमत्वावच्छिन्नस्य वह्निव्यभिचारवारणाय प्रातिभासिकव्यावृत्तस्य व्यावहारिकधूममात्रवृत्तेर्धूमत्वस्य हेतुतावच्छेकत्वम् । मन्मते च तस्यासत्त्वेन तत्र धूमत्वस्यैवाभावाद्धूमत्वस्य हेतुतावच्छेदकत्वम् । ननु धूमे सत्यत्वं विशेषणं देयम् । तद्वत्प्रकृतेऽपि ब्रह्मण्यारोपितानुसन्धातृत्वस्य

---

[1] `-सिद्धिर्बाधादि-' मु.  २. `-विषयसत्यत्व-' इति मु.

[3] साध्या

मन्मतेऽलीकत्वेन त्वन्मते प्रातिभासिकत्वेन तमादायावयोर्मते व्यभिचारप्रसक्त्यभावेन कुतो हेतौ सत्यत्वविशेषणं देयमिति भावः ॥ **पक्षदृष्टान्तभावेति** ॥ केवलपारमार्थिकदृष्ट्या तव प्रवृत्तौ मम तव चैक्येन वादिप्रतिवादिभावस्यैवानुपपत्तिः स्यादिति भावः ।

(१५) (का.) आद्यानुमाने पक्षं परिष्कर्तुमाशङ्कते — **नन्विति** ॥ **अनवच्छिन्नेति** ॥ यद्यपि यावद्विशेषणानवच्छिन्नस्य बोधयितुमशक्यत्वान्न पक्षत्वसम्भवः । सिद्धान्ते पक्षाप्रसिद्धिश्च । तथाप्यनवच्छिन्नपदस्यान्तः-करणाद्यनवच्छिन्नपरतया तदनवच्छिन्नत्वेन पक्षत्वे तात्पर्यान्न दोषः । बहुजीवपक्षेऽन्तःकरणेनेति, एकजीवपक्षेऽज्ञानेनेति । **अवच्छिन्नं** विशिष्टम् । तस्य च **मिथ्यात्वमपारमार्थिकत्वं**, व्यावहारिकत्वमिति यावत् । तथाच तत्सत्तासमानसत्ताकभेदस्य सिद्धत्वात् सिद्धसाधनं, पारमार्थिकभेदा-सिद्धेरर्थान्तरं चेत्याशयः ।

अत्र विशिष्टघटकविशेष्यांशस्यैव पक्षत्वमङ्गीकृत्य समाधास्यन् उक्तसिद्धसाधनाद्यभावस्फुटीकरणाय पृच्छति – **कस्तर्हि तवेति** ॥ **अवच्छिन्नमिति** ॥ सामान्ये नपुंसकम् । अवच्छिन्नं चैतन्यमिति वा ॥ **मिथ्या स्यादिति** ॥ शशशृङ्गादिवदसती स्यादित्यर्थः । जीवस्य मिथ्यात्वेनाज्ञानवत् प्रविलीनस्य ब्रह्मभावायोगादिति भावः । तथाच निष्प्रयोजनत्वेन वेदान्तानामनारम्भणीयत्वप्रसङ्ग इति ध्येयम् । जीव शब्दार्थविशिष्टघटकविशेष्यांशस्य ब्रह्मत्वापत्तिरेव जीवमुक्तिशब्दार्थः । तत्र च नोक्तदोष इत्याशङ्कते — **नन्विति** ॥ जीवभावोपलक्षितचैतन्यस्य पक्षत्वान्नार्थान्तरादीत्याशयेन समाधत्ते – **यत्रेति** ॥ सन्तोष्टव्य-मित्यनेनाभ्युपेत्यैवेदमुक्तम् । वस्तुतो विशिष्टस्यापि सत्यत्वमेवेति सूचितम्

॥ **तदेवेति** ॥ दुःखानुसन्धातृत्वस्य जीवभावनियतत्वादिति भावः । नन्वपारमार्थिकदुःखानुसन्धातृत्वस्य ब्रह्मण्यनैकान्त्यात् पारमार्थिकत्वेन हेतुर्विशेषणीयः । तथाच परमते हेत्वसिद्धिरित्याशङ्कते — **दुःखानुसन्धातृत्वमिति** ॥ स्यादेवं यदि पारमार्थिकत्वेन हेतुर्विशेषितः स्यान्न चैवं, प्रातिभासिकानैकान्त्यस्यादोषत्वात् । अन्यथाऽनुमानमात्रोच्छेदापत्तेरिति भावेनाह — **किमनेनेति** ॥ अनवसरताण्डवायितेनानेनानुक्तोपालम्भेन **किमस्माकमनिष्टम् ?** न किमपीत्यर्थः ।

अथायं पूर्वपक्षाभिप्रायः । दुःखानुसन्धातृत्वस्य मिथ्यात्वान्न पक्षधर्मत्वम् । सत्यानृतयोः सम्बन्धानुपपत्तेः । यद्यप्यध्यस्ताधिष्ठानभावरूपः सम्बन्धोऽस्ति । तथापि नासौ हेतुत्वनियामकः । सिद्धान्ते दुःखानुसन्धातृत्वस्यानारोपितत्वेन तदनुपपत्तेः । किन्त्वाश्रयाश्रयिभावः । तथाच परेषामसिद्धिरिति । अत्र ब्रूमः । अनुसन्धातृत्वसम्बन्धेन दुःखवत्त्वस्यैवात्र हेतुत्वम् । अनुसन्धातृत्वं च परमते स्वाधिष्ठान एव, सिद्धान्ते च स्वाधार एव दुःखादेर्वृत्तिनियामकमिति न कोऽपि दोषः ।

॥ **कथं पक्षदृष्टान्तभाव इति** ॥ यद्यपि प्रकृते वादिविप्रतिपत्त्या भेदस्य सन्दिग्धत्वान्न सन्दिग्धसाध्यकत्वादिलक्षणपक्षत्वानुपपत्तिरस्ति । तथापि पक्षत्वसहितदृष्टान्तत्वानुपपत्तेर्विवक्षितत्वान्न दोषः । यद्वा , भेदसिद्धेः पूर्वमभेदनिश्चये यथा जीवस्य पक्षत्वमनुपपन्नं तथा तत्सन्देहे ब्रह्मणो दृष्टान्तत्वमनुपपन्नमित्यर्थे तात्पर्यम् । अत एव भेदसिद्धेः पूर्वमित्यपि सङ्गच्छते । अन्यथा भेदसिद्ध्युत्तरमपि पक्षत्वानुपपत्तिसत्त्वेन तदसङ्गतेः । अत्र जीवे ब्रह्मभेदसन्देहेऽपि ब्रह्मणि तदभेदानिश्चयान्नोक्तदोषः । न चाभेदे तदनुपपत्तिः, व्यावहारिकभेदेनैव तदुपपत्तेरित्याशयेन समाधत्ते ॥ **त्वयेति**

॥ यद्यपि केवलचैतन्यभेदः परेण नाभ्युपगतः । तथापि विशिष्टभेदस्य विशेष्यीभूतचैतन्यप्रतियोगिकत्वमस्तीति स एव पक्षदृष्टान्तभावोपपादक इति भावः । यद्वा , सार्वज्ञादिविशिष्टचैतन्यमेव दृष्टान्तः । तत्प्रतियोगिकभेद एव साध्य इति न कश्चिद्दोषः । अथ तथापि जीवब्रह्मणोरभेदवादिनां ब्रह्मचैतन्येऽपि दुःखानुसन्धातृत्वसत्वाद्व्यभिचारः । अभेदस्य विप्रतिपत्त्या सन्दिग्धत्वेऽपि सन्दिग्धानैकान्त्यं दुर्वारमिति चेन्न । हेतुमति साध्याभावसन्देहाधीनव्यभिचारसन्देहस्यादोषत्वात् । प्रकृते च तस्य हेतुमति जीवे ब्रह्माभेदसन्देहमूलत्वात् अन्यथा पक्षीयव्यभिचारसन्देहस्य सार्वत्रिकत्वेनानुमानोच्छेदप्रसङ्गादिति ।

(१५) (श.) जीवपक्षकानुमाने धर्मिसमसत्ताकेति विशेषणेऽपि न सिद्धसाधनत्वपरिहार इति शङ्कते — **नन्वित्वादिना पारमार्थिकत्वासिद्धिरित्यन्तेन** ॥ अन्तःकरणेनेति बहुजीववादिमतेन अज्ञानेनेत्येकजीववादिमतसाधारण्येनेति ध्येयम् । अत्र प्रतिबन्द्या समाधत्ते ॥ **कस्तर्हीत्यादिना सन्तोष्टव्यमित्यन्तेन** ॥ तव जीवस्य ब्रह्मभावो मुक्तिरिति वदतः ॥ **तर्हीति** ॥ यद्यवच्छिन्नं जीवशब्दार्थस्तर्हि तस्य मिथ्यात्वेन मिथ्याभूतस्य ब्रह्मज्ञाननिवर्त्यत्वेन ब्रह्मात्मैक्यापरोक्षज्ञानसमये जीवस्यैवाभावाज्जीवस्य ब्रह्मभावो मुक्तिरित्येतन्मृषा स्यादित्यर्थः । ननु जीवशब्दार्थभूतमविद्यादिविशिष्टं नसर्वं मिथ्या किन्तु विशेषणभाग एव । विशेष्यभागस्य तु सत्यत्वेन निवृत्त्यभावात्तस्य ब्रह्मभावरूपा मुक्तिर्युक्तैवेति शङ्कते — **नन्विति** ॥ जीवभावः जीवत्वम् ॥ **यत्र चैतन्य इति** ॥ तथाच जीवस्यपारमार्थिकत्वेन तत्समसत्ताकत्वेन सिध्यन्भेदःपारमार्थिक एव सिध्यतीति न सिद्धसाधनमिति भावः । मिथ्याभूतो जीवभाव इति

परमतानुवादः । स्वमते जीवभावस्य सत्यत्वादिति ध्येयम् । ननु यदि सिद्धसाधनतापरिहाराय सत्यचैतन्यमेव जीवशब्दार्थोऽङ्गीक्रियते । तर्हि तस्य दुःखानुसन्धातृत्वाभावात्स्वरूपासिद्धिः स्यादित्यत आह — **तदेवेति** ॥ अहं दुःखीत्यत्र चैतन्यस्यैवास्मच्छब्दार्थत्वादिति भावः ॥ **अकाण्डताण्डवेनेति** ॥ अत्र ताण्डवाङ्गादिकं काण्डशब्देन विवक्षितम् । तथाच काण्डाभावेऽपि ताण्डवायितेन दुखानुसन्धातृत्वमिथ्यात्वेन किमित्यर्थः । यथा नर्तनाङ्गमृदङ्गादिसद्भावेन नर्तनं सङ्गतं तदभावे त्वसङ्गतं तद्वदत्रापि दुःखानुसन्धातृत्वस्यास्माभिः सत्यत्वे वर्णिते तन्मिथ्यात्वकथनं सङ्गतं, तदभावे तत्कथनमसङ्गतमेवेति भावः । एतदेवाह — **नहीति** ॥ हेतौ दुःखानुसन्धातृत्वे । येन तन्मिथ्यात्ववर्णनं सङ्गतं स्यादिति भावः । वस्तुगत्या भवदभिमतं सत्यत्वं निराकृतमिति चेन्न । तस्य प्रसङ्गान्तरत्वेन प्रकृतासङ्गत्यपरिहारादिति हृदयम् । नन्वाद्यानुमाने जीवस्य पक्षत्वं ब्रह्मणो दृष्टान्तत्वं द्वितीये ब्रह्मणः पक्षत्वं जीवस्य दृष्टान्तत्वं न सम्भवति । पक्षदृष्टान्तभावस्य भेदसापेक्षत्वात् । जीवब्रह्मणोर्भेदस्याद्याप्यसिद्धत्वादिति शङ्कते — **नन्विति** ॥ नचानेनैवानुमानेन तयोर्भेदसिद्ध्या पक्षदृष्टान्तभावोपपत्तिरिति वाच्यम् । भेदसिद्धौ पक्षदृष्टान्तभावोपपत्त्याऽनुमानप्रवृत्तिरनुमानप्रवृतौ च तेन भेदसिद्धिरित्यन्योन्याश्रयापातादिति भावः । पक्षदृष्टान्तभावे हि भेदमात्रमपेक्षितं ननु तस्य पारमार्थिकत्वमपि । तथात्वे त्वन्मते पर्वतमहानसयोः पारमार्थिकभेदाभावेन पक्षदृष्टान्तभावानुपपत्तिप्रसङ्गात् । भेदमात्रं तु जीवब्रह्मणोस्त्वयाप्यङ्गीकृतमिति तेन पक्षदृष्टान्तभावोपपत्तिरिति परिहरति **त्वयेति** ॥

**(१६) यद्वा जीवो ब्रह्मप्रतियोगिक(तात्त्विक)तादात्म्याधिकरणं न भवति, ब्रह्म वा जीवप्रतियोगिक(तात्त्विक)तादात्म्याधिकरणं न भवति इति । पूर्वोक्तहेत्वोरेव साध्यनिर्देशो द्रष्टव्यः । न चैवमप्रसिद्धविशेषणत्वं दोषाय । तद्धि साध्यकोटेरप्रसिद्धेः(द्धौ) साध्यतदभाववत्त्वेन सन्देहानुदयात्पक्षताविघटनद्वारा पक्षधर्मताविघटकत्वेन दोषः, उताप्रसिद्धे साध्ये तेन हेतोर्व्याप्तिग्रहणायोगेन व्याप्तिविघटनेन वा उभयविघटनेन वा । नाद्यः । ब्रह्म जीवप्रतियोगिक(तात्त्विक)-तादात्म्यापन्नं(तादात्म्यावच्छिन्नं) न वेति संशयाभावेऽपि जीवप्रतियोगिक(तात्त्विक)तादात्म्यं ब्रह्मण्यस्ति न वेति सन्देह-मात्रेणाभिधेयत्वसाधकानुमान इव पक्षतोपपत्तेः (पक्षधर्मतोपपत्तेः)। न द्वितीयः । केवलव्यतिरेकिणि साध्याभावस्यैव व्याप्तिग्रहात् । अत्र साध्याभावस्य जीवतादात्म्यस्य जीवे प्रसिद्धेः । यत्र व्यतिरेकिणि भावः साध्यस्तत्राभावस्य व्याप्त्युपयोगिनो भावज्ञानाधीनत्वात्साध्या-प्रसिद्धिर्दोषाय । प्रकृते त्वभावस्य साध्यत्वान्न दोषः । न तृतीयः । उभयाविघटनेनादूषणत्वात् । व्याप्तिपक्षधर्मतान्यतरविघटकत्वे-(विघटकत्वेनैव) हि दूषणम् ।**

(१६) (भ.) पूर्वोक्तानुमानद्वये धर्मिसमसत्ताकेति विशेषणप्रवेशेन गौरवमित्यपरितोषादाह — **यद्वेति** ॥ **पूर्वहेत्वोरेवेति** । पूर्वोक्तहेतुभ्या-मेवेत्यर्थः । आद्यानुमाने ब्रह्माननुसंहितदुःखानुसन्धातृत्वादिति । द्वितीये च जीवानुसंहितदुःखाननुसन्धातृत्वादिति पूर्वोक्तावेव हेतू बोध्याविति भावः ॥ **न चैवमप्रसिद्धविशेषत्वमिति** ॥ सर्वत्राद्वैतवादिना ब्रह्मजीव-प्रतियोगिकतात्त्विकतादात्म्यस्यैवाङ्गीकारादिति भावः । यद्यप्यप्रसिद्ध-

विशेषणत्वमस्ति । तथाऽपि न तेनानुमितिप्रतिबन्धरूपदोषोऽस्तीति भावेनोक्तं दोषायेति । तद्धि पक्षधर्मताविघटनेन वा व्याप्तिविघटनेन वोभयविघटनेन वा दोष इति योजना । कथं पक्षधर्मताविघटनमित्यत उक्तं पक्षत्वविघटनद्वारेति । तदपि कथमित्यत उक्तं साध्यकोटीत्यादि । साध्यरूपैककोटीत्यर्थः । तथा च सन्दिग्धसाध्यवत एव धर्मिणः पक्षत्वात्तद्वृत्तिहेतोरेव पक्षधर्मत्वात्सन्देहेभावे पक्षत्वासिद्धौ हेतोः पक्षधर्मता न घटत इत्यर्थः । व्याप्तिविघटनोपपादनायोक्तमप्रसिद्धनेत्यादि । जीवो ब्रह्मप्रतियोगिकतात्त्विकतादात्म्याधिकरणं न भवतीत्याद्यनुमाने ईश्वरप्रतियोगिको जीवधर्मिकस्तु भेदो जीवस्य प्रत्यक्षः । नाहं निर्दुःखो न सर्वज्ञ इत्यनुभवादिति प्राक् पक्ष एव साध्यप्रसिद्धेरुपपादितत्वेन किं पराङ्गीकारमात्रेण साध्याप्रसिद्धिमभ्युपगम्य तस्य दोषहेतुतानिरासायासेनेति भावेन ब्रह्मपक्षकद्वितीयानुमान एव साध्याप्रसिद्धेरदूषणत्वमुपपादयति — **नाद्य इत्यादिना** । यद्यपीश्वरधर्मिको जीवप्रतियोगिको भेद ईश्वरस्य प्रत्यक्ष इति प्रागुक्तत्वाद्द्वितीयानुमानेऽपि साध्याप्रसिद्धिर्नास्ति । तथाऽपि परबुद्धेरप्रत्यक्षत्वादुत्तमः पुरुषस्त्वन्य इतीश्वरवाक्येन तत्प्रत्यक्षानुमाने पुनस्तत्रापि साध्याप्रसिद्धिशङ्कायां तन्निरासे प्रयासगौरवमालोच्य द्वितीयानुमाने साध्याप्रसिद्धिमभ्युपगम्य तस्या अदूषणत्वकथनमिदमिति बोध्यम् । केचित्तूपलक्षणाभिप्रायेण द्वितीयानुमानेऽप्रसिद्धविशेषणत्वस्य दोषत्वाभावकथनमिदमित्याहुः । यद्यपि नायं पन्थाः सैद्धान्तिकः । आश्रयव्याश्रयासिद्धी साध्यासिद्धिश्च दूषणम् । केषाञ्चिन्न च ते दोषा व्याप्तौ सत्यां कथञ्चनेत्युक्तेः । तथाऽपि परमतानुसारेणेदमिति बोध्यम् ॥ **ब्रह्मेति** ॥ तत्र जीवप्रतियोगिकतात्त्विकतादात्म्यपन्नमिति साध्याभावकोटिप्रदर्शनम् । न वेति साध्यकोटिप्रदर्शनम् ।

तथा च ब्रह्मरूपपक्षधर्मिकसाध्यतभावकोटिकसंशयासम्भवेऽपि साध्याभावधर्मिकपक्षवृत्तित्वतदभावकोटिकसन्देहमात्रेण पक्षत्वोपपत्त्या हेतोः पक्षधर्मत्वोपपत्तेरित्यर्थः । क्वचित्साध्यधर्मिकपक्षवृत्तित्वतदभाव-कोटिकसंशयेनापि पक्षतोपपत्तिर्द्रष्टव्या । नेयं रीतिः शास्त्रानुबद्धेति मन्तवयमिति भावेनात्र दृष्टान्तमाह — **अभिधेयत्वसाधकानुमान इवेति** ॥ शब्दोऽभिधेयः प्रमेयत्वादित्यत्राभिधेयत्वस्य केवलान्वयित्वेन तदभावाप्रसिध्या शब्दोऽभिधेयत्वावान्न वेति सन्तेहेसम्भवेऽप्यभिधेयत्वं शब्दवृत्ति न वेति सन्देहमात्रेण यथा शब्दस्थपक्षतोपपत्तिस्तथाऽत्रापीति भावः । इदमपि पक्षतासम्पादनं परोक्तानुसारेणैव । न स्वमतरीत्या । स्वमते लिङ्गजन्यप्रतीतिविषयरूपसाध्यधर्मवत्तामात्रस्य पक्षतारूपत्वेन सन्दिग्धसाध्यधर्मवत एव पक्षत्वनियमाभावात् । घनगर्जितश्रवणेन घनानुमाने ज्ञात्वाऽपि परीक्षार्थं पृच्छन्तं प्रति प्रयुक्तानुमाने प्रत्यक्षादिना निश्चितेऽप्यर्थे दार्ढ्यार्थं प्रयुज्यमानानुमाने च साध्यसन्देहाभावेन साध्यधर्मवतः पक्षताभावप्रसङ्गात् । स्वकारणायत्ततया जायमानाया-मनुमितौ प्राक् साध्यसिद्धेरप्रतिबन्धकत्वाच्च । सिद्ध्यभावस्यानुमिता-वनङ्गत्वाच्च । न हि सामग्री बुद्धिमती येन यन्मया कर्तव्यां तदन्येनैव कृतमित्यालोच्योदासीत । अत एव सिषाधायिषा सहकृतसिद्ध्यभावः पक्षतेत्यादिवादा अपि स्थवीयांस एव । पर्वते वह्निं दृष्ट्वा किञ्चिद्दूरगतस्य सहसा धूमदर्शने वह्न्यनुमितेरनुभवसिद्धत्वात् । न हि तत्र सिषाधयिषाऽस्ति । नापि सिद्ध्यभाव इति ॥ **केवलव्यतिरेकिणीति** । हेतोः साध्येन व्याप्तिग्रहे हि साध्यप्रसिद्धेरुपयोगः । साधनाभावेन साध्याभावस्य व्याप्तिग्रहे तु न साध्यप्रसिद्धिरुपयोगिनी । केवलव्यतिरेकी चायं हेतुरिति भावः ।

ननु केवलव्यतिरेकिणि व्यतिरेकव्याप्तिग्रहे साध्यप्रसिद्धेरनुपयोगेऽपि साध्याभावप्रसिद्धिस्त्वावशियक्येव । साऽपि कथमत्रेत्यत आह — **अत्रेति** ॥ जीवतादात्म्याभावस्यैव साध्यत्वेन तदभावो जीवतादात्म्यं जीवे प्रसिद्धमेवेति भावः । ननु जीवच्छरीरंसात्मकं प्राणादिमत्त्वादित्यत्र व्यतिरेकव्याप्तिग्रहे प्रतियोगितया साध्यप्रसिद्धेरप्यावश्यकत्वेन कथं सा नोपयोगिनीति तत्राह — **यत्र त्विति** ॥ तथा च सात्मकत्वानुमाने सात्मकत्वस्य भावरूपत्वेन व्यतिरेकव्याप्तिग्रहे प्रतियोगिभूतसात्मकत्वाज्ञानस्यापेक्षितत्वेन तदप्रसिद्धौ व्याप्तिग्रहायोगेन साध्याप्रसिद्धेर्दोषत्वेऽपि न प्रकृतानुमाने साध्याप्रसिद्धिर्दोषाय । जीवतादात्म्याभावस्य साध्यत्वेन तस्याप्रसिद्धत्वेऽपि व्यतिरेकव्याप्तौ जीवतादात्म्याभावाभावरूपजीवतादात्म्यस्य जीवे प्रसिद्धत्वेन तस्य हेत्वभावेन व्याप्तिग्रहस्य सुशकत्वादिति भावः । अभावस्याभावज्ञानस्य । भावज्ञानाधीनत्वात् साध्यरूपप्रतियोगिज्ञानाधीनत्वात् ॥ **उभयविघटनेनेति** ॥ असिध्यादिहेत्वाभासदोषेषु पक्षधर्मताव्याप्त्युभयविघटनेन दूषणत्वस्यादर्शनादित्यर्थः । तत्कुत इत्यत आह — **व्याप्तीति** । अन्यतरविघटकत्वमात्रेणैव दूषणत्वं न तूभयविघटकत्वेनापि गौरवात् । अतोऽत्रापि नोभयविघटकत्वेन दूषणत्वमङ्गीकार्यमिति भावः ।

(१६) (मु.) एवं द्वितीयप्रयोगेऽपीत्यतः सत्येव समाधाने विषयव्याप्तिसूचनार्थं प्रकारान्तरेण प्रयुङ्क्ते ॥ **यद्वेति** ॥ समाधानं तु ब्रह्मप्रतियोगिकाभेदो न जीवघटयोरेकः । तस्य धर्मिस्वरूपत्वेन प्रत्यधिकरणमन्यान्यत्वात् । तथा हि । अन्योन्याभावो धर्मिस्वरूपो धर्म्यभिन्नत्वेनारोप्यमाणप्रतियोगिकः सः स्वयमपि धर्मिणा तदवस्थानापन्नः । यथा

धर्मिभिन्नतयाऽऽरोप्यमाणप्रतियोगिकः संसर्गाभावो धर्मिभिन्न इति । विपक्षे भेदपरम्परयाऽनवस्थेत्यनुकूलतर्कः । अस्तु वाऽसन्नेक एव भेदः । तथाऽपि यावद्धर्मिसत्तासमानसत्ताकेति विशेषणान्न दोषः । न जीवघटोभयधर्मिकस्य विरुद्धसत्ताद्वयप्रत्याहृत्या व्याहतिरिति वाच्यम् । पक्षधर्मताबलाद्व्याहतार्थस्यापर्यवसानात् । किञ्च जीवजडयोः पारमार्थिकत्वैकरूपसत्ताकत्वस्याप्यनेन लाभात् । न चैवं जीवस्यापि व्यावहारिकपर्यवसानं किन्न स्यादिति वाच्यम् । सन्दिग्ध एव पर्यवसानस्य न्याय्यत्वादिति ॥ तादात्म्याभावस्यैव भेदत्वेन पूर्वानुमानापेक्षयाऽत्र को भेद इति चेन्न । तादात्म्यारोप्यकस्यैव भेदत्वात् । इह च तादात्म्याभावसाध्यत्वात् । न चैवं भेदसाधनासङ्गतिरिति वाच्यम् । तादात्म्यविरोधिमात्रस्यैवादौ भेदपदेन विवक्षितत्वात् । व्यावहारिकतादात्म्यस्याभावेन सिद्धसाधनतावारणाय **तात्त्विकेति** ॥ **अप्रसिद्धेति** ॥ सर्वस्यापि तत्त्वतो ब्रह्मपदाभिधेयचैतन्यात्मकत्वाङ्गीकारादिति भावः । साध्यासिद्धिर्न दूषणमिति भावेनाह — **तद्धीति** । पक्षत्वविघटनद्वारेण पक्षधर्मताविघटनद्वारेणेत्येकविधो विकल्पः । अप्रसिद्धकोटिकसंशयासम्भवे सन्दिग्धत्वरूपपक्षत्वाभावेनेत्यर्थः ॥ **उभयेति** ॥ उक्तव्याप्तिपक्षधर्मतारूपद्वयेत्यर्थः । प्रकारत्रयं विना दोषतायोगादिति भावः । साध्याप्रसिद्धौ पक्षविशेष्यकसाध्यतदभावोभयकोटिकसंशयाभावेऽपि साध्यतदभावान्यतरविशेष्यकेन पक्षवृत्तित्वावृत्तित्वकोटिसंशयेनालमित्याह[1] ॥ **ब्रह्मण्यस्ति न वेतीति** ॥ एवञ्च ब्रह्मवृत्तित्वतदवृत्तित्वयोरेव कोटित्वेन तयोः सत्त्वज्ञानत्वादौ प्रसिद्धत्वादिति भावः ।

---

[1] '-कोटिकसंशय-' इति पाठः सम्भाव्यते, बहुव्रीहौ कप्रत्ययस्यानियतत्वेऽपि प्रायिकत्वात् ।

अभिधेयत्वेति शब्दोऽभिधेय इत्यत्राभिधेयत्वस्य केवलान्वयित्वेन नेति कोट्यप्रसिद्ध्याऽभिधेयो न वेति संशयायोगेऽपि अभिधेयत्वं शब्देऽस्ति न वेति सन्देहमात्रेणैवेत्यर्थः । यथाकथञ्चित्पक्षतावच्छेदकसामानाधिकरण्य-संशयोऽनुमित्यङ्गम् । न तु तस्यानुमितिसमानविशेष्यप्रकारतापेक्षेति भावः । वस्तुतस्तु जिज्ञासुं प्रत्यनुमानप्रवृत्तावेव संशयोऽङ्गम् । प्रतिवादिनं प्रति सिषाधयिषायाम् । वादिप्रतिवादिमध्यस्थानां स्वस्वसिद्धान्त-निश्चयित्वात् । किञ्च कोटिज्ञानस्यैव संशयं प्रति हेतुत्वं लाघवात् । अतश्चारोपरूपाप्रसिद्धिः सर्वत्र युज्यते । न हि परस्य विशेषदर्शनवतः सा न युक्तेति वाच्यम् । तस्याप्याहार्योपपत्तेः । प्रतिवादिनं प्रति प्रवृत्तौ तु संशयस्याप्याहार्यहेतुत्वाङ्गीकारात् । अपि च तादात्म्याधिकरणं न भवतीति प्रतिज्ञावाक्यादेव कोटिप्रसिद्धिरस्तु । अयोग्यताज्ञानं वाक्यार्थज्ञानप्रामाण्य एव प्रतिबन्धकम् । तज्ज्ञानं तु विशेषदर्शनं चन्द्रप्रादेशेन चन्द्रप्रादेशत्व-प्रत्यक्षसामग्रीवशाद्भवत्येवेति ॥ **साध्याभावस्य व्याप्तिग्रहणादिति** ॥ एवञ्च साध्यव्याप्तेरग्रहणे तदप्रसिद्धिरदोष इति भावः । इदं च पररीत्यैव । वस्तुतस्त्वधिकरणविशेषस्याप्रसिद्धत्वेऽप्यधिकरणानुबन्धेनैवेदमनेन व्याप्तं तदभावव्यापकीभूताभावप्रतियोगित्वादित्यन्वय एव सुग्रहः । उपलक्षणमेतत् । विशेषतत्साध्याप्रसिद्धावपि यो यदवृत्तिधर्माधिकरणं स तत्तादात्म्याधिकरणं न भवतीति सामान्यव्याप्तिस्तु सुग्रहेति । अभावव्याप्तिग्रहेऽपि प्रतियोगिप्रसिद्धिरावश्यिकीत्यत आह — **यत्रेत्यादिना** ॥ **दोषायेति** ॥ कथञ्चिदिति शेषः । तत्रारोप्यद्वयप्रसिद्धेरूपपादयितुं शक्यत्वादिति भावः । अन्यथा साध्याप्रसिद्धिर्न दोष इति विरोधः ॥ **अभावस्य साध्यत्वादिति** ॥ अभावाभावस्य भावत्वेन प्रतिज्ञानानपेक्षणादिति

भावः । इदं चापाततोऽभावाभावस्य भावत्वेऽपि न विधिमुखेन व्यतिरेक-धीः । किन्त्वभावाभावत्वेन । ईदृश्या एव व्यभिचारधीविरोधित्वादिति । वस्तुतस्तूक्तरीत्याऽऽरोपरूपाप्रसिद्धिरवसेया । अस्तु प्रकारान्तरेण दुष्टत्वमित्यत आह — **व्याप्तीति** ।

(१६) (कु.) ननु धर्मित्वमेकं नानुगतम् । तथा च यदि घटसत्ता-समानसत्ताकं भेदविशेषणं तदा सिद्धसाधनता विशेषणवैय्यर्थ्यं च । यदि ब्रह्मसत्तासमानसत्ताकत्वं तदा साध्याप्रसिद्धिरित्यत आह — **यद्वेति** ॥ **ब्रह्म वा जीवप्रतियोगिकेति** ॥ इदं द्वितीयानुमानाभिप्रायेण । एवं प्रथमानुमानेऽपि जीवो ब्रह्मप्रतियोगिकतात्विकतादात्म्याधिकरणं न वेति सन्देहासम्भवेऽपि ब्रह्मप्रतियोगिकतात्त्विकतादात्म्यं जीववृत्ति न वेति सन्देहसम्भवेन पक्षता बोध्या । न च पक्षविशेष्यकसाध्यतदभावकोटिकसंशयान्यसंशयेनापि पक्षतायां सिद्धिदशायामपि यादृशतादृशसंशयेन पक्षतापत्तिरिति[1] । प्रकृतानुमितिनिवृत्त्य[2]संशयस्यातिप्रसङ्गभञ्जकत्वात् । प्रकृतानुमितिश्च भिन्नविशेष्यकप्रकारकाऽप्यनुभवविरोधात्[3] तादृशसंशयनिवृत्तिकेति[4] भावः । इदमुपलक्षणम् । वस्तुतस्तु घनगर्जितेन घनाद्यनुमानानुरोधेन विशिष्टसिद्ध्यभावः पक्षता सा तु संशयाभावेऽप्यक्षता । पक्षधर्मता तु न तावत्तत्तद्धर्मधर्मिता । किन्तु पक्षताभिमतधर्मवृत्तितैव सा तु संशय-निरपेक्षितैवेति न तद्विघटकता साध्याप्रसिद्धेरित्यपि बोध्यम् ।

---

[1] प्रायिकत्वादत्र `वाच्यम्' इति पदेन भाव्यम् ।

[2] `-निवर्त्य-' इति पाठेन भाव्यमिति भाति ।

[3] `-भवानुरोधात्' इति पाठेन भाव्यमिति भाति ।

[4] `-निवर्तिका-' इति पाठेन भाव्यमिति भाति ।

तत्राभावज्ञानस्य व्याप्त्युपयोगिनो भावाधीनत्वादिति पाठः साधुः । क्वचित्तत्राभावव्याप्तिप्रतियोगिनो भावाधीनत्वादिति पाठः । तत्र व्याप्तिप्रतियोगिनो व्याप्त्याश्रयस्याभावज्ञानाधीनत्वादित्यर्थः ॥ **उभयविघटनेनेति** ॥ यद्यप्युभयविघटनेऽनुमितिप्रतिबन्धो भवत्येव तथाऽप्युभयविघटकत्वं न दूषकताबीजं गौरवादव्याप्तेश्चेति भावः ।

(१६) (हु.) शिष्यव्युत्पादनायोक्तार्थदार्ढ्याय चानुमानान्तराण्याह — **यद्वेति** ॥ केचित्तु धर्मित्वेन निवेशे घटादिरूपधर्मिसत्तासमानसत्ताकभेदं व्यावहारिकमादाय सिद्धसाधनता । स्वधर्मीति निवेशे पक्षदृष्टान्तयोरेकसाध्यालाभ इत्यरुचेराह यद्वेतीत्याहुः । इति साध्यनिर्देशः पूर्वोक्तहेतोः कर्तव्य इत्यर्थः ॥ **ब्रह्मप्रतियोगिकतात्त्विकतादात्म्याधिकरणं न भवतीति** ॥ ननु तादात्म्ये तात्त्विकत्वं विशेषणं व्यर्थम् । सामान्यतस्तादात्म्यानाधिकरणत्वमात्रसाधनेनाप्यभिमतार्थसिद्धेः । यथाकथञ्चित्त्तादात्म्याधिकरणत्वे तत्सामान्यानाश्रयत्वबाधापत्त्याऽत्यन्तभेदसिद्धेः । न चारोपितस्य जीवतादात्म्यस्य ब्रह्मणि, ब्रह्मतादात्म्यस्य च जीवे सत्त्वाद्बाधवारणाय तत्सार्थक्यमिति वाच्यम् । आरोपितानारोपितयोर्मिलित्वा तादात्म्यत्वाख्यैकधर्मस्यैवाभावात् । आरोपितस्यैवासत्त्वेन किञ्चिदधिकरणावृत्तितद्वत्तामादाय बाधप्रसक्त्यभावाच्च । नापि परं प्रति बाधसिद्धसाधनतावारणायेति वाच्यम् । तात्त्विकतादात्म्यस्य त(त्व)न्मतेऽङ्गीकृतत्वेन तादत्म्यसामान्याभावस्य तन्मतेऽनङ्गीकारेण सिद्धसाधनानवकाशात् । तात्त्विकतादात्म्यमङ्गीकुर्वतस्तात्त्विकत्वदानेऽप्यदानेऽपि बाधस्यावश्यकत्वेन तस्यादूषणत्वात् । अन्यथा सर्वत्र प्रतिवादिनाऽनभ्युपगतस्यैव साधनीयत्वेन बाधावश्यकतया परार्थानुमान-

कथोच्छेदप्रसङ्गात् । तादात्म्ये तद्दानेऽपि व्यावहारिकतदभावमादाय सिद्धसाधनानिस्ताराच्च । तस्मात्तात्त्विकत्वस्य न तादात्म्यविशेषणतासम्भवः । नापि तदभाव(वे)विशेषणत्वमपारमार्थिकम् । तादात्म्याभावमादाय सिद्धसाधनतावारणायेति वाच्यम् । समासमध्यपतितस्य पदस्य समासबहिर्भूतस्वासमभिव्याहृतनञर्थान्वय्यबोधकत्वात् । परमार्थत्व[1]-विशिष्टतादात्म्याभावरूपभेदस्य परं प्रत्यसिद्धत्वाच्च । व्यतिरेकव्याप्तिमूलकानुमानेनापि यद्धर्मावच्छिन्नव्यापकतावच्छेदकत्वं हेत्वभावत्वे गृहितं तद्धर्मावच्छिन्नाभावानुमापकत्वस्य हेतौ सत्त्वेऽपि पारमार्थिकत्वविशेषिततादृशाभावानुमितौ बीजाभावात् । तस्मात्तात्त्विकपदमफलमेवेति चेन्न । अत्र तात्त्विकपदं न पारमार्थिकपरं किन्तु मुख्यपरम् । स तु तादात्म्यपदस्यैकत्वपरतातात्पर्यग्राहकम् । अन्यथा जीवब्रह्मणोः सादृश्याभेदादितात्पर्येण शास्त्रे तादात्म्यैक्यादिपदानां बहुशः प्रयोगात् । तादात्म्येत्येतावत एवोक्ते तेषामप्युपस्थितौ तदभावस्य वा मुख्यामुख्य साधारणरूपावच्छिन्नाभावस्य वा प्रकृते साध्यत्वभ्रमेण प्रकृते बाधशङ्का स्यात् । तात्त्विकपददाने तु मुख्यैक्यमित्यर्थलब्ध्या तदभावस्यैव साध्यतालाभान्न बाधशङ्काप्रसक्तिः । तथा च जीवप्रतियोगिकैक्यत्वावच्छिन्नप्रतियोगिताकाभावो ब्रह्मप्रतियोगिकैक्यत्वावच्छिन्नप्रतियोगिताकाभावश्चानुमानद्वये यथायथं साध्ये । अयमभावस्तादात्म्यनिष्ठस्वरूपसंसर्गावच्छिन्नप्रतियोगिताकोऽत्यन्ताभाव एव भेदादन्य एवाधिकरणीभूतब्रह्मादिस्वरूपतया[2] परमते पारमार्थिक एव सिध्यति । तेन तस्य

[1] पारमार्थिकत्व

[2] इत आरभ्य अग्रिमप्रसक्तिपदपर्यन्तं मु.पाठे `एवाधिकरणीभूतप्रसक्तिः' इत्येव दृश्यते ।

व्यावहारिकत्वमादाय सिद्धसाधनताप्रसक्तिः ।। भेदस्तु तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताको वा तादात्म्यावच्छिन्नप्रतियोगिताको वा भेदत्वमखण्डोपाधिर्वा । अभेदसामान्यमपारमार्थिकमिति[1] पराभ्युपगमपक्षेऽत्यन्ताभावस्यैव साधनेनास्माकं कृतार्थतेत्याशयेनैतदनुमानं प्रवृत्तमिति न कोऽपि दोषः । अत एवोत्तरग्रन्थेषु तात्त्विकत्वविशेषणं तादात्म्येऽनुपादायैव व्यवहारः । पूर्वं तादात्म्याभावस्य भेदत्वेन व्यवहारादत्र तस्यातिरिक्तत्वाङ्गीकारे पूर्वोत्तरविरोध इति चेन्न । भेदस्य तस्य च समनैय्यत्येनैक्यमिति मतविशेषाभिप्रायेण तथा व्यवहृतत्वेन विरोधाभावात् । केचित्तु परार्थानुमानस्य विप्रतिपत्तिपूर्वकत्वाद्विप्रतिपत्तौ च तात्त्विकतादात्म्यत्वेन परेण स्वपक्षोत्कीर्तनं कार्यम् । अन्यथाऽनिर्वचनीयतादात्म्यमादाय पर्यवसानात्परस्यार्थान्तरापातात् । तथा च तदभावरूपसिद्धान्त(सिद्धान्त्यभिमत)कोटिस्तात्त्विकत्वघटितैवेति तात्त्विकपदं सार्थकमित्याहुः ॥ **न चैवमप्रसिद्धविशेषणत्वमिति** ॥ न च ब्रह्मैक्यस्य जीवैक्यस्य वा घटादावभावाद्घटादावेव तदभावः प्रसिद्ध इति कथमप्रसिद्धविशेषणतेति वाच्यम् । तादात्म्यमैक्यमित्यनर्थान्तरं तद्वृत्त्यसाधारणधर्मस्यैव (तत्)तादात्म्यरूपत्वात् । भेदाभावरूपैक्यस्य च प्रतियोगितावच्छेदकस्वरूपत्वेन तत्रैव पर्यवसानात् । इत्थं[2] गन्धवत्त्वलक्षणकथनात्प्राक् पृथिवीत्वस्य सर्वत्र प्रसक्तौ सत्यां जलाद्यसङ्कीर्णवस्तुज्ञानाभावाज्जलादिभेदस्य कुत्रापि प्रसिद्ध्यभावाज्जलादिभेदव्याप्यवत्ताज्ञानासम्भवमाशङ्क्याभावसाध्यकव्यतिरेकित्वात्तादृशसाध्याभावभूतजलत्वव्यापकीभूता

---

1 `-अखण्डोपाधिर्नाभेदसामान्यमपारमार्थिकमिति' मु.

2 `इत्थं यथा' मु.

भावप्रतियोगिगन्धवानिति ज्ञानाज्जलभेदानुमितेः परैरङ्गीकारात्तद्ब्रह्मत्वस्य जीवस्य च सर्वत्र प्रसक्तिदशायां तादात्म्याभावस्य क्वचिदधिकरणे निश्चयाभावादप्रसिद्धविशेषणता तद्रीत्यैव समाधानं वक्तुं शक्यतेत्यदोषः । पृथिवीत्वस्य सर्वत्र प्रसक्तिदशायां जलादित्रयोदशान्यतमभेदाधिकरणत्वेन व्यक्तिविशेषानिर्णयात्तत्र जलभेदादेरनुपस्थितिवदिहापि दशाविशेषे तादृशतादात्म्याभावस्यानुपस्थितिसम्भवात् । यद्वाऽद्वैतवादिभास्करस्य मते समस्तजगतः सच्छक्तिमद्ब्रह्मपरिणामित्वाङ्गीकारात्समस्तजगति ब्रह्म-तादात्म्यमेवं जीवचित एव ब्रह्मत्वात्तदुपादानकत्वेन जीवतादात्म्यमपि सर्वत्र वर्तते । मायावादिमतेऽपि सर्वत्र ब्रह्मचैतन्यारोपितप्रपञ्चाधिष्ठानब्रह्मा-साधारणधर्मरूपसत्ताया अङ्गीकृतत्वात्तादात्म्यं तदभिन्नजीवतादात्म्यं च केवलान्वयीत्यङ्गीकृतमिति तेनाप्रसिद्धविशेषणतोद्भावयितुं शक्यत एव । सत्तायाश्च ब्रह्मासाधारणधर्मत्वं `त्वानन्दो विषयानुभवः सत्ता चेति सन्ति त्रयो धर्माः, अपृथक्त्वेऽपि चैतन्यात्पृथगिवावभासन्त' इति पञ्चपादिकोक्तेः सिद्धमिति न कोऽपि क्लेशः ॥ **दोषाय चेति** ॥ न चेत्यस्यात्रान्वयः । प्रकृतानुमानविघटनरूपदोषाय न भवतीत्यर्थः ॥ **उभयविघटनेनेति** ॥ प्रत्येकं व्याप्तिग्रहविघटनेन पक्षधर्मताविघटनेन[1] चेति द्वित्वाव-च्छिन्नसम्पादनेन चेत्यर्थः ॥ **ब्रह्मेति** ॥ **जीवप्रतियोगिकेति** ॥ पूर्वं जीवरूपधर्मिणः प्रत्यक्षविषयत्वेन तत्र हेत्वादेः सुग्रहत्वादनुमितिर्झटिति भवतीति तात्पर्येण जीवपक्षकानुमानस्य प्रथमत उक्तत्वेऽपीदानीं संशयधर्मिणो जीवप्रतियोगिकतादात्म्यस्य प्रत्यक्षसिद्धत्वात्तद्धर्मिक-संशयस्य सौकर्यमिति प्राधान्यमनुसृत्य द्वितीयानुमान एव संशय

---

[1] `प्रविघटनेत्येकं व्याप्तिग्रहपक्षधर्मताविघटनेन' मु.

उपपादितः ॥ **पक्षतोपपत्तिरिति** ॥ साध्यानुमितिनिवर्तनीयसंशयमात्रस्य पक्षतात्वाभ्युपगमादसमानधर्मितावच्छेदककस्याप्यस्य संशयस्यानुमितिनिवर्त्यत्वानुभवात्पक्षतात्वमिति भावः । इदन्तु संशयस्य पक्षतात्वमभ्युपेत्य । सिद्ध्यभावपक्षतात्वमते तु न कोऽपि दोषः ॥ **अभावः साध्य इति** ॥ तत्राभावरूपसाध्याभावज्ञानस्य भावरूपप्रतियोगिज्ञानाधीनत्वादिति तत्र साध्योपस्थितेरावश्यकत्वमिति भावः ॥ **व्याप्त्युपयोगिन इति** ॥ व्याप्तिज्ञानं प्रति विशेषणज्ञानमुद्रया हेतुभूतं यज्ज्ञानं तद्विषयीभूतस्येत्यर्थः ॥ **अभावस्येति** ॥ अभावाभावस्य भावरूपतया तस्य स्वसाध्याभावत्वेन ज्ञानार्थं साध्योपस्थितेरपेक्षणेऽपि साध्यीभूताभावीयप्रतियोगितावच्छेदकरूपेणैव व्याप्तिशरीरे भानाभ्युपगमेन तत्र साध्योपस्थितेरनपेक्षणादिति भावः । न च जलभेदानुपस्थितिदशायां जलतादात्म्यरूपजलत्वस्य सर्वत्र ग्रहे गन्धाभावस्य तद्व्यापकता ग्रहीतुं[1] शक्यते । गन्धवत्यपि तत्प्रसक्त्या व्यभिचारग्रहादिति वाच्यम् । जलत्वस्य प्रत्यक्षेण जले ग्रहकाले गन्धाभावस्यापि तत्र पूर्वमेव व्यापकत्वादेर्गृहीतत्वेनेदेनीं तत्स्मरणरूपपरामर्शेनोक्तानुमितिसम्भवात् । पूर्वमगृहीतत्वेऽपीदानीं जलतादात्म्यादौ पृथिव्यनुयोगित्वादिसन्देहरूपतदतिप्रसक्तस्य सत्त्वेऽपि तस्य गन्धाभावनिरूपितव्यभिचारस्य जलत्वसंशयरूपत्वेन पर्यवसानेऽपि ग्राह्यसंशयस्य पक्षनिश्चये प्रतिबन्धकत्वाभावात् । तथा यथाकथञ्चिदनुकूलतर्केण तदपसरणोपपत्तेश्च व्यापकत्वग्रहे युज्यत एव । एवं शाब्दनिश्चयेऽप्युक्तव्यभिचार-संशयस्याप्रतिबन्धकत्वात् । प्रत्युत योग्यताज्ञानमुद्रयाकारणत्वादाप्त-वाक्यादिनाऽपि तन्निश्चयो युज्यत इति न कोऽपि

---

[1] न

दोषः ॥ **उभयविघटनेनादूषत्वादिति** ॥ व्याप्तिविघटकत्वेन पक्षताविघटनद्वारा । यत्पक्षधर्मताविघटनं तेन चेति यद्दूषणत्वं तदभावादिति भावः । साध्यसन्देहस्य पक्षतात्वमते तद्विघटनेन पक्षधर्मताविघटकत्वेऽपि तस्य पक्षतात्वपक्षं दूषयित्वा सिद्ध्यभावरूपपक्षतात्वस्यैव सिद्धान्तितत्वेन तद्विघटनस्याप्रसिद्धविशेषणेन कर्तुमशक्यत्वेन विघटनद्वयस्यैवायोगात् । संशयपक्षतामते विघटनद्वयसत्त्वेऽपि तयोर्न समुचितत्वेन दूषकत्वं समुचितत्वेनोद्भावने बाधविशिष्टव्यभिचारोद्भावकस्यैवाधिक्येन निग्रहापत्तेः । किन्तु बाधव्यभिचारयोरिव पृथगेवोद्भावनीयत्वात्पृथगेव दोषत्वमित्यर्थः । विकल्पकोटौ निवेशस्तु यथाकथञ्चित्सम्भावितत्वमात्रेणेति द्रष्टव्यम् ॥ **व्याप्तिपक्षधर्मताऽन्यतरेति** ॥ प्रत्येकविघटकत्वेनेत्यर्थः । तथा चैकदैकमेवोद्भावनीयमित्यर्थः । तृतीयकल्पदूषणं शिष्यव्युत्पादनायैव । न प्रकृतोपयुक्तत्वेन । प्रकृते व्याप्तिपक्षधर्मतयोरुभयोरप्युपपादितत्वेन समुचितयोर्द्वयोर्दूषकत्वेऽपि क्षतिविरहादिति द्रष्टव्यम् ॥

**(१६) (का.)** भेदे धर्मिसत्तासमानसत्ताकत्वमनिवेश्यापि पारमार्थिकभेदसाधनप्रकारमारभते ॥ **यद्वेति** ॥ **पूर्वोक्तहेत्वोः** क्रमेणेति शेषः । तथाच जीवो ब्रह्मप्रतियोगिकतादात्म्याधिकरणं न भवति, ब्रह्माननुसंहितदुःखानुसन्धातृत्वाद्यतिरेकेण ब्रह्मवत् । ब्रह्म वा जीवप्रतियोगिकतादात्म्याधिकरणं न भवति, जीवानुसंहितदुःखाननुसन्धातृत्वाद्यतिरेकेण जीववदित्युक्तं भवति । न च ब्रह्मतादात्म्याधिकरणीभूतब्रह्मप्रतियोगिकव्यावहारिकभेदस्य जीवेऽभ्युपगमात्सिद्धसाधनमिति वाच्यम् । ब्रह्मतादात्म्याधिकरणत्वावच्छिन्नप्रतियोगिताकभेदस्य साध्यत्वात् । घटाकाशे महाकाशप्रतियोगिकभेदाभ्युपगमेऽपि महाकाशतादात्म्यानधिकरणत्वाप्रतीत्या तदधि-

करणत्वावच्छिन्नप्रतियोगिताकभेदस्येव जीवे व्यावहारिकस्यापि ब्रह्म-तादात्म्याधिकरणत्वावच्छिन्नप्रतियोगिताकभेदस्य परानभ्युपगतत्वेन दोषाभावात् ।

नन्वेवं परमते सर्वस्यैव ब्रह्मतादात्म्याधिकरणत्वात्तदवच्छिन्न-प्रतियोगिताकभेदरूपसाध्याप्रसिद्धिरत आह — **न चैवमिति** ॥ यद्यपि काञ्चनमयवह्न्यादेः साध्यतायामिव साध्ये साध्यतावच्छेदकाभावरूप-साध्याप्रसिद्धिः साक्षादनुमितिविरोधितया दोष एव । तथापि प्रकृते न तादृशासिद्धिरुद्भावयितुं शक्या । विप्रतिपत्त्या भेदे ब्रह्मतादात्म्याधि-करणत्वावच्छिन्नप्रतियोगिताकत्वसन्देहेन तदनिर्णयात् । तत्सन्देहस्य च साध्यसन्देहाधायकत्वेनाविरोधित्वात् । किन्तूक्तसाध्यस्य क्वचिदगृहीतत्वा-दज्ञानरूपासिद्धिरेवोद्भाव्या । सा च नाभावसाध्यकव्यतिरेक्यनुमाने दोष इति भावः । एतदेवोपपादयति — **तद्धीति** ॥ 'पक्षधर्मताविघटनेन वा व्याप्तिविघटनेन वोभयविघटनेन वा दोष' इति सम्बन्धः ।

ननु साध्यस्याप्रसिद्धावपि हेतोः पक्षधर्मत्वसम्भवात् कथं तस्यास्तद्विघटकत्वमित्यत उक्तम् – **पक्षताविघटनेनेति** ॥ तदपि कथम् ? अतः साध्यकोटीत्यादि । अथ पक्षताविशिष्टपक्षधर्मताज्ञानं नानुमितिहेतुः । पक्षतायाः स्वरूपसत्याः पृथगेव हेतुत्वात् । किन्तु पक्षतावच्छेदकवति हेतोर्धर्मत्वज्ञानमेव हेतुरिति कथं पक्षताविघटकस्यानुमित्यौपयिक-पक्षधर्मताविघटकत्वमिति चेत् सत्यम् । तथापि पक्षतायाः स्वातन्त्र्येण हेतुत्वे तद्विशिष्टपक्षधर्मताया अनुमितिप्रयोजकत्वानपायात् एकदेश-विघटकस्य विशिष्टविघटकत्वमव्याहतमेव ।

अप्रसिद्धेनेत्याद्ययोगादित्यन्तं व्याप्तिविघटने हेतुः । साध्यस्याप्रसिद्धौ

**तन्निरूपितव्याप्तिग्रहायोगादित्यर्थः ॥ उभयविघटनेनेति॥** उक्तरीत्या व्याप्तिपक्षधर्मतोभयविघटनेनेत्यर्थः ।

ब्रह्मधर्मिकभेदानुमानस्य प्राधान्यादन्योपलक्षकतया तत्र साध्याप्रसिद्धेरदोषत्वमुपपादयति — **नाद्य इत्यादिना ॥** ननु पक्षधर्मिकसाध्यतदभावकोटिकसन्देहस्यैव पक्षतात्वात् कथमन्यविधसंशयेन पक्षतोपपत्तिरत आह — **अभिधेयत्वसाध्यकानुमान इति ॥** अभिधेयत्वं शब्देऽस्ति न वेति संशयेनेति शेषः । यथा शब्दोऽभिधेयः प्रमेयत्वादित्यादौ साध्याभावाप्रसिद्ध्या साध्यतदभावकोटिकसंशयासम्भवेऽपि साध्ये पक्षनिष्ठत्वतदभावकोटिकसंशयस्य पक्षतात्वमुपेयते, तथाऽत्र जीवतादात्म्यरूपसाध्याभावे पक्षनिष्ठत्वतदभावकोटिकसंशयस्य पक्षतात्वमुररीक्रियते, विशेषाभावादिति भावः । इदमुपलक्षणम् । विप्रतिपत्त्यधीनसाध्यसंशयस्य सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्य च पक्षतात्वसम्भवो द्रष्टव्यः । ननु साध्याप्रसिद्धौ कथं साध्याभावस्यापि व्याप्तिग्रहः । प्रतियोगिप्रसिद्धेरभावधीहेतुत्वादित्यत आह — **यत्रेति ॥** शब्दो गगनविशेषगुणः शब्दत्वाद्व्यतिरेकेण रूपवदित्यादौ । **व्याप्त्युपयोगिनः** साध्याभावे हेत्वभावनिरूपितव्याप्तिग्रहप्रयोजकस्य । **अभावस्य** साध्याभावज्ञानस्य । **भावज्ञानाधीनत्वात्** साध्यज्ञानप्रयोज्यत्वात् । **साध्याप्रसिद्धिर्दोषाय** व्याप्तिग्रहविघटनद्वाराऽनुमितिविघटनायेत्यर्थः ।

अयमाशयः । व्यतिरेकिणि तद्धर्मावच्छिन्नाभावसाध्यकानुमितौ तद्धर्मावच्छिन्नाभावाभावत्वेन व्याप्तिज्ञानवत्तद्धर्मेण व्याप्तिज्ञानमपि हेतुः । वह्न्यभावाभावत्वेनेव वह्नित्वेन व्याप्तिज्ञानादपि वह्न्यभावानुमितिदर्शनात् । तथाच प्रकृते प्रसिद्धजीवतादात्म्यत्वेन व्याप्तिग्रहात्तदवच्छिन्ना-

भावसाध्यकानुमितिर्न साध्यसिद्धिमपेक्षत इति ।

अथ सिद्धान्ते व्यतिरेकस्यान्वयमुखेनैव साध्यसाधकतया कथमप्रसिद्धसाध्यव्याप्त्यनुमापकत्वं तस्येति चेन्न । यो यद्व्यापकीभूताभावप्रतियोगी स तदभावव्याप्यः । वह्न्यभावव्यापकीभूताभावप्रतियोगिधूमवदिति सामान्यव्याप्त्या पक्षधर्मताबलादप्रसिद्धसाध्यव्याप्त्यनुमितिसम्भवादिति विभावनीयम् ॥ **उभयाविघटनेनेति** ॥ उक्तरीत्या व्याप्तिपक्षधर्मताग्रहाविघटकत्वेन अनुमित्यविघटकत्वादित्यर्थः । ननु तथापि बाधादिवदसिद्धेरपि साक्षादनुमितिविरोधित्वेनैव दोषत्वमस्त्वत आह — **व्याप्तीति** ॥ बाधादेरपि साध्यसन्देहरूपपक्षताविघटकत्वेन दोषत्वं बोध्यम् ॥

(१६) (श.) — पूर्वोक्तानुमानद्वये धर्मिसत्तासमानसत्ताकेति विशेषणप्रवेशेन गौरवमित्यपरितोषादाह — **यद्वेति** ॥ **पूर्वहेत्वोरिति** ॥ तथाच जीवः ब्रह्मप्रतियोगिकं यत्तादात्म्यमैक्यं तदाश्रयो न भवति ब्रह्माननुसंहितदुःखानुसन्धातृत्वात् व्यतिरेकेण ब्रह्मवत् । ब्रह्म वा जीवप्रतियोगिकं यत्तादात्म्यं तादाश्रयं न भवति जीवानुसंहितदुःखाननुसन्धातृत्वात् व्यतिरेकेण जीववदित्यनुमानद्वयमुक्तं भवति ।

ननु सर्वत्र जीवब्रह्मप्रतियोगिकतादात्म्याधिकरणत्वस्यैव मयाऽङ्गीकारेण तदभावरूपसाध्याप्रसिद्ध्योभयत्राप्यप्रसिद्धविशेषणत्वमित्याशङ्क्य निराकरोति ॥ **नचेति** ॥ एवमुक्तरीत्या प्रतिज्ञाकरणेऽप्रसिद्धविशेषणत्वस्य स्फुटत्वेन कथं तदपलाप इत्यत उक्तम् ॥ **दोषायेति** ॥ तत् विद्यमानमप्यप्रसिद्धिविशेषणत्वम् । पक्षधर्मताविघटकत्वेन दोष इत्यन्वयः ।

कथं तस्य पक्षधर्मताविघटकत्वमित्यत उक्तम् ॥ **पक्षताविघटनद्वारेति** ॥ पक्षताश्रयवृत्तित्वं पक्षधर्मत्वम् । पक्षताया अभावे तदाश्रयवृत्तित्वरूप-पक्षधर्मत्वमपि नेत्यर्थः । पक्षताविघटकत्वमेव कथमित्यत उक्तम् ॥ **साध्यतदभाववत्त्वेन सन्देहानुदयादिति** ॥ सन्दिग्धसाध्यधर्मवत्ता हि पक्षता । साध्यसन्देहस्यैवाभावे तद्घटितपक्षतापि नेत्यर्थः । साध्यसन्देहा-नुदय एव कुत इत्यत उक्तम् ॥ **साध्यकोटेरप्रसिद्धेरिति** ॥ तथात्वेकोटिस्मृतेरभावादिति भावः ॥ **व्याप्तिग्रहणायोगेनेति** ॥ व्याप्तिरूप-सप्रतियोगिकपदार्थज्ञाने साध्यरूपप्रतियोगिज्ञानस्याकारणत्वादिति भावः ॥ **उभयेति** ॥ व्याप्तिपक्षधर्मतारूपोभयेत्यर्थः । उपलक्षणाभिप्रायेण द्वितीयानुमानेऽप्रसिद्धविशेषणत्वस्य दोषत्वाभावमाह — **नाद्य इत्यादिना** ॥ **इति सन्देहमात्रेणेति** ॥ पक्षधर्मिकसाध्यतदभावकोटिकसन्देहव-त्साध्यतदभावान्यतरधर्मिकपक्षवृत्तित्वतदभावकोटिकसंशयस्यापि पक्षता-घटकत्वादिति भावः । अत्रैव दृष्टान्तमाह — **अभिधेयत्वसाधकेति** ॥ शब्दोऽभिधेयः प्रमेयत्वादित्यत्राभिधेयत्वस्य केवलान्वयित्वेन तदभावा-प्रसिद्ध्या शब्दोऽभिधेयत्ववान्न वेति पक्षधर्मिकसाध्यतदभावकोटिक-सन्देहाभावेऽपि साध्यतदभावान्यतरधर्मिकपक्षवृत्तित्वतदभावप्रकारक-सन्देहमात्रेण यथा पक्षधर्मता तथाऽत्रापि साध्याभावधर्मिकपक्ष-वृत्तित्वतदभावकोटिकसंशयेन पक्षतोपपत्तेरित्यर्थः ॥ **अत्रेति** ॥ द्वितीयानुमाने हि जीवतादात्म्यानधिकरणत्वं साध्यं तदभावश्च जीवतादात्म्याधिकरणत्वं तच्च जीवे प्रसिद्धमतस्तत्र साधनाभावेन व्याप्तिग्रहस्सम्भवतीत्यर्थः । नन्वभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वेन

प्रतियोगिभूतसाध्यस्याप्रसिद्धत्वे तदभावज्ञानायोगात्कथं तत्र व्याप्तिग्रह इत्यत आह — यत्रेति ॥ शब्द आकाशविशेषगुणः आकाशमात्रवृत्तिगुणत्वात् व्यतिरेकेण रूपवदिति केवलव्यतिरेक्यनुमाने साध्यस्याकाशविशेषगुणत्वस्य भावरूपत्वेन तदभावस्याभावरूपत्वात् । प्रतियोगिभूताकाशविशेषगुणत्वस्याप्रसिद्धत्वेन तदभावस्य ज्ञातत्वेन तत्र व्याप्तिग्रहासम्भवात्साध्याप्रसिद्धिर्दोषाय । प्रकृते जीवतादात्म्यस्य भावरूपत्वेन तज्ज्ञानस्य प्रतियोगिज्ञनानधीनत्वात्तत्र व्याप्तिग्रहसम्भवेन साध्याप्रसिद्धिर्न दोषायेत्यर्थः । अभावस्य साध्याभावज्ञानस्य । भावज्ञानाधीनत्वात् साध्यरूपप्रतियोगिज्ञानाधीनत्वात् । कुत इत्यत आह — व्याप्तीति ॥ असिध्यादिहेत्वाभासानां हि व्याप्तिपक्षधर्मतान्यतरविघटकत्वेनैव दोषत्वं प्रसिद्धं नतु प्रकारान्तरेण । अतोऽप्रसिद्धविशेषणत्वस्यापि व्याप्त्यादिविघटकत्वाभावेन दूषणत्वमेव नेत्यर्थः ।

(१७) यद्वा ब्रह्मप्रतियोगिकाभेदो न जीवधर्मिको भवति । ब्रह्मधर्मिको वाऽभेदो न जीवप्रतियोगिकः । जीवानुसंहितदुःखाननुसन्धातुरभेदत्वात् । व्यतिरेकेण जीवप्रतियोगिकजीवधर्मिकैक्यवत् । जीवप्रतियोगिकमैक्यं वा न ब्रह्मधर्मिकं जीवधर्मिकमैक्यं वा न ब्रह्मप्रतियोगिकं ब्रह्माननुसंहितदुःखानुसन्धातुरभेदत्वात् । व्यतिरेकेण ब्रह्मधर्मिकब्रह्मप्रतियोगिकैक्यवत् (ब्रह्मप्रतियोगिकब्रह्मधर्मिकैक्यवत्)। एवं यज्ञदत्तादिभ्यो देवदत्तादीनां भेदः साध्यः ।

(१७) (भ.) एतस्मिन्नप्यनुमानद्वयेऽप्रसिद्धविशेषणत्वशङ्कानिरासप्रयासगौरवमित्यपरितोषादाह — यद्वेति ॥ अननुसन्धातुरभेदत्वातिति ॥

अननुसन्धातृ यद्ब्रह्म तत्सम्बन्ध्यभेदत्वादित्यर्थः । सम्बन्धश्चाद्ये प्रतियोग्यनुयोगिभावरूपो द्वितीये धर्मिधर्मभावरूपो बोध्यः । एवमुत्तरत्रापि ॥ **व्यतिरेकेण जीवप्रतियोगिकेति** ॥ तत्र हि जीवधर्मिकत्वं जीव-प्रतियोगिकत्वं च वर्तते न तु तद्भावः । एवं जीवानुसंहित-दुःखानुसन्धातृजीवसम्बन्धित्वमेव वर्तते । न तु तदननुसन्धातृम-सम्बन्धित्वमिति साध्यसाधनाभावोऽवगन्तव्यः । एवमुत्तरत्रापि । एवं जीवेशभेदेऽनुमानाष्टकमभिधाय परस्परजीवभेदेऽपि तमेव प्रकारमतिदिशति ॥ **एवमिति** ॥ देवदत्तो यज्ञदत्तप्रतियोगिकधर्मिसमसत्ताकभेदाधिकरणम् । यज्ञदत्ताननुसंहितदुःखानुसन्धातृत्वात् व्यतिरेकेण यज्ञदत्तवदित्यादिरूपेण भेदः साध्य इत्यर्थः ।

(१७) (मु.) ननु भूः शशविषाणोल्लिखिता भूत्वादित्यादौ को दोष इति चेत् । प्रमाणबाध इति समाधेयम् । यस्याप्रसिद्धविशेषणत्वे दोषाभिमानस्तेनापि सन्तोष्टव्यमिति प्रकारन्तरेण प्रयुङ्क्ते ॥ **यद्वेति** ॥ जीवधर्मिकत्वाद्यभावस्य सार्वज्ञादौ प्रसिद्धेर्न दोषः ॥ **अननुसन्धातु-रभेदत्वादिति** ॥ अत्र धर्मित्वप्रतियोगित्वोदासीनसम्बन्धमात्रं[1] षष्ठ्यर्थः ॥ **ब्रह्मप्रतियोगिको वा जीवप्रतियोगिक इति** ॥ जीवब्रह्मणोरभेदे जीवो ब्रह्मणैको ब्रह्म वा जीवेनैकमिति तयोरैक्यं प्रति धर्मित्वप्रतियोगित्वे स्याताम् । तन्निषेधे त्वैक्यमेव निषिद्धं भवतीति भावः ॥ **एवमिति** ॥ देवदत्तो यज्ञदत्तप्रतियोगिकधर्मिसत्तासमानसत्ताकभेदाधिकरणम् । तत्तादात्म्याधिकरणं वा न भवति । तत्पुण्याभोक्तृत्वाद् व्यतिरेकेण तद्वत् ।

---

1 `धर्मि च प्रतियोगित्वौदासीन्यसम्बन्धमात्रं' मु.

अन्वयेन घटवत्याद्यूह्यम् । अन्यपुण्यादेरन्यभोक्तृत्वे कृतहानाकृताभ्यागमप्रसक्तेर्नासिद्धिः ।

(१७) (कु.) साध्यप्रसिद्धिसौकर्यायाह — यद्वेति ॥ अनुमानचतुष्टये पक्षे तात्त्विकत्वं विशेषणं बोध्यम् । तेन न सिद्धसाधनता । जीवाननुसंहितदुःखानुसन्धातुरिति षष्ठी । आद्ये साध्येति[1] प्रतियोग्यनुयोगिभावो द्वितीये धर्मिधर्मभावो बोध्यः । एवमुत्तरत्रापीति । न च घटादौ घटप्रतियोगिघटधर्मिकयोर्भेदयोर्वा साधारण्यमिति वाच्यम् । अभेदस्य घटात्मकत्वेन घटप्रतियोगिकघटधर्मिकभेदस्य पटाद्यात्मकत्वेन पटाद्यात्मकतया घटधर्मिकभेदसय्प्येवंरूपत्वेन हेतोरति सत्त्वात् । यद्यप्युत्तरानुमानयोगेनैव साधारण्यं न सुपरिहरम् । तथाऽप्यनुकूलतर्कसनाथत्वात् व्यतिरेकिणि सत्प्रतिपक्षोन्नायकता न सम्भवतीति न तस्य दोषत्वमिति भावः । प्रासङ्गिकभेदसाधनमाहः ॥ एवमिति ॥ देवदत्तो यज्ञदत्तप्रतियोगिकधर्मिसत्तासमानसत्ताकभेदाधिकरणं यज्ञदत्ताननुसंहितदुःखानुसन्धातृत्वात् । व्यतिरेकेण यज्ञदत्तवदित्यादिरूपेणेत्यर्थः ।

(१७) (हु.) ॥ उक्तप्रयासप्रद्वेषादनुमानान्तरणि दर्शयति — दुःखानुसन्धातुरभेदत्वादिति ॥ प्रथमानुमानपक्षे प्रतियोगित्वं षष्ठ्यर्थः । द्वितीयानुमानपक्षे आधेयत्वं षष्ठ्यर्थ इति ध्येयम् ॥ जीवप्रतियोगिकेति ॥ प्रथमानुमानतात्पर्येण जीवप्रतियोगिकेति ॥ द्वितीयतात्पर्येण जीवधर्मिकेति ॥ जीवप्रतियोगिकेत्याद्यत्राप्यनुसन्धातुरिति षष्ठ्याऽनुमानभेदेनार्थद्वयं द्रष्टव्यम् । अनुमानचतुष्टयेऽप्यस्मन्मते परमते चाभेदस्य धर्मिस्वरूपत्वेन सत्यत्वात्तत्र साधनीयस्यात्यन्ताभावरूपसाध्यस्याधि-

---

[1] `साध्येति' मु.

करणस्वरूपत्वमत्यन्ताभावस्याभ्युपगच्छता मिथ्यात्वस्य वक्तुमशक्यतया न व्यावहारिकसाध्यमादायार्थान्तरतोद्भावनावकाशः । जीवानां परस्परं भेदसाधनेऽपीमं प्रकारमतिदिशति ॥ **एवमिति** ॥ देवदत्तो यज्ञदत्तप्रतियोगिकैक्याभाववान् यज्ञदत्ताननुसंहितदुःखाननुसन्धातृत्वात् व्यतिरेकेण यज्ञदत्तवदिति प्रकारो द्रष्टव्यः ।

(१७) (का.) अप्रसिद्धविशेषणत्वशङ्कानास्कन्दितमनुमानान्तरमाह — **यद्वेति** ॥ अभेदस्तादात्म्यम् । यद्यपि ब्रह्मप्रतियोगिकाभेदो न जीवप्रतियोगिकः, ब्रह्मधर्मिकाभेदो वा न जीवधर्मिक इत्युक्तावप्यर्थाज्जीवब्रह्मणोर्भेदः सिध्यति । तथापि अभेदसाधकत्वेन पराभिमतस्य तत्त्वमसीत्यादिवाक्यस्य ब्रह्मणि जीवप्रतियोगिकाभेदो जीवे ब्रह्मप्रतियोगिकाभेदो वा प्रतिपाद्यः । साक्षात्तद्विरोधित्वं च यथोक्तानुमानानामेवेति तदनुसरणम् । तत्र प्रथमचतुर्थयोः द्वितीयविरोधित्वं, द्वितीयतृतीययोः प्रथमविरोधित्वमिति द्रष्टव्यम् । हेतौ तादात्म्यत्वमात्रस्य दृष्टान्तेऽनैकान्त्यादननुसन्धातृतादात्म्यत्वस्य चासिद्धेर्जीवानुसंहितेत्यादि व्याख्यातार्थकम् । अत्र जडतादात्म्यस्य पक्षसमत्वेनान्वयदृष्टान्ताभावादाह — **व्यतिरेकेणेति** ॥ न च परमते जीवप्रतियोगिकैक्यस्य ब्रह्मप्रतियोगिकत्वमप्यस्त्येवेति न व्यतिरेकिदृष्टान्तस्यापि सम्भव इति वाच्यम् । जीवैक्यादेर्जीवत्वादिरूपतया तत्र दुःखाननुसन्धातृत्वत्वरूपहेत्वभावस्योभयवादिसिद्धत्वात् ॥ **एवमिति** ॥ देवदत्तो यज्ञदत्तप्रतियोगिकधर्मिसत्तासमानसत्ताकभेदाधिकरणं तदननुसंहितदुःखाद्यनुसन्धातृत्वाद्व्यतिरेकेण यज्ञदत्तवदित्यादिप्रकारेणेत्यर्थः ।

(१७) (श.) पूर्वोक्तानुमानद्वयेऽप्रसिद्धविशेषणत्वस्य दूषणत्वनिरासप्रयासगौरवमित्यपरितोषात्पक्षान्तरमाह — **यद्वेति** ॥ **जीवप्रतियोगिकजीवधर्मिकैक्यवदिति** ॥ तत्र हि जीवधर्मिकत्वं वर्तते जीवानुसंहितदुःखानुसन्धाता जीवः तत्प्रतियोगिकाभेदत्वमेवास्ति नतु तदननुसन्धातुरभेदत्वम् । तथा जीवप्रतियोगिकत्वं वर्तते । जीवानुसंहितदुःखानुसन्धाता जीवः । तद्धर्मिकाभेदत्वं च सिद्धमिति भावः । एवं ब्रह्माभेदस्य जीवसम्बन्धित्वनिषेधकानुमानमभिधाय जीवाभेदस्य ब्रह्मसम्बन्धित्वनिषेधकमपि तदाह — **जीवप्रीतयोगिकेति** ॥ **ब्रह्मधर्मिकब्रह्मप्रतियोगिकैक्यवदिति** ॥ तत्र हि ब्रह्मधर्मिकत्वं वर्तते । ब्रह्माननुसंहितदुःखाननुसन्धातृ ब्रह्म । तत्प्रतियोगिकाभेदत्वं चास्ति । नान्यथा त्विति[1] । तथा ब्रह्मप्रतियोगिकत्वं वर्तते ब्रह्माननुसंहितदुःखाननुसन्धातृ ब्रह्म तद्धर्मिकाभेदत्वमेवास्तिनान्यथेति साध्यसाधनाभावसिद्धिरिति भावः । जीवेशयोर्भेदसाधनप्रकारमन्योन्यजीवभेदसाधनेऽप्यतिदिशति ॥ **एवमिति** ॥ जीवब्रह्मपदस्थाने देवदत्तयज्ञदत्तादिपदानि प्रक्षिप्य देवतत्तो यज्ञदत्तप्रतियोगिकधर्मिसवासमानसत्ताकभेदाधिकरणम् । यज्ञदत्ताननुसंहितदुःखानुसन्धातृत्वात् । व्यतिरेकेण यज्ञदत्तवदित्यादयः सर्वे प्रयोगा अत्र द्रष्टव्या इति भावः ।

---

[1] अस्य वाक्यस्य सङ्गतिर्न लभ्यते ।

**(१८) नन्वौपाधिकभेदमात्रेण (उपाधिभेदमात्रेण) दुःखानुसन्धातृत्वाननुसन्धातृत्वोपपत्तेः पारमार्थिकभेदसाधनेऽप्रयोजकत्वमेवेति चेन्मैवम् । औपाधिकभेदेऽपि योगिनो नानादेहजन्यसुखाद्यनुसन्धानस्यैव दर्शनात् । अत्र देहस्य चान्तःकरणस्य चोपाधेर्भिन्नत्वात् । न ह्यन्यदेहस्थमन्तःकरणमन्यदेहस्थं भवति । तत्राविद्योपाधिरेक एव भवतीति चेत् । इहाप्येकजीववादिन एक एव । बहुजीववादिनस्तु सुप्तावपि कारणात्मनाऽन्तःकरणानुवृत्तिं वदतो नाविद्यावच्छेदो जीवभावहेतुः । किन्तर्ह्यन्तःकरणमेव । ततश्च तदेव व्यवस्थानियामकं वाच्यम् । तच्च योगिष्वपि (योगिन्यपि) विद्यत (भिद्यत) इत्युक्तम् ।**

(१८) (भ.) ननु जीवब्रह्मणोर्वा परस्परजीवानां वा दुःखाद्यनुसन्धानाननुसन्धाने न पारमार्थिकभेदप्रयोजके । स्वरूपैक्ये विद्यमानेऽप्यौपाधिकभेदमात्रेण तदुपपत्तेः । अतोऽप्रयोजका एते सर्वेऽपि हेतव इत्याशङ्क्य निषेधति — **ननु चेति** ॥ उपाधिभेदमात्रेण उपाधिकृतभेदमात्रेण । उपाधीनां भेदमात्रेणेति वा ॥ **औपाधिकभेदेऽपीति ।** उपाधिकृतभेदेऽपीत्यर्थः । अभ्युपगम्योक्तिरियम् । स्वमते उपाधेर्भेदं प्रति कारकत्वाभावात् । उपाधीनां सम्बन्धी औपाधिक उपाधिनिष्ठ इति यावत् । तादृशभेदेऽपीति वा । योगिनः सौभर्यादेः । तथा चौपाधिकभेदोऽप्रयोजक इति पारमार्थिकभेद एव परस्परमननुसन्धाने प्रयोजक इति स्वीकार्य इति भावः ।

ननु देह एव नोपाधिः किन्त्वन्तःकरणमपि । तथा च देहभेदसद्भावेऽपि सौभर्यादावन्तःकरणस्यैकत्वेनानुसन्धानं सम्भवति । न तथा प्रकृते ।

अन्तःकरणानां भिन्नत्वादित्यत आह — **देहस्येति** ॥ न सौभरिदेहेऽप्यन्तः-करणमेकं किन्तु भिन्नमेव कथमन्यथैकदेहस्थान्तःकरणस्यान्यदेहे भोगावच्छेदकत्वं सम्भवेदिति भावः । ननु देहान्मनसो न भिन्नत्व-मङ्गीकर्तुमुचितम् । देहवत्तस्योत्पत्त्यभावात् । मनो नित्यमनादित्वादिति श्रुतेः । न ह्यनादेरेकस्य मनसः प्रतिशरीरं भिन्नत्वं सम्भवति । अतः कथं तस्य भिन्नत्वमुच्यत इति चेत् । सत्यम् । तथाऽप्येकस्यैव मनसो बहुधाविभक्तत्वेन तत्तद्भौतिकांशैरूपचितत्वाच्च सीताभूषणवद्भेदाङ्गीकार-वदियं भिन्नत्वोक्तिरिति बोध्यम् । अत एव न्यायमृते द्वितीयपरिच्छेदे आत्मभेदेऽनुकूलतर्ककथनावसरे न चान्तःकरणरूपोपाधिभेदो दुःखाद्य-नुसन्धाने तन्त्रं योगिनश्चान्तःकरणमेकमेवेति वाच्यमित्याशङ्क्य चैतन्यैक्येऽन्तःकरणभेदस्याप्रयोजकत्वादित्येवोक्तम् । न तु योगिनोऽ-प्यन्तःकरणभेदः साधितः । तेन ज्ञायते योगिनामन्तःकरणमेक-मेवेत्येतदनुमितमिति । नन्वन्तःकरणाद्युपाधेर्भिन्नत्वेऽप्यविद्यालक्षणोपाधेः सौभयोदियोगिन्येकत्वादन्योन्यमनुसन्धानम् । प्रकृते त्वविद्याभेदान्नानु-सन्धानमिति शङ्कते — **तत्रेति** ॥ योगिनीत्यर्थः । उत्तरमाह — **इहेपीति** । देवदत्तादिष्वपीत्यर्थः ॥ **एकजीववादिन इति** ॥ मत इति शेषः । एक एव । उपाधिरिति वर्तते । अवच्छेद्यजीवस्यैकत्वादवच्छेदकाविद्याऽप्येकैव । तथा चानुसन्धानं दुर्वारमिति भावः ॥ **बहुजीववादिनस्त्विति** । मत इति शेषः । अयमाशयः । यद्यपि बहुजीववादेऽविद्याभेदोऽस्ति । तथापि सा न जीवभावहेतुः किन्त्वन्तःकरणमेव । यद्यन्तःकरणमेव जीवभावे हेतुत्वेना-भिमतं न स्यात्तर्हि सुप्तावन्तःकरणस्य कारणात्मनाऽनुवृत्तिर्नाङ्गीक्रियेत । अविद्यावच्छेदादेव सुप्तावपि जीवभावावस्थित्युपपत्तेः । अङ्गीक्रियते च सा

तेन सुप्तावन्तःकरणविलयाज्जीवभावापगमेन तदैव ब्रह्मभावरूपा मुक्तिः स्यादिति शङ्कानिरासः । कार्यात्मना विलयेऽपि कारणात्मनाऽवस्थितेः । तथा च योगिन्यविद्योपाधेरेकत्वेऽपि जीवभावहेत्वन्तःकरणस्य प्रतिशरीरं भिन्नत्वाद्देवदत्तादिवदनुसन्धानाभाव एव युक्तः । अस्ति चानुसन्धानम् । तेन ज्ञायते स्वरूपैक्यमेवानुसन्धाने प्रयोजकं नोपाधिभेदाभाव इति । तथा च दुःखाद्यनुसन्धातृत्वतदभावौ पारमार्थिकभेदमेवाक्षिपत इति ।

(१८) (मु.) नन्वेतद्धेतवोऽप्रयोजकाः । यदि भेदो न स्यात् तर्हि सुखाद्यनुसन्धानं स्यादिति हेतूच्छित्तितर्कस्य मिथ्याभेदेनान्यथासिद्धिरिति शङ्कते — **नन्विति** ॥ तस्य तद्व्यभिचारित्वेन न तेनान्यथासिद्धिरित्याह — **औपाधिकेति** ॥ औपाधिकभेदस्यान्वयव्यभिचारेणाप्रयोजकत्वादिति भावः ॥ **अत्रेति** ॥ योगिन्यौपाधिकभेदं दर्शयति — **अत्रेति** ॥ बहुरूपाणि गृहीतवति योगिनीत्यर्थः । अस्तु भेदमात्रं नान्तःकरणभेद इत्यत आह — **न हीति** । अणुत्वादिति भावः । ननु तर्हीशजीवेष्वन्तःकरणाभावः स्यात् । तात्कालिकान्तःकरणजननाङ्गीकारादिति चेन्न । चैतन्येन सह तस्याप्यंशभेदाङ्गीकरणात् । अन्तःकरणांशानां चान्योन्यत्वात् । तथाऽपि योगिनोऽनुसन्धानसत्त्वे को हेतुरिति चेन्न । अन्यथा शरीबाहुल्य-ग्रहणेच्छानुपपत्तेः । नन्वंशानां परस्परानुसन्धानाभावेऽप्यंशिनो यावदव-यवगतानुसन्धानं स्यादेव । तदंशानामन्तःकरणतयांऽशांशिनोर-भेदस्यापि सत्त्वेनोपाध्यैक्यात् । **तावन्मात्रेण बहुरूपेच्छेति** ॥ विश्लेषावस्था-यामुपाध्यैक्याभावात् । उपाध्यैक्यमाशङ्कते — **तत्रेति** ॥ **इहापीति** । अयोगिष्वित्यर्थः । एक एव जीव ईश्वरमायाकल्पितोऽन्ये तदविद्याकल्पिता-स्तदंशा इत्यङ्गीकारादिति भावः ।

(१८) (कु.) औपाधिकभेदेऽपीति । तथा च न सोऽनुसन्धानाननुसन्धानप्रयोजक इति तन्निर्वाहाय स्वरूपभेद एव तात्त्विकः स्वीकार्य इति भावः । सुप्तावपि कारणात्मनाऽन्तःकरणानुवृत्तिं वदन्त इति सुप्तावन्तःकरणाव्याप्तिवारणारय क्वचित्त्वन्तःकरणानुवृत्तिं वदन्तो नाविद्यावच्छेदो जीवभावहेतुः किन्तर्ह्यन्तःकरणमेव वदन्तीति पाठः । तत्र बहुजीववादिन इति प्रथमाबहुवचनम् । पाठान्तरे तु वदन्तीति नास्ति । तत्र बहुजीववादिन इति षष्ठ्येकवचनं बोध्यम् ।

(१८) (हु.) अनुमानेऽप्रयोजकतामाशङ्कते — **नन्वौपाधिकेति** ॥ तथा च स्वाभाविकैक्येऽनुसन्धानाननुसन्धानव्यवस्थानुपपत्तिरूपतर्कानुत्थानादप्रयोजकतेति भावः ॥ **औपाधिकभेद इति** ॥ अनुसन्धाने स्वाभाविकैक्यमेव प्रयोजकं न तूपाधिनिमित्तकभेदाभावः । तत्सहितमैक्यं वा योगानुगृहीतनानाशरीरावच्छिन्नसुखानुसन्धातृषु व्यभिचारात् । तस्य चान्यत्र व्यवस्थापितत्वादिति भावः । नन्वन्तःकरणकृतभेदाभाव एव प्रयोजकः । स च योगिषु वर्तत इत्यतोऽन्तःकरणैक्यं निराकरोति ॥ **अन्तःकरणस्य चेति** ॥ **नहीति** ॥ देहानां परस्परं विश्लिष्टत्वेन तत्रैकान्तःकरणस्य स्थित्यङ्गीकारे तस्य दीर्घत्वापत्त्या पुरुषान्तरशरीरेऽप्यवस्थानापत्तेरिति भावः । जीवोपाधित्वं नान्तःकरणस्य किन्त्वविद्यायास्तस्या निरंशत्वेनाप्रतिपाद्यत्वेन सर्वशरीरेष्वेकत्वं युज्यत इत्याशङ्क्य निराकरोति ॥ **अविद्योपाधिरिति** ॥ **एकजीववादिन इति** ॥ तथा चैकजीववादे दूषणं दुष्परिहरमेवेति भावः । इदं च योगिविषये दूषणपरिहारमभ्युपगम्योक्तम् । घटपटाद्युपाधिभिर्घटाकाशादिभेदवद्युगपन्नानादेहसम्बन्धादविद्यायामेव भेदस्यावर्जनीयतया तन्मूलक-

जीवभेदस्याप्यवर्जनीयत्वमिति ज्ञेयम् । सुप्तावपीति ॥ **कारणात्मनेति** ॥ सूक्ष्मरूपात्मसंस्काररूपेणेत्यर्थः । तथा चान्तःकरणतत्संस्कारान्यतरोपाध्यवच्छिन्नचेतनस्यैव जीवत्वात्सुषुप्तौ जीवसिद्धिः । अन्यथा जीवस्यैव लयापत्तेरित्यर्थः ॥ **नाविद्येति** ॥ तथात्वे सुषुप्तावविद्यासत्त्वादेव जीवसम्भवे सुषुप्तावन्तःकरणस्य सूक्ष्मरूपेण कथनमयुक्तं स्याद्वैय्यर्थ्यादिति भावः । नन्वन्तःकरणकारटमविद्यैव । अन्तःकरणात्मनाऽवास्थानेऽविद्यैव सेति प्राप्तमित्यविद्योपाधिकत्वमागतमिति वाच्यम् । सत्यम् । **अविद्यैवान्तःकरणकारणमिति** ॥ तथाऽपि तदानीमपि कल्पितभेदेन कार्यावस्थापन्नमेव स तु जीवोपाधिः । अन्यथा चैत्रमैत्रयोर्युगपत्सुप्तिकाले शुद्धेकाविद्योपाधिबलादैक्यप्राप्त्या परस्परसुषुप्तिस्मरणाद्यापातात् । तथा च बहुजीववादेऽन्तःकरणस्यैव जीवोपाधित्वात्तत्रोक्तदूषणं दृढमेव । बहुजीववादे प्रतिनियतबहुज्ञानाङ्गीकारे नैष दोष इति चेत् । तत्र प्रमाणाभावगौरवादिदूषणसत्त्वात् । शरीरभेदप्रयुक्ताविद्याभेदादित्युक्तदोषापरिहाराच्चेत्यलम् । अत्रान्तःकरणवृत्तिं वदत इति पाठे बहुजीववादिन इति षष्ठ्यैकवचनं वदन्त इति पाठे प्रथमाबहुवचनमेव । तस्य किं तर्ह्यन्तःकरणमेवेत्यनन्तरमित्याहुरित्यध्याहृत्य तेन सह तस्यान्वयो वाच्यः ।

(१८) (का.) ननूक्तानुमानेषु विपक्षे बाधकाभावादप्रयोजकत्वम् । न चैवमेकस्यैव स्वाननुसंहितानुसन्धातृत्वापत्तिः । तत्प्रतियोगिकभेदमात्रस्य तत्प्रयोजकत्वेनाप्युपपत्तेः पारमार्थिकभेदस्यानावश्यकत्वादित्याशङ्कते — **नन्विति** ॥ **उपाधिभेदमात्रेण** पारमार्थिकभेदाभावेऽप्यविद्याद्युपाधिकृतभेदेन । दुःखेत्यादेर्जीवेश्वरयोरित्यादिः । **अप्रयोजकत्वम्** उक्तहेतूनामिति

शेषः । तदननुसंहितानुसन्धातृत्वादौ तत्प्रतियोगिकपारमार्थिकभेद एव प्रयोजको वाच्यः । अन्यथा योगसिद्धसौभर्यादीनां स्वेच्छागृहीत-नानादेहावच्छिन्नचैतन्यानुसंहितानुसन्धातृत्वानुपपत्तेः । तथाच विपक्षे हेत्वनुपपत्तिरेव बाधिकेत्याशयेन समाधत्ते ॥ **मैवमिति** ॥ उपाधे-र्भिन्नत्वादित्यन्तमौपाधिकभेदे हेतुः । नन्वन्तःकरणकृतभेदस्यैवा-ननुसन्धानप्रयोजकत्वान्न देहभेदेऽप्यनुसन्धानानुपपत्तिरित्यत आह — **अन्तःकरणस्य चेति** ॥ ननु देहभेदेऽप्यन्तःकरणैक्यमस्त्वत आह — **न हीति** ॥ अन्तःकरणस्याकाशादिवदव्याप्तत्वादिति भावः । अथ तस्य यावद्देहव्यापित्वे को दोष इति चेत् तर्हि तदन्तरानुवर्तिपुरुषान्तरस्यापि तदन्तःकरणग्रस्तत्वेन तत्कृतभेदाभावात्तत्पुरुषीयानुसन्धानापत्तेः ।

किं च किमन्तःकरणैक्ये चैतन्यैक्यं नियामकमुत देहैक्यम् । नाद्यः । अयोगिनामपि अन्तःकरणैक्यप्रसङ्गात् । नान्त्यः । योगिनामपि तदनु-पपत्तेः । न च तत्तद्देहगतभोगानुसन्धानं तत्तद्देहगतान्तःकरणैक्य-नियामकमतो नोक्तदोष इति वाच्यम् । भोगानुसन्धानस्यान्तःकरणैक्य-निबन्धनत्वेनान्योन्याश्रयात् । सिद्धान्ते त्वन्तःकरणांशानां देहभेदेन भेदेऽप्यात्मैक्यस्यानुसन्धाननियामकत्वान्न कश्चिद्दोषः । अस्तु तर्ह्यविद्यो-पाधिकृतभेद एवाननुसन्धाननियामकः । चैत्रमैत्रादेरविद्याभेदादननु-सन्धानस्य योगिनो देहभेदेऽप्यविद्यैक्यादनुसन्धानस्य चोपपत्तेः । न च भेदकाभावात्कथमविद्याभेद इति वाच्यम् । तस्यानादित्वाभ्युपगमादित्या-शयेनाशङ्कते — **तत्रेति** ॥ नानादेहवर्ति योगिनीत्यर्थः ।

अविद्याभेदस्याननुसन्धाननियामकत्वं किमेकजीववादमाश्रित्योच्यते किं वा बहुजीववादम् । आद्ये दोषमाह — **इहेति** ॥ अयोगिनि

चैत्रादावित्यर्थः ॥ **एक एवेति** ॥ अविद्योपाधिरित्यनुवर्तते । मत इति शेषः । तथाचैक एव हिरण्यगर्भो जीवस्तदन्ये तु घटादिवत्स्वरूपेणैव मिथ्याभूता इति मते परस्परानुसन्धानप्रयोजकस्याविद्योपहित-परस्परभेदस्य चैत्रमैत्रादिषु दुर्वचत्वेन परस्परानुसन्धानानुपपत्तिरिति भावः । द्वितीये दोषमह — **बहुजीवेति** ॥ सुप्तौ कार्यात्मनाऽन्तःकरण-वृत्त्यसम्भवात् कारणात्मनेत्युक्तम् । तथाचाविद्योपाधेर्जीवभावहेतुत्वे तत एव सुप्तौ जीवभावोपपत्तेरन्तःकरणानुवृत्तिवैयर्थ्यमिति भावः । नन्वविद्योपाधेर्जीवभावहेतुत्वाभावेऽप्युक्तव्यवस्थानियामकत्वमस्त्वत आह — **ततश्चेति** ॥ **व्यवस्थानियामकमिति** ॥ चैतन्यैक्येऽपि परस्परभोगाननुसन्धाननियामकपरस्परभेदप्रयोजकतया तस्यैव तदनु-सन्धानमिति नियमनिर्वाहकमित्यर्थः । ऐक्यवादे निरुक्तव्यवस्था-निर्वाहार्थमेव जीवभेदस्य कल्पितत्वेन तन्नियामकस्यैव तन्नियामकत्व-प्राप्तेरिति भावः ॥ **तच्चेति** ॥ स्वसम्बद्धदेहभेदेन परस्परानुसन्धान-प्रयोजकमन्तःकरणं चेत्यर्थः । तथाच योगिनो नानादेहगतभोगानु-सन्धानानुपपत्तितादवस्थ्यमिति भावः ।

**(१८) (श.)** ननु पारमार्थिकभेदसाधकेषूक्तानुमानेषु सर्वत्र हेतुरस्तु साध्यं मा भूदिति शङ्कायां बाधकाभावादप्रयोजकत्वम् । नच यदि जीवब्रह्मणोर्जीवानाञ्चान्योन्यं पारमार्थिकभेदो न स्यात् तर्हि जीवस्य दुःखानुसन्धानं ब्रह्मणश्च तदननुसन्धानम् एकस्य जीवस्य सुखमपरस्य दुःखमित्यादिव्यवस्था न स्यादिति बाधकं वाच्यम् । उक्तव्यावस्थायाः पारमार्थिकभेदाभावेऽप्यौपाधिकभेदेनोपपत्त्या तर्कस्यान्यथासिद्धत्वादिति शङ्कते — **नन्वौपाधिकभेदमात्रेणेति** ॥ उपाधिकृतभेदमात्रेणेत्यर्थः ॥

**औपाधिकभेदेपीति** ॥ सौभर्यादियोगिनो हि योगप्रभावाद्युगपदनेकशरीराणि बिभ्रति । तत्रैकदेहस्थस्य दुःखेऽन्यदेहस्थस्यापि दुःखम् एकस्य सुखेऽपरस्यापि सुखं भवतीति वस्तुगतिः । तत्रोपाधिकृत-भेदसद्भावेऽप्यन्योन्यादुःखानुसन्धानदर्शनेनौपाधिकभेदस्य नोक्तव्यवस्था-नियामकत्वमिति न तर्कस्यान्यथासिद्धिरित्यर्थः । ननु योगिस्थले औपाधिकभेद एव नास्तीत्यभेदतोऽन्योन्यानुसन्धानं युक्तमित्यत आह — **अत्रेति** ॥ देहस्योपाधेर्भिन्नत्वादिति सम्बन्धः । ननु तत्र देहलक्षणोपाधिसद्भावेऽप्यन्तःकरणोपाधेरेकत्वादन्योन्यानुसन्धानमित्यत **उक्तमन्तःकरणस्येति** ॥ अन्तःकरणभेदमेवोपपादयति — **नहीति** ॥ अन्तःकरणस्य मनोरूपत्वेन मनआदीन्द्रियाणां प्रतिशरीरं भिन्नत्वादिति भावः । ननु देहान्तःकरणोपाधेर्भेदेऽप्यविद्याख्योपाधेरेकत्वाद्योगिष्वप्यन्यो-न्यमनुसन्धानं प्रकृते त्वविद्याभेदान्नानुसन्धानमिति शङ्कते — **तत्रेति** ॥ योगिस्थल इत्यर्थः । किमेकजीववादिमतानुसारेणोच्यते, उत बहुजीव-वादिमतानुसारेण ? आद्य आह — **इहापीति** ॥ तन्मतेऽवच्छेद्य-जीवस्यैकत्वादवच्छेदकाविद्याया अप्येकत्वम् । तथाचोक्तरीत्याऽप्यनु-सन्धानन्दुर्वारमिति भावः । द्वितीये आह — **बहुजीववादिनस्त्विति** ॥ अविद्यावच्छेदः अविद्यायाः परिच्छेदः । सत्यं बहुजीववादिमतेऽ-विद्योपाधेर्भिन्नत्वमिति । तथाप्यविद्यावच्छेदस्य जीवभावहेतुत्वाभावादेवा-विद्याभेदस्य नोक्तव्यवस्थानियामकत्वमित्यर्थः ॥ **अन्तःकरणमेवेति** ॥ अन्तःकरणावच्छेद एव ॥ कुत एतदित्यत उक्तम् ॥ **सुप्तावपीति** । बहुजीववादी स्वग्रन्थे सुप्तिकालेऽपि कारणात्मनाऽन्तःकरणं तिष्ठतीति प्रतिपादितवान् । तच्चान्तःकरणावच्छेदस्य जीवभावहेतुत्वे सङ्गच्छते ।

यद्यन्तःकरणावच्छेदस्य जीवभावहेतुत्वन्तर्हि सुप्तिकालेऽन्तःकरण-विलयेनावच्छेदकाभावाज्जीवत्वापगमे तदानीमेव ब्रह्मैक्यानुभवरूपमुक्ति-प्रसङ्ग इति शङ्कायां कार्यात्मनाऽन्तःकरणविलयेऽपि कारणात्मना विद्यमानत्वेन तदधीनजीवत्वानिवृत्तेर्न तदानीं मुक्तिप्रसङ्ग इति परिहारसम्भवात् । नचैतदविद्यावच्छेदस्य जीवभावहेतुत्वे सङ्गच्छते । तथात्वेऽविद्याया एवसुप्तावस्थानकथनप्रसङ्गादिति भावः । तदेव भिन्नान्तःकरणमेव । न ह्येकस्य जीवभावहेतुत्वमपरस्य व्यवस्था-नियामकत्वमिति भावः । ततः किमित्यत आह — **तच्चेति** ॥ व्यवस्था-नियामकं भिन्नान्तःकरणमित्यर्थः । उक्तम् अन्यदेहेत्यादिना । तथाच योगिष्वन्तःकरणभेदसद्भावेऽपि व्यवस्थाभावान्न तस्य व्यवस्थापकत्वम् । ततश्च व्यवस्थानियामकत्वेन पारमार्थिकभेदस्यावश्यकत्वान्नाप्रयोजकत्व-मिति भावः ।

**(१९) अपि च पृथिवीत्वं जलत्वतेजस्त्ववायुत्वमनस्त्वेतर-द्रव्यत्वसाक्षाद्व्याप्यजातिभिन्नम् । जातित्वात्(प्रमेयत्वाद्वा)जलत्ववत् । न च पृथिवीत्वेतरत्वमुपाधिः । तस्य पक्षेतरत्वात् । अनुकूलतर्काणां वक्ष्यमाणत्वाच्च । एवं जलत्वतेजस्त्ववायुत्वमनस्त्वपक्षीकारेणानुमान-चतुष्टयमूहनीयम् ।**

(१९) (भ.) यत्प्रागुक्तमात्मत्वं नानाव्यक्तिनिष्ठं जातित्वात्पृथिवीत्व-वदित्यस्यासिद्धिरिति तत्रात्मत्वस्य जातित्वसाधनद्वाराऽऽत्मभेदं साधयितुमनुमानान्याह — **अपिचेत्यादिना इत्याद्यनुमानान्यात्मभेदं साधयन्तीत्यन्तेन** ॥ नैय्यायिकमतावष्टम्भेनैवैतान्यनुमानानि प्रवृत्तानि । इत्थं हि तन्मतप्रक्रिया । पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नव

द्रव्याणि । तत्राकाशत्वकालत्वदिक्त्वानि न जातयः । एकव्यक्तिकत्वात् । पृथिवीत्वादिषट्कं तु जातिरिति । तत्र पृथिवीत्वस्य जलत्वादिचतुष्टयेतरद्रव्यत्वसाक्षाद्व्याप्यजातिभेदसिद्धौ तादृशजातेरात्मत्वानतिरेकात्तस्य जातित्वसिद्धौ तन्निर्वाहायात्मनानात्वमङ्गीकार्यमेवेत्यात्मभेदसिद्धिः । एवमुत्तरत्रापि ॥ **जलत्वेति** ॥ जलत्वादिचतुष्टयतरा या द्रव्यत्वसाक्षद्व्याप्याजातिस्तद्भिन्नमित्यर्थः । दृष्टान्ते पृथिवीत्वजातिभिन्नत्वेन साध्यपर्यवसानम् । साध्ये सत्ताजातिव्युदासाय व्याप्येति विशेषणम् । न च तथाऽपि प्रमेयत्वादिव्याप्या भवत्येवेति वाच्यम् । जातिव्याप्यत्वस्य विवक्षितत्वात् । प्रमेयत्वादेरजातित्वात् । व्याप्यजातिभिन्नमित्येवोक्ते रूपत्वजातिभिन्नत्वसिध्याऽर्थान्तरता । अतो द्रव्यत्वेति । तावत्येवोक्ते घटत्वमादायार्थान्तरता । अतः साक्षादिति । घटत्वं च द्रव्यत्वव्याप्यपृथिवीत्वव्याप्यमिति न द्रव्यत्वं प्रति साक्षाद्व्याप्यम् । तद्व्याप्यजात्यव्याप्यत्वे सति तद्व्याप्यस्यैव तत्साक्षाद्व्याप्यत्वात् । तावत्येवोक्ते जलत्वादिजातिभिन्नत्वसिध्याऽर्थान्तरता । अतो जलत्वतेजस्त्ववायुत्वमनस्त्वेतरेति जातिविशेषणम् । ननु द्रव्यत्वस्यापि द्रव्यत्वव्याप्यत्वमावश्यकमेव । अन्यथा शब्दोऽनित्यः कृतकत्वादित्यत्र कृतकत्वस्यैवोपाधित्वापत्तेः । साध्यसमव्याप्तत्वेन तस्यानित्यत्वव्यापकत्वात् । स्वव्याप्यत्वानङ्गीकारे स्वाभिन्नसाधनाव्यापकत्वाच्च । अतोऽभेदेऽपि व्याप्यव्यापकभावमङ्गीकृत्य कृतकत्वे साधनव्यापकत्वमङ्गीकरणीयम् । तद्वदत्रापि द्रव्यत्वस्य द्रव्यत्वव्याप्यत्वेऽङ्गीकार्ये तद्भिन्नत्वसिध्याऽर्थान्तरतेति चेन्न । व्याप्यव्यापकभावस्य भिन्नाश्रयत्वनियमात् । प्रपञ्चमिथ्यात्वानुमानखण्डनटीकायां तत्त्वोद्योतटीकायां च तथैवोक्तत्वात् । न च तथात्वे शब्दानित्यत्वानुमाने

कृतकत्वस्योपाधित्वापत्तिः । अनिष्टाभावात् । साधनस्य साध्यव्याप्यत्वग्राहकप्रमाणविरोधेन साधनसद्भावे तद्व्यापकस्य साध्यस्यापि सत्त्वनियमात्पक्षे व्यभिचारव्याप्यत्वासिद्ध्योर्वा बाधप्रतिपक्षयोर्वाऽनुन्नायकत्वात् । अतो द्रव्यत्वस्य द्रव्यत्वव्याप्यत्वाभावान्न तद्भेदमादायार्थान्तरतेति । अभ्युपगम्य चेदमुक्तम् । वस्तुतस्तु तत्र कृतकत्वस्योपाधित्वं नास्त्येव । साधनाव्यापाकत्वस्यैवाभावात् । न हि साधनाव्यापकत्वं साधनव्यापकत्वाभावः किन्तु साधानवदवृत्तित्वम् । न हि कृतकत्वं शब्दावृत्ति । तद्वति तदभावायोगादिति । केचित्त्वभेदेऽपि व्याप्यव्यापकभावमभ्युपेत्य द्रव्यत्वस्य द्रव्यत्वव्याप्यत्वेऽपि द्रव्यत्वसाक्षाद्व्याप्यत्वं नास्ति । तद्व्याप्याव्याप्यत्वे सति तद्व्याप्यत्वं हि साक्षाद्व्याप्यत्वम् । न च द्रव्यत्वे तदस्ति । द्रव्यत्वव्याप्ये द्रव्यत्वे तदव्याप्यत्वाभावात् । अतो नार्थान्तरतेत्याहुः ॥ **पक्षेतरत्वादिति** ॥ पक्षेतरत्वरूपत्वादित्यर्थः । पक्षेतरत्वस्याप्युपाधित्वेऽनुमानमात्रोच्छेदप्रसङ्ग इति भावः । ननु पक्षेतरत्वस्यापि वह्निरनुष्णः पदार्थत्वादित्यादौ वह्नीतरत्वादेरिवोपाधित्वं किन्न स्यादित्यत आह — **अनुकूलतर्काणामिति** ॥ **वक्ष्यमाणत्वादिति** ॥ आत्मपदप्रवृत्तिनिमित्तस्यात्मत्वस्य जातित्वाङ्गीकारे लाघवमित्यादिनेति शेषः । तथा च पृथिवीत्वनिष्ठभेदप्रतियोगिन आत्मत्वस्य जातित्वमनङ्गीकृत्यौपाधिकधर्मत्वं[1] यद्यङ्गीक्रियेत तर्हि तस्योपाधिज्ञानाधीनज्ञानत्वेन गौरवप्रसङ्ग इत्याद्यनुकूलतर्कसद्भावादात्मत्वस्य जातित्वेऽवश्यमङ्गीकार्ये तद्भिन्नत्वस्य पृथिवीत्वे सत्त्वेन पृथिवीत्वेतरत्वस्य पक्ष एव साध्यव्यापकताभङ्गान्नोपाधित्वम् । वह्न्यनौष्ण्याद्यनुमाने त्वनुकूल-

---

[1] '-प्रतियोगिनमात्मत्वजातित्व-' मु.

तर्काभावाद्गृहीतरत्वादेरुपाधित्वं सम्भवतीति भावः ॥ **एवमिति** ॥ जलत्वं पृथिवीत्वतेजस्त्ववायुत्वमानस्त्वेतरद्रव्यत्वसाक्षाद्व्याप्यजातिभिन्नम् । जातित्वात्प्रमेयत्वात्पृथिवीत्ववदित्यादिरूपेणोह्यमित्यर्थः ।

(१९) (मु.) सिद्धान्त्युत्प्रेक्षितानुमानानि प्रयुङ्क्ते ॥ **पृथिवीत्वमित्यादिना** ॥ **जातिभिन्नमिति** ॥ भेदप्रतियोगित्वेनात्मत्वजातिसिद्धावनेकानुगतत्वनियमेनात्मनानात्वसिद्धिरिति भावः । पृथिवीत्वस्य स्वेन भेदायोगाज्जलत्वादीनामितरान्तविशेषणेनैव[1] वारणादाकाशकालदिशामेकद्रव्यत्वे विवादाभावेन तत्रापर्यवसानात् । द्रव्याणां नवत्वनियमेन जात्यन्तरकल्पने गौरवात् नान्यथासिद्धिः[2] । गुणत्वादिनाऽन्यथासिद्धिवारणाय द्रव्यत्वव्याप्येति । घटत्वादिना तद्वारणाय साक्षाद्व्याप्येति । बुद्धिगुणत्वादिना तद्वारणाय जातीति । नन्वस्माभिरसत्प्रतियोगिकभेदस्याङ्गीकारादुक्तजातेरसत्त्वेऽपि तद्भिन्नत्वेनान्यथासिद्धेरिति[3] चेन्न । तादृशसज्जातिभिन्नत्वस्यैव विवक्षितत्वात् । न्यायमतरीत्या वैतदनुमानप्रवृत्तिरित्यदोषः । अत एव द्रव्यनवत्वाद्युपपत्तिः । अस्मद्रीत्या त्वहन्त्वाहङ्कारत्वादीतरेत्यपि ग्राह्यम् ॥ **जलत्ववदिति** ॥ पक्षीकृतपृथिवीत्वभिन्नं तदिति ज्ञेयम् ॥ **पक्षेतरत्वादिति** ॥ तस्योपाधित्वेऽनुमानमात्रोच्छेदप्रसक्तिरिति भावः । ननु तेजोऽनुष्णं पदार्थत्वादित्यादौ बाधाद्युन्नीततेजोव्यतिरिक्तत्वमुपाधिर्भवत्येव बाधकाभावे पक्षेतरत्वस्योपाधित्वं न्याय्यमेवेत्यत आह — **अनुकूलतर्काणामिति** ॥ **एवमिति** ॥ जलत्वं पृथिवीत्वतेजस्त्ववायुत्वमनस्त्वेतरद्रव्यत्वसाक्षाद्व्याप्यजातिभिन्नं जातित्वात्पृथिवीत्ववदित्याद्यूह्यम् ।

---

[1] `-जलत्वादीनितरान्त-' मु. २. `अन्यथासिद्धिः' मु.

[3] `-सिद्धि-' इति पाठेन भाव्यमिति भाति ।

(१९) (कु.) आत्मत्वजातिसाधनेनात्मनानात्वं सेत्स्यतीत्याशयेनाह — **अपि चेति** ॥ दृष्टान्ते पृथिवीत्वमादाय साध्यं बोध्यम् । पक्षे चात्मत्वजातिमादायेत्यात्मनानात्वसिद्धिः । न च कालत्वादिभेदमादायार्थान्तरता । धर्मिग्राहकमानेन लाघवतर्कसनाथेन तदैक्यसिद्धेः । जलत्वादीतरत्वविशेषणं तु तद्भेदमादाय सिद्धसाधनतावारणाय । सत्ताभेदमादाय तद्वारणाय द्रव्यत्वव्याप्येति । घटत्वादिभेदमादाय तद्वारणाय साक्षादिति । नन्वनुकूलतर्काभावे पक्षेतरत्वस्यापि सत्प्रतिपक्षोन्नायकतया दूषणत्वं स्यादेवेत्यत आह — **अनुकूलतर्काणामिति** ॥ **एवमिति** ॥ तदा पृथिवीत्वान्यत्वं साध्ये देयम् । जलत्वादि च पक्षीकर्तव्यम् । पृथिवीत्वादि दृष्टान्तीकर्तव्यमिति भावः ।

(१९) (हु.) ॥ **अपि चेति** ॥ पृथिवीत्वमित्यादि । जलत्वादिभिन्ना या द्रव्यत्वसाक्षाद्व्याप्या जातिः पृथिवीत्वं तद्भिन्नत्वं जलत्वरूपे दृष्टान्ते हेत्वधिकरणजात्यन्तरेष्वपि वर्ततेऽतो न कुत्रापि व्यभिचारशङ्का । पक्षे च हेतुबलादुक्तसाध्यसिद्धौ सत्यां पृथिवीत्वे स्वभेदमादायोपपादयितुमशक्यत्वादतिरिक्तात्मत्वरूपजातिसिद्धिद्वाराऽऽत्मभेदसिद्धिः । अत्र जलत्वादिभेदप्रतीत्यसिद्धत्वात्सिद्धसाधनमर्थान्तरता च स्यादिति जलत्वादिनिवेशः[1]॥ प्रतियोगितया जातेरनुपादाने गगनपरिमाणपृथिवीजलादिवृत्तित्रित्वबहुत्वादिभेदमादायोक्त(एव) दोष इति जातित्वेन जातेर्निवेशः । घटत्वादिभेदमादाय तद्दोषवारणाय द्रव्यत्वसाक्षाद्व्याप्येति । तत्त्वं च द्रव्यत्वभिन्ना स्वभिन्ना च द्रव्येतरावृत्तिर्या या जातिस्तत्तदवच्छिन्न-

---

[1] अयं हु.पाठः । `अत्र जलत्वादिभेदनिवेशः' इति अपूर्णवाक्यं मु.पाठे । `अत्र जलत्वादिभेदस्य सिद्धत्वात् सिद्धसाधनम्-' इति पाठः सम्भाव्यते ।

भेदकूटवद्वृत्तित्वे सति द्रव्येतरावृत्तित्वम् । इदं च जलत्वपृथिवीत्वादौ स्फुटम् । घटत्वादिषु तादृशभेदकूटान्तर्गतपृथिवीभेदवत्यवृत्तित्वान्न तेषां साक्षाद्व्याप्यत्वम् । न चेदं पृथिवीत्वजलत्वादावपि दुर्घटम् । पृथिवीत्वभिन्ना द्रव्यत्वभिन्ना या जातयो घटत्वादिरूपाः पृथिवीत्वव्याप्या जलत्वव्याप्याः काश्चन जातयश्च । तत्तदवच्छिन्नभेदकूटवत्त्वं न पृथिव्यां नापि जलादौ । सर्वस्या अपि पृथिव्या जलदेश्च किञ्चिज्जात्याक्रान्तत्वात् । अतस्तादृशकूटवद्गगनादिर्गुणादिकं वा तत्र पृथिवीत्वादेरवृत्तित्वादिति वाच्यम् । द्रव्यत्वव्याप्यव्याप्यजातेः परमाणुष्वस्वीकारेण परमाणुमादायैवोपपादनसम्भवात् । केचित्तु तत्तदवच्छिन्नभेदसामानाधिकरण्यकूटस्यैव[1] निवेशनीयत्वाददोषः । पृथिवीत्वे घटत्वावच्छिन्नभेदसामानाधिकरण्यं पटान्तर्भावेण पटत्वावच्छिन्नभेदसामानाधिकरण्यं घटान्तर्भावेणेत्येवं क्रमेण तत्तज्जात्यवच्छिन्नभेदकूटसामानाधिकरण्यकूटं[2] वर्तत इति पृथिवीत्वजलत्वादिकं द्रव्यत्वसाक्षाद्व्याप्यं घटत्वादिकं तु नैवं स्वशब्देन घटत्वोपादने तद्भिन्नद्रव्यत्वभिन्नद्रव्येतरावृत्तिजातिमध्ये पृथिवीत्वस्यापि निविष्टतया तदवच्छिन्नभेदसामानाधिकरण्यविरहादित्याहुः । स्वभिन्नत्वद्रव्यत्वभिन्नत्वयोर्द्रव्येतरावृत्तिजातौ निवेशान्न स्वमादाय द्रव्यत्वमादाय च पृथिवीत्वादेरुक्तद्रव्यत्वसाक्षाद्व्याप्यत्वभङ्गः । द्रव्येतरावृत्तित्वनिवेशान्न सत्तामादायोक्तदोषः । जातित्वेन निवेशान्न पृथिवीमात्रवृत्तियावत्त्वरूपसङ्ख्यावच्छिन्न-

---

1 `-सामानाधिकरण्यभेदकूटस्यैव' मु. । ह.पाठे लिखित्वा उपर्यङ्कितम् । अर्थदृष्ट्या नावश्यकम् ।

2 `-सामानाधिकरण्यं' इत्येतावदेव मु. । वस्तुतः `तत्तज्जात्यवच्छिन्नभेदसामानाधिकरण्यकूटम्' इति पाठः सम्भाव्यते ।

भेदसामानाधिकरण्याभावात् उक्तदोषः । सत्ताया गुणत्वस्य च द्रव्यत्वसाक्षाद्व्याप्यत्ववारणाय विशेष्यदलम् ।[1]

यद्वोक्तभेदकूटनिवेशे गौरवात्स्वभिन्नद्रव्यत्वभिन्नद्रव्येतरावृत्तिजातित्वावच्छिन्नाभाववद्वृत्तित्वं विशेषणदलार्थः । तादृशपटत्वरूपयत्किञ्चिज्जात्यभाववति घटवत्त्वस्य वृत्तित्वात् साक्षाद्व्याप्यत्ववारणाय तादृशजातिसामान्याभावनिवेशः । द्रव्यत्वव्याप्यव्याप्यजातीनां परमाणुष्वभावादेवोक्तलक्षणनिर्वाहाय द्रव्यत्वस्य[2] द्रव्यत्वसाक्षाद्व्याप्यत्वमुक्तरूपमिष्टमेव ।[3] प्रकृतानुमाने द्रव्यत्वमादाय सिद्धसाधनतावारणाय द्रव्यत्वनिष्ठभेदप्रतियोगितावच्छेदकम्[4] अधिकं निवेश्य तादृशव्याप्यत्वं द्रव्यत्वाद्व्यावर्तनीयम् ।

ननूक्तसाक्षाद्व्याप्यत्वस्य स्वत्वघटितत्वेनाननुगतत्वप्राप्त्या दृष्टान्तानुरोधेन स्वपदार्थतया पृथिवीत्वस्यैव निविष्टत्वेन तेन कथमात्मत्वस्य सिद्धिः । प्रत्युत पृथिवीत्वरूपपक्षे स्वभेदाभावाद्बाध एव इति चेन्न । स्वाभाववदवृत्तित्वस्वभिन्नत्वोभयसम्बन्धेन स्वविशिष्टजातिमत्त्वसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभाववत्त्वस्वाभाववदवृत्तित्वोभयसम्बन्धेन द्रव्यत्ववज्जातित्वमेव द्रव्यत्वसाक्षाद्व्याप्यजातित्वमनुगतम् । सम्बन्धशरीरे जाति-

---

[1] `द्रव्येतरावृत्तित्व यावत्त्वरूपसङ्ख्यावच्छिन्नभेदसामानाधिकरणाय विशेष्यदलम् ।' इति त्रुटिवहुलः मु.पाठः ।

[2] तादृशपटत्वेत्यादिवाक्यद्वयस्थाने `तादृशपटत्वरूपयत्किञ्चिज्जात्यभावनिवेशः' इत्येतावदेव मु.पाठे दृश्यते ।

[3] `परन्तु' इति मु.पाठे वाक्यादौ । ४. `च्छेदकत्वम्' मु. ।

मत्त्वं च स्वाभाववदवृत्तिस्वभिन्नत्वोभयसम्बन्धेनैतादृशमहासम्बन्धः द्वितीयसम्बन्धश्चेत्युभयं द्रव्यत्वस्य[1] लक्ष्यभूतजातिषु निवेशे बोध्यम् । अत्र द्रव्यत्वसाधारण्येन[2] द्रव्यत्वसाक्षाद्व्याप्यजातित्वरूपत्वम् । प्रकृते तद्वारणाय स्वाश्रयवृत्तिभेदप्रतियोगितावच्छेदकत्वं वा[3] तृतीयसम्बन्धेन वा[4] निवेश्योक्तसम्बन्धत्रयेण द्रव्यत्वविशिष्टजातित्वं तत्साक्षाद्व्याप्यजातित्वं वाच्यम् । यथाश्रुतानुसारेण निष्कर्षे सम्बन्धप्रयोजनादिकमनुसन्धेयम् । स्वत्वस्य सम्बन्धशरीरे निवेशाभावप्रयुक्तबाधकानुसन्धाने[5] स्वाभाववद्-वृत्तित्वस्थानेऽभाववद्वृत्तित्वसम्बन्धावच्छिन्नस्य स्ववृत्त्यवच्छेदकताक-भेदवत्त्वमेव[6] सम्बन्धघटकं बोध्यमित्येषा दिक् ॥

**जातित्वादिति** ॥ अत्र प्रमेयत्वरूपकेवलान्वयिहेत्वन्तरोपादानमुक्त-साध्यस्य व्यभिचारशङ्का कुत्रापि न कर्तव्येति सूचनाय । जातित्वहेतोर्व्यर्थविशेषणकत्वादिदोषाभावस्तु **`यद्धेतुव्यवच्छेदकत्वेत्यादिना तत्त्वोद्योतटीकाया'**मुक्तप्रकारेण बोध्यः । पक्षेतरत्वस्याप्यनुकूल-तर्काभावेऽप्युपाधित्वं वर्तत एवेत्याशङ्क्याह — **अनुकूलतर्काणामिति** ॥ आत्मपदप्रवृत्तिनिमित्तस्य जातित्वे लाघवमुपाधित्वे गौरवमित्या-दीनामित्यर्थः ।

**(१९) (का.)** इदानीमात्मत्वं नानाव्यक्तिनिष्ठं जातित्वात् घटत्व-वदित्याद्यनुमानेषु पूर्वपक्षोक्तदोषमुद्दिधीर्षुराद्यानुमानेऽसिद्धिशङ्कापरि-

[1] `द्रव्यत्वस्यैव' मु.

२. `अस्य द्रव्यात्मसाधारण्येन' मु.

[3] `स्वभिन्नत्वं वा' इत्यधिकं मु.

४. `तृतीयसम्बन्धे' मु.

[5] `-सन्धातुः' हु.

६. `-अवच्छिन्नस्ववृत्ति-' मु.

हारायाऽत्मत्वस्य जातित्वसाधकप्रमाणं तावदाह — **अपि चेति** ॥ 'इत्यनुमानान्यात्मत्वजातिसाधनद्वाराऽऽत्मभेदं साधयन्ती'ति सम्बन्धः । अत्र [1]पृथिवीत्वभेदमादाय दृष्टान्ते साध्यसत्त्वं, पक्षे तु तदयोगादात्मत्वजातिभेदमादायैव साध्यपर्यवसानादुद्देश्यसिद्धिः । न चाकाशत्वादिजात्य-

---

[1] ॥ **अत्र पृथिवीत्वभेदमादायेति** ॥ दृष्टान्ते जलत्वे हेतुः जातित्वं प्रमेयत्वं च वर्तते । तथा, जलत्वतेजस्त्ववायुत्वमनस्त्वेतरा द्रव्यत्वसाक्षाद्व्याप्या जातिः नाम पृथिवीत्वजातिः । साध्यभूतं तद्भिन्नत्वमपि जलत्वे वर्तते । पक्षभूतायां पृथिवीत्वजातौ तु एवं पृथिवीत्वभेदः वक्तुमशक्यः । स्वस्मिन् स्वभेदायोगात् । हेतुबलात् तत्र साध्येऽङ्गीकरणीये प्रसिद्धजात्यनुपपत्तौ क्लृप्तं कञ्चन धर्मं जातित्वेन स्वीकृत्य साध्यपर्यसानं कार्यम् । स च धर्मः आत्मत्वमित्येवम् आत्मत्वस्य जातित्वं सिध्यति । जातेः नानाव्यक्त्याश्रितत्वनियमात् आत्मभेदरूपोद्देश्यसिद्धिः - इत्याशयः । ॥ **न चाकाशत्वादीति** ॥ ननु साध्यपर्वसानाय आत्मत्वमेव कुतः जातितया स्वीकार्यम्? क्लृप्तमाकाशत्वं तथा स्वीकृत्य साध्यपर्यवसानं भवतु इति चेन्न । साध्यपर्यवसानकाले हि यथा प्रमाणान्तरविरोधः न स्यत् तथा अवधेयम् । आकाशत्वस्य जातित्वाङ्गीकारे च बाधः अग्रे `एवं तर्हि गगनत्वादिकमपि जातिः स्यादिति चेन्न' इत्यादिग्रन्थेन तर्कविरोधमुपपाद्य वक्ष्यते । अतः न आकाशत्वमादाय पर्यवसानम् । ननु यदि आकाशैक्यग्राहकतर्कविरोधात् आकाशत्वं न जातिः, तर्हि तत एव हेतोः आत्मत्वमपि न जातिः । आत्मैक्यग्राहकाणां `विमता आत्मानः परमात्मनः परमार्थतो न भिद्यन्ते' इत्यादीनां विरोधेन तथा पर्यवसानेऽपि बाधात् इति चेत् न, यथा आकाशैक्यग्राहकतर्काः प्रमाणान्तराविरुद्धाः न तथा आत्मैक्यग्राहकतर्काः । तेषां अनुमानापेक्षया प्रबलैः प्रत्यक्षादिभिः विरोधप्राप्तेः - इत्याशयः । ॥ **तर्कविरोधेनेति** ॥ अत्र तर्कशब्देन अनुमानं ग्राह्यम्, न तु अनिष्टापादकरूपस्तर्कः । यतः अग्रे `शब्दो द्रव्याश्रितो गुणत्वाद्रूपवदित्यनुमानेन शब्दस्यैकद्रव्याश्रितत्वे लाघवमिति लाघवग्रहसहकृतेन पृथिव्याद्यष्टद्रव्याश्रितत्वबाधे सत्यष्टद्रव्यातिरिक्तैकद्रव्याश्रितत्वस्यैव सिद्ध्या गगनत्वादेर्जातित्वाभावनिश्चयादित्यर्थः ।' इति लाघवसहकृतस्य अनुमानस्यैव प्रदर्शनात् ।

न्तरसिद्ध्याऽर्थान्तरमाशङ्क्यम् । तर्कविरोधेन तदसिद्धेर्वक्ष्यमाणत्वात् । आत्मैक्यग्राहकतर्काणां च बलवत्प्रमाणविरुद्धत्वेनाभासत्वादिति । एतेन विभुत्वादिजात्यन्तरसिद्ध्याऽर्थान्तरमित्यपास्तम् । द्रव्यत्वयाप्यजातिराकाशाद्यवृत्तिः सत्ताद्रव्यत्वातिरिक्तजातित्वात् पृथिवीत्ववदित्यादितर्कविरुद्धत्वात् । [1]संस्कारशून्यावृत्तित्वेन जातिर्विशेषणीयेत्यप्याहुः ।

अत्र च जलत्वादिजातिभेदमादाय सिद्धसाधनवारणाय **जलत्वाद्यतिरिक्तत्त्वं** जातिविशेषणम् । घटत्वादिभेदमादाय तद्दोषवारणाय **द्रव्यत्वसाक्षाद्व्याप्येति** ॥

[2]द्रव्यत्वसाक्षाद्व्याप्यत्वं च द्रव्यत्वव्याप्यजात्यव्याप्यत्वे सति

---

[1] ॥ संस्कारशून्येति ॥ तथा चास्मिन् व्याख्याने 'जलत्वतेजस्त्ववायुत्वमनस्त्वेतरद्रव्यत्वसाक्षाद्व्याप्यसंस्कारशून्यावृत्तिजातिभिन्नम्' इति साध्यनिर्देशः । संस्कारस्त्रिविधः - भावना वेगः स्थितिस्थापकश्चेति । तत्र भावना स्मृतिकारणीभूता आत्मनि वर्तते । वेगः परिच्छिन्नेषु पृथिव्यादिपञ्चसु । स्थितिस्थापकः केवलं कठिनायां पृथिव्याम् इति न्यायदर्शनस्थितिः । एवं च पृथिव्यां संस्कारो वर्तत इति पृथिवीत्वं संस्कारशून्यगुणाद्यवृत्ति जातमिति तदादाय दृष्टान्ते साध्योपपादनम् । एवं आत्मत्वमपि भावनाख्यसंस्कारवति आत्मनि वर्तत इति तदपि संस्कारशून्यावृत्ति भवतीति तदादाय पक्षे साध्यपर्यवसानात् उद्देश्यसिद्धिः । विभुत्वं तु संस्कारशून्याकाशकालदिक्षु वर्तत इति नार्थान्तरता ।

[2] ॥ द्रव्यत्वसाक्षाद्व्याप्यत्वं चेति ॥ अस्य पृथिवीत्वे इत्थं समन्वयः - द्रव्यत्वव्याप्यजातिः पृथिवीत्वादिः । तद्व्याप्यं घटत्वादि । तद्भिन्नं पृथिवीत्वमिति पृथिवीत्वे प्रथमदलमायातम् । एवं द्रव्यत्वव्याप्यत्वमपि तत्र वर्तते इति द्वितीयदलम् । अथ दलकृत्यविचारः - यदि द्रव्यत्वव्याप्यत्वं द्रव्यत्वसाक्षाद्व्याप्यत्वमुच्यते तर्हि घटत्वमपि द्रव्यत्वसाक्षाद्व्याप्यं स्यात् । ततश्च अनुमाने जलत्वादीतरजातिपदेन घटत्वमादाय तद्भेदस्य पृथिवीत्वे

सिद्धत्वात् सिद्धसाधनता । अनुमानात् पृथक् द्रव्यत्वसाक्षाद्व्याप्यत्वविचारे लक्षणस्य घटत्वे अतिव्याप्तिः । तद्वारणाय द्रव्यत्वव्याप्यजात्यव्याप्यत्वं देयम् । घटत्वं द्रव्यत्वव्याप्य-पृथिवीत्वव्याप्यमेवेति न दोषावकाशः । एवं द्रव्यत्वव्याप्यत्वं परित्यज्य द्रव्यत्व-व्याप्यजात्यव्याप्यत्वमित्येव, कथने द्रव्यत्वव्याप्यपृथिवीत्वाव्याप्यं गुणत्वमपि भवतीति पूर्ववत् सिद्धसाधनता अतिव्याप्तिर्वा । तद्वारणाय द्रव्यत्वव्याप्यत्वमिति विशेष्यदलम् । विशेषणदलेऽपि जातिमनिवेश्य द्रव्यत्वव्याप्याव्याप्यत्वं (द्रव्यत्वव्याप्यधर्माव्याप्यत्वं) यदि कथ्यते तर्हि द्रव्यत्वव्याप्यभूतत्वरूपधर्मव्याप्यत्वमेव पृथिवीत्वादौ वर्तते इति दृष्टान्ते साध्यवैकल्यम्, पृथिवीत्वादौ अव्याप्तिर्वा । अतः जातिनिवेशः । भूतत्वस्याजातित्वात् न दोषः ।

तदेतादृशद्रव्यत्वसाक्षाद्व्याप्यत्वस्वरूपे दोषद्वयशङ्का समुन्मिषति । तत्र प्रथमा - व्याप्यत्वं नाम तदभाववदवृत्तित्वम्, यथा वह्न्यभाववद्ध्रदावृत्तित्वं धूमे । प्रकृते द्रव्यत्वाभाववद्गुणावृत्तित्वं द्रव्यत्वेऽप्यस्तीति द्रव्यत्वेऽपि द्रव्यत्वव्याप्यत्वमायातम् । प्रथमदलं द्रव्यत्वव्याप्यपृथिवीत्वाव्याप्यत्वमपि द्रव्यत्वे वर्तत इति द्रव्यत्वमपि द्रव्यत्वसाक्षाद्व्याप्यमभूदिति अनुमाने तद्भेदमादाय सिद्धसाधनता, लक्षणस्य अतिव्याप्ति-र्वा । अत्र केचिदेवं परिहारमाहुः - द्रव्यत्वे द्वितीयदलसद्भावेऽपि प्रथमदलं नास्ति । यतः द्रव्यत्वव्याप्यं द्रव्यत्वमेव । तद्व्याप्यमेव भवति द्रव्यत्वम् - इति । इदमनुचितम् । तथा सति पृथिवीत्वादिकमपि द्रव्यत्वव्याप्यद्रव्यत्वव्याप्यमिति द्रव्यत्वसाक्षाद्व्याप्यजाति-रेवाप्रसिद्धा स्यात् । तथा च साध्यवैकल्यमसम्भवो वा । ननु प्रथमदलं `द्रव्यत्वव्याप्यद्रव्यत्वभिन्नजात्यव्याप्यत्वमिति परिष्क्रियते । तथा च न दोषः इति चेत् तर्हि पुनः द्रव्यत्वस्य द्रव्यत्वसाक्षाद्व्याप्यत्वप्रसङ्गः । अतः अयं परिहारः न साधुः ।

द्वितीया शङ्का एवं भवति - यतः व्याप्यत्वं नाम तदभाववदवृत्तित्वम्, अव्याप्यत्वं नाम तदभाववद्वृत्तित्वम् । एवं च द्रव्यत्वव्याप्यजात्यव्याप्यत्वमिति प्रथमदलस्यायमर्थः - द्रव्यत्वव्याप्यजात्यभाववद्वृत्तित्वम् - इति । इदं पृथिवीत्वादौ तदा भवति यदि पृथिव्यां सर्वत्र द्रव्यव्याप्यजात्यभावः भवति । परन्तु घटपटादिरूपायां सर्वस्यां पृथिव्यां घटत्वपटत्वादिद्रव्यत्वव्याप्ययत्किञ्चिज्जातेः सद्भावात् पृथिवीत्वे इदं दलं नायाति । ततश्च साध्यवैकल्यमसम्भवो वा । द्रव्यत्वव्याप्ययत्किञ्चिज्जात्यभाववद्वृत्तित्वविवक्षणे च घटत्वा-

दिकमपि द्रव्यत्वव्याप्यजलत्वाभाववद्वृत्ति इति तस्यापि द्रव्यत्वसाक्षाद्व्याप्यत्वं स्यात् । ततश्च सिद्धसाधनता अतिव्याप्तिर्वा - इति द्वितीया शङ्का ।

तत्र प्रथमशङ्कायाः एवं परिहारः - द्रव्यत्वव्याप्यत्वमित्यत्र न्यूनवृत्तित्वरूपं व्याप्यत्वं विवक्षितम्, न तु तदभाववदवृत्तित्वरूपम् । द्रव्यत्वन्यूनवृत्तित्वं च द्रव्यत्वसमानाधिकरनभेदप्रतियोगितावच्छेदकत्वे सति द्रव्यत्वसमानाधिकरणत्वम् । इदं पृथिवीत्वे समन्वेति । तथा हि - द्रव्यत्वाधिकरणं = जलम् । तद्वृत्तिभेदः = जलं पृथिवी नेति । तत्प्रतियोगितावच्छेदकं = पृथिवीत्वमिति प्रथमदलसमन्वयः । तथा द्रव्यत्वाधिकरणपृथिवीवृत्तित्वमपि वर्तत इति द्वितीयदलसमन्वयः । तदेतादृशं द्रव्यत्वन्यूनवृत्तित्वं द्रव्यत्वे न भवति । तत्र द्वितीयदलसम्भवेऽपि प्रथमदलाभावात् । यदि द्रव्यत्वाधिकरणे पृथिव्यादौ `पृथिवी द्रव्यं ने'त्यादिभेदः अभविष्यत् तर्हि द्रव्यत्वे द्रव्यत्वसमानधिकरणभेदप्रतियोगितावच्छेदकत्वमभविष्यत् । तदभावात् न प्रथमशङ्कावकशः ।

अस्मिन् परिष्कारे दलकृत्यम् - यदि सत्यन्तपरित्यागेन द्रव्यत्वसमानाधिकरणत्वं द्रव्यत्वन्यूनवृत्तित्वमिति कथ्यते तर्हि द्रव्यवृत्तित्वात् सत्तापि द्रव्यत्वन्यूनवृत्तिः स्यात् । प्रथमदलनिवेशे द्रव्ये `सत्तावत् ने'तिप्रतीतिसाक्षिकभेदाभावात् न दोषः । यदि च द्वितीयदलं परित्यज्यते तर्हि पृथिवी गुणो नेति भेदग्रहणेन द्रव्यत्वसमानाधिकरणभेद-प्रतियोगितावच्छेदकत्वं गुणत्वे वर्तत इत्यतिव्याप्तिः स्यात् । तद्वारणाय द्वितीयदलम् । गुणत्वं न द्रव्यवृत्तीत्यतोऽतिव्याप्तिपरिहारः ।

द्वितीयशङ्काया अयं परिहारः - द्रव्यत्वव्याप्यजात्यव्याप्यत्वमिति प्रथमदले द्रव्यत्व-व्याप्यत्वं यत् पृथिवीत्वादौ विवक्षितं तत् द्रव्यत्वसमानाधिकरणभेदप्रतियोगिताव-च्छेदकत्वरूपमात्रं नतु तत्र द्रव्यत्वसमानाधिकरणत्वं अन्तर्गतम् । पूर्वं तदनिवेशे गुणत्वमपि द्रव्यत्वव्याप्यं स्यादिति दोषः उक्तः । इदानीं गुणत्वसङ्ग्रहेऽपि न दोषः । यतः - द्रव्यत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकतया द्रव्यत्वव्याप्यजातिः गुणत्वं भवति चेदपि तदव्याप्यत्वं लक्ष्ये पृथिवीत्वे वर्तत एव । अयमभिप्रायः `अधिकस्य वैयर्थ्यात्' इत्यनेनोक्तः । एवं च द्रव्यत्वव्याप्यजातिः पृथिवीत्वादिः । तदव्यात्वं च तद्व्याप्यभिन्न-

त्वम् । तत्र व्याप्यत्वं पुनः न्यूनदेशवृत्तित्वरूपम् । तथा च, द्रव्यत्वव्याप्यजात्यव्याप्यत्वं तत्समानाधिकरणत्वे सति तत्समानाधिकरणभेदप्रतियोगितावच्छेदकं यत् तदन्यत्वं । तत् = पृथिवीत्वं, तदधिकरणघटवृत्ति भवति घटत्वम् । एवं, तत्=पृथिवीत्वं, तदधिकरणपटवृत्तिभेदः = पटः घटो नेति, तत्प्रतियोगितावच्छेदकं = घटत्वं, तदन्यत् पृथिवीत्वं पृथिव्यां पृथिवी नेति भेदासम्भवात् । तदेवं प्रथमदलं लक्ष्ये पृथिवीत्वादौ वर्तत इति न प्रागाशङ्कितासम्भवः ।

यदेतत्प्रथमदलोत्तरार्धस्य उक्तविधपरिष्कारः स प्रकारविधया । अथ सम्बन्धविधयाऽपि परिष्कारः प्रदर्श्यते - तादृशजातिविशिष्टान्यत्वमितीति ॥ अयं समन्वयक्रमः - तादृशजातिः = द्रव्यत्वव्याप्यजातिः = पृथिवीत्वं । स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्व-स्वसमानाधिकरणत्वोभयसम्बन्धेन तद्विशिष्टं भवति घटत्वम् । स्वं = पृथिवीत्वं, स्वाधिकरणपटवृत्तिभेदप्रतियोगितावच्छेदकं भवति = घटत्वं, पटः घटो निति भेदात् । तथा च प्रथमसम्बन्धेन वैशिष्ट्यं सम्पन्नम् । एवं, स्वं = पृथिवीत्वं, तदधिकरणघटवृत्तित्वात् द्वितीयसम्बन्धेनापि घटत्वं पृथिवीत्वविशिष्टं भवति । पृथिवीत्वं स्वसामानाधिकरण्येन पृथिवीत्वविशिष्टमपि न प्रथमसम्बन्धेन पृथिव्यां पृथिवी नेति भेदाभावात् । तथा च उक्तोभयसम्बन्धेन पृथिवीत्वविशिष्टान्यत् भवति पृथिवीत्वमिति पृथिवीत्वे समन्वयः ।

अत्र पुनः सम्बन्धद्वयकृत्यम् - प्रथमसम्बन्धमात्रनिवेशे पृथिवीत्वं तादृशजातिविशिष्टमेव भवति, न त्वन्यत् । तथा हि, स्वं = तादृशजातिः = द्रव्यत्वव्याप्यजलत्वम् । तदधिकरणजलवृत्तिभेदप्रतियोगितावच्छेदकमेव भवति पृथिवीत्वं, जलं पृथिवी नेति भेदात् । अतः स्वाधिकरणत्वनिवेशः । जले पृथिवीत्वाभावात् न द्वितीयसम्बन्धेन पृथिवीत्वं जलत्वविशिष्टं भवति । अथ द्वितीयसम्बन्धमात्रनिवेशे स्वं = द्रव्यत्व-व्याप्यघटत्वं, तदधिकरणघटवृत्त्येव पृथिवीत्वमिति पृथिवीत्वं तादृशजातिविशिष्टमेव स्यात् नान्यत् । अतः प्रथमसम्बन्धनिवेशे स्वाधिकरणघटे घटः पृथिवीनेति भेदग्रहणासम्भवात् न पृथिवीत्वं तादृशघटत्वविसिष्टमिति दोषपरिहारः - इति ।

पूर्वपक्षे दलद्वयेऽपि तदभाववदवृत्तित्वरूपं व्याप्यत्वमाश्रित्य शङ्कितम् । न्यूनवृत्तित्वरूपं व्याप्यत्वमाश्रित्य च परिहृतमिति सारः ।

द्रव्यत्वव्याप्यत्वम् । घटत्वादिवारणाय सत्यन्तम् । द्रव्यत्वव्याप्यभूतत्वादिव्याप्यस्य पृथिवीत्वादेः सङ्ग्रहाय तत्र जातिपदम् । गुणत्वादिवारणाय विशेष्यदलम् ।

अथ व्याप्यत्वस्य तदभाववदवृत्तित्वरूपत्वेन द्रव्यत्वस्यापि द्रव्यत्वव्याप्यत्वसम्भवात्तद्भेदमादाय सिद्धसाधनम् । यत्तु द्रव्यत्वस्य द्रव्यत्वव्याप्यद्रव्यत्वरूपजातिव्याप्यतया न द्रव्यत्वसाक्षाद्व्याप्यत्वमिति । तन्न । तथासति पृथिवीत्वादेरपि द्रव्यत्वव्याप्यद्रव्यत्वरूपजातिव्याप्यतया द्रव्यत्वसाक्षाद्व्याप्यजात्यसिद्ध्यापत्तेः । द्रव्यत्वव्याप्यद्रव्यत्वभिन्नजात्यव्याप्यत्वविवक्षणे तु द्रव्यत्वस्यापि द्रव्यत्वसाक्षाद्व्याप्यत्वाक्षतेः ।

एवं द्रव्यत्वव्याप्यजात्यव्याप्यत्वस्य द्रव्यत्वव्याप्यजात्यभाववद्वृत्तित्वरूपतया पृथिवीत्वादेरसङ्ग्रहः । पृथिव्यां द्रव्यत्वव्याप्यजातिसत्त्वेन तदभावासम्भवात् । द्रव्यत्वव्याप्ययत्किञ्चिज्जात्यभाववद्वृत्तित्वविवक्षणे च घटत्वादेरपि सङ्ग्रहप्रसङ्ग इति चेन्मैवम् । न्यूनवृत्तित्वरूपव्याप्यत्वस्य विवक्षितत्वात् । न्यूनवृत्तित्वं च तत्समानाधिकरणभेदप्रतियोगितावच्छेदकत्वे सति तत्समानाधिकरणत्वम् । सत्तागुणत्वयोः द्रव्यत्वव्याप्यत्ववारणाय सत्यन्तविशेष्यभागयोः प्रवेशः । द्रव्यत्वस्य च द्रव्यत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वाभावान्न द्रव्यत्वव्याप्यत्वम् । द्रव्यत्वव्याप्यजात्यव्याप्यत्वशरीरे च द्रव्यत्वव्याप्यत्वं द्रव्यत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वमात्रम् । अधिकस्य वैयर्थ्यात् । तदव्याप्यत्वं च तत्समानाधिकरणत्वे सति तत्समानाधिकरणभेदप्रतियोगितावच्छेदकं यत्तदन्यत्वम् । स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वस्वसमानाधिकरणत्वोभयसम्बन्धेन तादृशजाति-

विशिष्टान्यत्वमिति यावत् । पृथिवीत्वादेर्द्रव्यत्वव्याप्यजलत्व-समानाधिकरणभेदप्रतियोगितावच्छेदकत्वात् तथाविधघटत्वादिसमाना-धिकरणत्वाच्चासङ्ग्रहापत्तिरतो दलद्वयनिवेशः । इत्थं च द्रव्यत्वव्याप्यं पृथिवीत्वादि । तद्व्याप्यं घटत्वादि । तदन्यत्वं च पृथिवीत्वादेरिति तत्सङ्ग्रहः ।

[1]गगनावृत्तिविशेषगुणवत्त्वादिधर्मभेदमादाय सिद्धसाधनवारणाय जातिपदम् ।[2]/

यद्यपि तादृशजातिनिष्ठप्रतियोगिताकस्य पृथिवीत्वघटोभयभेदस्य पृथिवीत्वेऽपि सत्त्वात्सिद्धसाधनम् । तादृशजातित्वानधिकरणत्वसाधने च पृथिवीत्वस्यापि तादृशजातित्वाधिकरणत्वाद्बाधः । तथापि तादृशजाति-प्रतियोगिकप्रतियोग्यवृत्तिभेदसाधनाददोषः । उभयभेदस्य प्रतियोगि-वृत्तित्वात् ।

---

1 ॥ **गगनावृत्तिविशेषगुणवत्त्वादिति** ॥ अत्र श्रीप्रह्लादाचार्याः - विभुत्वजात्यन्तर-सिद्ध्याऽर्थान्तरत्ववारणाय जातौ संस्कारशून्यावृत्तित्वं निवेशनीयमित्युक्तं प्राक् । तथा च "जलत्वतेजस्त्ववायुत्वमनस्त्वेतरद्रव्यत्वसाक्षाद्व्याप्यधर्मभिन्नम्" इति साध्यबोधकपदे जातिपदस्थाने धर्मपदनिवेशे केवलविशेषगुणवत्त्वरूपधर्ममादाय सिद्धसाधनता न वक्तुं शक्या । विशेषगुणवत्त्वरूपधर्मस्य संस्कारशून्याकाशवृत्तित्वेन तद्ग्रहणासम्भवात् । अतो गगनावृत्तिविशेषगुणवत्त्वरूपधर्मभेदमादाय सिद्धसाधनतावारणाय जातिपदमित्युक्तम् ।

2 `अत्र च जलत्वादिजातिभेदमादाय सिद्धसाधनवारणाय' इत्यादिना प्रक्रान्तस्य दलकृत्यविचारस्य अन्तिमकृत्यविचारः अत्र प्रस्तुतः । मध्ये हि द्रव्यत्वसाक्षाद्व्याप्यत्व-दलविचारे सति तत्परिष्कारः विस्तरेण कृतः । तत्समाप्तौ पुनरत्रोर्वरितः दलकृत्यविचारः प्रस्तूयते ।

जातित्वं चाखण्डोपाधिः । अतो गुरुधर्मस्य हेतुतानवच्छेदकत्वे नित्यानेकसमवेतत्वस्य हेतुत्वासम्भवेऽपि न क्षतिः । आधेयत्वमात्रं वा हेतुत्वेन विवक्षितम् । प्रमेयत्वाद्वेत्यत्र प्रशब्दः प्रकृतसाधनस्य प्रामाणिकत्वद्योतनार्थः ।

॥ **न चेति** ॥ यद्यपि पक्षे साध्यसन्देहान्न पक्षेतरत्वे साध्यव्यापकत्वनिश्चयः सम्भवति । तथापि तस्य सन्दिग्धोपाधित्वमव्याहतम् । न च तस्य न प्रतिपक्षोन्नायकत्वं, तदधीनप्रतिपक्षसन्देहस्य च साध्यसन्देहतया न विरोधित्वमिति वाच्यम् । स्वारसिकसन्देहस्याविरोधित्वेऽप्याहितसन्देहस्यानुमानविरोधित्वादिति भावः । पक्षेतरत्वस्य सन्दिग्धोपाधित्वेऽपि न दूषकत्वम् । अन्यथाऽनुमितिमात्रोच्छेदापत्तेरित्याशयेनाह — **तस्येति** ॥ नन्वनुकूलतर्कसत्त्व एव सन्दिग्धोपाधेरदूषकत्वम् । अन्यथा वह्निरनुष्णः कृतकत्वादित्यादौ वह्नीतरत्वोपाधेर्दूषकत्वानुपपत्तेरित्यत आह — **अनुकूलतर्काणामिति** ॥ `विपक्षे गौरवप्रसङ्गरूपाणा'मित्यादिः ।

॥ **एवमिति** ॥ जलत्वं पृथिवीत्वतेजस्त्ववायुत्वमनस्त्वेतरद्रव्यत्वसाक्षाद्व्याप्यजातिभिन्नं जातित्वात् पृथिवीत्ववदित्यादिप्रकारेणेत्यर्थः । इदमुपलक्षणम् । [1]पृथिवीत्वं जलाद्यवृत्तिद्रव्यवृत्तिकिञ्चिज्जातिमदवृत्ति,

---

[1] ॥ **पृथिवीत्वं जलाद्यवृत्तीति** ॥ अत्र श्रीप्रह्लादाचार्याः - जलाद्यवृत्तिकिञ्चिज्जातिमदवृत्तित्वमात्रसाधने तादृशगुणत्वजातिमदवृत्तिमादाय सिद्धसाधनता । अतो जातौ द्रव्यवृत्तित्वं विशेषणम् । जलत्वादिजातिमदवृत्तित्वमादाय सिद्धसाधनतावारणाय जलाद्यवृत्तीति । जातिमत्वमात्रस्य हेतुत्वे द्रव्यत्वे व्यभिचारः । जातित्वरूपहेत्वधिकरणे तस्मिन् जलाद्यवृत्तिद्रव्यवृत्तिपृथिवीत्वरूपजातिमद्वृत्तित्वस्यैव सत्वेन साध्याभावात् । अतो द्रव्यत्वव्याप्येति विशषेणम् ।

द्रव्यत्वव्याप्यजातित्वाज्जलत्वादिवत् । [1]पृथिवीत्वं गन्धज्ञानान्यतरवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिभिन्नं, मेयत्वाद्घटत्ववदित्यादिकमप्यात्मत्वजातिसाधकमूहनीयम् ।

(१९) (श.) इदानीमात्मत्वस्य जातित्वसाधनद्वाराऽऽत्मनां भेदसाधकानुमानान्याह — **अपिचेत्यादिना आत्मभेदं साधयतीत्यन्तेन** ॥ अत्र पृथिवीत्वस्य जलत्वादिचतुष्टयेतरद्रव्यत्वसाक्षाद्व्याप्यजातिभिन्नत्वसिद्धौ तादृशजातेरात्मत्वानतिरेकात्तस्य जातित्वसिद्धौ तन्निर्वाहायाऽऽत्मनामनेकत्वमङ्गीकार्यमित्यात्मभेदसिद्धिः । एवमग्रेऽप्युपयोगो बोद्धव्यः ॥ **जलत्वेति** ॥ जलत्वादिभ्य इतरा या द्रव्यत्वसाक्षाद्व्याप्यजातिः तद्भिन्नमित्यर्थः । दृष्टान्ते पृथिवीत्वभिन्नत्वेन साध्यपर्यवसानम् । साध्ये जातिभिन्नमित्युक्ते सत्ताजातिभिन्नत्वसिद्ध्याऽर्थान्तरम् । **अतो व्याप्येति** ॥ तस्याः द्रव्यादीतरवृत्तितया व्यापकत्वात्तत्परिहारः । नच सापि प्रमेयत्वव्याप्यजातिर्भवत्येवेति वाच्यम् । जातिं प्रति व्याप्यत्वस्य विवक्षितत्वात् । व्याप्यजातिभिन्नमित्युक्ते रूपत्वभिन्नत्वसिद्ध्याऽर्थान्तरम् । तस्य रूपमात्रवृत्तित्वेन व्याप्यजातित्वात् । **अतो द्रव्यत्वेति** ॥ तस्य च गुणत्वव्याप्यत्वात्तत्परिहारः । द्रव्यत्वव्याप्यजातिभिन्नमित्युक्ते घटत्वभिन्नत्वसिद्ध्याऽर्थान्तरमित्यत उक्तम् ॥ **साक्षादिति** ॥ घटत्वं च न

---

[1] ॥ **पृथिवीत्वं गन्धज्ञानान्यतरवद्वृत्तीत्यादि** ॥ अत्र श्रीप्रह्लादाचार्याः - गन्धज्ञानान्यतरवद्वृत्तिः द्रव्यत्वसाक्षाद्व्याप्या च या पृथिवीत्वजातिः तद्भेदमादाय दृष्टान्ते घटत्वे साध्यपर्यवसानम् । पक्षे च पृथिवीत्वेतदसम्भवेन आत्मत्वजातिमादायैव साध्यपर्यवसानं कार्यमित्यात्मत्वजातिसिद्धिः । घटत्वरूपजातिभेदमादाय सिद्धसाधनतावारणाय द्रव्यत्वसाक्षाद्व्याप्येति जातिविशेषणम् ॥

द्रव्यत्वसाक्षाद्व्याप्यजातिः । तद्व्याप्यजात्यव्याप्यत्वे सति तद्व्याप्यत्वं हि तत्साक्षाद्व्याप्यत्वम् । यथा पृथिवित्वं द्रव्यत्वसाक्षाद्व्याप्यम् । तत् द्रव्यत्वम् । तद्व्याप्यजातिः जलत्वादिः । तद्व्याप्यत्वे सति द्रव्यत्वव्याप्यत्वात् । न तथा घटत्वम् । तत् द्रव्यत्वम् । तद्व्याप्यं पृथिवीत्वम् । तद्व्याप्यत्वेन तद्व्याप्याव्याप्यत्वाभावात् । द्रव्यत्वसाक्षाद्व्याप्यजातिभिन्नमित्युक्ते जलत्वादीनामपि द्रव्यत्वसाक्षाद्व्याप्यजातित्वेन तद्भिन्नत्वसिद्ध्याऽऽर्थान्तरमतो जलत्वतेजस्त्ववायुत्वमनस्त्वेतरेति । अतः सर्वं सार्थकम् । ननु तथापि जलत्वादीतरसाक्षाद्व्याप्यजातिर्द्रव्यत्वं तद्भिन्नत्वसिद्ध्याऽऽर्थान्तरम् । नच द्रव्यत्वस्य द्रव्यत्वं न व्याप्यम् । अभेदे व्याप्यव्यापकभावानङ्गीकारात् । अन्यथा शब्दो नित्यः कृतकत्वादित्यत्र कृतकत्वस्योपाधित्वप्रसङ्गात् । कृतकत्वस्यानित्यत्वव्यापकत्वात् । अभेदे व्याप्यव्यापकभावानभ्युपगमेन कृतकत्वाव्यापकत्वाच्च । अतस्तदङ्गीकारे तु नायं दोषः । कृतकत्वस्य कृतकत्वव्यापकत्वेन साधनव्यापकत्वात् । अतः कथमिति चेन्न । द्रव्यत्वस्य द्रव्यत्वव्याप्यत्वेऽपि साक्षाद्व्याप्यत्वाभावात् । तथाहि । तद्व्याप्यजात्यव्याप्यत्वे सति तद्व्याप्यत्वं तत्साक्षाद्व्याप्यत्वम् । नच द्रव्यत्वे तदस्ति । तत् द्रव्यत्वम् । तद्व्याप्यं द्रव्यत्वं तद्व्याप्यत्वं द्रव्यत्वे वर्तते नतु तद्व्याप्यत्वम् अतो न दोष इति जलत्ववदिति ॥ **नचेति** ॥ जलत्वे साध्यव्यापकत्वात् पक्षे साधनाव्यापकत्वात् पृथिवीत्वे तरत्वमुपाधिरिति नेत्यर्थः । कुत इत्यत आह — **पक्षेतरत्वादिति** ॥ पक्षेतरत्वस्याप्युपाधित्वं किं न स्यादिति चेत् तथात्वे पर्वतो वह्निमान्धूमवत्त्वादित्यत्र महानसे साध्यव्यापकत्वात्पक्षे साधनाव्यापकत्वाच्च पर्वतेतरत्वमुपाधिस्स्यात् । तथाचानुमानमात्रोच्छेदः स्यादिति भावः । ननु विषमोयमुपन्यासः पर्वतो वह्निमानित्यत्र यदि वह्निर्न

स्यात् तर्हि धूमोऽपि न स्यादित्यनुकूलतर्कबलात्पर्वते वह्निसिद्धौ तत्र पर्वतेतरत्वाभावेन साध्याव्यापकत्वात्पर्वतेतरत्वस्य नोपाधित्वम् । यथाहुः

'अनुकूलेन तर्केण सनाथे सति साधने ।
साध्यव्यापकताभङ्गात्पक्षे नोपाधिसम्भव' इति ।

सनाथे सस्वामिक साधने सति पक्षे साध्यव्यापकताभङ्गादिति सम्बन्धः । प्रकृते चानुकूलतर्काभावात् । वह्निरनुष्णः पदार्थत्वादित्यत्र वह्नीतरत्वस्येव (पक्षेतरत्वस्यापि) पृथिवीत्वेतरत्वस्याप्युपाधित्वं युक्तमित्यत आह — अनुकूलतर्काणामिति ॥ आत्मपदप्रवृत्तिनिमित्तस्य जातित्वाङ्गीकारे लाघवमित्यादिनेति शेषः । तथा चात्राप्यनुकूलेन तर्केण बलेन पक्षे साध्यसिद्धौ तत्र पृथिवीत्वेतरत्वाभावेन साध्यव्यापकत्वान्नायमुपाधिरिति भावः । पृथगुपन्यासे गौरवादाह — एवमिति ॥ जलत्वं पृथिवीत्वतेजस्त्ववायुत्वमनस्त्वेतरद्रव्यत्वसाक्षाद्व्याप्यजातिभिन्नं जातित्वात् पृथिवीत्ववदित्याद्यूह्यमित्यर्थः ॥

आत्मत्वजातिसाधक अनुमानं

**(२०) द्रव्यत्वं पृथिवीत्वजलत्वतेजस्त्ववायुत्वमनस्त्वेतरजातिं प्रति साक्षाद्व्यापकं सत्तासाक्षाद्व्याप्यजातित्वात् गुणत्ववत् । सर्वाणि मनांसि स्पर्शानधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिमद्व्यतिरिक्तानि द्रव्यत्वात् सत्ताधिकरणत्वात् प्रमेयत्वाद्वा पृथिवीवत् । दिग्भेदवादिनां तु सर्वत्र दिक्त्वानधिकरणत्वग्रहणं कार्यम् । सर्वा पृथिवी जलत्वतेजस्त्ववायुत्वमनस्त्वानधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिमद्व्यतिरिक्ता द्रव्यत्वात्, सत्ताधिकरणत्वाद्वा जलवत् । सत्ता द्रव्यत्वान्यात्मनिष्ठजात्यन्या जातित्वात्, प्रमेयत्वाद्वा घटत्ववत् । द्रव्यत्वं वा सत्तान्यात्मनिष्ठजात्यन्यत् (आत्मनिष्ठसत्तान्यजात्यन्यत्) जातित्वात्**

**प्रमेयत्वात् घटत्ववत् । द्रव्यत्वं वा सत्तान्यात्मनिष्ठजात्यन्यत् (आत्मनिष्ठसत्तान्यजात्यन्यत्) जातित्वात् घटत्ववत् । आत्माणुत्ववादिनां तु आत्मा द्रव्यत्वव्याप्यजात्यधिकरणम् अविभुद्रव्यत्वात् पृथिवीवदित्याद्यनुमानान्यात्मभेदं साधयन्ति ।**

(२०) (भ.) ॥ **गुणत्ववदिति** ॥ अत्र रूपत्वजातिमादाय तद्व्यापकत्वेन साध्यपर्यवसानं बोध्यम् । साध्ये जातिं प्रति व्यापकमित्येवोक्तौ घटत्वमादायार्थान्तरता । अतः साक्षादिति । तावत्येवोक्ते पृथिवीत्वादिपञ्चकमादायार्थान्तरता । तन्निरासायेतरान्तम् । हेतौ जातित्वादित्येवोक्तौ सत्तायां व्यभिचारः । व्याप्यजातित्वादित्युक्तावपि पुनः सत्तायामेव व्यभिचारः । प्रमेयत्वं प्रति व्याप्यत्वात्तस्याः । अतः सत्ताव्याप्यजातित्वादिति । तावत्येवोक्ते घटत्वादौ व्यभिचारस्तद्वारणाय साक्षादिति ॥ **सर्वाणि मनांसीति** ॥ अत्र मनांसीत्येव निर्देशे कतिपयमनसां पक्षत्वसम्भवेन तेषु स्पर्शानाधिकरणानि यानि द्रव्यत्वसाक्षाद्व्याप्यमनस्त्वजातिमन्त्यवशिष्टमनांसि तद्व्यतिरिक्तत्वसिद्ध्याऽर्थान्तरता । अतः सर्वाणीति । इत्थं च जातिपदस्यात्मत्वजातिमादायैव पर्यवसानम् । स्पर्शानधिकरणेति विशेषणेन पृथिवीत्वजलत्वतेजस्त्ववायुत्वजातिमतां पृथिव्यादीनां व्यावर्तितत्वात् । सर्वेषामपि मनसां पक्षीकृतत्वेन मनस्त्वजातिमतां मनसामपि ग्रहीतुमशक्यत्वात् । स्वस्य स्वव्यतिरिक्तत्वायोगात् । आकाशकालदिशां च द्रव्यत्वव्याप्यजात्यनाश्रयत्वात् । साध्ये जातिमद्व्यतिरिक्तानीत्येवोक्ते सत्तादिजातिमद्गुणकर्मव्यतिरिक्तत्वसिद्ध्याऽर्थान्तरम् । अतो व्याप्येति । तर्ह्यपि सत्ताजातिव्याप्यगुणत्वकर्मत्वजातिमद्गुणकर्मव्यतिरिक्तत्वसिद्ध्याऽर्थान्तरम् । अतो द्रव्यत्वेति । तर्ह्यपि

द्रव्यत्वव्याप्यघटत्वादिजातिमद्धटादिव्यतिरिक्तत्वसिद्ध्याऽर्थान्तरम् । अतः साक्षादिति । अथाऽपि द्रव्यत्वसाक्षाद्व्याप्यपृथिवीत्वादिजातिमत्पृथिव्यादि-चतुष्टयातिरिक्तत्वसिद्ध्याऽर्थान्तरम् । अतः स्पर्शानधिकरणेति । नन्वेवं स्पर्शानधिकरणद्रव्यत्वव्याप्यजातिमत्पृथिव्यादिचतुष्टयातिरिक्तमित्येवालम् । साक्षादिति व्यर्थम् । द्रव्यत्वपरम्पराव्याप्यघटत्वादिजातिमतां घटादीनां स्पर्शानधिकरणपदेनैव व्यावर्तितत्वादिति चेत् । सत्यम् । तथाऽप्या-त्मत्वस्य द्रव्यत्वसाक्षाद्व्याप्यत्वसिद्ध्यर्थं तदिति केचिदाहुः । एके त्वभेदेऽपि व्याप्यव्यापकभावमङ्गीकृत्य द्रव्यत्वस्यापि द्रव्यत्वव्याप्यत्वमस्त्येवेति द्रव्यत्वव्याप्यजातिपदेन द्रव्यत्वजातेरेव ग्रहणसम्भवेन तत्सिद्ध्या पुनरर्थान्तरता स्यात् । अतस्तन्निरासाय साक्षादिति । साक्षाद्व्याप्यत्वं च तद्व्याप्याव्याप्यत्वे सति तद्व्याप्यत्वम् । द्रव्यत्वस्य च द्रव्यत्वव्याप्यत्वादेव तद्व्याप्याव्याप्यत्वाभावेन द्रव्यत्वसाक्षाद्व्याप्यत्वाभावात् । आत्मत्व-जातिमादायैव तस्य पर्यवसानमिति साक्षात्पदकृत्यामाचक्षते । वस्तुतस्त्वभेदे व्याप्यव्यापकभावो नास्त्येवेति पक्षे साक्षात्पदमनपेक्षितमेवेति बोध्यम् ॥ **पृथिवीवदिति** ॥ तत्र तादृशमनस्त्वजातिमादाय तद्वन्मनोव्यतिरिक्तत्वेन साध्यं बोध्यम् । ननु दिक्षु स्वाभाविकभेदवादिनां मते दिक्त्वस्य जातित्वोपगमेन पृथिवीत्वादिपक्षकानुमानेषु दिक्त्व-भिन्नत्वसिद्ध्या द्रव्यत्वपक्षकानुमाने दिक्त्वजातिं प्रति साक्षाद्व्यापकत्वसिद्ध्या मनःपक्षकानुमाने दिक्त्वजातिमद्दिग्भेदसिद्ध्याऽर्थान्तरतैवेति तत्राह — **दिग्भेदवादिनां त्विति** ॥ तानुद्दिश्येत्यर्थः ॥ **दिक्त्वानधिकरणत्वग्रहणमिति** ॥ उपलक्षणमेतत् । दिक्त्वग्रहणमित्यपि ग्राह्यम् । अत्र सर्वत्रेत्युक्तत्वात् । तथा च मनःपक्षकानुमाने स्पर्शानधिकरणेतिवत् दिक्त्वानधिकरणेति

पूरणीयम् । इतरानुमानेषु जलत्वादिसमकक्षतया दित्त्वेति पूरणीयमिति भावः । एवमेव वक्ष्यमाणपृथिवीपक्षकानुमानेऽपि दित्त्वानधिकरणमित्यपि द्रष्टव्यम् । अत एवात्र सर्वत्रेत्युक्तम् ॥ **सर्वा पृथिवीति** ॥ अत्रापि सर्वपदकृत्यं यत्किञ्चित्पृथिवीपक्षीकारे उक्तरूपपृथिवीत्वजातिमदवशिष्ट-पृथिवीव्यतिरिक्तत्वसिद्ध्याऽर्थान्तरवारणमेव पूर्ववदनुसन्धेयम् । साध्ये जलादिभेदमादायार्थान्तरतानिरासायानधिकरणान्तम् । गुणादिव्यति-रिक्तत्वमादाय तद्वारणाय द्रव्यत्वव्याप्येति जातिविशेषणम् । अत्रापि साक्षात्पदमात्मत्वस्य द्रव्यत्वसाक्षाद्व्याप्यत्वसिद्ध्यर्थमित्याहुः ॥ **जलत्व-वदिति** ॥ अत्र पृथिवीभेदमादाय साध्यपर्यवसानम् ॥ **सत्तेति** ॥ द्रव्यत्वान्या आत्मनिष्ठा या जातिस्तदन्येत्यर्थः । अत्रात्मनिष्ठद्रव्यत्वजातिव्युदासाय द्रव्यत्वान्येति ॥ **पृथिवीत्वादिवारणायात्मनिष्ठेति** ॥ सा च जातिरात्मत्वं विना नान्या भवितुमर्हतीति भावः ॥ **घटत्ववदिति** ॥ अत्र सत्ताजातिमादाय तदन्यत्वं साध्यं बोध्यम् ॥ **द्रव्यत्वं वेति** ॥ अत्रापि द्रव्यत्वभेदमादाय दृष्टान्ते साध्यपर्यवसानम् ॥ **अविभुद्रव्यत्वादिति** ॥ अत्राकाशादावनैकान्त्य-वारणायाविभ्विति । गुणादौ तद्वारणाय द्रव्यत्वादिति । नैय्यायिकादिभि-रात्मनोऽणुत्वानङ्गीकारात्तद्रीत्या हेतोरसिद्धिशङ्कावारणायादावेवात्माणुत्व-वादिनामित्युक्तम् ॥ **इत्याद्यनुमानानीति** ॥ अत्रादिपदेनात्मत्वं जातिः स्वाश्रयरूढपदप्रवृत्तिनिमित्तत्वात् घटत्ववत् । आत्मपदं स्ववाच्य-निष्ठसत्ताद्रव्यत्वान्यजातिप्रवृत्तिनिमित्तकं रूढत्वात् घटपदवत् । आत्मा वा आत्मपदप्रवृत्तिनिमित्तजात्याश्रयस्तत्पदरूढार्थत्वात् । यो यत्पदरूढार्थः स तत्पदप्रवृत्तिनिमित्तजात्याश्रयः । यथा घटपदरूढार्थो घटो घटपदप्रवृत्ति-निमित्तघटत्वरूपजात्याश्रय इत्यादीन्यनुमानानि ग्राह्याणि ।

(२०) (मु.) ॥ **साक्षाद्व्यापकमिति** ॥ तद्व्याप्यतयाऽऽत्मत्वजातिसिद्धिरिति भावः । घटत्वादिव्यापकत्वेनान्यथासिद्धिवारणाय प्रतिज्ञायां साक्षादिति । व्याप्यान्तरशून्ये चरमव्याप्ये शरावोदञ्चनत्वादौ व्यभिचारवारणाय हेतौ साक्षाद्व्याप्येति । जातिपदं स्वरूपकथनम् ॥ **जातिमद्व्यतिरिक्तानीति** ॥ व्यतिरेकप्रतियोगिविशेषणतयाऽऽत्मत्वजातिसिद्धिरिति भावः । मनोऽन्तरादन्यथासिद्धिवारणाय सर्वाणीति पक्षविशेषणम् । अथाऽपि मनसामन्योन्यं भेदेनान्यथासिद्धिरिति चेन्न । मनस्त्वावच्छिन्नव्यतिरेकाधिकरणत्वस्य साध्यत्वात् । न चैवं साध्यवैकल्यम् । मनस्त्वावच्छिन्नेति स्थाने द्रव्यत्वसाक्षाद्व्याप्येति सामान्याश्रयणोपपत्तेः । यद्वा, द्रव्यत्वसाक्षाद्याप्यजातिमद्व्यतिरिक्तानीत्यस्योक्तजात्यवच्छिन्नप्रतियोगिताकव्यतिरेकाधिकरणानीत्यर्थः । पृथिव्यादिचतुष्टयवारणाय स्पर्शानधिकरणेति । जात्यादिव्यतिरिक्तसिद्धसाधनतावारणाय[1] जातिमदिति । गुणादिभ्यस्तद्वारणाय द्रव्यत्वव्याप्येति ॥ **पृथिवीवदिति** ॥ उक्तरूपमनोभिन्ना सेति ज्ञेयम् । भेदवादिनां तस्यापि जातित्वेन सर्वत्रान्थासिद्धिरित्यत आह — **सत्तेति** ॥ अत्र द्रव्यत्वव्याप्यात्मनिष्ठत्वेनान्यथासिद्धिवारणाय द्रव्यत्वान्येति । उक्तरूपसत्ताभिन्नं तदिति ज्ञेयम् । द्रव्यत्वमिति पूर्ववत् ॥ **आत्मेति** ॥ सत्ताद्रव्यत्वाभ्यामर्थान्तरवारणाय द्रव्यत्वव्याप्येति । आकाशादौ व्यभिचारवारणाय हेतावविभ्विति । एतदसिद्धिर्माभूदित्यादावात्माणुत्ववादिनामित्युक्तम् ॥ **इत्यादीति** ॥ पृथिवीगुणा जलतेजोवायुमनस्त्वासमानाधिकरणजातिसमानाधिकरणगुणभिन्ना गुणत्वाद्रूपवत् । बुद्धिः सत्ताद्रव्यत्वान्य-

---

[1] '-व्यतिरिक्तत्वसिध्या सिद्धसाधनता-' इति पाठेन भाव्यमिति भाति ।

ज़ातिसमानाधिकरणा शब्दान्यगुणत्वाद्रूपवत् । पृथिवी जलादीतरविशेषगुणाधिकरणजातिमद्भिन्ना प्रमेयत्वाज्जलवत् । आत्मत्वमात्मसमानाधिकरणप्रतियोगिताकसमानाधिकरणं धर्मत्वात्पटवदित्याद्यूह्यम् ।

(२०) (कु.) ॥ **द्रव्यत्वमिति** ॥ घटत्वादिव्यापकत्वमादाय सिद्धसाधनतावारणाय साक्षादिति । इतरं तद्व्यापकत्वमादाय सिद्धसाधनतावारणाय[1]। व्यापकत्वमधिकदेशवृत्तित्वम् । तेन द्रव्यत्वस्य स्वव्यापकत्वमादाय न सिद्धसाधनता । जातिं प्रति व्यापकत्वमेव विशिष्टजातिव्यापकत्वम् । तेन गुणकर्मपृथिव्यन्यत्वविशिष्टसत्ताव्यापकत्वमादाय न सिद्धसाधनता । अपरजातौ व्यभिचारवारणाय सत्तासाक्षाद्व्याप्येति । तद्व्याप्यजात्यव्याप्यत्वे सति तद्व्याप्यत्वं तस्मात्साक्षाद्व्याप्यत्वम् ॥ **गुणत्वादिवदिति** ॥ गुणत्वादिसाक्षाद्व्यापकत्मादाय साध्यं बोध्यम् । कर्मत्वेऽप्युत्क्षेपणत्वादिसाक्षाद्व्यापकत्वमादाय साध्यसत्त्वान्न व्यभिचारः ॥ **सर्वाणि मनांसीति** ॥ कतिपयमनसां पक्षीकारेण मनोऽन्तरव्यतिरिक्तत्वमादाय सिद्धसाधनतावारणाय सर्वाणीति । स्पर्शानधिकरणेति जातिमतो विशेषणम् । रूपादिव्यतिरिक्तत्वमादाय तद्वारणाय द्रव्यत्वसाक्षाद्व्याप्येति । साक्षात्पदमात्मत्वस्य द्रव्यत्वसाक्षाद्व्याप्यत्वसिद्ध्यर्थमिति ॥ **पृथिवीवदिति** ॥ मनोव्यतिरिक्तत्वमादाय साध्यं बोध्यम् ॥ **दिग्भेदवादिनामिति** ॥ स्वाभाविकदिग्भेदवादिनामव्यवहितानुमाने स्पर्शानधिकरणदित्त्वानधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिमद्व्यतिरिक्तानीति साध्यं कर्तव्यम् । दित्त्वभेदमादाय सिद्धसाधनतावारणाय सर्वानुमानेषु दित्त्वेतरत्वं साध्ये विशेषणं देयमिति भावः ॥ **सर्वा पृथिवीति** ॥

---

[1] एतद्वाक्याशयः न स्फुटः । तथा इतरम् इति प्रयोगोऽपि असाधु, इतरत् इति हि साधु ।

यत्किञ्चित्पृथिवीपक्षीकारे पृथिव्यन्तरभेदमादाय सिद्धसाधनमिति सर्वेति । अधिकरणान्तं जलादिभेदमादाय सिद्धसाधनतावारणाय । गुणत्वादि-व्यतिरिक्तत्वमादाय तद्वारणाय द्रव्यत्वसाक्षाद्व्याप्येति । साक्षात्पदमात्मत्वस्य साक्षाद्व्याप्यत्वसिद्ध्यर्थम् ॥ **जलत्ववदिति**[1]॥ पृथिवीभेदमादाय साध्यं बोध्यम् ॥ **सत्तेति** ॥ द्रव्यत्वभेदमादाय सिद्धसाधनतावारणाय द्रव्यत्वा-न्येति । गुणत्वादिभेदमादाय तद्वारणायात्मनिष्ठेति । आत्मभेदाभावेऽ-प्यात्मवृत्तिभेदमादाय तद्वारणाय जातीति ॥ **घटत्ववदिति** ॥ सत्ताभेदमादाय साध्यं बोध्यम् ॥ **द्रव्यत्वं चेति** ॥ पूर्ववदेव कृत्यानि । दृष्टान्ते तु द्रव्यत्वमादाय साध्यं बोध्यम् ॥ **आत्माणुत्ववादिनामिति** ॥ स्वरूपासिद्धिपरिहारायेदम् । गगनादौ व्यभिचारवारणायाविभ्विति । गुणादौ व्यभिचारवारणाय विशेष्यम् ॥ **आत्मभेदं साधयन्तीति** ॥ आत्मत्वजातिसाधनेनेति भावः ।

(२०) (इ.) ॥ **द्रव्यत्वमिति** ॥ **साक्षाद्व्यापकमिति** ॥ तद्व्यापकीभूत-स्वभिन्नं प्रत्यव्यापकत्वे सति तद्व्यापकमित्यर्थः । इदं च घटत्वादि-व्यापकतामादाय सिद्धसाधनतावारणाय साक्षाद्व्याप्येति । घटत्वादौ व्यभिचारवारणाय समवायेन सत्तानिरूपितव्याप्यत्वलाभाय हेतौ जातित्वोत्कीर्तनम् । अन्यथा कालिकेन घटत्वस्य जन्यमात्रे सत्त्वात्सत्ता-व्याप्यजातेः समवायेन कस्या अपि सर्वत्राभावाद्घटत्वस्यापि सत्ताव्याप्य-जात्यव्याप्यत्वगर्भितसाक्षाद्व्याप्यत्वं प्रसज्येत । सत्ताव्याप्यत्वस्य सम्बन्ध-सामान्येन निवेशे कालिकेन तथात्वाभावादसिद्धिश्च स्यादतस्तदावश्यकम् ॥ **सर्वाणि मनांसीति** । अत्रैतदनुमानात्पूर्वं द्रव्यत्वं पृथिवीत्वजलत्व-

---

[1] 'जलवदि'तिपाठेन भाव्यम् ।

तेजस्त्ववायुत्वमनस्त्वभिन्नद्रव्यत्वसाक्षाद्व्याप्यजातिभिन्नं प्रमेयत्वादिति पाठो दृश्यते । तत्र द्रव्यत्वसाक्षाद्व्याप्यत्वं द्रव्यत्वसाधारणमेव निर्वाच्यम् । तेनात्मत्वजातिसिद्धेः प्राक् साध्याप्रसिद्धिः प्रकृतानुमानसिद्धात्मत्वजातावेव व्यभिचारादस्यानुमानस्यासदनुमानत्वमिति शङ्कानवकाशः । न चानुमित्युत्पत्तेः पूर्वमात्मत्वजातेरेवानुपस्थितत्वान्न तत्र व्यभिचारग्रहावकाशः सिद्ध्यनन्तरं तस्या जातेः सिद्धत्वेनैव व्यभिचारग्रहं प्रत्युपजीव्यत्वेन व्यभिचारग्रहेण तद्विघटनानुपयोग इति वाच्यम् । तत्सिद्ध्युत्तरमप्युक्तव्यभिचारग्रहस्य परामर्शाप्रामाण्यग्रहसम्पादनद्वारोक्तानुमित्यप्रामाण्यग्रहजननेन प्रकृतसाध्यासिद्धिविघटकस्याऽकरसिद्धत्वात् ।

**सर्वाणि मनांसीत्यत्र** मनस्त्वावच्छेदेन साध्यसिद्धेरुद्देश्यतालाभाय सर्वाणीति । तत्सामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे[1] ऽनुमित्यनन्तरं मनस्त्वसामानाधिकरण्येन साध्याभावसन्देहानिवृत्तौ तत्रैव प्रकृतहेतोर्व्यभिचारसन्देहाहिताप्रामाण्यसन्देहस्य प्रकृतपरामर्शजननेना[2]नुमित्यप्रामाण्यसन्देहः स्यात् । एवं किञ्चिन्मनोवत्तदन्यमनसामपि हेतु(मत्त्व)सत्त्वेऽपि साध्याभावः किन्न स्यादित्यप्रयोजकताशङ्का च स्यात्तन्निरासाय यत्नान्तरकरणम् । प्रक्षालनाद्धीति न्यायेनानुचितमिति मनस्त्वावच्छेदेनैव साध्यसाधनस्योचितत्वात् । यत्किञ्चिन्मनोभेदस्यान्यमनसि सत्त्वात्सिद्धसाधनतावारणाय सर्वाणीत्युक्तमिति तु न सत् । तथात्वेऽपि तन्मनस्येतन्मनोभेदरूपसाध्यस्यैतन्मनसि तन्मनोभेदरूपसाध्यस्य सत्त्वेन सिद्धसाधनताऽनुद्धारात् । न चैक एव भेदः सर्वपक्षेषु नास्तीति वाच्यम् ।

---

[1] `साध्यत्वे' मु.

[2] `-परामर्शे जननेन-' मु.

किमतः साध्यतावच्छेदकाक्रान्तव्यक्तीनां मध्ये एकैकत्र पक्षे एकैकस्या व्यक्तेः सत्त्वमात्रेण सिद्धसाधनताया आवश्यकत्वात् । अन्यथा पर्वतत्वावच्छेदेन वह्निनिश्चयदशायां सिद्धसाधनताभावप्रसङ्गात् । न चैकभेद एवसाध्य इति वाच्यम् । भेदे एकत्वसङ्ख्यारूपगुणाभावेन साध्याप्रसिद्धेः । अन्यादृशस्य निवेशे गुणस्य वा तत्राङ्गीकारेऽप्येकत्वस्याव्यावर्तकतयैक-भेदत्वरूपसाध्यतावच्छेदकस्यापि सर्वभेदेष्वव्याहतेः । अन्यादृशं तु प्रकृतोपयोगि निर्वोढुमशक्यम् । नियतैकव्यक्तेरेकसाध्यतेत्यसत् पक्षे[1] दृष्टान्ते चैकभेदस्यानुपादानात् । न च मनस्त्वावच्छेदेन साधनेऽपि तत्तन्मनोभेदाः तादृशजातिमत्स्पर्शानधिकरणप्रतियोगिताका भवन्त्येवेति तानादाय सिद्धसाधनता । तादृग्जातिमत्स्पर्शानाधिकरणत्वावच्छिन्न-प्रतियोगिताकभेदस्तु न निवेशयितुं शक्यते । तादृशजातिमत्स्पर्शानधिकरणं नेति प्रतीतिसिद्धभेदरूपस्य साध्यमनस्त्वजातिमति मनस्यभावेनाबाधात् । अतस्तादृशयत्किञ्चिदेकजातीयाव्यापकप्रतियोगिताकभेद एव साध्यत इति वाच्यम् । तथा च कथं तन्मनोभेदमादाय सिद्धसाधनता सर्वत्वेन निवेशोत्तरमिति वाच्यम् । हन्त तर्हि तददानेऽपि कथं सिद्धसाधनता । भवदुक्तसाध्यपरिष्कारे व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदस्य प्रत्येकाङ्गीकारे सिद्धसाधनतैव । मनोघटभेदस्य मनस्यबाधात् । यत्किञ्चित्त्वनिवेशादननुगमे गौरवं च । स्पर्शानधिकरणवृत्ति-तादृशजात्यवच्छिन्नप्रतियोगिताकभेदत्वेन[2] साध्यत्वात्तत्र तन्मनोभेदमादाय सिद्धसाधनताप्रसक्तेः । तस्मादुक्तप्रयोजनमेव युक्तम् । पृथिवीभेदादिक-

[1] `-व्यक्तेरेव साधनेऽसत्पक्षे' मु.

[2] (`-त्वेनैव' मु.)

मादाय सिद्धसाधनतावारणाय स्पर्शानधिकरणेति । तेषामप्युत्पत्तिकाला-वच्छेदेन स्पर्शाभाववत्त्वात्पुनस्तद्दोषवारणाय स्पर्शानधिकरणत्वावच्छिन्न-प्रतियोगिताकत्वनिवेशः[1] । द्रव्यवृत्तिजातिनिवेशेऽपि सत्तायास्तथात्वात्तदा-श्रयगुणभेदमादाय सिद्धसाधनतावारणाय द्रव्यत्वव्याप्यत्वनिवेशः ।[2] द्रव्यत्वस्यापि द्रव्यत्वव्याप्यत्वात्तदाश्रय[3] गगनादि[4]भेदमादाय सिद्ध-साधनतावारणाय साक्षादिति । साक्षात्त्वं च मुख्यत्वं प्रकृते विवक्षितम् । तच्च भेदघटितम् । अभेदे व्याप्यव्यापकभावस्य प्राचीनैरनङ्गीकृतत्वेन तस्य मुख्यत्वात् । तथा च[5] द्रव्यत्वभिन्नद्रव्यत्वव्याप्यजातिमत्स्पर्शाधिकरणमिति लभ्यते । गगनादिकं च न तथेति[6] सिद्धसाधनतावकाशः । इदं तु यथाश्रुतसाध्यानुसारेणापाततः स्पर्शानधिकरणद्रव्यवृत्तिजात्यवच्छि-प्रतियोगिताकभेदनिवेशस्यावश्यकत्वेन सत्ताद्रव्यत्वे समुदायोक्त-दोषासंस्पर्शात् । परन्तु गुणभेदादिकमुपादाय दोषवारणाय द्रव्यवृत्तित्वमात्रं जातौ देयमित्याहुः । अन्ये त्वत्र व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिता-कभेदानङ्गीकारात्तादृशजातिमत्प्रतियोगिताकभेदत्वेनैव(-त्वेन) साध्यता । तत्तन्मनोभेदमादाय सिद्धसाधनतावारणं तु साध्यीभूतभेदे पक्षतावच्छेदक-व्यापकताभानस्यावश्यकत्वात्तत्र[7] पक्षतावच्छेदकीभूतमनस्त्ववन्निष्ठभेद-प्रतियोगितानवच्छेदकत्वलक्षणं भेदघटितमेव व्यापकत्वं साध्ये वा तत्साध्यतावच्छेकसम्बन्धे वा भासते न तु मनोनिष्ठात्यन्ताभाव-

---

1 `स्पर्शानधिकरणत्व-' मु.

२. इदं वाक्यम् हु.पाठे नास्ति ।

3 अस्मिन्नपि वाक्ये एतत्पर्यन्तं हु.पाठे नास्ति ।

४. `गुणादि-' हु.

5 `तथा च' इति हु.पाठे नास्ति ।

६. `च तथेति न' मु.

7 `-भेदपक्षतावच्छेदक-' मु.

प्रतियोगितानवच्छेदकसाध्यतावच्छेदकवत्त्वरूपम् । इदं[1] चैकैकभेदस्य तादृशभेदघटितव्यापकत्वाभावादेव न सिद्धसाधनतावकाशः । तथा च स्पर्शानधिकरणीभूतद्रव्यत्वसत्तादिजातिमद्गगनादिभेदमादाय सिद्धसाधनतावारणाय द्रव्यत्वसाक्षाद्व्याप्यत्वं जातौ देयमेव । परन्तु द्रव्यत्वस्य स्वव्याप्यत्ववत्स्वसाक्षाद्व्याप्यत्वस्या-प्यभेदेनोक्तदोषानिस्तारात् साक्षात्पदस्य मुख्यार्थकत्वमाश्रित्य द्रव्यत्वभिन्नत्वे सति तद्व्याप्यत्वार्थकत्वे पर्यवसानं कर्तव्यमित्याहुः । परे तु[2] अवच्छेदकावच्छेदेनानुमितौ साध्ये वा साध्यतावच्छेदकसम्बन्धे वा यद्व्यापकत्वं भासते तन्न परामर्शे साध्ये वा तत्सम्बन्धे वा तद्भानमनुरुध्य किन्तु परामर्शस्यावच्छेदकावच्छेदेन हेत्ववगाहित्वमनुरूध्यैव । तच्चान्यत्र यथा[3] क्लृप्तं तथाऽत्रापीत्यङ्गीकर्तव्यम् । तथा च घटा रूपध्वंसवन्तः पर्वतो वह्निमानित्यनुमितिषु सर्वत्रात्यन्ताभावघटितव्यापकत्वभानस्यैवानुमितेरप्रामाण्यवारणायावश्यकत्वमभ्युपगन्तव्यतया[4] अत्रापि तद्भानस्यैव प्राप्त्या[5]ऽवच्छेदकावच्छेदेन साध्यसाधनेऽपि सिद्धसाधनताऽर्थान्तरयोरावश्यकत्वात् । न हीदं वाक्यं येन वक्तृतात्पर्यानुसारेणार्थावगाहिनीमनुमितिं परामर्शो जनयेत् । स्पर्शानधिकरणद्रव्यनिष्ठजात्यवच्छिन्नभेदसाधनेनैवाभिमतार्थसिद्धौ व्यासज्यवृत्तिधर्मावच्छिन्नभेदानभ्युपगमसाक्षाद्व्याप्यत्वनिवेश[6]साक्षात्पदार्थान्तरादितात्पर्याद्यनेकप्रयासस्य ग्रन्थकृतामनौचिती च । तस्मान्नेदं साक्षाद्व्याप्यत्वपदप्रयोजनकथनं युक्तं किन्तु हेतौ व्यर्थविशेषणघटितत्वे यथा

---

[1] `इत्थं' मु. २. `परन्तु' मु. ३. `तथा' मु.

[4] `-उपगन्तव्यम् । तथा च' मु. ५. `प्रसिद्ध्या' मु.

[6] `-भेदानभ्युपगमात्साक्षाद्व्याप्यत्वादिनिवेशेन' मु.

व्याप्यत्वासिद्ध्या[1] न तथा साध्यशरीरे वैयर्थ्यं साध्यविशेषणानामुद्देश्य-प्रतीत्यर्थत्वात् । उद्देश्यतापि[2] कुत इत्येतावन्मात्र-मवशिष्यते त(अ) त्र इत्थं ब्रूमः । पृथिवीत्वादिसमशीलत्वसिद्ध्यसिद्धिशङ्कान्तरनिरासद्वारेणेत्यभिप्राये-णेति[3] । शङ्कान्तरं च यथा घटदौ घटत्वव्याप्यचैत्रजन्यदशघटेषु चैत्रजन्यतावच्छेदकजातयोऽपि प्राचीनैरङ्गीकृता लिप्यादावनुभवसिद्धाश्च । जानेऽहं चैत्रस्येयं लिपिर्न मैत्रस्य तस्य तु विलक्षणेति सर्वलोकसिद्धव्यवहारात् । उत्पत्तिक्षणद्वितीयक्षण एव न(ना)श्यमाना अपि पदार्थाः प्राचां ग्रन्थे व्यवहृताः । तथा सुरभ्यसुरभ्यवयवारब्धद्रव्येऽव-यवगन्धेन कार्ये गन्धजनने विरुद्धम् गन्धद्वयस्य[4] कार्ये आपत्तिरेकस्यै-वोत्पत्तिरित्यत्र नियामकाभावात् । चित्रगन्धस्यापि सिद्धान्तेऽनङ्गीकारात्त-त्रावयविनि गन्धो नास्त्येव किन्त्ववयवगन्धस्यैव प्रत्यक्षं न चैवं चित्ररूपस्याप्यसिद्धिरिति वाच्यम् । बहिर्द्रव्यप्रत्यक्षे उद्भूतरूपस्य कारणतायाः क्लृप्तत्वेन धर्मिणि रूपाभावे तत्प्रत्यक्षानुपपत्त्या तत्सिद्ध्यर्थं चित्ररूपस्याभ्युपगमादिति प्राचां ग्रन्थे व्यवहारः । तथोक्तं तर्कदीपिकायाम् `**सुरभ्यसुरभ्यवयवारब्धे द्रव्ये परस्परविरोधे गन्धानुत्पादाच्चित्रगन्धानङ्गीकारात् । तत्राद्यक्षणावच्छिन्ने घटे उत्पन्नविनष्टघटादौ च गन्धवत्त्वलक्षणमव्याप्तमिति**' । इत्थं च प्रकृते चैत्रजन्येषूत्पन्नविनष्टदशघटेष्वेवासम्भाविता(नां) शीतानुष्णाशीत-वज्जलपृथिव्युभयारब्धचैत्रमैत्रजन्येषु केषुचिद्द्रव्येषु चित्रस्पर्शस्यापि

---

[1] 'व्याप्तत्वासिद्धिः' इत पाठेन भाव्यमिति भाति ।

[2] `उद्देश्यताकुक्षिषु' मु.

[3] `पृथिवीत्वादिसमशीलत्वं सिद्धं सिध्यतु शङ्कान्तर-' ह.

[4] `सुरभ्यसुरभ्यवयवारब्धद्रव्येऽवयवगन्धहेनकार्ये गन्धजनने विरुद्धगन्धद्वयस्य' मु.

सिद्धान्तविरुद्धतया कस्यापि स्पर्शस्याभावेन स्पर्शानधिकरणेषु वा चैत्रमैत्र[1]जन्यतावच्छेदकजातीनामनुभवसिद्धानां चापह्नोतुमशक्तत्वात्ता जातीरुपादाय सिद्धसाधनम् । तासां स्पर्शानधिकरणवृत्तित्वात् । तदवच्छिन्नभेदस्य मनस्यभावात् (अबाधात्) । एतेन स्पर्शासामानाधिकरण्यस्य जातौ निवेशेनैव द्रव्य(त्व)सत्त्वयोर्वारणात् द्रव्यत्वव्याप्यत्वमेव नोपादेयं कुतस्तरां साक्षात्पदमित्यपि प्रत्युक्तम् । उक्तजातीरुपादाय सिद्धसाधनताया अवारणादिति । तच्छङ्कानिरासस्तु तादृशपदार्थस्वरूपाणां बलवतीभिर्युक्तिभिर्निराकरणपूर्वकं तादृशजातिखण्डनेन वा ता अङ्गीकृत्य वा प्रकृतानुमाने जातिषु द्रव्यत्वसाक्षाद्व्याप्यत्वविशेषणप्रक्षेपेण वा भवति (भवतीति) तत्र तत्खण्डनादीनां प्रकृतानुपयोगेनानवसरदुःस्थत्वात्तदङ्गीकृत्यैव समानाधिकरणे सिद्धान्ते उत्कर्षसत्त्वात्स्वाभिमतात्मत्वजातेः पृथिवीत्वसमशीलत्वस्यापि सिद्धेश्चैतदेव युक्तमित्याशयेन द्रव्यत्वसाक्षाद्व्याप्यत्वोपादानमित्याहुः ॥ **दिग्भेदवादिनां त्विति** ॥ प्राचीनैकदेशिसिद्धान्तिनेत्यर्थः । अत्र सर्वत्र दिक्त्वानधिकरणत्वमित्येतदनुमानपूर्वोत्तरानुमानसहितैतदनुमानाभिप्रायेण । जातिभेदसाधकानुमानेषु दिक्त्वमादाय सिद्धसाधनतावारणाय दिक्त्वभेदोऽपि जातौ निवेश्य इति ज्ञेयम् ॥ **सर्वा पृथिवीति** । अत्र सर्वपदप्रयोजनं पूर्ववदेव ॥ **साक्षाद्व्याप्येतीति** ॥ अन्ये त्वित्युक्तमतरीत्याऽपरे त्वित्युक्तमतरीत्या केवलोद्देश्यप्रतीत्यर्थकत्वेन वा । सार्थकमिति ध्येयमित्याहुः । वस्तुतः पृथिवीत्वावच्छेदेन साध्यस्य साधनेऽपि पक्षतावच्छेदकव्यापकतावच्छेदकत्वस्यात्यन्ताभावघटितस्यैव साध्यतावच्छेदकभानस्यानुमितौ व्यवस्थापितत्वात् । जलत्वादि-

---

[1] `मैतादि' मु.

जातिचतुष्टयानधिकरणपृथिवीरूपद्रव्यवृत्तिघटत्वपटत्वाद्यवच्छिन्नप्रतियोगिताकभेदानामुक्तजातिचतुष्टयानधिकरणपृथिवीरूपद्रव्यवृत्तिजात्यवच्छिन्नप्रतियोगिताक[1]भेदत्वेन पृथिवीत्वव्यापकत्वात्सिद्धसाधनतावारणाय साक्षाद्व्याप्यत्वविशेषणं जातौ सार्थकमित्यनुसन्धेयम् । अन्ये तु 'सर्वाणि मनांसि' इत्यत्र तादृशजातिमद्व्यक्तिभेदस्य साध्यत्वे तत्तन्मनोभेदमादाय सिद्धसाधनता । तादृशजातिमत्त्वावच्छिन्नप्रतियोगिताकभेदसाधने बाधः । तादृशजातिशरीरे मनस्त्वस्यापि घटकत्वात् । अतस्तादृशयत्किञ्चिज्जातिसमनियतव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदः साध्यम् । तच्च प्रत्येकं सर्वमनस्सु वर्ततेऽतः सिद्धसाधनं दुर्वारमिति मनस्त्वसमनियतव्यासज्यवृत्तिधर्मस्य पक्षतावच्छेदक(ता)अलाभाय सर्वाणि मनांसीति । व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिकप्रत्येकवृत्तिधर्मावच्छिन्नभेदाभ्युपगमपक्षे मनस्त्वावान्तरजातिसिद्ध्याऽपि साध्यस्योपपन्नतयाऽर्थान्तरता स्यादिति जातिर्द्रव्यत्वसाक्षाद्व्याप्यत्वेन विशेषिता । तन्निवेशेऽपि पृथिवीत्वादिकमादाय सिद्धसाधनतावारणाय स्पर्शानधिकरणवृत्तीति । स्पर्शाधिकरणत्वं च (सर्ववाद्यभ्युपगत)सम्बन्धसामान्येन बोध्यम् । तेनात्मैक्येऽप्याकाशकालदिगात्मस्वात्मातिरिक्तोक्तत्रयेषु

---

1 जलत्वादिजातिचतुष्टयानधिकरणपृथिवीरूपद्रव्यवृत्तिघटत्वपटत्वाद्यवच्छिन्नप्रतियोगिताकभेदानामुक्तजातिचतुष्टयानधिकरणपृथिवीरूपद्रव्यवृत्तिजात्यवच्छिन्नं प्रति' मु. । `जलत्वादिजातिचतुष्टयानधिकरणपृथिवीरूपद्रव्यवृत्तिघटत्वपटत्वाद्यवच्छिन्नप्रतियोगिताकभेदानां घटत्वपटत्वाद्यवच्छिन्नप्रतियोगिताकभेदानाम् उक्तजातिचतुष्टयानधिकरणपृथिवीरूपद्रव्यवृत्तिजात्यवच्छिन्नप्रतियोगिताक' ह. । पाठद्वयाधारेण आयं पाठः सम्भाव्यते ।

कालदिशोर्बहुत्वमङ्गीकृत्य प्रत्येकं तयोर्वा गगनकालयोर्वा कालदिशोर्वो गगनदिशोर्वा जातिसिद्ध्याऽपि साध्यसत्त्वनिर्वाहादर्थान्तरतेति शङ्कानवकाशः । काले कालिकसम्बन्धेन दिशि च दिक्कृतविशेषस्पर्शसत्त्वेनोक्तजातिषु स्पर्शसामानाधिकरण्यविरहात् । दिक्कृतविशेषणतया दिगुपाधिषु वृत्त्यभ्युपगमान्मनस्त्वसङ्ग्रहणसम्भवेन दृष्टान्ते साध्यसत्त्वोपपत्तिः । न च तथाऽपि गगनात्मनोर्जातिसिद्ध्याऽपि सम्भवादर्थान्तरता दुर्वारेति वाच्यम् । शब्दासामानाधिकरण्यस्यापि जातिविशेषणत्वात् । न चात्मैक्येऽपि मनः साधारण्येन जात्यभ्युपगमसम्भवात्पुनरर्थान्तरता दुर्वारेति वाच्यम् । तथा सति मूर्तत्वस्यापि जातित्वापत्या साङ्कर्यसम्भवे तथाविधजातिकल्पनासम्भवाभावादित्यभिप्रायात् । मूर्तामूर्तोभयवृत्तिभिन्नत्वं वा देयम् । वस्तुतस्तु यथाश्रुते पृथिवीत्वादीनां द्रव्यत्वव्याप्यमूर्तत्वव्याप्यतया द्रव्यत्वसाक्षाद्व्याप्यत्वशेषणेनैव स्पर्शानधिकरणेत्यादि व्यर्थमेव स्यात् । अतः साक्षाद्व्याप्येत्येतद्द्रव्यविभाजकोपाधेः परिचायकमेव । तथाच स्पर्शासमानाधिकरणद्रव्यविभाजकजातिपर्याप्तावच्छेदकताकभेदः साध्यम् । तत्र प्रत्येकं कस्यापि मनसः पक्षत्वाऽङ्गीकारेऽपि न दोष इति सूचनाय सर्वाणि मनांसीत्युक्तम् । सर्वाण्येव मनांसीत्यर्थः । `सर्व एव शुभः काल' इत्यादाविव तद्व्यक्तित्वेन मनसामुपस्थितिसम्भवः । सर्वा पृथिवीत्यादावप्येवमेव प्रयोजनमूह्यमित्याहुः । आत्माणुत्वेति वक्ष्यमाणहेतोरसिद्धिवारणायाविभ्विति[1] गगनादौ गुणादौ च व्यभिचारवारणाय हेतुघटकविशेषणविशेष्यभागौ ॥ इत्याद्यनुमानानि चेति । आत्मा द्रव्यत्वन्यूनवृत्तिजातिमान्

---

[1] `-वारणायैतन्मतानुसारेणाविभ्विति' मु.

घटात्मसंयोगाद्घटवत् । आत्मा(न)णुत्वपक्षे शरीरात्मसंयोगाच्छरीरवदित्यादीनि द्रष्टव्यानि ।[1] अणुपक्षे तु पूर्वोक्तसाध्य एवाणुत्वं क्रियावत्त्वं वा हेतुर्मनदिदृष्टान्तः[2] । क्रियावत्त्वं च `सोऽस्माच्छरीरादुत्क्रम्ये'ति श्रुतिसिद्धमेव । अणुत्वपक्षे आत्मसंयोगान्तःकरण[3] एवेति वक्तुं शक्यत्वादिदं न घटते । कण्ठोक्तानुमानानामिवैषामप्यनुकूलतर्कसानाथ्येनार्थसाधकत्वात् ।

(२०) (का.) ॥ द्रव्यत्वमिति ॥ अत्र रूपत्वादिजातिमादाय दृष्टान्ते, आत्मत्वजातिमादाय पक्षे साध्यसत्त्वं बोध्यम् । द्रव्यत्वस्य पृथिवीत्वादिसाक्षाद्व्यापकतया सिद्धसाधनवारणायेतरान्तम् । अष्टद्रव्यवृत्त्युपाधिव्यापकत्वमादाय तद्दोषवारणाय जातिपदम् । तादृशजातित्वावच्छिन्नव्यापकत्वं जातेर्बाधितमतस्तादृशयत्किञ्चिदेकजातिव्यापकत्वलाभाय समासमुपेक्ष्य जातिं प्रतीत्येकवचनान्तं पृथगुपात्तम् । पृथिवीत्वादिभिन्नघटत्वव्यापकत्वमादाय सिद्धसाधनमतः साक्षात्पदम् ।

साक्षाद्व्यापकत्वं च तद्व्यापकजात्यव्यापकत्वम् । व्यापकत्वं चाधिकदेशवृत्तित्वम् । तच्च तदवच्छिन्नभेदवद्वृत्तित्वे सति तद्वद्वृत्तित्वम् । पृथिवीत्वादिभिन्नं यद्रूपत्वादि तद्वद्वृत्तिरूपत्वादिकं प्रति तदवच्छिन्नभेदवद्वृत्तिरसत्वादिकं प्रति च गुणत्वस्य व्यापकत्वात् दृष्टान्तस्य साध्यवैकल्यापत्तिरतः सत्यन्तविशेष्यदलयोर्निवेशः । तादृशधर्मा-

---

[1] इत आरभ्य वाक्यत्रयथाने हु.पाठे एतद्भिन्नमेकं वाक्यं दृश्यते । तदेवम् - `आत्मा द्रव्यत्वन्यूनवृत्तिजातिमा शब्दान्यविशेषगुणवत्त्वात् पृथिव्यात्माद्यन्यतरत्वाद्वा पृथिवीवत्' इति ।

[2] `मनआदिदृष्टान्त' इति पाठेन भाव्यमिति भाति ।

[3] `-गो+न्तः-' इति पाठेन भाव्यमिति भाति ।

व्यापकत्वस्य साध्यत्वे गुणत्वस्य विशेषगुणत्वादिरूपतादृशधर्मव्यापकतया साध्यवैकल्यमतस्तादृशजात्यव्यापकत्वमनुसृतम् । न च पृथिवीत्वादि-व्यतिरिक्तरूपत्वादिव्यापकगुणत्वाव्यापकत्वस्य द्रव्यत्वे सिद्धत्वात्सिद्ध-साधनमिति वाच्यम् । तदव्यापकत्वस्य तदवच्छिन्नभेदवदवृत्तित्वरूपतया तादृशगुणत्वाव्यापकत्वस्य द्रव्यत्वे बाधितत्वात् । न च पृथिवीत्वादिव्यतिरिक्तगुणत्वव्यापकसत्ताजात्यवच्छिन्नभेदवदवृत्तित्वमादाय सिद्धसाधनमिति वाच्यम् । तदवच्छिन्नभेदवदसमवेतत्वस्य विवक्षितत्वात् । सत्ताजात्यवच्छिन्नभेदवत्समवेतत्वस्यैवाप्रसिद्ध्या सिद्धसाधनानवकाशात् । एवं च स्वाधिकरणवृत्तित्वस्वावच्छिन्नभेदवद्वृत्तित्वोभयसम्बन्धेन पृथिवी-त्वादिव्यतिरिक्तकिञ्चिज्जातिविशिष्टजात्यवच्छिन्नभेदवदसमवेतत्वं साध्यमिति निष्कर्षः । उभयसम्बन्धप्रवेशात् पृथिवीत्वादिव्यतिरिक्तरूपत्वाद्यवच्छिन्न-भेदवद्वृत्तिस्तादृशरसत्वादिमद्वृत्तिश्च या रसत्वादिजातिः तद्व्यापकत्वेऽपि गुणत्वरूपदृष्टान्तस्य न साध्यवैकल्यम् । तेन रूपत्वव्यापकगुणत्वं प्रति गुणत्वस्य स्वाधिकरणवृत्त्यभावाप्रतियोगित्वेन व्यापकत्वादव्यापकत्वरूप-साध्यवैकल्यं दृष्टान्तस्येति निरस्तम् । अधिकदेशवृत्तित्वरूपव्यापकत्वस्यैव विवक्षितत्वादिति ।

हेतौ जातित्वमात्रस्य सत्तायामनैकान्त्यात् सत्ताव्याप्येति । व्याप्यत्वं च पूर्ववन्न्यूनवृत्तित्वरूपं ग्राह्यम् । अतः स्वस्य स्वव्याप्यत्वमादाय न दोषः । घटत्वादौ व्यभिचारवारणाय साक्षात्पदम् । यद्यपि घटत्वादौ पृथिवीत्वादि-भिन्नघटत्वादिसाक्षाद्व्यापकत्वरूपसाध्यसत्त्वान्न व्यभिचारावकाशः । तथापि पृथिवीत्वादिभिन्नद्रव्यत्वव्यापकद्रव्यगुणान्यतरत्वरूपधर्मान्तरा-व्यापकत्वसिद्ध्याऽर्थान्तरवारणाय तद्व्यापकजात्यव्यापकत्वे सति

तद्व्यापकत्वमेव साक्षाद्व्यापकत्वपदेन विवक्षणीयमित्याशयेन तदुपादानात् । अन्यथा तु नोपादेयमेव साक्षात्पदमित्यवधेयम् । गगनावृत्तिधर्मसमवायित्वे व्यभिचारवारणाय जातित्वनिवेशः । एतच्चोपलक्षणम् । द्रव्यत्वं मूर्तावृत्तिजातिमद्वृत्ति, सत्तासाक्षाद्व्याप्यजातित्वादमूर्तवृत्तिजातित्वाद्वा गुणत्वादिवत् । द्रव्यत्वमात्मवृत्तिजातिव्यापकम्, आत्मानात्मवृत्तिजातित्वात् सत्तावदित्यादिकमप्यूह्यम् ।

॥ सर्वाणि मनांसीति ॥ दृष्टान्ते मनस्त्वजातिमद्व्यतिरिक्तत्वेन पक्षे चात्मत्वजातिमद्व्यतिरिक्तत्वेन साध्यपर्यवसानं बोध्यम् ।

अत्र यत्किञ्चिन्मनसः पक्षत्वे मनोऽन्तरव्यतिरिक्तत्वमादाय सिद्धसाधनात् सर्वाणीत्युक्तमिति केचित् । तच्चिन्त्यम् । सर्वेषामपि मनसां चालिनीन्यायेन तादृशजातिमन्मनःप्रतियोगिकभेदवत्त्वेन सर्वपदोपादानेऽपि सिद्धसाधनानुद्धारात् । तादृशजात्यवच्छिन्नप्रतियोगिताकभेदवत्त्वस्य साध्यार्थत्वे च सर्वपदवैयर्थ्यात् । न च तादृशजातिमत्प्रतियोगिकयत्किञ्चिदेकभेदस्य साध्यत्वान्न दोषः । एकमनोभेदस्य सर्वमनस्स्वभावादिति वाच्यम् । तादृशभेदप्रतियोगिन्यनैकान्त्यात् । साध्ये साक्षात्पदवैयर्थ्यप्रसङ्गाच्च । मनस्त्वावान्तरजातिमत्प्रतियोगिकैकभेदस्य सर्वमनस्स्वभावादेव सिद्धसाधनानवकाशात् । यत्तु द्रव्यत्वव्याप्यद्रव्यत्ववद्गगनादिभेदमादाय सिद्धसाधनवारणाय साक्षात्पदम् । द्रव्यत्वस्य च द्रव्यत्वव्याप्याव्याप्यत्वाभावान्न दोष इति । तन्न । द्रव्यत्वसाधारणद्रव्यत्वव्याप्यत्वविवक्षायां द्रव्यत्वव्याप्याव्याप्यत्वे सति द्रव्यत्वव्याप्यजात्यप्रसिद्ध्या साध्याप्रसिद्धेः । यदप्यात्मत्वस्य द्रव्यत्वसाक्षाद्व्याप्यत्वसिद्ध्यर्थं साक्षात्पदमिति । तदपि न । तत्सिद्धेः प्रकृतानुपयुक्तत्वात् ।

तस्मात्तादृशजात्यवच्छिन्नप्रतियोगिताकभेद एव साध्यः । सर्वपदं त्ववच्छेदकावच्छेदेन साधनस्यापि साधुत्वज्ञापनार्थम् ।

पृथिव्यादिव्यतिरिक्तत्वमादाय सिद्धसाधनवारणाय **स्पर्शानधिकरणेति** । जातिगुणादिव्यतिरिक्तत्वेन सिद्धार्थतानिरासाय **द्रव्यत्वव्याप्यजातिमदिति** । मनस्त्वावान्तरचित्तत्वादिजातिमद्व्यतिरिक्तत्वमादाय तद्दोषभङ्गाय **साक्षात्पदम्** । एतत्सूचनार्थं **सर्वाणि मनांसीत्युक्तम्** । चित्तादिभेदेन नानाजातीयानीत्यर्थः । तेन 'मनस्त्वावान्तरजातेरप्रामाणिकत्वात् साक्षात्पदवैयर्थ्यमि'ति शङ्कानवकाशः । यद्यप्यत्राऽत्मपृथिव्यादिसाधारणजात्यन्तरसिद्ध्याऽर्थान्तरसम्भवः । तथापि स्पर्शानधिकरणेत्यनेन स्पर्शासमानाधिकरणत्वस्य जातौ विवक्षितत्वान्न दोषः । पृथिवीत्वादिकं द्रव्यत्वसाक्षाद्व्याप्यं, द्रव्यविभाजकजातित्वात् मनस्त्ववदित्यनुमानविरोधेन तादृशजात्यन्तरासिद्धेश्च । आत्माकाशादिमात्रसाधारणजात्यन्तरसिद्धिस्तु प्रागेव दूषितेति । नन्वेवमपि स्वाभाविकदिग्भेदवादिनां मते दिक्त्वजातिमद्व्यतिरिक्तत्वमादाय सिद्धसाधनमत आह — **दिग्भेदवादिनामिति** ॥ अत्र द्रव्यपक्षकानुमाने । उपलक्षणमेतत् । द्रव्यत्वादिपक्षकोक्तानुमानेष्वपि दिक्त्वेतरत्वग्रहणं कार्यम् ।

॥ **सर्वा पृथिवीति** ॥ जलतेजोवायुमनसां त्वप्रत्ययेनान्वयः । अन्यत्पूर्ववत् । अनयैव रीत्या प्रत्येकं जलादिपक्षकानुमानान्यूह्यानि । एवं पृथिव्यादिद्रव्याणि आत्मवृत्तिजातिमद्व्यतिरिक्तानि अनात्मत्वात् गुणादिवदित्यनुमानं बोध्यम् ।

॥ **सत्तेति** ॥ अत्र दृष्टान्ते सत्तान्यत्वमादाय पक्षे चात्मत्वान्यत्वमादाय साध्यसत्त्वं द्रष्टव्यम् । द्रव्यत्वपृथिवीत्वादिभेदमादाय सिद्धसाधनवारणाय

द्रव्यत्वान्यत्वात्मनिष्ठत्वयोः जातौ, जातेश्च गुणभेदमादाय तद्दोषनिरासाय निवेशः । यद्यप्यात्मत्वसिद्धेः प्रागात्मनिष्ठत्वस्य निवेशासम्भवः । जातिं विना व्यक्तिभानायोगात् । तथापि तद्व्यक्तित्वेनाष्टद्रव्यान्यद्रव्यत्वेन वा तन्निवेशान्न दोषः । न चैवमप्यात्मपृथिव्युभयानुगतजात्यन्तर-सिद्ध्याऽर्थान्तरमिति वाच्यम् । तस्य विनिगमनाविरहेण यावद्द्रव्यवृत्तित्वे तुल्यव्यक्तिकतया द्रव्यत्वानतिरेकात् । एतेन द्रव्यत्वं वेत्यादिकं व्याख्यातप्रायम् ।

॥ **आत्मेति** ॥ जीवात्मेत्यर्थः । तेन नेश्वरे भागासिद्धिः । अत्र द्रव्यत्वादिजात्या सिद्धार्थतावारणाय **द्रव्यत्वव्याप्येत्युक्तार्थकम्** । एकत्वा-दिना तद्दोषवारणाय **जातीति** । गगनादौ व्यभिचारवारणायाविभ्विति । विभुत्वं च सर्वमूर्तसंयोगित्वं परममहत्त्ववत्त्वं वा । तच्छून्यत्वरूपाविभुत्वस्य गुणादावनैकान्त्यात् **द्रव्येति** । एतादृशहेतोरसिद्धिपरिहारायैवात्माणुत्व-**वादिनामित्युक्तम्** । नत्वात्मविभुत्वपक्षे हेत्वन्तरासम्भवात् । प्रत्यक्षद्रव्यत्वादेर्हेतुत्वसम्भवात् । एवं पटो पटात्मान्यतरवृत्तिजातिशून्यो मेयत्वाद्धटवत् । सत्ताद्रव्यत्वाभ्यामनेन ज्ञायमानमिदमिदानीमात्म-वृत्तिजात्या न ज्ञायते, वस्तुत्वाद्वस्त्वन्तरवदित्यादिकमात्मत्वजाति-साधकमनुमानं द्रष्टव्यम् ॥ **द्रव्यत्वव्याप्यजातीति** ॥ तादृशजात्यन्तर-विशिष्टदशमद्रव्यसिद्ध्या पृथिवीत्वादिपक्षकानुमानेष्वर्थान्तरमित्यर्थः ॥ **गौरवादिति** ॥ धर्मधर्म्युभयकल्पनातो धर्ममात्रकल्पनाया लघुत्वादिति भावः । न चैकव्यक्तौ जातिकल्पनायोगाद्व्यक्त्यन्तरकल्पनमावश्यकमेवेति वाच्यम् । अक्लृप्तानेकव्यक्तिकल्पनापेक्षया क्लृप्तव्यक्त्यन्तर्भावेन जातिकल्पने लाघवानपायात् ।

(२०) (श.) ॥ सत्तेति ॥ सत्ताजातिसाक्षाद्व्याप्यजातित्वादित्यर्थः । दृष्टान्ते रूपत्वव्यापकत्वेन साध्यपर्यवसानम् । साध्ये जातिं प्रति व्यापकमित्येवोक्ते घटत्वं प्रति व्यापकत्वसिद्ध्याऽर्थान्तरत्वम् अत उक्तं साक्षादिति । साक्षाद्व्यापकत्वं च तद्व्यापकाव्यापकत्वे सति तद्व्यापकत्वम् । द्रव्यत्वस्य घटत्वव्यापकपृथिवीत्वव्यापकत्वेन तद्व्यापकाव्यापकत्वाभावेन साक्षाद्व्यापकत्वाभावान्न दोषः । जातिं प्रति साक्षाद्व्यापकमित्युक्ते पृथिवित्वादिपञ्चकं प्रति साक्षाद्व्यापकत्वादर्थान्तरम् । अतः पृथिवीत्व-जलत्वतेजस्त्ववायुत्वमनस्त्वेतरेति । अतः सर्वं सार्थकम् । अत्रापि पूर्वोक्तरीत्या द्रव्यत्वस्य साक्षाद्व्यापकत्वाभावान्न द्रव्यत्वमादायार्थान्तरं शङ्क्यम् । साधने जातित्वादित्युक्ते व्याप्यजातित्वादित्युक्ते सत्ताव्याप्यजातित्वादित्युक्ते च घटत्वे व्यभिचारः । तस्य व्याप्यजातित्वेन व्यापकत्वरूपसाध्याभावात् । अतः साक्षादिति । घटत्वं तु पृथिवीत्व-द्रव्यत्वद्वारा सत्ताव्याप्यमिति न दोष इति ध्येयम् ॥ **स्पर्शानधिकरणेति** ॥ स्पर्शानधिकरणं यद्द्रव्यत्वसाक्षाद्व्याप्यजातिमत्तद्व्यतिरिक्तानीत्यर्थः । दृष्टान्ते तादृशजातिमन्मनोव्यतिरिक्तत्वेन साध्यपर्यवसानं पक्षे सर्वपदपरित्यागे यत्किञ्चिन्मनसां पक्षत्वापत्त्या तत्र स्पर्शानधिकरणद्रव्यत्वसाक्षाद्व्याप्य-जातिमद्यन्मनस्तद्व्यतिरिक्तत्वसिद्ध्यार्थान्तरम् । अतः सर्वाणीति । साध्ये जातिमद्व्यतिरिक्तानीत्युक्ते सत्ताजातिमत्कर्मव्यतिरिक्तत्वसिद्ध्याऽर्थान्तरम् । अतो व्याप्येति । व्याप्यजातिमद्व्यतिरिक्तानीत्युक्ते सत्ताव्याप्यकर्मत्व-जातिमत्कर्मव्यतिरिक्तत्वसिद्ध्याऽर्थान्तरमतो द्रव्यत्वेति । द्रव्यत्वव्याप्य-जातिमद्व्यतिरिक्तानीत्युक्ते उक्तरीत्या द्रव्यत्वव्याप्यद्रव्यत्वजाति-मद्व्यतिरिक्तत्वसिद्ध्याऽर्थान्तरमतः साक्षादिति । द्रव्यत्वसाक्षाद्व्याप्य-

जातिमद्व्यतिरिक्तानीत्युक्ते द्रव्यत्वसाक्षाद्व्याप्यपृथिवीत्वादिजातिमत्पृथिव्यादिचतुष्टयव्यतिरिक्तत्वसिद्ध्या अर्थान्तरम् । अतः स्पर्शानधिकरणेति । पृथिव्यादिचतुष्टयस्य स्पर्शाधिकरणत्वान्न दोषः । ननु पृथिवीत्वपक्षकानुमाने जलत्वादिचतुष्टयेतरजातिर्दिक्त्वं तद्भिन्नत्वसिद्ध्याऽर्थान्तरम् । एवं जलत्वादिचतुष्टयपक्षकानुमानेष्वपि । तथा द्रव्यत्वपक्षके पृथिवीत्वादिपञ्चकेतरदिक्त्वजातिं प्रति साक्षाद्व्यापकत्वसिद्ध्याऽर्थान्तरम् । तथा मनःपक्षकानुमाने स्पर्शानधिकरणद्रव्यत्वसाक्षाद्व्याप्यदिक्त्वजातिमद्व्यतिरिक्तत्वसिद्ध्याऽर्थान्तरम् । तथा वक्ष्यमाणे पृथिवीपक्षकानुमाने जलत्वतेजस्त्ववायुत्वमनस्त्वानधिकरणद्रव्यत्वसाक्षाद्व्याप्यदिक्त्वजातिमद्व्यति रिक्तत्वसिद्ध्याऽर्थान्तरम् । नच दिश एकत्वेन व्यक्त्यभेदाद्दिक्त्वं जातिरेव न भवतीति वाच्यम् । यन्मते दिशि स्वाभाविकभेदोऽङ्गीक्रियते तन्मतेऽर्थान्तरापरिहारादित्यत आह — **दिग्भेदवादिनामिति** ॥ अत्र मनःपक्षकानुमाने स्पर्शानधिकरणदिक्त्वानधिकरणेति कर्तव्यम् । सर्वत्र पृथिवीत्वपक्षकानुमाने मनस्त्वदिक्त्वेतरेति कर्तव्यम् । द्रव्यत्वपक्षकानुमाने मनस्त्वदिकत्वेतरजातिं प्रतीति कार्यम् । वक्ष्यमाणे पृथिवीपक्षकानुमाने मनस्त्वदिक्त्वानधिकरणेति कर्तव्यमित्यर्थः ॥ **जलत्वेति** ॥ जलत्वतेजस्त्ववायुत्वमनस्त्वानधिकरणं यद्द्रव्यत्वसाक्षाद्व्याप्यजातिमद्व्यतिरिक्तेत्यर्थः । दृष्टान्ते तादृशजातिमत्पृथिवीव्यतिरिक्तत्वेन साध्यपर्यवसानम् । अत्र पृथिवीत्येव पक्षनिर्देशे यत्किञ्चित्पृथिव्याः पक्षत्वापत्त्या तत्र जलत्वतेजस्त्ववायुत्वमनस्त्वानधिकरणद्रव्यत्वसाक्षाद्व्याप्यपृथिवीत्वजातिमत्पृथिव्यन्तरव्यतिरिक्तत्वसिद्ध्याऽर्थान्तरम् अतः सर्वेति । साध्ये द्रव्यत्वेत्यादेर्मनःपक्षकानुमानोक्तकृत्यमेव द्रष्टव्यम् । द्रव्यत्वसाक्षाद्व्याप्य-

जातिमद्व्यतिरिक्तेत्युक्ते द्रव्यत्वसाक्षाद्व्याप्यजलत्वादिचतुष्टयवद्व्यतिरिक्तत्व-सिद्ध्याऽर्थान्तरम् अतो जलत्वतेजस्त्ववायुत्वमनस्त्वानधिकरणेति ॥ द्रव्यत्वेति ॥ द्रव्यत्वान्या याऽऽत्मनिष्ठा जातिस्तदन्येत्यर्थः । दृष्टान्ते सत्तान्यत्वेन साध्यपर्यवसानम् । साध्ये जात्यन्येत्येवोक्ते घटत्वजात्य-न्यत्वसिद्ध्याऽर्थान्तरम् । अत आत्मनिष्ठेति । आत्मनिष्ठजात्यन्येत्येवोक्ते द्रव्यत्वजात्यन्यत्वसिद्ध्याऽर्थान्तरम् । अतो द्रव्यत्वान्येति । द्रव्यत्वा-न्यजात्यन्येत्युक्तघटत्वान्यत्वमादायार्थान्तरम् । अत आत्मनिष्ठेति । द्रव्यत्वान्यात्मनिष्ठान्येत्युक्ते सुखान्यत्वसिद्ध्याऽर्थान्तरम् । अतो जातीति ॥ द्रव्यत्वमिति ॥ अत्र दृष्टान्ते द्रव्यत्वान्यत्वेन साध्यपर्यवसानम् । साध्ये आत्मनिष्ठजात्यन्यदित्युक्ते सत्तान्यतासिद्ध्याऽर्थान्तरम् अतस्सत्तान्येति । जातिपदकृत्यन्तु विशिष्टसत्तापक्षकानुमानवद्द्रष्टव्यम् । आत्मनो व्याप्तत्वाद्विशेषणासिद्धिरित्यत उक्तम् आत्माणुत्ववादिनामिति । मत इति शेषः । साध्ये जात्यधिकरणत्वसिद्ध्याऽर्थान्तरमतो द्रव्यत्वव्याप्येति । हेतौ द्रव्यत्वादित्युक्ते गगने द्रव्यत्वं वर्तते द्रव्यत्वव्याप्यजात्यधि-करणत्वाभावाद्व्यभिचारः । अतोऽविभ्विति । अविभुत्वादित्युक्ते गुणे अतो द्रव्यत्वेति । उपन्यस्तानुमानानां कुत्रोपयोग इत्यत आह — इत्यादीति ॥

**(२१) न चात्र द्रव्यत्वव्याप्यजातिमत्पदार्थान्तरसिद्ध्याऽर्थान्त-रत्वम् । क्लृप्ते धर्मिणि धर्मविशेषसाधनमात्रेणानुमानपर्यवसानसम्भवे तद्विशिष्टे धर्मिण्यनुमानपर्यवसाने गौरवात् । न चात्मनो द्रव्यत्वासिद्ध्याऽसिद्ध्यादिः । आत्मनि निर्गुणे रूपादिगुणा-भावेऽप्ययावद्द्रव्यभाविनां द्वित्वादिगुणानां व्यावहारिकाणामङ्गीकारे बाधकाभावात् । गुणाद्यन्तर्भावप्रसङ्गाच्च द्रव्यत्वसिद्धेः(सिद्धिः) । न**

**चानुकूलतर्काभावादप्रयोजकत्वाभाससमानयोगक्षेमत्वे । आत्मपद-प्रवृत्तिनिमित्तस्य आत्मत्वस्य जातित्वाङ्गीकारे लाघवम् । औपाधिकत्वे तु (औपाधिकधर्मत्वाङ्गीकारे तु) तस्योपाधिज्ञानसापेक्षत्वेन गौरवमित्यनुकूलतर्कसनाथत्वात्(तर्करक्षकोपेतत्वात्) । तुल्य-व्यक्तिकत्वादीनां च बाधकानामभावात् ।**

(२१) (भ.) ॥ **न चात्रेति** ॥ मनःपक्षकानुमाने पृथिवीपक्षकानुमाने चेत्यर्थः ॥ **जातिमत्पदार्थान्तरेति** ॥ आत्मत्वातिरिक्तजातिमद्दृष्टान्ते साध्यवैकल्यम् । तद्यदात्मातिरिक्तपदार्थान्तरं तत्सिद्ध्येत्यर्थः ॥ **क्लृप्ते धर्मिणीति** । नवद्रव्यपतितेऽत्रात्माख्ये धर्मिणि द्रव्यत्वसाक्षाद्व्याप्य-जातिविशेषरूपधर्मसाधनमात्रेणेत्यर्थः ॥ **न च द्रव्यत्वासिद्ध्येति** ॥ आत्मनो निर्गुणत्वाद्गुणवत्वाधीनं द्रव्यत्वं कथं तस्योपपद्येतेति भावः ॥ **असिद्ध्यादिरिति** ॥ आत्मपक्षकानुमानेऽसिद्धिः सत्तापक्षकानुमाने साध्ये द्रव्यत्वान्येति विशेषणवैयर्थ्यं द्रव्यत्वपक्षकानुमानेऽतिरिक्तसर्वानुमानेष्वपि बाध इत्यर्थः ॥ **रूपादिगुणाभावेऽपीति** । रूपादिगुणानां पटादिषु स्वरूपानुबन्धित्वदर्शनेन यावद्द्रव्यभावितयाऽऽत्मनि तदङ्गीकारे आत्मवत्पारमार्थिकत्वापत्त्या निर्गुणत्वश्रुतिव्याकोपापातेन तेषामनङ्गी-कार्यत्वादिति भावः । द्वित्वादीत्यादिपदेन त्रित्वादीनां ग्रहणम् । तेषामपेक्षाबुद्धिजन्यत्वेन तद्विनाशे विनाशादयावद्द्रव्यभावित्वमुपपन्नमिति भावः । अयावद्द्रव्यभाविनामपि पारमार्थिकत्वे पुनर्निर्गुणत्वश्रुतिविरोध इत्यत उक्तं **व्यावहारिकाणामिति** ॥ **बाधकाभावादिति** ॥ निर्गुणत्वश्रुतिस्तु पारमार्थिकगुणाभावमात्रविषयिणीति भावः ॥ **गुणाद्यन्तर्भावप्रसङ्गाच्चेति** ॥ आत्मनः पदार्थत्वने द्रव्यत्वानङ्गीकारे गुणाद्यन्तर्भावः स्यात् । स च न

युक्तः । न तावद्गुणेऽन्तर्भावः । जात्याश्रयत्वानङ्गीकारात् । नापि कर्मणि । संयोगविभागौ प्रत्यसमवायिकारणत्वाभावात् । नापि सामान्ये । अनेकसमवेतत्वाभावात् । न च समवाये । असम्बन्धरूपत्वात् । नापि च विशेषे । नित्यद्रव्याश्रितत्वाभावात् । नाप्यभावे । प्रतियोग्यनिरूप्यत्वात् । अतो द्रव्यत्वसिद्धिरिति भावः । नन्वेतेष्वनुमानेष्वप्रयोजकत्वशङ्कायां न किञ्चिद्बाधकमस्ति । जलत्वतेजस्त्वसमकक्षतयाऽऽत्मत्वमपि निवेश्य तदितरद्रव्यत्वसाक्षाद्व्याप्यजातिभिन्नत्वस्यापि साधयितुं शक्यत्वेना-काशत्वादेरपि जातित्वसिद्धिप्रसङ्गेनाभाससाम्यं चेत्याशङ्क्य निराकरोति ॥ **न चेति** । अत्र योगो नाम व्याप्त्यादिसम्पत्तिः । क्षेमस्तु प्रमाणाबाध इति ज्ञेयम् ॥ **आत्मपदप्रवृत्तिनिमित्तस्येति** ॥ अयमाशयः । आत्मत्वरूपधर्म एव नास्तीति तावद्वक्तुं न शक्यम् । तथा सति प्रवृत्तिनिमित्ता-भावेनात्मन्यात्मशब्दप्रयोग एव न स्यात् । स च जातिर्नचेन्निर्वक्तव्यः । न च स्वप्रकाशत्वमेवात्मत्वमिति वाच्यम् । परमते परावेद्यत्वमेव स्वप्रकाशत्वमित्यङ्गीकारात्स्वप्रकाशत्वस्यैवाधिकधर्मत्वप्राप्त्यापररूपोपाधि-ज्ञानसापेक्षत्वेन गौरवापातात् । जातित्वाङ्गीकारे तु लाघवम् । तस्या अखण्डत्वेनान्यानपेक्षणात् । तथा च गौरवापत्तिरूपानुकूलतर्कोपो-द्बलितत्वेनानुमानानां नाप्रयोजकत्वादीति । ननु सबाधकं लाघवमात्रमकिञ्चित्करम् अन्यथा गगनपदप्रवृत्तिनिमित्तस्य गगनत्वस्यापि जातित्वं स्यादित्यत आह — **तुल्यव्यक्तित्वादीनामिति** ॥ आत्मत्वस्य जातित्वाङ्गीकार इति वर्तते ।

**`व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः ।**
**रूपहानिरसम्बन्धो जातिबाधकसङ्ग्रह'**

इति वचनाद्व्यक्त्यभेदादीनि षड् जातिबाधकानि । तत्र तावत्तुल्यत्वादीनि पञ्चबाधकान्यात्मत्वस्य जातित्वाङ्गीकारे न सन्ति । तथा हि । तुल्यत्वं नाम तुल्यव्यक्तिकत्वम् । तुल्यदेशवृत्तित्वमिति यावत् । तथा च घटत्वाश्रयघटमात्रवृत्तित्वात्करीरत्वस्य न जातित्वम् । परस्पपरिहारेण वर्तमानयोरेकत्र समावेशः सङ्करः । यथा भूतत्वमूर्तत्वयोः । भूतत्वं गगनेऽस्ति न मूर्तत्वम् । मूर्तत्वं च मनस्यस्ति न भूतत्वम् । तयोश्च पृथिव्यादिभूतचतुष्टये समावेशः । अतो न ते जाती । घटत्वे पुनः सत्ताजात्यङ्गीकारे तत्रापि पुनः सत्ताजात्यङ्गीकारप्रसङ्गादनवस्थितेर्जातौ न जातिरङ्गीकार्या । विशेषेषु विशेषत्वरूपजात्यङ्गीकारे रूपहानिर्बाधिका । रूपहानिर्नाम स्वभावहानिः । परमाणुगतविशेषाणां च परमाणुष्वन्योन्य-व्यावृत्तिधीहेतुत्वरूपमन्त्यव्यावर्तकत्वस्य भावः । आत्यन्तिकत्वं च कदाऽपि संशयाद्यहेतुत्वम् । अत एव परमाणुप्रत्यक्षवतां योगिनां तत्तद्गतविशेषदर्शिनां कदाऽपि परमाणुषु संशयविपर्ययौ न जायेते । यदि विशेषेष्वपि विशेषत्वजातिः स्यात् तर्हि सर्वेषां विशेषाणां विशेषत्वरूपसमानधर्माक्रान्तत्वेन घटादिष्विव कदाचित्संशयादिसम्भवेन तदाश्रयपरमाणुष्वपि संशयादिप्राप्तौ तेषामुक्तस्वभावहानिः स्यात् । अतो न विशेषेषु जातिरिति । समवाये समवायत्वजात्यङ्गीकारेऽसम्बन्धो बाधकः । यदि समवाये जात्यङ्गीक्रियेत तर्हि जातिव्यक्त्योः समवायनियमात्समवाये पुनः समवायान्तरमङ्गीकरणीयम् । समवायश्चैक एव । अतः समवाये समवायाभ्युपगमे आत्माश्रयापत्त्या न समवायत्वं समवाये जातिरिति । तथा चात्मत्वस्य जातित्वाङ्गीकारे न तावत्तुल्यव्यक्तित्वं बाधकम् । आत्मन्यात्मत्वसमनियतधर्मान्तराभावात् । सद्भावे वा तस्यैव

जातित्वापातात् । नापि सङ्करः । आत्मत्वस्यात्ममात्रवृत्तित्वात् । नाप्यनवस्थितिः । तदभावात् । नापि रूपहानिः । आत्मस्वभावस्य कस्याप्यनपायात् । नाप्यसम्बन्धः । समवायसम्भवादिति भावः ।

**(२१) (मु.)** अन्तिमत्रयव्यतिरिक्तानुमानानामात्मनो जातिमत्त्व इव जातिमद्दशमद्रव्यसिद्धौ पर्यवसानं किन्न स्यादित्यत आह — **न चात्रेति** ॥ अन्तिमत्रयव्यतिरिक्तानुमानेष्वित्यर्थः ॥ **असिद्ध्यादिरिति** ॥ आत्मनो निर्गुणस्येत्याद्युक्तदिशाऽन्त्यानुमानेऽसिद्धिः । अत एवोपान्ते सत्ताद्रव्यत्वरूपात्मनिष्ठजात्यन्यत्वेन दृष्टान्ते साध्यस्य वक्तव्यत्वेन द्रव्यत्वस्यात्मन्यभावे साध्यवैकल्यं चेत्यर्थः ॥ **अयावद्द्रव्येति** ॥ यावद्द्रव्यभाविगुणाङ्गीकारेऽस्य तु कदाऽप्यनिवृत्त्या निर्गुणत्वभङ्गः स्यात् । उक्तगुणाङ्गीकारे तूत्तरत्र भाविनिर्गुणत्वविरोधादिति भावः । द्रव्यत्वानङ्गीकारे बाधकं चाह — **गुणानामिति** ॥ अद्रव्यत्वे गुणाद्यन्यतमत्वं स्यात् । अन्यथाऽपदार्थत्वापत्तिरिति ।

ननु द्रव्यादिषड्कातिरिक्तत्वेऽपि पदार्थत्वमङ्गीक्रियते को दोष इति चेत् । तर्हि गुणादिपञ्चकभिन्नत्वमेव द्रव्यत्वं विवक्षितमिति कथमसिद्ध्यादिः ॥ **अप्रयोजकत्वाभाससमानयोगक्षेमत्व इति** ॥ अन्यत्र सहचारसम्भवेऽपि पक्षे व्यभिचारसम्भवादप्रयोजकत्वम् । न च हेतुमति साध्याभावेनोपाधिसहचारभङ्गेनानुमानमात्रोच्छेदः स्यादिति तर्कोऽस्तीति वाच्यम् । व्यभिचारोच्छेदकस्य व्यभिचारेऽवश्यमुपाधिरित्यनौपाधिकत्वस्यासम्मतेः । न चोपाधिर्न दृश्यत इति वाच्यम् । बाधकाभावे पक्षेतरत्वादीनामपि तथात्वात् । किञ्चाद्यानुमाने जलादीतरेति वदात्मत्वेतरेत्यपि प्रवेशे जातिमद्दशमद्रव्यस्याप्यापत्तिः । तत्रानधिकरणत्वस्यापि प्रवेशे

पुनर्द्रव्यान्तरसिद्ध्यापत्तिः । तथाऽऽकाशादीनामपि जातिमत्वं सुसाध्यम् । तथा मनोव्यतिरिक्तपक्षकेष्वनित्यसमानाधिकरणे जातिविशेषणे आत्मानित्यत्वं स्यादित्याभाससाम्यं चेत्यर्थः ॥ **लाघवमिति** ॥ जात्युपाध्योर्जातिर्बलीयसीति न्यायादिति भावः ॥ **उपाधीति** । बुद्धिगुणकत्वस्वप्रकाशत्वाद्युपाध्यधीनेति भावः । यद्यप्युक्तोपाधिनैवानुगतप्रतीत्युपपत्तावनौपाधिकत्वाङ्गीकारो व्यर्थः । तथाऽप्यखण्डव्यवहारसिद्ध्यर्थं पराङ्गीकृतानुवादोऽयमिति ज्ञातव्यम् । इदं गौरवं न फलमुखं येन दोषः स्यात्किन्तु कारणमुखमिति दर्शयितुमादावात्मपदप्रवृत्तिनिमित्तस्येत्युक्तम् । ननु व्यक्तिबहुत्वनिश्चय एव जात्युपाध्योरिति न्यायावतारिका । इह तु तत्सन्देहात्कालपर्यन्तत्वेन जातित्वमेव गुर्विति चेन्न । व्यक्तिभेदस्य प्रत्यक्षसिद्धत्वेनाकल्पनात् । प्रत्युतौपाधिकत्वकल्पनस्यैव व्यक्तिभेदग्राहकप्रत्यक्षाद्यप्रामाण्यकल्पनपर्यन्तत्वेन ततोऽतिगौरवमिति । एवञ्च यद्यात्मत्वं न जातिस्तर्हि कल्पनागौरवमिति तर्कसत्त्वान्न दोषः ।

(२१) (कु.) ॥ **असिद्ध्यादिरिति** ॥ अव्यवहितानुमाने स्वरूपासिद्धिः सत्तापक्षकानुमाने साध्ये विशेषणवैयर्थ्यं कतिपयेषु बाध इति भावः ॥ **बाधकाभावादिति** ॥ तथा च गुणाश्रयत्वरूपव्यापकनिवृत्त्यभावान्न द्रव्यत्वासिद्धिरिति भावः ॥ **गुणाद्यन्तर्भावेति** ॥ आत्मनो व्यावहारिकद्वित्वादिगुणानाश्रयत्वे सत्ताश्रयत्वे कर्मणो व्यतिरिक्तत्वेन जातिमात्राश्रयो गुण इति गुणलक्षणाक्रान्तत्वाद्गुणान्तर्भावः स्यात् । सत्तानाश्रयत्वेत्वभावान्तर्भावप्रसङ्गात् । द्वित्वादिगुणाश्रयत्वमङ्गीकार्यम् । ततश्च द्रव्यत्वसिद्धिरिति भावः ॥ **न चानुकूलतर्काभावादिति** ॥ पृथिवीत्वजलत्वतेजस्त्व-

वायुत्वमनस्त्वात्मत्वेतरद्रव्यत्वसाक्षाद्व्याप्यजातिभिन्नजातित्वाज्जलत्ववदिति । सत्ता द्रव्यत्वान्याकाशनिष्ठजात्यन्येत्याभाससमानयोगक्षेमत्वमित्यर्थः । ननु सबाधकं लाघवमकिञ्चित्करम् । अन्यथा गगनपदप्रवृत्तिनिमित्तं गगनत्वमपि जातिः स्यादित्यत आह — **तुल्यव्यक्तिकत्वादीनामिति ।**

(२१) (हु.) ॥ **न चेति** ॥ **पदार्थान्तरेति** ॥ आत्मसहितनवद्रव्यातिरिक्तेत्यर्थः ॥ **क्लृप्ते धर्मिणीति** । सर्वप्रत्यक्षसिद्धात्मस्वेव तज्जातिकल्पने लाघवम् । अन्यथा धर्मधर्मिणोरुभयोः कल्पने गौरवं स्यादित्यर्थः । ननु तर्हि क्लृप्तेषु गगनादिष्वेव तत्सिध्येत् । न च तेषां धर्मिग्राहकप्रमाणेनैकत्वेनैव सिद्धत्वाज्जातिकल्पनाऽयुक्तेति वक्ष्यतीति वाच्यम् । तादृशयुक्त्यैकैकगगनादौ तादृशजातिसिध्यभावेऽप्याकाशकालदिक्षु वा विनिगमकाभावानु[1]सन्धानेऽप्यात्मसाहित्येन वा तेषु जात्यङ्गीकारसम्भवात् । आत्मभेदासिद्ध्याऽर्थान्तरतेति चेन्न । सन्दिग्ध एव न्यायप्रवृत्तिर्न तु बाधित इति न्यायात् । गगनकालदिक्षु द्रव्यत्वसाक्षाद्व्याप्यजातेरभावस्यैव निश्चिततया तत्र विवादाभावेन बाधितार्थान् विहायान्यसन्दिग्धात्मस्वेव जातिसिद्धेः । अत एव सर्वाणि मनांसीत्याद्यनुमितिविषयसाध्यसत्त्वनिर्वाहाय केषुचिन्मनस्स्वेक(का)-द्रव्यत्वसाक्षाद्व्याप्या जातिरेकाऽपरमनस्स्वेका तादृशी जातिर्मनस्त्वाख्यैका तदुभयव्यापि(काता) माऽस्त्वेव[2] । पक्षता तु सर्वमनसां मनःपदार्थत्वेनास्तु । साध्यीभूतभेदद्वयस्यैव तादृशसाध्यतावच्छेदकरूपेण पक्षतावच्छेदकव्यापकत्वादवच्छेदकावच्छेदेन साध्यसिद्धेरपि नानुपपत्तिः । अत

---

[1] `विनिगमकाभावात् ।' मु. २. `अस्त्वेवं' मु.

आत्मत्वासिद्ध्याऽर्थान्तरतेति शङ्काऽपि निरस्ता । निष्प्रामाणिकजातिद्वयाङ्गीकारे गौरवाज्जातिचतुष्टयाङ्गीकारस्यापि सम्भवादतिप्रसक्तेश्च । तादृशजातिद्वयाद्यभावेन मनस्त्वरूपसाक्षाद्व्याप्यजातिमङ्गीकृत्यैव तस्य पक्षतावच्छेदकत्वेनोपादानात्तत्रैतच्छङ्कनस्यैव साहसिकत्वात् । गगनादावपि बाधितत्वाभावात्तत्र जातिसिद्ध्याऽर्थान्तरतेत्याग्रहश्चेत् । साध्यशरीरे पूर्वतरानुमानेषु सर्वेषु द्रव्यत्वसाक्षाद्व्याप्यजातौ शब्दान्यविशेषगुणशून्यमहदवृत्तित्वविशेषणं देयमतो नार्थान्तरताप्रसक्तिरिति द्रष्टव्यम् । न च द्रव्यत्वेत्यविभुद्रव्यत्वादित्यनुमता(मना)भिप्रायेणासिद्ध्युद्भावनमितरानुमानाभिप्रायेण त्वादीति । आत्मन्यपि द्रव्यत्वसाक्षाद्व्याप्यजातेर्व्यापकद्रव्यत्वाभावेन बो(बा)धितत्वग्रहात्तादृशानुमानबलादात्मातिरिक्ते तादृशजातिमद्द्रव्यान्तरमेव सिद्ध्येदित्यर्थान्तरता । द्रव्यान्तरस्याप्यभावनिश्चये[1] बाधो वेत्येतदुभयमादिपदार्थतया बोध्यम् । आत्मनि व्यापकीभूतद्रव्यत्वाभावसिद्धौ बीजाभावः । निर्बीजशङ्कायाः पर्यवसानाभावेन तादृशशङ्कस्य कथकताया एवाभावात् । न च द्रव्यत्वलक्षणत्वेन[2] द्रव्यत्वं प्रति व्यापकीभूतगुणाभावादेव तत्सिद्धिः । तत्रैव बीजाभावात् । नन्वात्मनि तत्तद्गुणाभावसिद्ध्या गुणसामान्याभावसिद्धिः । ज्ञानेच्छादीनां भवतो मनःपरिणततया मनोगुणत्वाङ्गीकारात् । अनुद्भूतरूपादिसत्त्वे मानाभावः । उद्भूतरूपादिसत्त्वे महत आत्मनश्चाक्षुषाद्यापत्तेः । महत्त्वानङ्गीकारेण तदापत्तिवारणे तत्र तच्छब्दाभाव[3] एव मानाभावः । पूर्वमात्मनि रूपं स्थितं तदा चाक्षुषमपि स्थितमिदानीं[4] तन्नाशान्न

---

1 `-निश्चयेन पक्षे साध्याभावनिश्चयेन' मु.

2 `द्रव्यलक्षणेन' ह्.

३. `तत्सद्भावे' ह्.

4 `स्थितमिदानीं' मु.

चाक्षुषत्वमपीत्यसत् । तत्र रूपादिनाशोत्पादस्यैवाभावात् । आत्मनो नित्यत्वेनाश्रयनाशरूपकारणाभावात्तत्र पाकादेरप्रामाणिकत्वात् । तथात्वे रूपान्तरोत्पादावश्यकत्वाच्च । पाकादिरूपकारणासम्भवाच्च । तथैकत्वपरिमाणादिगुणानामपि प्रत्यक्षाद्यविषयत्वेनाप्रामाणिकत्वेनैव तदभावसिद्धेः । तथा च विशेषाभावकूटबलादेव सामान्याभावसिद्धिरिति[1] चेन्न । तावताऽपि द्वित्वसंयोगादिसद्भावे द्वा सुपर्णेत्याद्यागमव्यवहारस्य द्वि(त्व)शब्दपरिषस्वजात इति शब्दबलाच्च सिद्धत्वेनायावद्द्रव्यभावितया तेषामपेक्षाबुद्ध्यन्यदीयक्रियाभिरुत्पत्तिविनाशाङ्गीकारेण द्वित्वसंयोगादि-गुणाभावसिद्ध्या विशेषाभावकूटरूपहेतुरसिद्ध एव । अत आत्मनि द्रव्यत्वाभावशङ्कैवात्युक्तेत्याशयेनाह[2] ॥ **आत्मनीति** ॥ **निर्गुण इति** ॥ निर्गुणत्वेन श्रौतव्यवहारादिविषयेऽपीत्यर्थः । इदं च निर्गुण इति श्रुतिबलादेव निर्गुणत्वं स्वीक्रियत इति शङ्काद्योतनाय द्वित्वादीनामिति । तथा द्वित्वादिबोधकोक्तश्रुतिसद्भावेन निर्गुणत्वश्रुतेः सत्प्र(तत्प्र)तिपक्षतत्वेन न स्वार्थनिर्णायकत्वम् । विचारदशायां तु द्वित्वाद्यङ्गीकारे बाधकाभावेन तच्छ्रुतेः स्वार्थतात्पर्यनिर्णयविषयत्वेन बलवत्याः(वत्तया) निर्गुणत्वश्रुतेः (श्रुति)गुणसामान्याभावपरत्वे तद्बाधात् रूपादिरूपगुणाभावपरत्वमिति भावः । ननु 'नेह नाने'ति श्रुत्या सर्वस्य निषिद्धत्वात्कथं द्वित्वादिकमात्मन्य(नाम)ङ्गीकर्तुं शक्यमित्यतो व्यावहारिकाणामिति । पृथिव्यादिष्वपि पारमार्थिकगुणाभावेन व्यावहारिकगुणाश्रयत्वेनैव द्रव्यत्वस्यैवात्रापि द्रव्यत्वस्यावश्यकत्वमिति भावः ॥ **गुणाद्यन्तर्भावेति** ॥ द्रव्यत्वानङ्गीकार इति शेषः ॥ **प्रसङ्गाश्चेति** ॥ गुणाद्यन्तर्भावा-

---

1 `समाधावसिद्धिरिति' मु

2 `द्रव्यत्वाभावशङ्कैवेत्युक्ततेत्याशयेनाह' मु.

पादकतर्कबलादित्यर्थः । द्रव्यभिन्नत्वे सति पदार्थत्वात् गुणादिवद्गुणाद्यन्यतमत्वापत्तिः । न चेष्टापत्तिः । असमवेतत्वात्सत्प्रतियोगिकत्वाभावाच्च गुणाद्यभावान्तर्भावस्य वक्तुमशक्यत्वात् । तस्मादापाद्याभावाद्विशिष्टापादकाभावो(पादको)ऽस्त्वित्यापादकाभावसिद्धौ तस्य पदार्थत्वरूपविशेष्याभावेन पर्यवसाने आत्मनोऽलीकत्वाप्राप्त्या(त्वापत्त्या) विशेषणाभावेन पर्यवसाने द्रव्यत्वसिद्धेरिति भावः । यद्वा निर्गुणत्वप्रतिपादकश्रुतिविषय आत्मनि श्रुतिप्रामाण्याय गुणाभावसत्त्वमपेक्षितम् । तच्च यावद्द्रव्यभाविगुणवति न स्थातुं शक्नोति । अयावद्द्रव्यभाविगुणसत्त्वेऽपि तत्सत्ताकालातिरिक्तकालावच्छेदेन गुणाभावसत्त्वेन श्रुतिप्रामाण्याभावरूपबाधकाभावेन तत्सत्त्वसम्भव इत्यर्थः । सर्वथा तदनङ्गीकारे बाधकमाह — **गुणेति** ॥ तेषां निर्गुणल(त्व)क्षणत्वादिति भावः ॥ **न चानुकूलतर्केत्यादि** ॥ **आभाससमानेति** ॥ आत्मत्वजातिसिद्ध्यनन्तरमपि तद्भिन्नत्वमपि द्रव्यत्वसाक्षाद्व्याप्यजातौ निवेश्य साध्योपादानेन जात्यन्तरादिसाधकानुमानैरात्मा न जातिमान् आत्माभावान्यतरत्वादभाववदित्यादिभिश्च समानयोगक्षेमत्वमित्यर्थः । यद्यप्याभाससाम्यमप्रयोजकतापर्यवसानेनैव दूषणम् । अन्यथा साम्यमात्रसद्भावस्य दूषकत्वे धूमानुमानस्यापि प्रमेयत्वेनाभाससाम्याद्दुष्टत्वापत्तेः । तथाऽपि सुधोक्तरीत्याऽसाधकत्वापादक(त्व)मपि तस्य वर्तत इत्याशयेन पृथगुत्कीर्तनम् ॥ **उपाधिज्ञानसापेक्षत्वेनेति** ॥ औपाधिकधर्मत्वं नाम नानापदार्थघटितधर्मत्वम् । तज्ज्ञानेन च तद्घटकनानापदार्थज्ञानस्यावश्यकत्वेन तज्ज्ञानाधीनप्रवृत्तिनिमित्तज्ञानाधीनशक्तिज्ञानाङ्गीकारे उपस्थितिगौरवं शक्यतावच्छेदकगौरवं च स्यादित्यनुकूलतर्केणाप्रयोजकत्वशङ्कानिरासादेतेषां साधकत्वमितरेषां पुनरनुकूलतर्काभावात् प्रत्युताप्रामाणिक-

बहुजातिगौरवमित्यादिप्रतिकूलकोत्थानाच्च न साधकत्वमिति भावः । न च तर्हि विभुपदशक्यतावच्छेदकलाघवानुसाराद्विभुत्वजातिरपि सिध्येदुक्तानुमानादिनेति वाच्यम् । केवलानुमानस्याकामगामित्वेन कस्याप्यर्थस्य न साधकत्वं बाधकत्वं च । किन्तु प्रत्यक्षादिसिद्धार्थे सन्देहे युक्तिस्तत्सहायेनार्थसाधिका भवतीति स्वपरयोः सिद्धान्तः । इत्थं चात्मत्वजातेरहमहमित्यादिप्रत्यक्षविषयत्वात्तत्र सन्देहे उक्तानुमानानि तदनुग्राहकतया निर्णायकानि । न च तथा विभुत्वस्थले तस्य प्रत्यक्षवेद्यत्वाभावाच्छक्यतावच्छेदकलाघवमात्रानुसारेण जातिकल्पने नानार्थोच्छेदकप्रसङ्गादित्याशयात् । ननु तर्हि घटं दृष्ट्वा लोकानामयं घट इति करीर इति व्यवहारानुसारात्करीरत्वादिकमिति सिध्येत् । बाधक(साधक)सद्भावात्तेषां जातित्वं नास्तीत्यङ्गीकारे प्रकृतेऽपि तथाऽस्त्वित्याशङ्क्य तुल्यव्यक्तिकत्वस्याबाधकत्वमित्यभिप्रायपूर्वकं[1] निराचष्टे – तुल्येति ॥

(२१) (का.) मायिनामाशङ्कां मायिरीत्यैव निरस्यति – न चेति ॥ निर्गुणश्रुतिविरोधेनात्मनि गुणवत्त्वासिद्ध्या तद्व्याप्यद्रव्यत्वजातिरप्यसिद्धेत्यर्थः ॥ असिद्ध्यादिरिति ॥ अव्यवहितपूर्वानुमाने स्वरूपासिद्धिर्बाधश्च । तत्पूर्वानुमाने साध्याप्रसिद्धिः । तत्पूर्वानुमाने द्रव्यत्वान्येति विशेषणवैयर्थ्यम् । तत्पूर्वानुमानेष्वात्मनि द्रव्यत्वव्याप्यजातिसिद्धिमादाय साध्यपर्यवसानायोगादुद्देश्यासिद्धिरित्यर्थः ॥ आत्मनीति ॥ अयं भावः । निर्गुणश्रुत्या पारमार्थिकगुणनिषेधेऽपि व्यावहारिकगुणाङ्गीकारे बाधकाभावः । न च गुणानां यावद्द्रव्यभावित्वेन पारमार्थिकत्वापत्तिः ।

---

[1] `-आशङ्कामेकव्यक्तिकत्वस्याबाधकत्वम्-' हु.

यावद्द्रव्यभाविरूपादिगुणाङ्गीकारायोगेऽप्यपेक्षाबुद्धिजन्यद्वित्वाद्यङ्गीकारे बाधकविरहादिति । नन्वत्र साधकाभाव एव बाधक इत्यत आह — **गुणाद्यन्तर्भावेति** ॥ अवृत्तित्वेन गुणाद्यनन्तर्भूतस्य परिशेषाद्द्रव्यत्व-सिद्धेरित्यर्थः ।

ननूक्तानुमानेषु हेतुरस्तु साध्यं माऽस्त्वित्यप्रयोजक-शङ्कावारक-तर्काभावादसाधकत्वम् । एवं पृथिवीत्वं जलत्वादिक्लृप्तजातिव्यति-रिक्तद्रव्यत्वसाक्षाद्व्याप्यजातिभिन्नं जातित्वात्, सत्ता द्रव्यत्वान्याकाश-निष्ठजात्यन्या जातित्वाद्घटत्ववदित्याद्याभाससाम्यं चेत्याशङ्कां निराह — **न चेति** ॥ **आभाससमानेति** ॥ योगक्षेमयोः साधकबाधकभावाभावयोराभास-समानत्वमित्यर्थः । तथाचोक्तानुमानस्याभासत्वादस्याप्याभासत्वमविशेषा-दिति भावः । आभाससाम्यं विघटयिष्यन्ननुकूलतर्कमुपपादयति — **आत्मपदेति** ॥ आत्मपदशक्यतावच्छेदकस्येत्यर्थः ॥ **लाघवमिति** ॥ जातेरखण्डत्वेन विशेषणज्ञानाद्यनपेक्षत्वादिति भावः ॥ **औपाधिकत्वेति** ॥ विशिष्टधर्मस्वरूपत्वेत्यर्थः । अनेकवस्तुघटितस्वप्रकाशत्वादेरात्मपदप्रवृत्ति-निमित्तत्व इति यावत् ॥ **गौरवमिति** ॥ यद्यपि स्वप्रकाशत्वादेरात्म-पदप्रवृत्तिनिमित्तत्वाभावेऽपि स्वघटकोपाधिज्ञानसापेक्षज्ञानकत्वमस्त्येवेति न लाघवावकाशः । प्रत्युत जात्यन्तरकल्पनादेव गौरवम् । तथाप्यात्म-पदशक्तिज्ञानादेरनेकोपाधिज्ञानाधीनत्वकल्पनादनेकोपाध्यन्तर्भावेन शक्य-तावच्छेदकत्वकल्पनाच्च गौरवं बोध्यम् ।

एवमात्मत्वजातौ साधकसत्त्वमुपपाद्य बाधकासत्त्वमप्युपपादयति — **तुल्यव्यक्तिकत्वादीनामिति** ॥ घटत्वकलशत्वयोर्भिन्नजातित्वे जाति-समनैयत्यरूपतुल्यव्यक्तिकत्वं बाधकम् । भूतत्वमूर्तत्वयोर्जातित्वे

परस्पराभावसमानाधिकरणत्वे सति परस्परसमानाधिकरणत्वरूपसाङ्कर्यम् । जातेर्जातिमत्त्वे जातिपरम्परया अनवस्था । विशेषस्य जातिमत्त्वे जातेरेव व्यावर्तकतया स्वतोव्यावृत्तत्वरूपतत्स्वरूपस्य, जात्यन्यत्वे जातिशून्यत्वे च सति समवेतत्वरूपतल्लक्षणस्य वा हानिः । अभावस्य जातिमत्त्वे समवायवैधुर्यं बाधकम् । आत्मत्वजात्यङ्गीकारे चैतेषामभावादित्यर्थः ।

(२१) (श.) ननूपन्यस्तसर्वानुमानैः पृथिवीत्वजलत्वतेजस्त्व-वायुत्वमनस्त्वेतरद्रव्यत्वसाक्षाद्व्याप्यजातिसिद्धौ तादृशजातेरात्मत्वानति-रेकात्तस्य जातित्वसिद्धावात्मभेदसिद्धिरिति मतम् । तन्न आत्मान्य-तादृशजात्यन्तरविशिष्टदशमद्रव्यसिद्ध्याऽर्थान्तरादित्याशङ्क्य निराकरोति – **नचेति** ॥ पृथिवीत्वादिपञ्चकान्यद्रव्यत्वसाक्षाद्व्याप्यजातिमदात्मान्यव्यक्ति-सिद्ध्याऽर्थान्तरतेत्यर्थः ॥ **क्लृप्त इति** ॥ आत्मा धर्मी क्लृप्तः तत्रात्मत्वजातिरूपधर्मविशेषानुमानपर्यवसाने लाघवम् । धर्ममात्रस्य कल्प्यत्वात् । कल्प्यविशेषधर्मविशिष्टव्यक्त्यन्तरपर्यवसाने गौरवम् । धर्मधर्मिणोरुभयोरपि कल्प्यत्वात् । धर्मिकल्पनातो वरं धर्मकल्पनमिति न्यायादुक्तरीत्यैव साध्यपर्यवसानमिति भावः । नन्वात्मनि निर्गुणे गुणाश्रयत्वरूपद्रव्यत्वस्य मन्मतेऽसिद्ध्याऽऽत्मत्वस्य द्रव्यत्वसाक्षाद्व्याप्य-जातित्वासिद्धिः । तथाचानुमानस्य विशेष्यासिद्धिरित्याशङ्क्य निराकरोति — **नचेति** ॥ **व्यावहारिकाणामिति** ॥ तथाच `केवलो निर्गुणश्चे'ति श्रुतिः पारमार्थिकगुणनिषेधपरेति भावः । गुणानां त्रिकालाबाध्ययावद्ब्रह्मभावित्वे तेषामपि पारमार्थिकत्वमेवेत्यत उक्तमयावद्द्रव्यभाविनामिति । सत्येव-द्रव्येऽपेक्षाबुद्धिनाशेन द्वित्वानाशाद्द्रव्यं यावत्कालं तिष्ठति तावदसतामित्यर्थः ॥ **बाधकाभावादिति** ॥ त्वत्पक्षेपीति शेषः ॥ **गुणादीति** ॥ यद्यात्मनो

द्रव्यत्वं न स्यात्तदा तस्य गुणादिपदार्थेष्वन्तर्भावः पदार्थान्तरत्वं वा वक्तव्यम् । तत्राद्ये न तावद्गुणेन्तर्भावः द्रव्यासमवेतत्वात् । तत एव न कर्मणि अचलनात्मकत्वाच्च । नापि सामान्ये अनेकानुगतत्वाभावात् । नापि समवाये असम्बन्धरूपत्वात् । नापि विशेषे नित्यद्रव्यानाश्रितत्वात् । नाप्यभावे प्रतियोग्यनिरूप्यत्वादिति । नापि द्वितीयः पदार्थानां सप्तत्वनियमात् । अतः परिशेषाद्द्रव्यत्वसिद्धिरिति भावः । नन्वपिचेत्यादिनोक्तेष्वात्मत्वजातिसाधकेष्वनुमानेषु सर्वत्र हेतुरस्तु साध्यं मास्त्वित्यप्रयोजकताशङ्कायां बाधकतर्काभावादप्रयोजकत्वम् । तथा पृथिवीत्वं जलत्वतेजस्त्ववायुत्वमनस्त्वात्मत्वेतरद्रव्यत्वसाक्षाद्व्याप्यजाति-भिन्नं जातित्वादित्याकाशत्वादेर्जातित्वसाधकाभासानुमानसाम्यं चेत्यत आह — **नचेति** ॥ **अप्रयोजकत्वेति** ॥ अप्रयोजकत्वं चाभाससमानयोगक्षेमत्वं चेति विग्रहः । योगशब्देन व्याप्त्यादिसाधकसम्पत्तिर्विवक्षिता । क्षेमशब्देन च प्रमाणबाधाद्यभावः । तथाचाऽभासानुमानतुल्यसाधकबाधका-भाववत्त्वमित्यर्थः । आत्मपदप्रवृत्तिनिमित्तस्य आत्मत्वस्य ॥ **लाघव-मिति** ॥ जातेरखण्डत्वेनान्यज्ञाननिरपेक्षरणादिति भावः । औपाधिकत्वे स्वप्रकाशत्वरूपत्वे ॥ **उपाधीति** ॥ स्वप्रकाशत्वस्य त्वन्मते इतरावेद्यत्व-रूपत्वेनेतररूपोपाधिज्ञानाधीनत्वादित्यर्थः । उपाधिप्रत्ययं विनोपहित-प्रत्ययानुपपत्तेरिति भावः ॥ **इत्यनुकूलतर्करक्षकोपेतत्वादिति** ॥ अनुमानानां विपक्षे कल्पनागौरवरूपानुकूलतर्काख्यरक्षकोपेतत्वादित्यर्थः । नचैव-माकाशपदप्रवृत्तिनिमित्तस्य जातित्वानङ्गीकारे गौरवमिति तत्रापि वक्तुं शक्यमिति वाच्यम् । तत्र जातिबाधकसद्भावेन जातित्वस्याङ्गीकारानर्हत्वेन गौरवस्यादोषत्वादिति भावः । यदाहोदयनः । व्यक्तेरभेदस्तुल्यत्व-

मित्यादिना । तत्र न तावदात्मत्वस्य जातित्वाङ्गीकारे तुल्यत्वादीनि पञ्च बाधकानि सन्तीत्यर्थः ।[1]

---

[1] (अत्रान्तिमवाक्यत्रयस्थले श.पाठे अयं प्रघट्टकः दृश्यते)- 'यदाहोदयनः ।

**व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः ।**

**रूपहानिरसम्बन्धो जातिबाधकसङ्ग्रहः ॥**

इति । तत्रानेकेषु घटेषु 'घटोऽयं घटोऽयं' इति अनुगतप्रत्ययव्यवहारयोर्निर्वाहाय घटत्वरूपानुगतजातिरङ्गीक्रियते । अन्यथा तयोर्निर्निबन्धनत्वापत्तेः । न च घटरूपादिनिबन्धनत्वं तयोर्वाच्यम् । तेषामननुगतत्वात् । अतोऽनुगतजातिरङ्गीकार्या । एवं व्यक्त्यनेकत्वस्य जातित्वप्रयोजकत्वात् व्यक्त्यभेदो जातिबाधकः । यथाऽऽकाशस्यैकत्वात् आकाशत्वं न जातिः । तत्र जात्यापादकानुगतप्रत्ययादेरभावात् । द्रव्यत्वापेक्षया सत्तायाः अधिकदेशवृत्तित्वेन परत्वात्, पृथिवीत्वस्य न्यूनदेशवृत्तित्वेन अपरत्वात्तयोः जातित्वमङ्गीक्रियते । तथा च किञ्चिज्जात्यपेक्षया परापरभावापन्नत्वस्य जातिप्रयोजकत्वात् तुल्यदेशवृत्तित्वाख्यतुल्यत्वं जातिबाधकम् । यथा घटत्वतुल्यदेशवृत्तिकरीरत्वं न जातिः । परस्परपरिहारेण वर्तमानयोः एकत्र समावेशः सङ्करः । यथा भूतत्वमूर्तत्वयोः । भूतत्वं मूर्तत्वपरिहारेण गगने अस्ति । मूर्तत्वं च भूतत्वपरित्यागेन मनसि । तयोः पृथिव्यां समावेशात् । जातौ जात्यङ्गीकारे अनवस्थितिः बाधिका । विशेषेषु जात्यङ्गीकारे विशेषस्वरूपहानिः बाधिका । तथा हि । आप्यपरमाणुप्रभृतीनां समानजात्याक्रान्तत्वेन जात्यादेः व्यावर्तकत्वासम्भवात्, तेषु योगिनां अन्योन्यव्यावृत्तिधीजननेन अन्त्यव्यावर्तकत्वस्वभावाख्याः विशेषाः अङ्गीक्रियन्ते । तेषामन्त्यव्यावर्तकत्वं च कदापि संशयाद्यहेतुत्वम् । न चैतद्विशेषेषु जात्यङ्गीकारे सम्भवति । तथात्वे सर्वेषां विशेषाणां विशेषत्वरूपसाधारणधर्मापन्नत्वेन कदाचित् संशयविषयत्वापत्त्या स्वाश्रयनित्यद्रव्येषु संशयहेतुत्वापत्तेः । अतः विशेषेषु जात्यङ्गीकारे अन्त्यव्यावर्तकरूपहानिः अनिवार्या । समवायत्वजात्यङ्गीकारे असम्बन्धो बाधकः । समवयस्य एकत्वेन समवाये समवायाभ्युपगमे आत्माश्रयापत्त्या समवायतन्निष्ठजात्योः सम्बन्धाभावात् ।'- इति ।

**(२२) व्यक्त्यभेदोऽपि न बाधकः । तथा हि । आत्मत्व-जातिसाधनद्वाराऽऽत्मभेदः साध्यः । स च सन्दिग्धः । न च साध्याभावसन्देहोऽनुमानं निरुणद्धि (अनुमानविरुद्धः)। (अन्यथा) अनुमानमात्रोच्छेदप्रसङ्गात् । एवं तर्हि गगनत्वादिकमपि जातिः स्यादिति चेन्न । तेषां धर्मिग्राहकमानेन लाघवानुगृहीतेनैकत्व-सिद्धेः(सिद्धौ बाधात्) । न चैवं प्रकृते । धर्मिग्राहकप्रत्यक्षस्य भेदग्राहकत्वेनोपपादनात् । न चापारमार्थिकभेदेनाप्युपपत्त्याऽ-र्थान्तरत्वम् (आत्मत्वजात्युपपत्त्याऽर्थान्तरत्वम्)। जातेर्धर्मि-सत्तासमानसत्ताकभेदवद्व्यक्त्याश्रयत्वात् (-व्यक्त्याश्रितत्वात्)। अन्यथा गगनत्वस्यापि जातित्वापत्तेः ।**

(२२) (भ.) पञ्चबाधकानामभावेऽपि व्यक्त्यभेदो बाधकोऽस्त्वित्यत आह — व्यक्त्यभेदोऽपीति । यद्यप्यैक्यवादिनाऽऽत्मव्यक्तेरभेदोऽङ्गीक्रियते । तथाऽपि स नेदानीमपि निश्चितः किन्तु सन्दिग्धः । अत एवात्मत्वस्य जातित्वसाधनद्वाराऽऽत्मभेदः साध्यते । अभेदश्च भेदाभावरूपः । न च साध्याभावसन्देहोऽनुमितिविरोधी । अनुमानमात्रोच्छेदप्रसङ्गात् । प्रत्युत पक्षताघटकत्वेनानुमित्यङ्गम् । अतो नात्र व्यक्त्यभेदोऽपि बाधक इत्यर्थः । इदमपि न्यायमतानुसारेणैव । सिद्धान्ते व्यक्त्यभेदादेरजातिबाधकत्वात् । तथा हि । व्यक्त्यभेदस्तावन्न जातिबाधकः । यथोक्तं तत्त्वनिर्णये –

> `यतः स्वरूपतश्चान्यो जातितः श्रुतितोऽर्थतः ।
>
> कथमस्मि स इत्येव सम्बन्धः स्यादसंहित' इति ।

व्याख्यातं च तट्टीकायां `जातितो जीवत्वादिजातिभेदत' इति । आदिपदेन विष्णुत्वग्रहः । तथा च विष्णुत्वस्य जातित्वेन प्रमाणसिद्धत्वात्तत्र

व्यक्त्यनेकत्वाभावान्न व्यक्त्यभेदो जातिबाधक इत्यवगम्यते । एवं तुल्यत्वमपि न बाधकम् । तुल्यव्यक्तिकयोरुभयोरपि जातित्वाङ्गीकारे बाधकाभावात् । न च घटत्ववत्करीरत्वस्यापि जातित्वापत्तिः । घटत्वातिरिक्तस्य करीरत्वस्याभावात् । घटकरीरशब्दवदेतयोरपि शब्दयोः पर्यायत्वात् । एवं सङ्करोऽपि न बाधकः । मानुषेषु परस्परपरिहारेण वर्तमानयोरपि यतित्वगार्हस्थ्ययोर्देवेषु साङ्कर्यस्य श्रुतिसिद्धत्वात् । अत एव ते न जातीति[1] इति चेत् । तर्हि ब्राह्मणत्वादीनामपि जातित्वाभावापातात् । न च साङ्कर्याभावात्तेषां जातित्वमिति वाच्यम् । साङ्कर्यस्य जातिबाधकतासिद्ध्युत्तरकालीनत्वादस्याः कल्पनायाः । न चैवं भूतत्वमूर्तत्वोरपि जातित्वापत्तिः । मूर्तत्वस्य परिच्छिन्नपरिमाणरूपत्वेनौपाधिकधर्मतया जातित्वशङ्कानर्हत्वात् । अत एव न परापरभावानुपपत्तिरिति । अनवस्थितिरपि न बाधिका । जातौ जात्यङ्गीकारेऽप्यनवस्थाभावात् । यथोक्तमनुव्याख्याने –

`अस्मत्पक्षे गुणाद्याश्च तद्वन्तो हि विशेषतः ।

अनन्यत्वान्नाऽनवस्थे'ति ।

विशेषसमवाययोः स्वरूपस्यैवाभावात्तत्र विशेषत्वसमवायत्वरूपधर्मस्याप्यभावेन तयोर्जातित्वनिरासार्थं रूपहान्यसम्बन्धयोर्बाधकत्वकल्पनं तु दूरोत्सारितमिति सङ्क्षेपः ॥ **एवं तर्हीति** ॥ व्यक्त्यभेदस्य बाधकत्वाभाव इत्यर्थः ॥ **गगनत्वादिकमिति** ॥ कालत्वं दित्त्वं चादिपदार्थः । निराकरोति ॥ **तेषामिति** ॥ गगनकालदिशामित्यर्थः ॥ **तेषामिति** ॥ सामान्येन

---

[1] `जातयः' इति पाठेन भाव्यमिति भाति ।

परामर्शान्नपुंसकता । गगनकालदिग्रूपपदार्थानामिति वा ॥ **धर्मिग्राहकेति** ॥ शब्दः क्वचिदाश्रितो गुणत्वाद्रूपवदित्यनुमानेन सामान्यतः शब्दाश्रयद्रव्ये सिद्धे तस्य पृथिव्याद्यष्टान्यतमत्वस्य बाधितत्वात्तदतिरिक्तद्रव्यं यत्सिध्यति तदेवाकाशं भवति । तस्य चानेकत्वे प्रमाणाभावेन तत्कल्पने गारैवापत्त्या लाघवादेकत्वमेवाङ्गीकार्यम् । एवं कालदिशोरपि । तथा च लाघवानुगृहीतेन धर्मिग्राहकमानेनैकत्वस्यैव सिद्धेर्गगनादिव्यक्तिनानात्वाभावेन तत्र गगनत्वादिजात्यङ्गीकारे व्यक्त्यभेदो बाधको भवत्येवेति भावः । प्रकृतेऽपि तथैवास्त्वित्यत आह — **न चैवमिति** ॥ **उपपादनादिति** ॥ 'तत्र ब्रूम' इत्यादिग्रन्थेनोपपादितत्वादित्यर्थः [1] । ननु प्रत्यक्षस्य भेदावगाहित्वेऽपि न पारमार्थिकभेदावगाहित्वम् । अद्वैतश्रुत्यादिविरोधात् । अतोऽपारमार्थिकभेदेनाप्यात्मत्वजात्युपपत्त्या पुनरर्थान्तरतैवेति । तत्राह — **न चेति** ॥ **जातेरिति** ॥ त्वन्मतेऽपि घटत्वादिजातेर्धर्मिसत्तासमानसत्ताको यो भेदो व्यावहारिकस्तद्वत्यो या व्यक्तयो घटादिरूपास्तदाश्रितत्वाङ्गीकारात् । प्रकृतेऽप्यात्मत्वजातेर्धर्मिभूतात्मसत्तासमानसत्ताकभेदवत्यो या व्यक्तय आत्मरूपास्तदाश्रितत्वेऽङ्गीकार्ये आत्मवत्तद्भेदस्यापि पारमार्थिकत्वमेव पर्यवस्यतीति भावः । व्यक्तौ भेदमात्रेण जातित्वोपपत्त्या धर्मिसमसत्ताकत्वविशेषणमतन्त्रमेवेत्यत आह — **अन्यथेति** । गगनेऽपि प्रातिभासिकभेदस्य त्वन्मते सत्त्वेन तावन्मात्रस्यैव जातित्वप्रयोजकत्वे गगनत्वस्य जातित्वं दुर्वारमेव । अतो धर्मिसमसत्ताकत्वविशेषणमावश्यकमेव । ततश्च धर्मिणो गगनस्य व्यावहारिकत्वेन तत्समसत्ताकत्वस्य प्रातिभासिकभेदेऽयोगेन न गगनत्वस्य जातित्वमिति

---

[1] प्राक् द्वादशे मूल इत्यर्थः ।

वाच्यम् । तद्वदत्रापि तादृशभेद एव जातित्वप्रयोजक इत्यङ्गीकार्यमिति नार्थान्तरतेति भावः ।

(२२) (मु.) ननु जातिबाधकाभाव एवोक्तन्यायावतार इत्यतः प्रकृतेऽपि तुल्यव्यक्तिकत्वादिकं नास्तीत्याह — **व्यक्त्यभेदोऽपीति** । प्रकृते साध्याभावरूपतया सन्दिग्धत्वात्सन्देहस्य साध्यसन्देहत्वेनाप्रतिबन्धकत्वादिति भावः । जातेरेव साध्यत्वात्कथमेतदित्यत आह — **आत्मत्वेति** ॥ अयं भावः । इह चात्मत्वजातिसाधनं न तावन्मात्रतात्पर्यकम् । वैयर्थ्यात् । किन्तु तद्द्वारा व्यक्तिभेद एव साध्यः । एवञ्च परम्परयाभेदस्य साध्यत्वेन न भेदसन्देहोऽनुमितिप्रतिबन्धकः प्रत्युत गुण एवेति । ननु साक्षात्साध्यसन्देह एवाप्रतिबन्धक इति चेन्न । साध्यनियतसंशयमात्रस्य तथात्वात् । अन्यथा वह्निसामग्रीसंशयः प्रतिबन्धकः स्यात् । ननु सत्प्रतिपक्षादिस्थले साध्यसन्देहोऽप्यनुमानं निरुणद्धीति चेत् । सत्यम् । विरोध्याहितस्य तथाभावेऽपि स्वारसिकसंशयस्य गुणत्वात् ॥ **गगनत्वादिकमिति** ॥ उक्तन्यायादेवेति भावः ॥ **धर्मिग्राहकेति** ॥ शब्दस्योपादानकार्यत्वादिनेत्यर्थः ॥ **न च पारमार्थिकेति** ॥ घटादावपारमार्थिके भेदस्य घटत्वेऽपि कृतेनेत्यर्थः ॥ **धर्मिसत्तेति** ॥ धर्मिणामेव व्यावहारिकत्वेन भेदस्य तथात्वोपपत्तावात्मनो धर्मित्वेन पारमार्थिकत्वसिद्धिरिति भावः । एवञ्च जातिलक्षणेऽनेकानुगतत्वं धर्मिसत्तासमानसत्ताकभेदवद्वृत्तित्वमिति जातिसिद्ध्यैवभेदपारमार्थ्यसिद्धिः । यद्वा ॥ **गगनत्वस्यापीति** । तत्रापि प्रातिभासिकव्यक्तिभेदस्यैव जातिघटकत्वसम्भवादिति भावः ॥

(२२) (कु.) ॥ **अन्यथेति** ॥ तत्रापि प्रातिभासिकधर्मिभेदस्य सत्त्वादिति भावः ।

(२२) (हु.) शङ्काभिप्रायमाविष्कृत्य निराकरोति ॥ **व्यक्त्यभेदोऽपीति** ॥ **साध्याभावसन्देह इति** ॥ स्वारसिकसन्देह इत्यर्थः । आहितस्तु भवत्येव स च प्रकृते नास्त्येव । तस्य परामर्शादौ अप्रामाण्यशङ्कामूलकत्वात्[1] । तेषां च प्रकृतेऽनुकूलतर्कभयेनानुत्थितेरिति भावः ॥ **धर्मिग्राहकमानेनेति** ॥ शब्दरूपगुणाश्रयतया गगनस्य सिद्धिः । तत्र पृथिव्यादिचतुष्टयकल्पने गौरवप्रतिसन्धानेनैको विभुराकाशः सिध्यति । एवमिदानीं घट इत्यादिप्रतीतिषु तरणिपरिस्पन्दो घटादीनां सम्बन्धघटकतया लाघवादेको विभुः कालः सिध्यति । इह घट इत्यादिप्रतीतिनिर्वाहाय मूर्तसम्बन्धघटकतया लाधवादेका विभुर्दिक् सिध्यति । तत्र जात्यङ्गीकारे नानागगनादिप्राप्त्या तस्य धर्मिग्राहकमानबाधादित्यर्थः । न चेतीत्यर्थान्तरमित्यनेन सम्बन्धः ।

(२२) (का.) ननु तथापि व्यक्त्यभेदो बाधकः । यथोक्तम् —

**`व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः ।**

**रूपहानिरसम्बन्धो जातिबाधकसङ्ग्रह'**

इत्यत आह — **व्यक्त्यभेद इति** ॥ आत्मत्वस्य जातित्वे व्यक्त्यभेदः स्वाश्रयप्रतियोगिकभेदवदवृत्तित्वं विरोधीति न वाच्यम् । तस्य साक्षाज्जातित्वानुमितिविरोधित्वे मानाभावात् । फलीभूतात्मभेदानुमितौ च तन्निश्चयस्यैव बाधविधया विरोधित्वात्, तस्य च प्रकृतेऽभावादित्याह — **आत्मत्वेति** ॥ आत्मभेदः आत्मत्वस्य स्वाश्रयप्रतियोगिकभेदवद्वृत्तित्वम् ।

---

[1] `परामर्शादेव प्रामाण्य-' मु.

**स च सन्दिग्ध इति** ॥ तत्सन्देहस्य च व्यक्त्यभेदसन्देहतया न विरोधित्वमिति भावः । ननु तत्सन्देह एवानुमितिप्रतिबन्धको भविष्यतीत्यत आह — **न चेति** ॥ **अनुमानमात्रोच्छेदप्रसङ्ग इति** ॥ सर्वत्र साध्यसन्देहसत्त्वादिति भावः । एतच्च साध्यसन्देहः पक्षतेति मतेनोक्तम् । सिद्ध्यभावपक्षतापक्षे तु साध्यसन्देहस्यानुमित्यव्यवहितपूर्वमनावश्यकत्वात् सन्दिग्धसाध्यकानुमानोच्छेदप्रसङ्गो द्रष्टव्यः ।

ननु संशयसाधारणव्यक्त्यभेदज्ञानमात्रस्य जातित्वानुमितौ मणिमन्त्रादिवत् स्वातन्त्र्येणैव विरोधित्वम् । अन्यथोक्तक्रमेण गगनत्वादिजातिसिद्धिप्रसङ्गात् । तथाच नात्मत्वजातिसिद्धिरित्याशङ्कते — **एवमिति** ॥ व्यक्त्यभेदसन्देहस्य जातित्वानुमित्यविरोधित्व इत्यर्थः । स्यादेवं यदि प्रकृत इव गगनव्यक्त्यभेदः सन्दिग्धः स्यात् । न चैवम् । अपि तु प्रमित एव । तथाच तत एवातिप्रसङ्गवारणादुक्तविरोधित्वे मानाभाव इति भावेन समाधत्ते ॥ **धर्मिग्राहकेति** ॥ शब्दो द्रव्याश्रितो गुणत्वाद्रूपवदित्यनुमानेन शब्दस्यैकद्रव्याश्रितत्वे लाघवमिति लाघवग्रहसहकृतेन पृथिव्याद्यष्टद्रव्याश्रितत्वबाधे सत्यष्टद्रव्यातिरिक्तैकद्रव्याश्रितत्वस्यैव सिद्ध्या गगनत्वादेर्जातित्वाभावनिश्चयादित्यर्थः । धर्मिग्राहकेत्यनेनोपजीव्यतया प्राबल्यं सूचितम् । तेन वैपरीत्यशङ्कानवकाशः ॥ **प्रत्यक्षस्येति** ॥ साक्षिणो नाहं निर्दुःख इत्यादिरूपस्य भेदग्राहकत्वेनैव पूर्वमुक्तत्वादित्यर्थः । एवं च नोक्ताभाससाम्यमित्याशयः ।

आत्मत्वं नानाव्यक्तिनिष्ठं जातित्वादिति फलीभूतानुमाने साध्यशरीरे भेदसामान्यप्रवेशादारोपितभेदसिद्ध्याऽप्यनुमानपर्यवसानादर्थान्तरमित्याशङ्क्य निराचष्टे ॥ **न चेति** ॥ **आत्मत्वजात्युपपत्त्या** आत्मत्वस्य

जातित्वोपपत्त्या ॥ **जातेरिति** ॥ तथाच धर्मिसत्तासमानसत्ताकभेदस्यैव साध्यघटकत्वादात्मनि पारमार्थिकभेदं विना साध्यापर्यवसानान्नार्थान्तरत्वमिति भावः । ननु जातेर्भेदवद्व्यक्त्याश्रितत्वमित्येव नियमो न तु धर्मिसत्तासमानसत्ताकत्वमपि तत्र निवेश्यत इत्यत आह — **अन्यथेति** ॥ **जातित्वापत्तेरिति** ॥ गगनेऽप्यौपाधिकभेदसत्त्वादिति भावः । एतच्च मायिमतेनोक्तम् । सिद्धान्तिभिरौपाधिकभेदानङ्गीकारात् ।

(२२) (श.) तर्हि व्यक्त्यभेदो बाधकोऽस्त्वित्यत आह — **व्यक्त्यभेदोऽपि न बाधक इति** ॥ अयमर्थः । व्यक्त्यभेदो हि नेदानीमपि निश्चितः आवयोस्तत्रैव विवादात् । किन्तु सन्दिग्धः । तथाचात्रभेदस्य साध्यत्वादभेदस्य तदभावरूपत्वात् तत्सन्देहस्य साध्यतदभावकोटिकसंशयत्वात् तस्य च सार्वत्रिकत्वेनानुमानमात्रोच्छेदकतया दूषणत्वात् प्रत्युत पक्षताघटकत्वेनानुमित्यङ्गत्वात् भेदानुमित्यप्रतिबन्धकत्वात् व्यक्त्यभेदो नात्र बाधक इति ॥ **एवन्तर्हीति** ॥ तत्रापि व्यक्तिभेदस्योक्तरीत्या बाधकत्वपरिहारसम्भवादिति भावः ॥ **धर्मिग्राहकेति** ॥ आकाशो धर्मी । शब्दः क्वचिदाश्रितः गुणत्वादित्यनेन शब्दाश्रये सामान्यतः सिद्धे तस्य पृथिव्याद्यष्टान्यतमत्वबाधे तदतिरिक्तो नवम आकाशाख्यः पदार्थोऽङ्गीक्रियते । लाघवादनेकत्वे प्रमाणाभावाच्चैकत्वं च तस्य निश्चितम् । तथाचैकत्वरूपसाध्याभावस्य निश्चितत्वात् भवत्येव तत्र व्यक्त्यभेदो बाधक इति भावः । तर्ह्यत्रापि तथैवास्त्वित्यत आह — **नचैवमिति** ॥ आत्मग्राहकं साक्षिप्रत्यक्षम् । तच्च भेदग्राहकमेवेति नाहं सर्वज्ञ इत्यादिना प्रागुपपादनादित्यर्थः । तस्मान्नाभाससमानयोगक्षेमत्वमिति भावः । उपपत्त्या आत्मत्वजातेः ॥ **जातेरिति** ॥ जातेर्हि धर्मिणो व्यक्तेः यादृशी

सत्ता तत्समानसत्ताको यो भेदः तद्वत्यो या व्यक्तयः तदाश्रितत्वं नियतम् । घटत्वजातेर्धर्मिणो घटस्य या सत्ता व्यावहारिकी तत्समसत्ताको यो भेदो व्यावहारिकः तद्वत्यो घटव्यक्तयः तदाश्रितत्वदर्शनात् । तथाऽऽत्मत्वजातेरपि धर्मिण आत्मनो यादृशी सत्ता पारमार्थिकी तत्समसत्ताको यः पारमार्थिकभेदः तद्वदात्मवृत्तित्वे आत्मनां पारमार्थिकभेदसिद्ध्याऽर्थान्तरता नेत्यर्थः । जातित्वे व्यक्तिभेदमात्रस्य प्रयोजकत्वमस्तु नतु भेदस्य धर्मिसत्तासमसत्ताकत्वमित्यत आह — अन्यथेति ॥ व्यक्तिभेदभावादेव हि गगनत्वस्य जातित्वपरित्यागः । नचासौ युक्तः । तत्रापि प्रातिभासिकभेदसद्भावात् । अतो गगनत्वमपि जातिः स्यात् । अतोऽत्र प्रातिभासिकभेदसद्भावेऽपि आकाशो धर्मी तस्य या सत्ता व्यावहारिकी तत्समसत्ताकभेदाभावात् न गगनत्वं जातिरिति परिहाराय जातेर्धर्मिसत्तासमानसत्ताकभेदसापेक्षत्वमवश्यमङ्गीकार्यमिति भावः ।

**(२३) नन्वेतावताऽऽत्मत्वस्य जातित्वमात्रं सिध्यति नात्मभेदः । न च तथात्वे व्यक्त्यभेदो बाधकः स्यात् । स ह्यनुगतव्यवहाराभावेनानुगतव्यवहाररूपजातिविषयकप्रमाणविघटनेन दूषणम् । न चात्मत्वजातावनुगतव्यवहारः । येन तद्विघटनेन जातिरेव न सिध्येदिति व्यक्त्यभेदो दूषणं स्यात् । किन्तु त्वदुक्तानुमानान्येव । ततः कथं भेदसिद्धिरिति चेत् । सत्यम् । नात्र व्यक्त्यभेदो जातेः प्रमाणविघटनेन दूषणम् । येनैवमुपलभ्ये(भे)महि । किन्तर्हि लक्षणविघटनद्वारा । नित्यमेकमनेकानुगतमिति हि तल्लक्षणम् ।**

(२३) (भ.) तथात्वे आत्मभेदाभावे । व्यक्त्यभेदो हि न साक्षादेव जातिबाधकः । किन्तु जातिविषयकप्रमाणविघटकत्वेन । प्रमाणं च

नानाविशेष्यकैकप्रकारकाभिज्ञाभिवादनरूपानुगतव्यवहार एव । अत एव घटादिषु घटत्वादिजातेरङ्गीकारो न गगनादिषु गगनत्वादिजातेः । न च प्रकृते आत्मनि तादृशव्यवहारोऽस्ति । स्वात्मातिरिक्तस्यात्मनः प्रत्यक्षत्वाभावात् । अनुमानादेश्चाद्यापि गहननिविष्टत्वात् । अतः कथं व्यक्त्यभेदस्तत्र तद्विघटकत्वेन जातिबाधकः स्यात् । न च तत्रानुगतव्यवहाराभावेऽपि तत्साधकान्यनुमानान्युपन्यस्तान्येवेति वाच्यम् । तैर्जातिमात्रसिद्धावप्यात्मभेदसिद्धेरिति भावेन पूर्वपक्षी समाधत्ते । स हीत्यादिना कथं भेदसिद्धिरित्यन्तेन । आत्मत्वजाताविति विषयसप्तमी । अनुगतव्यवहारः प्रमाणमिति शेषः । तथा चात्मत्वरूपानुगतजात्यङ्गीकारेऽयमात्माऽयमात्मेति नानात्मविशेष्यकात्मत्वरूपैकप्रकारव्यवहार एव न स्यात् । अत आत्मत्वजातावनुगतव्यवहार एव प्रमाणमिति न वाच्यमित्यर्थः । त्वदुक्तानुमानान्येव । प्रमाणमिति शेषः ॥ **येनैवमुपलभेमहीति** । येनानुगतव्यवहाररूपप्रमाणविघटकत्वाभावेन व्यक्त्यभेदस्यादूषणत्वं प्रतीयेत इत्यर्थः ॥ **अनेकानुगतमिति** ॥ अनेकसमवेतमित्यर्थः । अनुगतमित्यनन्तरमिति शब्दोऽध्याहार्यः । ततश्च नित्यत्वे सत्येकत्वे सत्यनेकानुगतत्वं हि जातिलक्षणमित्यर्थः सम्पद्यते । तथाचात्मभेदानङ्गीकारे आत्मत्वस्यानेकानुगतत्वानुपपत्त्या जातित्वमेव न स्यादिति भावः । अत्रानेकानुगतत्वमित्यनेकसमवेतत्वमुच्यते । अन्यथा गगनात्यन्ताभावेऽनेकानुगतेऽतिव्याप्तिः स्यात् । समवेतत्वस्य त्वभावेऽभावान्नातिव्याप्तिः । तावत्येवोक्ते आकाशसमवेते शब्देऽतिव्याप्तिः । अतोऽनेकेति । परमाणुसमवेतविशेषेष्वतिव्याप्तिनिरासायैकमिति । संयोगे तद्व्युदासाय नित्येति । नन्वथाऽपि नित्यमनेकानुगतमित्येवालम् ।

अनेकानुगतत्वमित्यस्यानेकत्वसङ्ख्यावदनुगतत्वविवक्षायां गुणत्वादि-जातावव्याप्तेः स्वाश्रयभिन्नसमवेतत्वे विवक्षणीये तेनैकत्वस्य स्वत एव लाभात् । न हि प्रतिव्यक्तिभिन्नस्य स्वाश्रयभिन्नसमवेतत्वं सम्भवति । अत एकमिति माऽस्त्विति चेत् । सत्यम् । तथाऽपि न सामान्यं विशेषवत्प्रतिव्यक्तिभिन्नं किन्त्वेकमेव सर्वत्रानुगतव्यवहारहेतुरिति स्वरूपकथनार्थमेतदिति नैय्यायिकसम्प्रदायविदः ।

(२३) (मु.) ॥ एतावतेति ॥ निर्बाधेन लाघवानुगृहीतेनोक्ता-नुमानजातेनेत्यर्थः ॥ **व्यक्तिभेदो बाधक इति** ॥ एवं स्वयं सिध्यतो जातिः स्वबाधकव्यक्त्यभेदं बाधत एव । यावता विना न पक्षे साध्यपर्यवसानं तत्सर्वं पक्षधर्मताबललभ्यमिति न्यायादिति भावः । अनुगतव्यवहारप्रामाण्यक-जातावेव तद्बाधो नान्यत्रेत्यत आह — **स हीति** । एकस्मिन्ननुगत-व्यवहारायोगादिति भावः । अनुगतव्यवहार इति प्रमाणीकृत इति शेषः ॥ त्वदुक्तेति ॥ पृथिवीत्वमित्याद्यैरनुमानैरेवानुगतव्यवहारं विना जातिसिद्धौ व्यक्तिभेदस्य कुत्रोपयोग इति भावः ।

(२३) (कु.) तथात्वे धर्मिभेदाभावे ॥ **स हीति** । नानाविशेष्यकैक-प्रकारकज्ञानरूपोऽनुगतव्यवहारो हि सङ्कराद्यभावे जातौ प्रमाणम् । व्यक्त्यभेदे हि स न स्यादिति । व्यक्त्यभेदस्य प्रमाणविघटकत्वेन दूषणत्वम् । प्रकृते त्वनुगतव्यवहाररूपप्रमाणाभावेऽपि त्वदुदाहृतानुमानानामेव प्रमाणत्वात् न तस्य बाधकतेति समुदायार्थः ।

(२३) (हु.) आत्मभेदविचारावसरे उक्तानुमानैस्तदसिद्ध्याऽर्थान्तरते-त्याशङ्कते — **नन्वित्यादिना** । एकव्यक्तिमात्रविषयकानुगतप्रतीतेस्त-द्विषयकत्वेनैव सम्भवात्तन्निर्वाहाय जातिर्न सिध्यति । व्यक्तिबहुत्वे तु घटो

घट इत्यनुगतव्यवहारस्यैकव्यक्त्या निर्वोढुमशक्यत्वात्तादृशनिखिलप्रतीतिषु भासमाना एका (जातिः) सिध्यतीति व्यक्त्यैक्यं जातिग्राहकप्रमाणविघटकमिति भावः । एवमुपलभ्ये(भे)महि एवमाक्षेपगोचरा भवाम इत्यर्थः ॥ **किन्तर्हीति** ॥ **लक्षणेति** ॥ तथा चारोपितव्यक्तिभेदमादाय गगनत्वे जातिलक्षणातिव्याप्तिपरिहाराय स्वसमानसत्ताकभेदवन्नानाव्यक्तिवृत्तित्वघटितं जातित्वं तदेव साध्यशरीरे जातित्वं निवेशनीयम् । अन्यथा जातित्वस्याखण्डोपाधित्वे मानाभावेन तेन रूपेण निवेशायोगः । तथाऽप्युक्तानुमानबलादेव पारमार्थिकात्मभेदमादायात्मत्वं सिध्यतीति भावः ।

(२३) (का.) ननूक्तानुकूलतर्कसहकृतेनोक्तानुमानजातेनात्मत्वजातिसिद्धावपि नात्मभेदसिद्धिः । न च तत एव तदनुमानसम्भवः । अप्रयोजकत्वात् । उक्तनियमस्य निर्मूलत्वादित्याशयेन दर्शयति — **नन्विति** ॥ **तथात्वे** आत्मभेदाभावे ॥ **बाधक इति** ॥ आत्मत्वजातिसिद्धिविरोधीत्यर्थः । तथा च विपक्षे बाधकतर्कसम्भवान्नाप्रयोजकत्वमित्यभिसन्धिः । व्यक्त्यभेदो हि न साक्षाज्जातिसिद्धिविरोधी । मानाभावात् । अपि तु कारणविघटनद्वारा । कारणं च क्वचिदनुगतव्यवहारः क्वचिदनुमानम् । प्रकृते त्वनुमानमेव । न च तत्र तस्य व्यक्त्यभेदस्य विरोधित्वं मानाभावादित्याह — **स हीति** ॥ अनुगतव्यवहारो नाम नानेकेष्वेकधर्मज्ञानम् । अनुगतधर्मसिद्धेः पूर्वं तदसिद्धेः । किन्त्वनेकेष्वेकाकारज्ञानम् । व्यक्तिभेदश्च व्यक्त्यभेदघटिततादृशप्रमाणविरहसम्पादकत्वेन जातिसिद्धिविरोधीत्यर्थः ॥ **न चेति** ॥ अन्यथाऽनुमानवैयर्थ्यमिति भावः ।

यदुक्तं न चात्मत्वजातावित्यादि तत्सत्यमेव । किन्तु व्यक्त्यभेदस्य

जातिलक्षणविरोधितया तदभावधीसम्पादकत्वाज्जातिसिद्धिविरोधित्वमिति समाधत्ते ॥ **सत्यमिति** ॥ अत्र जातेः प्रकृतसाधनविषयीभूतात्मत्व-जातेरित्यर्थः । यद्यपि व्यक्त्यभेदस्य जातित्वाभावव्याप्यतया साक्षादपि जातिसिद्धिविरोधित्वसम्भवः । तथाप्यनुकूलतर्कास्फूर्तौ तादृशव्याप्यत्वस्य दुर्ग्रहत्वाल्लक्षणविघटनद्वारेत्युक्तम् । लक्षणस्य च लक्ष्यतावच्छेदक-व्यापकत्वं, व्यापकाभावस्य व्याप्याभावसाधकत्वं च प्रसिद्धमेव । तथाच व्यक्त्यभेदे लक्षणाभावापत्त्या जातित्वानुपपत्तिरूपानुकूलतर्कसत्त्वादुक्त-जातित्वहेतुकानुमानेनात्मभेदसिद्धिरावश्यकीत्याशयः ।

ननु कथं व्यक्त्यभेदस्य जातिलक्षणविघटकत्वमिति चेत्तस्य व्यक्तिभेदघटितत्वादित्याशयेन **तार्किकोक्तं जातिलक्षणमाह — नित्यमिति** ॥ संयोगादावतिव्याप्तिवारणाय नित्यमिति । गगनपरिमाणादावति-व्याप्तिवारणायानेकानुगतमिति । अनेकसमवेतमित्यर्थः । तेनात्यन्ताभावे नातिव्याप्तिः । अनेकसमवेतत्वं च न पदार्थविभाजकोपाधिरूपेण । तथा सत्यनेकवृत्तितावच्छेदकपदार्थविभाजकोपाधिमत्त्वरूपस्य तस्य विशेषेऽपि सत्त्वादतिव्याप्तेः । किन्तु प्रत्येकं स्वसमवायिप्रतियोगिकभेदवत् समवेतत्वपर्यवसितमेव विवक्षितमिति ज्ञापनायैकमित्युक्तम् । **एकमिति** क्रियाविशेषणम् । तेनैकसम्बन्धेन समवायेनानेकवृत्तित्वलाभ इत्यप्याहुः ।

(२३) (श.) पूर्वमुक्तानुमानैरात्मभेदमात्रसिद्धिमङ्गीकृत्य तस्य पारमार्थिकत्वासिद्ध्याऽर्थान्तरमाशङ्क्य निराकृतम् । अधुनाभेदस्यैवा-सिद्ध्याऽर्थान्तरमित्याशङ्कते — **नन्विति** ॥ एतावता उक्तानुमानसमुदायेन । तथात्वे आत्मभेदमनङ्गीकृत्यात्मत्वस्य जातित्वाङ्गीकारे तस्य प्रकृते बाधकत्वं निराकरोति ॥ **सहीत्यादिना** ॥ स चानुगतप्रत्ययसाध्यः ।

अनुगतप्रत्ययोप्यनुगतधर्मसाध्य इत्यनुगताघटत्वादिजातिरङ्गीक्रियत इत्यनुगतव्यवहारोऽत्र जात्यङ्गीकारे प्रमाणम् । व्यक्तिभेदाभावे चानुगतव्यवहारस्यैवाभावादनुगतजात्यङ्गीकरो व्यर्थ इति खट्ट व्यक्त्यभेदस्यानुगतव्यवहाररूपजातिघटकप्रमाणविघटकत्वेन दूषणत्वम् । नच प्रकृतेऽनुगतव्यवहारबलादात्मत्वस्य जातित्वमङ्गीक्रियते । येनानुगतव्यवहाररूपजातिघटकप्रमाणविघटनेन व्यक्त्यभेदो दूषणं स्यात् । किन्तु अनुमानबलादेवात्मत्वस्य जातित्वस्वकारः । नचोक्तरीत्या व्यक्त्यभेदस्य तद्विघटकत्वमस्तीति समुदायस्यार्थः । व्यवहार इत्यनन्तरं प्रमाणमिति शेषः । जातिरेव आत्मत्वरूपजातिरेव । त्वदनुमानान्येव प्रमाणमिति शेषः ॥ **ततः कथमिति** ॥ व्यक्त्यभेदस्य दूषणत्वे आत्मत्वस्य जातित्वनिर्वाहाय व्यक्तावात्मनि भेदोऽङ्गीकार्यः तदभावे तु निमित्ताभावादात्मभेदसिद्धिः कथमित्यर्थः । अत्र प्रकृते ॥ **लक्षणविघटनद्वारेति** ॥ व्यक्त्यभेदे अनेकानुगतत्वरूपलक्षणायोगादिति भावः । किं तज्जातिलक्षणं यद्विघटकत्वेन व्यक्त्यभेदस्य दूषणत्वं जानीम इत्यतो नैयायिकोक्तजातिलक्षणमुपन्यस्यति ॥ **नित्यमिति** ॥**अनेकानुगतमिति** ॥ **(* इतः 'अत्र सम्प्रदायविदः' इति पर्यन्तं मु.पाठे नास्ति ।)** अनेकसमवेतमित्यर्थः । अन्यथा आकाशात्यन्ताभावेऽतिव्याप्तिः । तत्र नित्यत्वे सत्येकत्वे सत्यनेकानुगतत्वस्य सत्वात् । समवेतत्वमित्युक्तौ च नातिव्याप्तिः । तत्र नित्यत्वे सत्येकत्वे सत्यपि अनेकसमवेतत्वाभावात् । अभावस्य क्वचिदप्यसमवायात् । तथा च नित्यत्वे सत्येकत्वे सत्यनेकसमवेतत्वं सामान्यलक्षणम् । अत्र समवेतमित्येवोक्तौ शब्देऽतिव्याप्तिः । तस्याकाशसमवेतत्वात् । अतोऽनेकेति । आकाशस्यैकत्वेन शब्दस्यानेक-

समवेतत्वाभावात् परिहारः । अनेकसमवेतमित्युक्ते विशेषेषु । तेषामपि अनेकपरमाणुसमवेतत्वात् । अतः एकेति । तेषामनन्तत्वात् । एकमनेकसमवेतमित्युक्ते संयोगे । तस्य द्विष्ठगुणत्वेनानेकसमवेतत्वादेकत्वाच्च । अतो नित्येति । तस्यानित्यत्वात् । नित्यमित्युक्ते विशेषेषु । अत एकेति । नित्यमेकमित्युक्ते गगने । अतोऽनेकसमवेतमिति । नित्यत्वे सत्यनेकसमवेतत्वमित्युक्ते विशेषेषु । अत एकेति । अत्र सम्प्रदायविदः अत्रैकत्वं न लक्षणशरीरान्तर्गतम् । किन्तु सामान्यं सर्वत्रानुगतव्यवहारहेतुत्वादेकमेव न विशेषवत्प्रतिव्यक्तिभिन्नभिन्नमिति स्वरूपकथनार्थमेवेति ।

अत्रेदं चिन्त्यं किमिदमनेकसमवेतत्वं नामानेकत्वसङ्ख्यावत्समवेतत्वं वा स्वाश्रयप्रतियोगिकान्योन्याभाववत्समवेतत्वं वा आद्ये रूपत्वेऽव्याप्तिः । रूपेऽनेकत्वसङ्ख्याभावेन रूपत्वेऽनेकत्वसङ्ख्यावत्समवेतत्वाभावात् । द्वितीये एकपदवैयर्थ्यम् । नच विशेषेष्वतिव्याप्तिपरिहाराय तत् । तेषां प्रतिव्यक्तिनियतत्वेन कुत्रापि विशेषे स्वाश्रयप्रतियोगिकान्योन्याभाववत्समवेतत्वाभावेनानतिव्याप्तेः । नच विशेषसमुदायेऽस्तीति वाच्यम् । समुदायिभिन्नसमुदायाभावात् । भावे वा तस्य समवेतत्वाभावेनातिव्याप्त्यभावाच्च । समुदायस्याप्येकत्वेन दत्तेऽपि विशेषणेऽतिव्याप्त्यपरिहाराच्चेति । ननु कालाकाशसंयोगस्याजन्यत्वेन नित्यत्वादेकत्वात्कालाकाशरूपानेकसमवेतत्वात्समग्रलक्षणस्य तत्रातिव्याप्तिरिति चेन्न । तादृशसंयोगस्यैवाभावात् । कालाकाशयोरमूर्तत्वेन तत्संयोगानङ्गीकारे व्याप्तत्वभङ्गाभावाच्चेति सङ्क्षेपः ।

**(२४) एवञ्चात्मा धर्मिसत्तासमानसत्ताकात्मप्रतियोगिक-भेदाधिकरणं द्रव्यत्वाद्धटवदित्यादीन्यन्यथासिद्धानि(-दीन्यपि सुस्थानि) । चैत्रशरीरं वस्तुतो मैत्रशरीरस्वामिभिन्नस्वामिकं तद्विरुद्धचेष्टाकशरीरत्वादित्यत्र मैत्रशरीरं व्यतिरेकदृष्टान्तः । जीवेशौ धर्मिसत्तासमानसत्ताकभेदवन्तौ विरुद्धधर्माधिकरणत्वात्सम्मतवत् । विरोधश्च न सहानवस्थाननियमलक्षणः । ऐक्यवादिनोऽसिद्धेः । किं तर्हि नित्यत्वानित्यत्वादाविव वध्यघातुकभावलक्षणः । तादृशश्च धर्मः सर्वज्ञत्वासर्वज्ञत्वादिः । न चोपाधिभेदमात्रेण तद्व्यवस्थोपपत्तिर्योगिनि तददर्शनात् ।**

(२४) (भ.) एवमुपन्यस्तानुमानानामाभासोद्धारेण पूर्वपक्षिणाऽऽशङ्क्य दूषितान्यप्यनुमानानि निर्दोषाणि सिद्धानीत्याह — एवञ्चेति ॥ आत्मनो द्रव्यत्वे आत्मत्वस्य जातित्वे च सिद्धे धर्मिसमसत्ताकेति भेदविशेषणे च विवक्षिते सतीत्यर्थः । आदिपदेनात्मत्वं नानाव्यक्तिनिष्ठं जातित्वात्पृथिवीत्व-वदित्याद्यनुमानग्रहणम् । चैत्रशरीरपक्षकानुमानदोषं परिहरति — **चैत्रशरीरमिति** ॥ व्यावहारिकभेदमादाय सिद्धसाधनतावारणाय वस्तुत इति । अत्र बलवत्कारणाभावे सतीति युगपदिति च हेतौ पूरणीयम् । तेनेन्द्रानभिमतखाण्डवदहनोद्योगिन्यर्जुनशरीरे कालभेदेन गमनशयनवति मैत्रशरीरे च न व्यभिचार इति ध्येयम् । बलवत्कारणं चेशेच्छादि ॥ **व्यतिरेकदृष्टान्त इति** ॥ तथा चान्वयदृष्टान्ताभावविवक्षया यद्दृष्टान्ताभाव इत्युक्तं तत्परिहृतं भवति । इदानीं विमतौ भिन्नावित्यनुमानदोषं परिहरति ॥ **जीवेशाविति** ॥ धर्मिसत्तासमानसत्ताकेति भेदविशेषणदानेन पारमार्थिक-भेदसाधनेऽप्रसिद्धविशेषणता । व्यावहारिकभेदसाधने सिद्धसाधनमिति

चोद्यानवकाश इति ध्येयम् ॥ **ऐक्यवादिन इति** ॥ आत्मैक्यवादिनो मतेऽज्ञतासार्वज्ञादिधर्माणामेकत्रैवावस्थानाङ्गीकारादिति भावः ॥ **वध्य-घातुकभावलक्षण इति** ॥ अत्र वध्यत्वं नाम परप्रयोज्याभावप्रतियोगित्वम् । घातुकत्वं च परप्रतियोगिकाभावप्रयोजकत्वम् । अयं च गोव्याघ्रादौ नित्यत्वानित्यत्वादौ सर्वज्ञत्वासर्वज्ञत्वादौ च समानः । ननु न समानः । गोव्याघ्रादौ तमः प्रकाशादौ वध्यघातुकभावस्य समानाश्रयाश्रितत्व-नियमात् । न च नित्यत्वानित्यत्वादौ समानाश्रयताऽस्ति । न हि नित्ये गगने कदाऽप्यनित्यत्वमस्ति । नापि सर्वज्ञ ईश्वरेऽसर्वज्ञत्वम् । एवमनित्ये घटादौ नित्यत्वं वाऽसर्वज्ञे जीवे सार्वज्ञं वा कदाऽप्यस्तीति चेत् । सत्यम् । अत्रापि समानाश्रयतया प्रसक्तयोरेव नित्यत्वानित्यत्वयोः सर्वज्ञत्वा-सर्वज्ञत्वयोर्वाऽभावप्रतियोगित्वाङ्गीकारेणाविरोधात् । एतावांस्तु विशेषः । गोव्याघ्रादौ वध्यघातुकभावप्रविष्टोऽभावो ध्वंसरूपः । नित्यत्वानित्यत्वादौ चात्यन्ताभावरूप इति । नन्वेवं तर्ह्यत्यन्ताभावप्रतियोगिनोरप्रामाणिकत्व-नियमान्नित्यत्वानित्यत्वयोर्वा सर्वज्ञत्वासर्वज्ञत्वयोर्वाऽप्रामाणिकत्वापत्त्या कथं तदधिकरणत्वं गगनघटयोर्जीवेशयोर्वेति चेत् । सत्यम् । अन्यत्र प्रसक्तानामभावप्रतियोगित्वेनाप्रामाणिकत्वेऽपि स्वस्वाधिकरणे गगनघटादौ जीवेशादौ च नित्यत्वानित्यत्वादीनां सर्वज्ञत्वासर्वज्ञत्वादीनां च प्रामाणिकत्वात् । न च तेषामुक्तरूपवध्यघातुकभावानुपपत्तिः । स्वस्वाधिकरणे परस्परसजातीयसत्ताऽसहिष्णुत्वरूपत्वात्तस्य । न हि नित्यत्वं स्वाधिकरणे गगने प्रसक्तमनित्यत्वं सहते । नाप्यनित्यत्वं स्वाधिकरणे घटादौ प्रसक्तं नित्यत्वम् । एवं सर्वज्ञत्वमपि न स्वाधिकरण ईश्वरे प्रसक्तमसर्वज्ञत्वं सहते । नाप्यसर्वज्ञत्वं स्वाधिकरणे जीवे प्रसक्तं

सर्वज्ञत्वम् । अत्र वध्यमपि तदेवाभिप्रेतम् । यद्धि प्रसक्तं सजातीयम् । ततश्च वध्याभिमतस्याप्रामाणिकत्वेऽपि घातुकाभिमतस्य प्रामाणिकत्वमेव । तथा च का नामानुपपत्तिः । जीवे प्रसक्तं यत्सर्वज्ञत्वं तत्सत्ताऽसहिष्णुतया तद्घातुकाभिमतं यदसर्वज्ञत्वं तस्यैव तत्र विरुद्धधर्मत्वेन विवक्षितत्वात् । एवमीश्वरेऽपि यत्प्रसक्तमसर्वज्ञत्वं तत्सत्ताऽसहिष्णुतया तद्घातुकाभिमतं यत्सर्वज्ञत्वं तस्यैवेश्वरे विरुद्धधर्मत्वेन विवक्षितत्वादिति । नन्वेवं विरोधस्य वध्यघातुकभावलक्षणत्वाङ्गीकरणं स्वव्याहतम् । स्वेनैव न्यायामृते द्वितीयपरिच्छेदे जीवब्रह्मणोर्भेदसाधकानुमाननिरूपणावसरे विरोधश्च यद्यपि न सहानवस्थानम् । अद्वैतिनं प्रत्यसिद्धेः । नापि वध्यघातुकभावः । नाजात एकोऽन्यं हन्ति नाप्यन्याधार इति न्यायेन तस्याभेदासाधकत्वादित्याद्युक्त्वा तथाऽपि परस्परात्यन्ताभावरूपत्वं वा परस्परात्यन्ताभावव्याप्यत्वं वा कालभेदेनापि सामानाधिकरण्यायोगत्वं वा विरोध इत्युक्तत्वात् । तथा च तत्र वध्यघातुकभावलक्षणं विरोधं निषिध्यात्र तदङ्गीकारे कथं न स्वव्याहतिरिति । उच्यते । द्विविधो हि वध्यघातुकभावः । परस्परविरहसामान्यप्रयोजकत्वरूपः । परस्परध्वंसमात्रप्रयोजकत्वरूपश्चेति । तत्राद्यविवक्षयैतद्ग्रन्थप्रवृत्तिः । द्वितीयविवक्षया न्यायामृते तन्निषेध इति न स्वव्याहतिरिति ॥ अत्र केचित् । नाजात एकोऽन्यं हन्ति नाप्यन्याधार इति न्यायात्सर्वज्ञत्वासर्वज्ञत्वयोर्भिन्नाधिकरणत्वे वध्यघातुकभाव एवानुपपन्न इति कथं तेन जीवेशयोर्भेदसमाधानमित्यालोच्यात्र वध्यघातुकभावशब्देन जहल्लक्षणया परस्परविरहरूपत्वं विवक्षितमित्याचक्षते । अन्ये तु परस्परविरहव्याप्यत्वमित्याहुः । तदुभयमपि चिन्त्यम् । उक्तरीत्या मुख्यार्थसम्भवेऽनुपपत्तेरभावात् । लक्षणाबीजस्य सम्बन्धस्य

लाक्षणिकप्रयोगे प्रयोजनस्य वाऽनिरूपणाच्च । असर्वज्ञत्वपदेनाल्पज्ञत्वविवक्षायां तस्य सर्वज्ञत्वविरहरूपत्वायोगाच्चेति । नन्वत्र वध्यशब्देनात्यन्ताभावप्रतियोग्यप्रामाणिकमेव विवक्षितमिति यदुक्तम् । तन्न । अत्यन्ताभावप्रतियोगिनः क्वचित्प्रामाणिकत्वस्याप्यङ्गीकार्यत्वात् । अन्यथेशेऽल्पशक्तिर्नास्तीति बुद्धेर्निर्विषयत्वं स्यादिति चेन्न । भूतले शशविषाणं नास्तीति बुद्धेरपि निर्विषयत्वापातात् । जीवेऽल्पशक्तेः प्रामाणिकत्वेऽपीशे जीवसाम्येन प्रसक्तायास्तस्या अप्रामाणिकतयाऽऽवश्यकत्वाच्च । ननु च सत्त्वासत्त्वे तावत्प्रामाणिके । ते च परस्परात्यन्ताभावरूपत्वात्परस्परप्रतियोगिभूते । तथा च कथमत्यन्ताभावप्रतियोगिनः प्रामाणिकत्वाभावनिश्चय इति चेन्न । घटादेः सत्त्वस्य तदसत्त्वात्यन्ताभावरूपत्वेऽपि न तत्रासत्त्वस्य प्रतियोगिभूतस्य प्रामाणिकत्वम् । एवं शशविषाणादेरसत्त्वस्य तत्सत्त्वात्यन्ताभावरूपत्वेऽपि न तत्र प्रतियोगिभूतस्य सत्त्वस्य प्रामाणिकत्वम् । एवञ्च सति कथमत्यन्ताभावप्रतियोगिनः प्रामाणिकत्वं प्रत्याशाकर्तुं शक्यते । अत एव न्यायामृतादौ विमतं मिथ्येत्यत्र सत्त्वासत्त्वात्यन्ताभावयोः साध्यत्वे व्याहतिदानं च सङ्गच्छते ।

'त्रिकालसर्वदेशीयनिषेधाप्रतियोगिता ।
सतोच्यतेऽध्यस्ततुच्छे तं प्रतियोगिनी'

इति न्यायामृतेऽध्यस्ततुच्छयोर्द्वयोरेवात्यन्ताभावप्रतियोगित्वकथनाच्च । न च तत्रैव तत्परीक्षाग्रन्थेऽश्वे गोत्वं कदाऽपि नास्तीत्यादौ तत्संसर्ग एव निषिध्यत इति मते देशपदमनपेक्षितमित्युक्तम् । तेन ज्ञायते स्वमतेऽश्वे निषिध्यमानगोत्वेऽव्याप्तिवारणार्थं सर्वदेशीयपदमपेक्षितमिति ।

ततश्चात्यन्ताभावो द्विविधः । सार्वदैशिकसार्वकालिकरूप एकः । सार्वदैशिकमात्रोऽन्यः । तत्र प्रथमाभावं प्रत्येवाध्यस्ततुच्छयोः प्रतियोगित्वं द्वितीयाभावं प्रति तु प्रामाणिकस्यापि गोत्वादेः प्रतियोगित्वमिति सेत्स्यतीति वाच्यम् । अभावद्वैविध्ये प्रमाणाभावात् । अश्वे निषिध्यमानस्य गोत्वस्य प्रामाणिकत्वायोगात् । तथा हि । किं गोत्वमश्वे प्रसक्तं निषिध्यतेऽप्रसक्तं वा । आद्येऽध्यस्तमेव तत् । न द्वितीयः । अप्रसक्तप्रतिषेधायोगात् । प्रतिषेधप्रतिपादनमेव नियमेन प्रसक्तिसापेक्षं न तत्प्रतिपत्तिरिति चेत् । तथाऽपि यद्गोगतं गोत्वं तदेवाश्वे नास्तीति प्रतीयते । उत तत्सजातीयमन्यदेव । आद्येऽपि सकलगोगतं गोत्वमुतैकगोगतम् । नाद्यः सकलगोत्वानामज्ञातत्वेन तन्नास्तिताप्रतीत्ययोगात् । अश्वे गोत्वानि न सन्तीति प्रतीत्यापाताच्च । न द्वितीयः । तथा सति तद्गोत्वं नास्तीति प्रतीत्यापत्तेः । अन्त्ये तु तुच्छमेवैतत् । सकलसद्गोत्व-सजातीयस्यान्यस्याभावात् । तस्मादश्वे नास्तीति निषेध्यं गोत्वमसदेव । ततश्चाश्वे गोत्वसंसर्ग एव निषिध्यते न गोत्वमिति मतमेव स्वमतम् । तत्र सर्वदेशीयपदमनपेक्षितमेव । संसर्गात्यन्ताभावप्रतियोगिनः संसर्गस्या-प्रामाणिकत्वेन तदत्यन्ताभावस्य सर्वदेशीयतानियमात् । कारिकायां सर्वदेशीयपदं त्वभ्युपगमवादेन । अत्यन्ताभावस्वरूपकथनार्थं च । अन्यथा सर्वात्यन्ताभावेष्वप्रामाणिकप्रतियोगित्वानुगतिसूचनाय शशविषाणादी-नामिति बहुवचनं प्रयुक्तमिति तत्त्वविवेकटीकीयमन्दारमञ्जर्यां स्पष्टमेवोक्तत्त्वात्तद्विरोधापातात् । सिद्धान्तेऽप्रामाणिकस्यैव निषेध-प्रतियोगित्वादिति प्रमाणलक्षणटिप्पण्यां श्रीराघवेन्द्रतीर्थकृतायामुक्तत्वाच्च । विस्तृतं चैतदस्माभिर्निर्दोषत्ववादे । अतोऽत्रात्यन्ताभावस्य सिद्धान्ते

तुच्छातुच्छोभयप्रतियोगिकत्वमप्यस्तीत्यभियोगेन सर्वज्ञत्वासर्वज्ञत्वादेः परस्परविरहरूपत्वाङ्गीकारेऽपि न प्रामाणिकत्वभङ्गो मन्तव्य इत्युपपद्यते । उपाधिखण्डनमन्दारमञ्जरीग्रन्थविरोधमाशङ्क्य तत्र कथञ्चिदनुपपत्त्यादिकमभिधाय प्रौढिवादेनैवासौ ग्रन्थः प्रवृत्त इत्यादि यत्कैश्चिदुक्तं तदश्रद्धेयमिवाभातीति चिन्त्यम् । न चेति ॥ स्वाभाविकैक्यसद्भावेऽपि मायाविद्यारूपोपाधिकल्पितभेदस्य सत्त्वात्तन्मात्रेणैव जीवेशयोः सर्वज्ञत्वासर्वज्ञत्वादिविरुद्धधर्मव्यवस्थोपपत्तिः । तथा च नानेन पारमार्थिकभेदसिद्धिरित्यर्थः ॥ तद्वति योगिनीति । औपाधिकभेदवति सौभर्यादियोगिनि परस्परमंशानामनुसन्धानस्यैव दर्शनेन ज्ञानाज्ञानसुखदुःखादिव्यवस्थाया अदर्शनादित्यर्थः ।

(२४) (मु.) ॥ एवञ्चेति ॥ द्रव्यत्वादेः साधितत्वेनासिद्ध्यादेरभावात् पूर्वपक्षदूषितान्यपि पुनः सिद्धानीति भावः । आत्मत्वं नानाव्यक्तिनिष्ठं जातित्वात्पृथिवीत्ववदित्यादिरादिपदार्थः ॥ चैत्रेति ॥ सकलेत्युक्तदोषग्रासाय हेतौ शरीरत्वप्रवेशः । तर्हि दृष्टान्ताभावादित्युक्तमित्यतो व्यतिरेकेति । शिष्टं विचारितम् । नन्विन्द्रार्जुनादिशरीरेषु स्वाम्यैक्येऽपि विरुद्धाया रावणादिशरीरेषु तद्भेदेऽप्यविरुद्धायाश्चेच्छाया दर्शनादप्रयोजको हेतुः । मैत्रस्यैव जन्मान्तरीयशरीरेषु व्यभिचारश्चेति चेन्न । प्रतिज्ञायां भेदपदस्य द्वित्वनिर्वाहकधर्मसामान्यवाचित्वेनेन्द्रार्जुनादिशरीरावच्छिन्ने तावद्विशेषसद्भावात् । न चैवं चैत्रमैत्रयोरपि विशेषेणार्थान्तरता । तावताऽपि निर्विशेषवादविलयापत्तेः । वस्तुतस्त्विन्द्रार्जुनादिशरीरेष्वैक्यस्य प्रमितत्वाद्भेदे प्रमाणमात्राभावाच्च । सोमाभावे पूतिकस्येव विशेषपरिग्रहः । इह तु भेदस्यैव स्वरसता प्राप्ता । चशब्दाद्बाधकानां निरसिष्य-

माणत्वान्मुख्यभेदस्यैव ग्रहो युक्तः । रावणादिशरीरे व्यापकव्यभिचारस्तु नास्माकं परिपन्थी । न चैवं जन्मान्तरीयशरीरे व्यभिचारः सुस्थ एव । तत्स्वामिनो विशेषस्याभावादिति वाच्यम् । हेतौ समानकालीनत्वस्य विशेषणात् । यद्वा मुख्यभेदः साध्यः । तत्र विरुद्धचेष्टाकत्वं नामान्योन्यायतनकसुखाद्यनुसन्धानानधिकरणत्वं विवक्षितम् । उक्तस्थलेऽनुसन्धानस्यैव सत्त्वान्न व्यभिचारादि । जन्मान्तरीय-शरीरादिष्वपि स्तन्यादिना प्रवृत्त्या किञ्चिदनुसन्धानाङ्गीकारात् । उत्तरशरीरगतसुखदुःखाद्यनुसन्धानं पूर्वशरीरे नास्तीति तदा व्यभिचार इति चेन्न । अन्यतरानुसन्धानस्यापि विरोधशब्दार्थत्वादित्यलम् ॥

**जीवेश्वराविति** ॥ पारमार्थिकभेदसाधनेऽप्रसिद्धिः । न चेत्सिद्धसाधनते-त्युक्तदोषग्रहाय धर्मीत्यादि । विरोधस्सहानवस्थाननियमश्चेत्स हि भिन्नाधिकरणत्वनियतो जीवेश्वरभेदसिद्धेः[1] पूर्वमसिद्धमित्यत आह —

**विरोधश्चेति** ॥ नन्वेवं चेद्विरुद्धो हेतुः । नाजात एकोऽन्यं हन्ति नाप्यन्याधार इति न्यायेन वध्यघातुकयोरेकाधिकरण्यावश्यम्भावात् । किञ्च सर्वज्ञत्वासर्वज्ञत्वयोरुक्तविरोधासिद्धिः । नित्यत्वानित्यत्वयोरप्युक्तविरोधा-भावाद्दृष्टान्तायोगश्चेति चेन्न । इह वध्यघातुकत्वं नाम प्रतियोग्यभावत्वमिति विवक्षणात् । अङ्गीकृत्येदमुदितम् । सहानवस्थान एव विरोधस्तद्वांश्च धर्मो जीवत्वेश्वरत्वनियम्यत्वनियामकत्वरूप एवास्तु । न चैवमसिद्धिः । साध्यसन्देहाहितो हेतुसन्देहो न दोष इत्युक्तत्वात् । सहानवस्थाननियमो नाम नेदं सहावस्थातुमर्हतीति निर्बाधविषयत्वम् । बाधकं निराकरिष्यते । अथवा पारमार्थिकत्वव्यावहारिकत्वौदासीनभेदमात्रसापेक्षत्वं विरोधः स च

---

[1] '-भेदासिद्धेः' इति मु.पाठः प्रामादिकः ।

व्यावहारिकभेदवादिनस्तु नासिद्धः । यद्वा जीवेश्वरयोरसङ्करव्यवहारार्थं वादिद्वयाङ्गीकृततदसाधारणशब्दघटितलौकिकवैदिकव्यवहारेष्वन्योन्यनिष्ठ त्वेनाव्यवह्रियमाणधर्माधिकरणत्वमिति दिक् ॥ **तद्व्यवस्थेति** ॥ सार्वज्ञादि-व्यवहारस्येत्यर्थः । तथा च भेदाभावे व्यवस्था न स्यादिति हेतूच्छित्ति-तर्कस्याप्रसिद्धत्वादप्रयोजको हेतुरिति भावः । नानादेहगतांशेष्वन्योन्य-मौपाधिकभेदवत्यपि योगिन्यंशभेदेन सार्वज्ञासार्वज्ञरूपवैलक्षण्यादर्शना-दौपाधिकभेदेनान्यथासिद्धिरिति भावः । नन्वारोपे सति निमित्तानुसरणं न तु निमित्तमस्तीत्यारोप इति चेन्न । विप्रतिपन्नस्थले क्वापि व्यावहारिक-भेदेनोक्तव्यवस्थानुपलम्भेन निमित्तत्वस्यैव भञ्जनात् । ननु विरुद्धधर्मयोर्विशिष्टवृत्तित्वेन जीवेश्वरपदाभिप्रेतचैतन्ये तदसिद्धिरिति चेन्न । विशिष्टपदोक्तविशेषणद्वयस्यैव हेतुत्वात् । न च तदपि विशिष्टयोरेवेति वाच्यम् । अविद्याविशेषणयोरेव हेतुत्वात् ।

(२४) (कु.) ॥ **एवञ्चेति** ॥ आत्मनो द्वित्वगुणाश्रयत्वसमर्थनेन द्रव्यत्वसिद्धावित्यन्वयः । गुणाश्रयत्वसमर्थनेन द्रव्यत्वसिद्धावित्यर्थः ॥ **चैत्रशरीरमिति** ॥ व्यावहारिकभेदमादाय सिद्धसाधनतावारणाय वस्तुत इति । न चाप्रसिद्धविशेषणतेति वाच्यम् । वस्तुतो मैत्रशिरीरस्वामि-तादात्म्यापन्नस्वामिकं न भवतीत्यभावसाध्यकत्वात्तत्र च साध्याप्रसिद्धिर्न दोष इत्युक्तं प्राक् ॥ **विरुद्धचेष्टाकत्वादिति** ॥ मैत्रशरीरचेष्टाविरुद्धचेष्टाक-शरीरत्वादित्यर्थः । एवञ्चैकस्वामिकयोर्घटपटयोर्न व्यभिचारः । प्रागुक्त-मन्वयदृष्टान्ताभावमङ्गीकृत्य व्यतिरेकदृष्टान्तमाह — **मैत्रशरीरमिति** ॥ न च कालभेदेन मैत्रशरीर एव गमनागमनयोर्विरुद्धचेष्टयोर्दर्शनाद्व्यभिचार इति वाच्यम् । एककालावच्छेदेनेति हेतुविशेषणात् । न च तथाऽपि

खाण्डवदहनाज्ञानदर्शनानुकूलविरुद्धचेष्टादर्शनादिन्द्रार्जुनशरीरयोर्व्यभिचार इति वाच्यम् । उभयवादिसम्प्रतिपन्नं यदेकस्वामिकं तच्छून्यत्वे सतीति विशेषणात् । इन्द्रार्जुनशरीरयोस्त्वावयोरेकस्वामिकत्वसम्प्रतिपत्तेर्न व्यभिचारः । अत एव न सौभर्यादिशरीरे व्यभिचारः । न चाप्रयोजकता । परस्परगतदुःखानुसन्धानप्रसङ्गरूपविपक्षे बाधकतर्कसनाथत्वात् । अत एव नोपाधिसत्प्रतिपक्षाभाससाम्यशङ्का ॥ **जीवेश्वराविति** ॥ न च जीवस्यापि धर्मित्वात्तत्सत्तासमानसत्ताकभेदवत्त्वं परस्याभिमतमिति सिद्धसाधनतेति वाच्यम् । दत्तोत्तरत्वात् ॥ **वध्यघातुकभावलक्षण इति** ॥ परस्परात्यन्ताभावरूपत्वलक्षणस्तद्व्याप्यत्वलक्षणो वेत्यर्थः । तेन नाजात एकोऽन्यं हन्ति नाप्यन्याधार इति न्यायेन वध्यघातुकभावापन्नज्ञानेच्छाधारे तदापन्नतमःप्रकाशाधारे न व्यभिचारः । संयोगतदत्यन्ताभावयोस्तु नावयोरेकाश्रयत्वमिति तदाधारे न व्यभिचारः । अत एव नित्यत्वानित्यत्वादाविवेति सङ्गच्छति । न हि तत्र नाश्यनाशकभावः सम्भवति । अत एवेत्थमेव न्यायामृतेऽपि बोध्यम् ।

'अल्पशक्तिरसार्वज्ञं पारतन्त्र्यमपूर्णता ।
उपजीवकत्वं जीवत्वमीशत्वं तद्विपर्ययः ।
स्वाभाविकं तयोरेतन्नान्यथा तु कथञ्चने' त्यादिश्रुतेर्नासिद्धिः ।

ननु सिद्धान्तेऽत्यन्ताभावस्य तुच्छमात्रप्रतियोगिकत्वेन सर्वज्ञत्वादीनां परस्परात्यन्ताभावरूपत्वे तद्व्याप्यत्वे वा तुच्छत्वापत्तिः । तदाधारत्वस्य पक्षे दृष्टान्ते चासिद्धिः । तुच्छस्येतरात्यन्ताभावसाध्ययोर्व्याप्यत्वायोगश्च । न च तार्किकरीत्याऽयं प्रयोग इति नोक्तदोष इति वाच्यम् । 'संयोगतदत्यन्ताभावयोस्तु नावयोरेकाश्रयत्वमिति न व्यभिचार' इति

न्यायामृतीयोत्तरवाक्यविरोधात् । ततः कथमिति चेत् । उच्यते । अत्यन्ताभावस्य न तुच्छमात्रप्रतियोगिकत्वं किन्तु तुच्छप्रतियोगिकत्वं न तु तात्त्विकमत इवातुच्छमात्रप्रतियोगिकत्वं न वा समवायविशेष्यक-संसर्गित्वमित्याशयेनैवायं प्रयोगः । अत एव निरवधिकाभावः सदा भाव इति लक्षणात् । न तु तुच्छप्रतियोगिक इति । भवति च जीवे सर्वज्ञत्वाभावो निरवधिक एवमीशे जीवधर्माभावोऽपि । अन्यथेशेऽल्पशक्ति-र्नास्तीत्यादिबुद्धेर्निर्विषयत्वं स्यात् । न चेयमीशाल्पशक्तिसंसर्गाभाव-विषयिणीति वाच्यम् । संसर्गस्य प्रतियोगिकोटावनुल्लेखात् । बुद्धेः शब्दवत् व्याख्यानायोगात् । ईशत्वं तद्विपर्यय इति उदाहृतश्रुतिविरोधाच्च । अन्यथेह घटो नास्तीत्यग्रे भविष्यतीत्यादिप्रागभावादिबुद्धेरपि संसर्गप्रागभाव-विषयत्वापातेन घटादीनां प्रागभावादिप्रतियोगित्वमपि न स्यात् । तस्मादतुच्छप्रतियोगिकोऽपि सिद्धान्तेऽत्यन्ताभावोऽस्त्येवेत्याशयो ग्रन्थकारस्य । अत एव न्यायामृते सत्त्वासत्त्वात्यन्ताभावयोः साध्यत्वे व्याहतिदानं लाघवादावश्यकत्वादसत्त्वात्यन्ताभाव एव सत्त्वमिति स्वीकारात् । 'द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत' इति न्यायेनैक-तरनिषेधस्यान्यतरविधिरूपत्वात् । मे माता वन्ध्येतिवद्व्याघात इति । मया त्रिकालसर्वदेशीयनिषेधाप्रतियोगित्वतत्प्रतियोगित्वे सत्त्वासत्त्वस्वीकारादिति इति च सङ्गच्छते । परन्तु कदाचिद्घटवत्येव भूतले समयान्तरे प्रतीयमानस्तदभावो न सिद्धान्तेऽत्यन्ताभावः । तस्यामूर्तत्वेनान्यत्र गमनागमनायोगेन घटवत्यपि तदभावबुद्धेः प्रमात्वापातात् । न च समवायविशेषस्य संसर्गतया तेन सम्बन्धेन स नास्तीति कथं प्रमेति वाच्यम् । समवायविशेषस्य संसर्गत्वे प्रमाणाभावात् । अन्यथा सर्वं

सर्वत्रास्त्येव । समवायविशेषरूपसंसर्गाभावादप्रतीतिविरुद्धप्रतीतिरित्यपि स्यात् । किन्तु यथायथं घटतद्भूतलसंसर्गप्रागभावादिः । न च शब्दवत्तत्प्रतीतिव्याख्यानमनुपपन्नमिति वाच्यम् । अनन्यगत्या तत्र तथा स्वीकारात् । एतदभिप्रायिक एव भूतले घटाभावबुद्धेर्विषयो न वाच्यः प्राचां यत्र तद्भूतले घटसंसर्गः कदाऽपि न तत्र तत्सम्बन्धात्यन्ताभाव-विषयोक्तिस्त्वनवस्थैव । उक्तरीत्या तत्र घटात्यन्ताभावविषयत्वस्यापि सम्भवात् । अथवा तत्रापि प्रतीतिर्न व्याख्येया । प्रतियोगिसमवायिदेश इव तदन्यदेशेऽपि कालादादिव घटप्रागभावादिसत्त्वं तयोर्न विरुद्धम् । इह भूतले इदानीं घटो नास्ति अग्रे भविष्यति प्रागभूद्वेति प्रतीतेः । न च तथाऽप्यविद्यमानस्यैव घटादेः समवायान्यदेशवृत्तिप्रागभावप्रध्वंसप्रति-योगित्वमागतं न तु देशान्तरवृत्तेः । प्रतियोगित्वं वर्तमानस्यैव प्रागभावादिविरोधित्वादिति तदर्थप्रतीतिव्याख्यानं दुर्वारमिति वाच्यम् । एतस्मिन्भूतले स घटो भविष्यदभूद्वेति । अस्माकं समग्रो भविष्यत्यभूद्वेति विद्यमानस्यापि प्रागभावादिप्रतियोगित्वबुद्धेरविशेषेण न्यायेऽत्यन्ताभाव इव तत्तदधिकरणे तत्तत्कालावच्छेदेन तत्तत्सम्बन्धेन प्रतियोगित्वस्यैव प्रागभावादिविरोधकल्पनया तत्र हि तत्सह विरोधेन तत्राप्रतीतेर-व्याख्यानात् । न चैवमेकघटप्रतियोगिकनानाप्रागभावापातः प्रतीतेरुप-लम्भायोगात् । संसर्गप्रागभावविषयत्वादीति चेन्न । प्रतीतिव्याख्यानायोगेन प्रामाणिकगौरवस्य सोढव्यत्वात् । अन्यथा प्रागभावादाविवात्यन्ताभावेऽपि प्रतियोगिवर्तमानत्वस्यैव विरोधिकल्पनेन तद्बुद्धेरपि संसर्गात्यन्ताभावबुद्धित्वं को वारयिता । अति लाघवेन सत्त्वमात्रस्यैवात्यन्ताभावविरोधकल्पनया सर्वत्र सत्प्रतियोगिकात्यन्ताभावबुद्धिः संसर्गात्यन्ताभावविषयत्व-

मत्यन्ताभावस्य त्वसन्मात्रप्रतियोगिकत्वं को निवारयितेति दिगित्यपि केचित् । ननु ग्रन्थकृत एवमाशयवर्णने मन्दारमञ्जरीविरोधः । तथा हि तत्र भेदग्राहिप्रत्यक्षे बाधाभावव्युत्पादनावसर उक्तम् । स्वं बाधाभाव एव हेतुः । स्वशब्दश्च भेदग्राहिप्रत्यक्षपरः । न च तत्प्रसिद्ध्यप्रसिद्धिभ्यां तदभावस्य दुर्वारमिति वाच्यम् । अत्यन्ताभावस्य प्रतियोगिसत्त्वानपेक्षणात् । ज्ञानन्त्वसतोऽपि साधितमेव । ननु कथमभावो निष्प्रतियोगिकः स्यादिति चेन्न । किमिदं निष्प्रतियोगिकत्वम् । प्रतियोगिप्रतीतिनिरपेक्षत्वं वा प्रामाणिकप्रतियोगिहीनत्वं वा । नाद्यः । अनुक्तोपलम्भात् । न ह्यस्माभिरत्यन्ताभावप्रतीतिः प्रतियोगिप्रतीतिनिरपेक्षेत्युक्तम् । किन्तर्हि प्रसक्तप्रतिषेध इत्युक्तम् । न द्वितीयः । अभावत्वं निष्प्रतियोगित्ववत् । सत्त्वसाक्षाद्व्याप्यधर्मत्वाद्भावत्ववदित्यनुमानेन निष्प्रतियोगिकाभावसाधनात् । अथ भूतलान्तरे घटे विद्यमाने इह भूतले घटो नास्तीति घटस्याभावोऽनुमीयते । अयं प्रागभावध्वंसाभावयोरन्यतरः प्रतियोग्यसमानकालीनत्वात्तयोर्नाप्यन्योन्याभावः । भूतलं घटो न भवतीति प्रसङ्गात् । ततः परिशेषादत्यन्ताभाव एव गम्यते । ततश्चात्यन्ताभावः कथं निष्प्रतियोगिकः स्यादिति चेन्न । इह भूतले घटो नास्तीत्यादौ भूतलघटसंयोगस्यैव निषिध्यमानत्वात् । अवश्यं चैतत्त्वयाऽप्यङ्गीकरणीयम् । घटस्य भूतलान्तरे सत्त्वेन स्वरूपेण निषेधायोगात् । एतद्भूतलसंसृष्टत्वाकारेण निषिध्यत इति चेत् । तर्हि प्राप्ताप्राप्तविवेकेन संसर्ग एव निषिध्यत इत्यायातम् । सविशेषणे हि विधिनिषेधौ सति विशेष्यबाधे विशेषणमुपसङ्क्रामत इति न्यायात् । कथं तर्हि घटो नास्तीत्यत्र घटशब्दोपादानमिति चेत् । भूतल इत्यधिकरणसप्तम्या

भूतलस्याश्रयत्वेऽभिहिते आश्रयत्वप्रतिसम्बन्धिन्याधेयत्वे चार्थाद्युक्ते किन्निष्ठाधेयतेत्यकाङ्क्षायां घटनिष्ठेत्यावेदयितुं घटशब्दोपादानात् । एवञ्चेह भूतले घटो नास्तीत्यत्रापि भूतलघटयोराधाराधेयभावो निषिध्यत इति स्थितम् । तत्र यदि नाम तयोराधाराधेयभावः प्रागभूत्तदाऽयमनुभव-स्तत्प्रध्वंसविषयकः । यदि तु भविष्यति तदा प्रागभावविषयकः । यदि न जातो न भावी तदा तदत्यन्ताभावविषयकः । एवञ्च शशविषाणं नास्तीत्यादेः शशविषणं नास्तीत्याद्यपि न कल्पनीनयम् । तत्राप्यप्रामाणिकस्य शशविषाणस्यैव प्रतियोगित्वोपपत्तेः । तस्मादत्यन्ता-भावस्य निष्प्रतियोगिकत्वात्स्वबाधात्यन्ताभावो हेतुरिति न कश्चिद्दोष इति । ततः कथमेवमाशयवर्णनमिति चेत् । उच्यते । न तावदनुमानविरोधः । तुच्छप्रतियोगिकात्यन्ताभावस्यापि स्वीकारेणाभावत्वस्य निष्प्रतियोगिक-निष्ठत्वात् । निष्प्रतियोगिकमात्रनिष्ठत्वं न तु साध्यार्थः । बाधात् । भावत्वे च व्यभिचाराच्च । हेतूकृतसत्त्वसाक्षाद्व्याप्यधर्मत्वं यद्यपि सत्त्वव्याप्यत्वे सति तद्व्याप्यत्वम् । अभावपृथिव्यन्यतरव्याप्यत्वे सति तदभावस्यासिद्ध्यापत्तेः । नापि तद्व्याप्यजात्यव्याप्यत्वे सति तद्व्याप्यत्वम् । प्रागभावत्वे व्यभिचारात् । तथाऽपि सत्त्वसाक्षाद्विभाजकोपाधित्वम् । तदपि भावाभावभेदेन सद्विभागं कुर्वतो मते स्वतन्त्रसद्विरुद्धविभागवादादसिद्धिरिति न मन्तव्यम् । तथा च नानुमानविरोधः । अथ भूतलान्तर इत्यादि ग्रन्थस्तु न साधुसन्दर्भः । तथा हि । अभावत्वस्य निष्प्रतियोगिकनिष्ठत्वं तुच्छप्रतियोगिकनिष्ठत्वं तुच्छप्रतियोगिकात्यन्ताभावत्वे तदन्यत्वे वा सत्यभावात् । प्रकृतस्य स्वबाधकविरहस्य हेतूकृतस्य निष्प्रतियोगिकत्वेऽभावत्वकथन्तायाः समाहितत्वात् । न ह्यत्यन्ताभावमात्रस्य निष्प्रतियोगित्वमनुमानार्थो येन

ग्रन्थसन्दर्भः शुद्धः स्यात् । अवश्यं चैतत्त्वयाऽप्यङ्गीकरणीयमित्याद्यपि न नैय्यायिकभयावहम् । तेनाधिकरणान्तरे सत एव घटस्य स्थलान्तरे स्वरूपेणैव निषेधाङ्गीकारात् । एतावान्परं विशेषः । शशशृङ्गादिकं सद्भिः सर्वत्र निषिध्यत इत्युच्यते न तु घटोऽधिकरणविशेषे स्वरूपेण निषिध्यत इत्युच्यते । न पुनर्भूतलसंसृष्टत्वरूपविशेषाङ्गीकारेण सुन्दरो देवदत्तो नास्तीत्यादाविव विशेषणस्य प्रतियोगितावच्छेदककोटावनुपादानात् । अभिमतसंसर्गावच्छिन्ना प्रतियोगिता परं संसर्गमर्यादया भासत इत्यङ्गीकारात् । यदि चाधेयताया घटनिष्ठताज्ञापनाय घटशब्दोपादानं स्यात्तर्हि घटो नास्तीत्यग्रे भविष्यतीत्यादावपि घटशब्दोपादानस्य तदेव फलं भविष्यतीति प्रागभावादेरपि न घटप्रतियोगिकत्वं स्यात् । अपि त्वाधाराधेयप्रतियोगिकत्वमेव[1] स्यादिति न तस्मादयं ग्रन्थः प्रौढिवादेन प्रागुक्तसामग्रिकात्यन्ताभावनास्तित्वतात्पर्यक एव वक्तव्यः । अत एव **मन्दारमञ्जर्यामेव सत्यत्वनिरुक्तिप्रस्तावे निषेधाप्रतियोगित्वमिति[2] चेन्न ।**

घटादेरपि निषेधप्रतियोगित्वेन लक्षणासम्भवात् । त्रैकालिकनिषेधाप्रतियोगित्वमिति चेन्न । अश्वत्वस्य गवि त्रैकालिकनिषेधप्रतियोगित्वेन तत्राव्याप्तेः । न हि गौः कदाचिदप्यश्वत्वाश्रय इत्यादिग्रन्थः । अश्वत्वादेरत्यन्ताभावप्रतियोगित्वाङ्गीकारपरो दृश्यते । अन्यथा तत्रैव पूर्वोत्तरविरोध उदाहृतन्यायेन न्यायामृतवाक्यविरोधः स्यादिति । अत **एवानिर्वाच्यत्वसाधकनिषेधप्रतियोगित्वान्यथाऽनुपपत्तिभङ्गे न्यायामृते** — 'किञ्चेह

---

[1] अयं कु२.पाठानुसारी । मु.कु१.पाठयोः `त्वाधाराधेयभावप्रतियोगिकत्वमेव' इति दृश्यते ।

[2] `निषेधाप्रतियोगित्वमुक्तमिति' इति पाठेन भाव्यमिति भाति ।

भूतले घटो नास्तीत्यादिना पराभिमतसामयिकात्यन्ताभावबुद्धेरेव संसर्गाभावविषयत्वव्युत्पादनं न तु गव्यसत्त्वाभावं बुद्धे'र्दृश्यते । तथा हि । किञ्चेह भूतले घटो नास्तीति धियः संसर्गाभावो विषयो न तु घटाभावः । इह भूतले घटो नास्तीत्यत्र संयोगो निषिध्यत इत्युदयनोक्तेः । भूतले घटोऽस्तीति बुद्धेस्तत्सम्बन्धविषयत्वे नास्तीति बुद्धेरपि तदभावविषयत्वाच्च । किञ्च न तावदयं घटस्य प्रागभावो ध्वंसो वा प्रतियोगिसमानकालीनत्वात् । नाप्यत्यन्ताभावः । कदाचित्तत्र घटस्य सत्त्वात् । यदि चैतत्कालावच्छेदेनात्यन्ताभावस्तर्हि अत्यन्ताभावातिरिक्तः प्रागभावादिर्न सिध्येत् । संयोगस्य तु भूतले भूतलत्वे ध्वंसो भावित्वे प्रागभावः कदाऽप्यभावे त्वत्यन्ताभाव इत्यसतः संसर्गस्य प्रतियोगित्वसिद्धिः । न च घटे सन्नेव संसर्ग इह निषेध्यः । तस्यापि घटतुल्यत्वेन प्रागभावादिकल्पनाप्रसरात् । यदुक्तं वर्धमानेन घटात्यन्ताभावस्तर्ह्यत्यन्ताभावातिरिक्तः प्रागभावादिर्न सिध्येत् । संयोगस्य तु भूतल एवायम् । घटकाले त्वसम्बन्धान्न भवति । घटात्यन्ताभावस्य भूतलेन सहसम्बन्धश्च तत्संयोगध्वंसादिः । अथवा प्रतियोगिभेदेनेव प्रतियोगितावच्छेदकभेदेनाप्यभावभेदात् । संयुक्तघटाभावोऽयं विशिष्टान्तराभाववदुत्पादविनाशशाल्यप्यन्य एवेति । तत्र नाद्यः । अभावाधिकरणयोः सम्बन्धान्तरमन्तरेण तदुपश्लिष्टस्वभावत्वरूपक्लृप्तसम्बन्धत्यागेन संयोगध्वंसादेः सम्बन्धत्वकल्पनेऽऽवश्यकसंयोगध्वंसादेरेव तद्धीविषयत्वोपपत्तेः । अन्यथा घटस्य कपालेष्वत्यन्ताभाव एव घटकालत्वाश्रयाश्रयिभावध्वंसादिरूपसम्बन्धाभावादप्रतीतेरिति । घटात्यन्ताभावः केवलान्वयी स्यात् । न द्वितीयः । संयोगस्य निषेध्यकोटित्वादिष्टासिद्धेः ।

दण्डे सत्यपि पुरुषाभावेन दण्ड्यभाववद्भूतलसंयोगवत्यपि घटाभावेन संयुक्ताभावस्यादर्शनेन क्लृप्तैः संयोगप्रध्वंसादिभिरेव सर्वोपपत्तावुत्पादविनाशशीलसंयुक्ताभावान्तरकल्पनायोगाच्चेति । अत एव न्यायामृते सत्त्वनिरुक्तिप्रस्तावे त्रिकालसर्वदेशीयनिषेधाप्रतियोगिता सत्तोच्यते । अध्यस्ततुच्छेतं प्रति प्रतियोगिनीति सत्त्वलक्षणमभिधाय परीक्षावसरेऽश्वे गोत्वं कदापि नास्तीत्यादौ तत्संसर्ग एव निषिध्यत इति मते देशपदमनपेक्षितमित्युक्तम् । न च तदपि स्वमतमेव न्यायरीत्या देशपदं मन्मते तु नापेक्षितमिति तदर्थ इति वाच्यम् । तथात्वे गगनादेरप्यत्यन्ताभावो केवलान्वयीत्युक्तत्वान्न गगनादावव्याप्तिरितिवदश्वादेरत्यन्ताभावप्रतियोगित्वं नेति न तत्राव्याप्तिरिति वक्तव्यम् । न तदुद्धाराय सर्वदेशीयपदं देयम् । अन्यथा न्यायनये गगनादावव्याप्त्युद्धाराय पदान्तरं देयं स्यादिति । तस्मादत्यन्ताभावस्य तुच्छमात्रप्रतियोगिकत्वं ग्रन्थकर्तुरभिमत एवेति । केचित्त्वत्यन्ताभावस्य तुच्छमात्रप्रतियोगिकत्वं साधयन्त इत्याहुः । प्रध्वंसप्रागभावयोस्तावत्प्रतियोगिना सह कालिको विरोध इति परस्यापि सम्मत इति । तत्र प्रतियोगिना सह कालिकविरोधितावच्छेदकं प्रध्वंसत्वं प्रागभावत्वं चेति नाना वक्तव्यम् । ततो वरं लाघवात् । संसर्गाभावत्वमेवैकमिति घटकालीनतदत्यन्ताभावः सिध्यति । एकरूपेण विरोधकल्पनोपपत्तावत्यन्ताभावस्य दैशिको विरोध इतरयोस्तु कालिक इत्यर्धजरतीयानुपपत्तेः । नन्वेवं ततोऽपि लाघवादभावत्वमेव विरोधितावच्छेदकमस्तु । एवं सति घटकालेऽपि घटान्योन्याभावोऽपि न सिद्धः स्यात्किन्त्वत्यन्ताभाव इवान्योन्याभावोऽप्यसत्प्रतियोगिक एव स्यादिति चेन्न । मन्मतेऽन्योन्याभावस्याभावत्वा-

भावेनाभावस्य त्रिविधत्वात् । तदुद्भावितानिष्टापादनमापादकाभावाद-भावत्वस्यैव लाघवाद्विरोधितावच्छेदकत्वे अस्मदिष्टस्यैव सिद्धेः । तदुक्तं भगवत्पादैः —

`प्राक् प्रध्वंससदात्वेन त्रिविधोऽभाव इष्यते ।
भावाभावस्वरूपत्वान्नान्योन्याभावता पृथगि'ति ।

नन्वेतावताऽपि धर्म्यात्मकत्वेनान्योन्याभावस्य भावनिष्ठे तस्मिन्भावत्वेऽप्यभावनिष्ठे तदस्त्येवेति चेत् तावताऽपि प्रागभावादि-त्रयाणामेवान्योन्याभावरूपत्वेन तेषां प्रतियोगिसमानकालीनत्वं नास्तीत्युक्तं स्यात् । तदस्माकमिष्टमेवेत्यवोचामेवेति । नन्वेवं वायौ रूपात्यन्ताभावो न स्यादिति चेन्न । इष्टापत्तेः । न चैवं वायौ रूपापत्तिः । किं रूपमात्रसद्भाव आपाद्यते वा वायुरूपसद्भावो वा । नाद्यः । घटादौ रूपस्य सत्त्वेनेष्टापत्तेः । न द्वितीयः । वायावित्यधिकरणरूपकारक-विभक्तेरुल्लेखात्कारकाणां क्रिययैवान्वयात् । वाय्वधिकरणरूपकर्तृसद्भाव-रूपक्रियाविशेषणस्यैव शब्दमर्यादया प्रतीतेर्जनकज्ञानस्य च शाब्दबोधसमानाकारकतया वायुरूपसंसर्गविशेषविषयत्वात्तस्य तुच्छत्वेन तदत्यन्ताभावस्यापि वायौ सम्भवान्न कोऽपि चोद्यावकाशः । ननु तादृशसंसर्गस्याकालिकत्वेन कथं तज्ज्ञानं येनापादनमपि वक्तुं शक्यत इति चेत् । कविकाव्यमूलभूतोत्प्रेक्षाज्ञानं चेदाहार्यत्वात्तस्य । अत एव प्रतियोग्यधिकरणसंसर्गारोपोऽपि तत्र कारणमिति त्वदीयसाम्प्रदायिकाः । एतावान्परं विशेषः । तैस्तादृशज्ञानस्य स्वतन्त्रकरणतः स्वीक्रियते । अस्माभिस्तु तदेव प्रतियोगिज्ञानमित्यास्थीयत इति । अत एव वायौ रूपं नास्तीत्यभावप्रतीतिरपि वाय्वधिकरणकरूपकर्तृकसत्तामेव निषेध्यत्वेन

विषयीकरोति शाब्दबुद्धिसमानाकारत्वाच्छब्दप्रयोगकरणबुद्धेः । अन्यथाऽतिप्रसङ्गात् । शब्दात्तु वायौ रूपमस्तीति यत्तन्नेत्येव प्रतीतिः । अधिकरणे सप्तम्यनुशासनात् । वाय्वाद्यधिकरणकरूपकर्तृक-सत्तायास्त्व-लीकत्वाद्युक्तं सार्वत्रिकात्यन्ताभावप्रतियोगित्वम् । अत एव न सुरां पिबेदित्यादावपि बलवदनिष्टाननुबन्धित्वरूपलिङन्तक्रियापदार्थांश एव निषेधान्वय इति तवाऽपि सम्मतम् । रूपाभाववान्वायुरित्यादावपि निषेध्यतया प्रतीयमानं रूपं वायवीयमेव । वायौ स्वीयं रूपं नास्तीत्यप्रतीतेः । अन्यनिष्ठरूपस्यान्यत्राभावमादाय तत्प्रतीतौ घटादावपि रूपं नास्तीत्यादिप्रतीत्यापत्तेः । अत एव तादृशस्थले नञ्प्रसज्य-प्रतिषेधमाक्षिपति । उक्तं च —

`अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता ।
प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञि'ति ।

अत एव संयोगाभावं बुबोधयिषवो भूतले घटो नास्तीत्येव प्रवक्तारो निरस्ताः । एतेन भूतले घटो नेत्येव प्रयोक्तारो निरस्ताः `अव्ययं विभक्ती'त्यादिनाऽर्थाभावे यदव्ययं तत्तेन सह नित्यसमासाम्नानाव्द्य-स्तप्रयोगस्य साधुत्वात् । घटो नास्तीत्यादौ `सुप्सुपे'त्यनुवृत्तेस्तिङन्तेन सह समासाप्रसङ्गादेव नासाधुत्वशङ्कावकाशः । न च घटः घटो नेत्यत्रा-साधुत्वापत्तिः । विभाषाधिकारे नञ्समासाम्नानात् । न च तत्राप्यव्ययी-भावप्रसङ्गः । अर्थाभाव इत्यर्थशब्दोपादानमहिम्ना संसर्गाभाववाचकनञैव समासविधानेनान्योन्याभावस्थले तत्प्राप्तेरेवाभावादितीति । तस्माद्वायौ रूपं नास्तीति शब्दजन्या बुद्धिर्वाव्यधिकरणकरूपकर्तृकसत्त्वनिषेधमेव गोचरयतीति तादृशोल्लेखवती प्रत्यक्षबुद्धिरपि प्रमेयं गोचरयतीति

सिद्धमत्यन्ताभावस्यासत्प्रतियोगिकत्वम् । अवश्यं चैतदेवम् । अन्यथा घटो नास्ति घटौ न स्तः घटा न सन्ती वचनव्यवस्था । देवदत्तो नास्ति त्वं नास्यहं नास्मीति पुरुषव्यवस्था च न स्यात् । अस्तित्वं प्रत्यक्षाभावस्य कर्तृत्वं सर्वत्र नास्तीत्येव प्रयोगापत्तेः । युष्मद्युपपदे समानाधिकरणेऽस्मदि च तथा विधेर्मध्यमोत्तमयोरनुशासनादिति ॥ अत्रोच्यते । यत्तावदुक्तं प्रागभावध्वंसयोः प्रतियोगिना सह कालिकविरोधितावच्छेदकं न प्रागभावत्वं ध्वंसाभावत्वं च नाना गौरवात् । किन्तु लाघवात् संसर्गाभावत्वमेकमेव । एवञ्च त्रयाणामेकरूपेण कालिको विरोधो न पुनरत्यन्ताभावस्य दैशिकोऽन्ययोस्तु कालिक इत्यर्धजरतीयमिति सिद्धमत्यन्ताभावस्यासत्प्रतियोगिकत्वमिति । तन्न प्रतियोग्यधिकरणसंसर्गारोपपूर्वकनिषेधधीविषयाभावत्वरूपसंसर्गाभावत्वापेक्षया लघोः क्वाचित्काभावत्वस्योभयानुगतस्य विरोधितावच्छेदकत्वात् । तन्तुपटादीनां संसर्गस्यैवाभावान्न प्रागभावध्वंसयोः संसर्गाभावत्वमिति टीकाकारैस्तयोः संसर्गाभावत्वस्यैव निषेधेन तस्य विरोधितावच्छेदकत्वायोगाच्च । कार्यकारणभेदवादे प्रतियोगिना सह कालिकविरोधस्य दुर्वचत्वाच्च । भेदेन कथञ्चिदुपपादनेऽपि तन्तूनां प्रतियोगिकोटिनिवेशस्य त्यक्तुमशक्यत्वात् । प्रतियोगिताया द्वित्वादिवद्व्यासज्यवृत्तित्वाभावेन प्रतियोगितापर्याप्त्यधिकरणविरोधस्याप्ययोगात् । इदानीं मयि धनं नास्तीत्यग्रे भविष्यतीत्यादिप्रतीत्यनुरोधात् । वर्तमानस्यापि प्रागभावप्रतियोगित्वादेर्दर्शितत्वाच्च । अत्यन्ताभावस्य कालिकविरोधस्वीकारेऽपि दैशिकविरोधस्यावश्यं वक्तव्यत्वेनार्धजरतीयन्यायानिस्तारात् । अन्यथा प्रागभावदेश इवात्यन्ताभावदेशे प्रतियोगिसत्त्वं स्यात् । न चात्यन्ताभावस्य सर्वकालवृत्तित्वात्तत्काले तद्देशे

कथं प्रतियोगी स्यादिति वाच्यम् । यत एवं सति कालिकविरोधो दैशिकविरोधस्योपोद्बलक एव न तु निवर्तकः । यदपि नन्वेवं ततोऽपि लाघवादित्यारभ्य तदस्माकमिष्टमित्यवोचामेत्यन्तं तदपि न रमणीयम् । तथा हि । अभावत्वं किं यत्किञ्चित्प्रतियोगिताश्रयविरोधिताश्रयविरोधितावच्छेदकम् । किं वा तदभावनिष्ठप्रागभावादिका यावत्यः । नाद्यः । तथा सति सत्प्रतियोगिकात्यन्ताभावेऽपि स्वमते तुच्छान्योन्याभावसम्भवेन तस्य च तदात्मकत्वेन तदभावनिष्ठान्योन्याभावनिरूपकयत्किञ्चित्प्रतियोगिताश्रयतुच्छेन कालिकविरोधेऽपि तस्य विरोधितावच्छेदकत्वसम्भवेन स्वाभिमतासत्प्रतियोगिकत्वानिर्वाहात् । न द्वितीयः । अभावत्वस्य प्रागभावादिनिष्ठप्रागभावत्वनिरूपकप्रतियोगिताश्रयविरोधिताश्रयविरोधितावच्छेदकत्वेऽपि तन्निष्ठान्योन्याभावत्वनिरूपकप्रतियोगिताश्रयघटादिविरोधितावच्छेदकत्वाभावेनाभावत्वस्य विरोधितावच्छेदकत्वायोगात् । यदपि नन्वेवं वायावित्यारभ्यास्थीयत इत्यन्तम् । तन्न । यदि पर्वतो निरग्निः स्यात् तर्हि निर्धूमः स्यादित्यत्रापि धूमाभावमात्रस्यापाद्यत्वेन तस्य च जलादौ सत्त्वेनेष्टापत्तेः । न च तत्रापि पर्वतवृत्तिधूमाभावो धूमाभाववान्पर्वतो वाऽऽपाद्यः । स च न जल इति नेष्टापत्तिरिति वाच्यम् । वह्न्यभावमात्रेण तदापादनाऽयोगात् । न च निर्वह्निपर्वतादिकमेवापादकमिति वाच्यम् । निर्वह्निमत्पर्वतस्य निर्धूमवत्पर्वतेन व्याप्तेरग्रहात् । धर्मविशेषेऽनिष्टापादनाभावे तेन तन्निष्ठविपक्षज्ञानस्योच्छेदायोगात् । अद्यप्रभृत्येतादृशापाद्यापादकभावस्याश्रुतत्वाच्च । न च धूमाभावस्य जल इव पर्वते नेष्टता इति नेष्टापत्तिरिति वाच्यम् । इहापि रूपस्य वायावनिष्ठत्वेन तदभावात् । तथा च पर्वतो यदि वह्न्यभाववान्स्यात्

तर्हि धूमाभाववान्स्यादितिवद्वायुर्यदि रूपात्यन्ताभाववान्न स्यात् तर्हि रूपवान्स्यादिति तर्कः सुस्थ एवेति । अवच्छेदकभेदादापाद्यापादकभावोपपत्तेः । अथवा रूपात्यन्ताभावो यदि वायुवृत्तिर्न स्यात् तर्हि तद्वृत्तिरूपप्रतियोगिकः स्यादिति तर्काकार इति । वायावित्यधिकरणरूपायाः कारकविभक्तेरित्यादि यद्विकल्पितं द्वितीये तदपि न युक्तम् । वायुरूपसद्भावस्यालीकत्वेन वायौ तदत्यन्ताभावस्य सत्त्वेन तदापादनायोगादित्येव वक्तुं युक्तम् । न हि विकल्पस्थले उपादानापेक्षा । अयुक्तं च तदुपपादनमुदाहृततर्कशरीरद्वये सप्तम्याद्यभावात् । प्रसिद्धतर्क इवापाद्यापादकयोर्धर्म्यघटितत्वाच्च । तुच्छात्यन्ताभावस्य वायुवृत्तित्वेऽपि तस्य केवलान्वयित्वेन तस्य रूपाविरोधित्वेन तदापादनरूपचोद्यावकाशासत्त्वाच्च । अलीकस्य ज्ञानसम्भवेऽपि तेन व्याप्तिग्रहायोगाच्च । तर्कविचारावसरेऽभावज्ञानकरणपार्थक्यापार्थक्यविचारस्यासङ्गतत्वाच्च । यदपि अत एव वायौ रूपं नास्तीत्याद्यनुशासनादित्यन्तं तदपि न । तथा हि । अत एवेत्यनेन संसर्गाभावत्वस्य विरोधितावच्छेदकत्वं वोपष्टम्भकत्वेन परामृश्यते । शाब्दबुद्धेस्तदाकारत्वं वोभयं वा । नाद्यः । निरस्तत्वात् । न द्वितीयः । असिद्धेः । तथा हि । कारकाणां क्रिययैवान्वय इत्यत्र न किञ्चित्प्रमाणमस्ति । न हि कारकविभक्तीनां क्रियान्वित एव स्वार्थे शक्तिः । किन्तु योग्येतरान्विते । तत्र यत्कारकं साक्षात्क्रियान्वययोग्यकर्त्रादि तस्य क्रियान्वयः । अधिकरणं तु सर्वं न साक्षात्क्रियान्वययोग्यम् । यथाऽध्वनि देवदत्तश्चरति गङ्गायां देवदत्ताय गां ददाति वृक्षाद्भूमौ पर्णं पततीत्यादावध्वगङ्गाभूम्यादीनां चलनदानपतनाद्याधारत्वाभावात् । न च देवदत्तादिद्वारा क्रियाधारताऽधिकरणानामिति वाच्यम् । आवश्यकत्वेन

देवदत्ताद्यन्वयस्यैव वक्तुमुचितत्वात् । अत एवाहुः — 'यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते तेन तेनान्वितः स्वार्थः पदैरेवाभिधीयत' इति । एवञ्च प्रकृतेऽपि रूपनिष्ठवर्तनभावनापरपर्यायसत्ताक्रियाया वायुवृत्तित्वायोगात् । न च वायोस्तथाऽन्वयः । सत्ताजातिस्तु न क्रिया स्वमतेऽनुगतायास्तस्या-भावाच्च । एवञ्च वाय्वधिरणकसत्तेत्यन्वयबोधांशो न युज्यते । न वायुरूपकर्तृकसत्येत्यंशोऽपि कर्तुराख्यातोऽभिहिते त्वितरपदोत्तरकर्तृ-कर्तृकविषयविभक्तेरभावेन रूपकर्तृकनिषेधायोगात् । आख्यातार्थस्तु कर्ता तु प्रकृतिप्रत्ययौ सहार्थं भूतस्तयोः प्रत्ययार्थः प्राधान्येनेति नियमान्न क्रियोपसर्जनतायोगः । अत एव सत्तानिषेध इत्यंशोऽपि न युज्यते । न ह्येवं सम्भवति । तथात्वे या नञर्थं प्रतियोगितयाऽन्वेति । आख्यातार्थस्तु धात्वर्थे उपसर्जनतामश्नुत इति । किञ्चैवं बोधाङ्गीकारे वायौ रूपं नास्त्युक्तेऽपि पुनरधिकरणान्तराकाङ्क्षा स्यात् । तद्वारणार्थं सर्वत्रेत्युक्तिरपि स्यादिति । तस्माद्वाय्वधिकरणरूपकर्तृकसत्तानिषेध इति न शाब्दबुद्धेराकारः । किन्तु चैत्रस्येदं धनं न मैत्रस्येत्यादौ षष्ठ्यर्थं मैत्रस्वत्वस्य नञर्थेऽन्वयेन मैत्रस्वत्वाभाववद्धनमिति बुद्धिवत्पृथिव्यां रूपं न वायावित्यादावपि सप्तम्यर्थाधेयत्वस्य नञर्थेऽन्वयेन वाय्वाद्याधेयत्वाभाव-वद्रूपमित्येवान्वयबोधः । एवमन्वयबोधे वचनव्यवस्था पुरुषव्यवस्था च सम्यगुपपद्यते । घटादीनामेवास्ति क्रियाकारककर्तृकत्वाङ्गीकारात् । तथा हि । घटादीनां सर्वात्मना निषेधायोगादधिकरणविशेषापादनस्यावश्यकत्वेन तदाधेयत्वनिषेधविशिष्टघटपटत्ववदात्मत्वादेर्विशेष्यत्वस्यौचित्यात् । न चैवं भूतले घटो नास्तीत्यत्र घटात्यन्ताभावो न विषयः स्यादिति वाच्यम् । न भवत्येव शाब्दबोधे प्रात्यक्षिके त्विन्द्रियसम्बद्धविशेष्यतादिसद्भावे भवत्येव

विषयः । स तात्पर्यशब्दप्रयोगकारणीभूताऽस्तु शाब्दबुद्धिसमानाकारो मानसादिर्भिन्न एव बोध इति न किञ्चित्सङ्करम् । अस्तु वा वायौ रूपं नास्तीति शब्दस्थले वाय्वधिकरणकरूपकर्तृकसत्तानिषेध इत्याकारो बोधस्तादृशशब्दप्रयोगकारणीभूतोऽपि मानसादिस्तदाकारः । तथापि सर्वैरेव प्रात्यक्षिकैर्बोधैस्तदाकारैरेव भवितव्यमिति न नियमः । स्वस्यानुव्यवसायसाक्षिकाणां तत्तत्सामग्रीबललभ्यानामाकारान्तराणामपि सम्भवात् । न हि ते सर्वेऽप्याकाराः शब्देनाभिलपनीया इति नियमोऽस्ति । केषाञ्चिदाकाराणां शब्देनाभिलपनायोगात् । यथा जातिविशेषविशिष्ट-पुत्रादिस्वरलिप्यादिबोधाद्याकाराः । यथा वा भूतलविशेष्यकघटप्रकारक-प्रत्यक्षबोधाकारो न तत्समानाकारशाब्दबुद्धिजनकशब्देनाभिलपितुं शक्यः । घटाभाववद्भूतलमित्यनेन घटाभावसम्बन्ध्यभिन्नं भूतलमिति बोधात् । एवं भूतलविशेष्यकघटप्रकारकेत्यादेरपि शब्दो विलक्षणाकारमेव बोधं जनयतीति शाब्दबोधक्रियाविदां सुज्ञानमेव । वाय्वाधेयत्वाभाववद्रूपमिति बोधाङ्गीकारे वायौ रूपं नास्तीति प्रयोक्तारो निराकृताः । सप्तम्यर्थस्यैव नञर्थप्रतियोगित्वेनान्वयेनोपपदेन सामर्थ्याभावेन समासाप्रसक्तेः । सप्तमी तु न सुबन्तमिति न तयाऽपि समासप्रसङ्गः । अत एव टीकाकारव्यासतीर्थानां बहवः प्रयोगाः । अस्तु वा वायौ रूपं नास्तीत्यत्र यत्किञ्चिच्चैत्रस्यैदं न मैत्रस्येत्यादौ सत्प्रतियोगिकात्यन्ताभावबोधेन यत्किञ्चिद्बाधकम् । न हि तत्रापि कारकविभक्तिरस्ति षष्ठ्या अकारकत्वात् । अन्यथा राज्ञः पुरुष इत्यत्रापि षष्ठ्यर्थस्य पुरुषेऽन्वयो न स्यात् । अत एव न तृतीयः । किञ्चैवं सति इदानीं घटो नास्त्यग्रे भविष्यति इदानीं त्वमस्यग्रे न भविष्यसि इदानीमहमस्म्यग्रे न भविष्यामि । एवमिदानीं घटो प्राङ्नाभूत् त्वं

नाभूः अहं नाभूवमित्यादौ घटप्रतियोगिकध्वंसप्रागभावबोधो जायत इत्यविवादम् । सोऽपि भवदुक्तरीत्या न स्यात् । तत्रापि कारकविभक्तिश्रवणेनाग्रिमकालाधिकरणकघटादिकर्तृकालिकसत्तानिषेध एव प्रतीयेत । न चैवम् । अनुभवविरोधात् । घटादिध्वंसादीनां सत्ताकर्तृकत्वे च ध्वंसप्रागभावादिव्यक्तीनां नानात्वेन वचनविरोधाभावेऽपि पुरुषविरोधः स्यादेव । सर्वत्रापि भविष्यति अभूदित्येव स्यात् । न च तत्रापि ध्वंसादिप्रतियोगिव्यवस्थाकृतैव पुरुषव्यवस्था । `युष्मद्युपपदे समानाधिकरण' इत्यादौ प्रथमैकवचनान्तशब्दप्रतिपाद्यत्वरूपं यदाख्यातार्थकर्त्राद्यभेदान्वययोगतावच्छेदकं रूपं तद्वत्त्वमेव सामानाधिकरण्यं विवक्षितम् । न त्वभेदान्वयोपहितत्वपर्यन्तमिति वाच्यम् । भूतले घटो नास्तीत्यादावपि तुल्यत्वात् । एवञ्च भूतले वृत्तिर्घटाभावः सत्ता कर्तेत्यपि बोधाकारः समाहितो भवति । वचनव्यवस्थायाः पुरुषव्यवस्थासमानयोगक्षेमत्वादिति । किञ्च रूपाभाववान्वायुर्वायौ नीरूपं रूपाभावो वेत्याद्यभिलापस्थले का गतिः । न हि तत्रोक्तकुसृष्टिश्चलति । आद्येऽधिकरणविभक्तेरभावात् । अग्रिमे पुरुषपदस्य नञादिभिः समासात् । न चात्रापि रूपपदं वायुरूपपरम् । अन्यथाऽन्यदीयरूपाभावेनैतादृशबोधेऽभिलापे वा पृथिव्यादावपि तथा बोधाभिलापापात इत्युक्तमिति वाच्यम् । अन्वयितावच्छेदकावच्छिन्नप्रतियोगितावच्छेकत्वस्य व्युत्पत्तिबललभ्यत्वेन तत एव पृथिव्यादौ तथा बोधाभिलापयोरप्रसङ्गेन वृथा लक्षणाङ्गीकारायोगात् । विशेषाभावबोधस्त्विष्ट एव । अपि च घटः पटो न भवतीति यत्तन्नेति योजनया घटकर्तृकपटभावनिषेध एव प्रतीयते । न पटान्योन्याभावः । न च पटपदस्य कारकपदविभक्त्यन्तत्वाभावेनैतदर्थस्य नञर्थेऽन्वयबोधा-

त्पटान्योन्याभावबोध इति वाच्यम् । वायौ रूपं नास्तीत्यादावपि रूपपदस्य तथात्वेन तदर्थस्य नञर्थेऽन्वये बाधकाभावादिति साम्यादिति दिक् । तस्मादेवमाशयवर्णनेन किञ्चिद्बाधकमिति स्थितम् । एवञ्च सति पारतन्त्र्यादिदोषात्यन्ताभावानां भगवल्लक्षणताऽपि समाहिता भवति । अत्यन्ताभावस्य तुच्छमात्रप्रतियोगिकत्वे तु तेषां केवलान्वयित्वेन भगवल्लक्षणत्वं न सम्भवति ।[1] अस्तु वाऽत्यन्ताभावस्य तुच्छ-मात्रप्रतियोगिकत्वं सिद्धान्ते तथाऽपि न क्षतिः । तथा हि । हरावेव सर्वज्ञत्वमन्यस्मिन्नेव तदभावः । एवं जीवादावेवासर्वज्ञत्वं हरावेव तद-भावः । एवं गव्येव गोत्वं तदन्यस्मिन्नेव तदभाव इत्यादिप्रतीतिः सर्वजनसिद्धा निर्बाधा सर्वसमाधेया । सा तु सर्वज्ञत्वासर्वज्ञत्व-गोत्वात्यन्ताभावानामारोपिततुच्छतत्प्रतियोगित्वे तुच्छतत्तत्संसर्ग-प्रतियोगिकत्वे वा तेषामभावीयविशेषणतासम्बन्धेन केवलान्वयित्वान्न समाधातुं शक्या । आरोपितसर्वज्ञत्वाद्यभावानां हर्यादिष्वपि सत्त्वात् । अतस्तेषां व्यतिरेकितानिर्वाहकं सम्बन्धान्तरमावश्यकम् । यथेश्वरज्ञानस्य विषयतासम्बन्धेन केवलान्वयिनोऽपि व्यतिरेकितायै समवायान्यद्वेति[2]। यथा वा परमते आकाशात्यन्ताभावस्य केवलान्वयित्वेऽपि प्रतियोगितावच्छेदक-सम्बन्धेनाकाशमात्रनिष्ठत्वार्थं प्रतियोगितासम्बन्धः । तच्चात्यन्ताभावस्या-

---

[1] अयं कु१.अनुसारी पाठः । मु.पाठे एवं दृश्यते - `अत्यन्ताभावस्य तुच्छतामात्रप्रति-योगिकत्वे सिद्धान्ते तथाऽपि न क्षतिः । तथा हि । एतेषां केवलान्वयित्वेन भगवल्लक्षणत्वं न सम्भवति ।' इति ।

[2] `केवलान्वयोऽपि व्यतिरेकितायै सम्बन्धान्तरं समवायोऽन्यद्वेति' कु१. । पाठद्वयेऽप्यर्थो न स्फुटः ।

श्वाद्यारोपितगोत्वप्रतियोगिकत्वे स्वप्रतियोग्यधिष्ठानत्वमश्वादिमात्रनिष्ठं व्यावृत्तमन्यद्वाऽस्तु । अश्वाद्यनुयोगिकगोत्वप्रतियोगिकसंसर्गप्रतियोगिकत्वे तु स्वप्रतियोग्यनुयोगित्वं गोव्यावृत्तमन्यद्वाऽस्तु तेन विनोक्तप्रतीत्य-निर्वाहात् । एवञ्च सर्वज्ञत्वाभावस्य जीवमात्रनिष्ठसम्बन्ध आवश्यकः । असर्वज्ञत्वाभावस्येश्वरमात्रनिष्ठः । स च स्वरूप एव लाघवात् । तथा च परस्परात्यन्ताभावस्वरूपमसाधारणसम्बन्धस्तदात्मकत्वात् । तेन सम्बन्धेनात्यन्ताभावस्य व्यापकतानिरूपितव्याप्तिमत्त्वात् । परस्परात्यन्ता-भावरूपत्वं तद्व्याप्यत्वं च युक्तमिति । एवं सर्वदोषात्यन्ताभावस्यापि नृहरिमात्रनिष्ठः सम्बन्ध आवश्यक इति तेन सम्बन्धेन तस्य लक्षणताऽपि युज्यते । एवं रूपात्यन्ताभावस्य वाय्वादिमात्रनिष्ठः पृथिव्यादिव्यावृत्तः सम्बन्ध आवश्यक इति तेन सम्बन्धेन तस्य तस्य रूपविरोधित्वात् न वाय्वादौ रूपापत्तिरिति दोषसंसर्गात्यन्ताभावेऽपि परम्परया दोषसम्बन्धित्वाद्दोषत्यन्ताभावतया व्यवह्रियत इति न किञ्चिदनुपपन्नम् । नन्वत्यन्ताभावस्य तुच्छमात्रप्रतियोगिकत्वं निर्युक्तिकं सिद्धान्ते कथमङ्गीक्रियत इति चेदुच्यते । तुच्छमात्रप्रतियोगिकत्वं तावत्क्वापि शशशृङ्गं नास्तीति प्रतीतिबलात्सिद्धम् । शशशृङ्गस्य तुच्छत्वात् । तस्य चैतत्प्रतीतिबलात्प्रतियोगिकत्वसिद्धेः । न च तत्र शशशृङ्गं प्रतियोगि किन्तु शृङ्गमात्रं न तत्तुच्छम् । तन्निष्ठा प्रतियोगिता परं व्यधिकरणेन शशीयत्त्वेनावच्छिद्यते । तदवच्छिन्नप्रतियोगिताकः शृङ्गप्रतियोगिताक एवाभावोऽनया प्रतीत्या गृह्यत इति वाच्यम् । तथा सति शशीयं नास्तीति प्रतीत्याकारः स्यात् । शृङ्गत्वस्य प्रतियोगितावच्छेदकाघटस्य प्रतियोगिदिशिभानायोगात् । अन्यत्र तथाऽदर्शनात् । बाधकं विना

विशिष्टप्रतियोगिताबुद्धेः स्वरसभङ्गायोगाच्च । अन्यथा देवदत्तवति दण्डी देवदत्तो नास्तीत्यादिबुद्धेरपि देवदत्तमात्रप्रतियोगित्वं दण्डित्वं तदवच्छेदकमिति स्याद्विशिष्टस्य प्रतियोगित्वं न स्यात् । विशिष्टं दण्डदेवदत्तात्मकमतिरिक्तं वेत्यन्यदेतत् । ननु तत्र विशिष्टं सत्त्वमत्रासदिति वैलक्षण्यमिति चेत् । अस्तु किमेतावता । न ज्ञानमभावप्रतीतिकारणं न सम्भवतीति चेत् । असतोऽपि शब्दाभासादिना प्रतीतिसम्भवात् । अन्यथा तवापि प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानं न स्यात् । ननु योग्यानुपलब्धिरभावप्रत्यक्षे कारणम् । योग्यता च तद्याप्येतर-यावत्तदुपलम्भकसमवधानरूपसदुपलम्भकत्वदोषघटितम् । तत्सत्त्वेऽनु-पलम्भायोगः । तदसत्त्वे न योग्यतेति नासद्विशिष्टाभावः प्रत्यक्ष इति चेन्न । प्रत्यक्षासम्भवेऽपि शाब्दबुद्धेरेव सम्भवात् । किञ्च योग्यतायां दोषातिरिक्तत्वमेवोपालम्भकं वक्तव्यम् । अन्यथा घटाभावोऽपि प्रत्यक्षो न स्यात् । युक्तितौल्यात् । किञ्च संयोगिनाशजन्यसंयोगनाशप्रत्यक्षस्थले एतद्योग्यतानुपलब्धेरभावात् । तर्कितप्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जित-प्रतियोगिकानुपलब्धिरभावप्रत्यक्षे कारणं वाच्यम् । सा चात्रास्त्येवेति न किञ्चिदनुपपन्नम् । योग्यानुपलब्धिविचारस्तु प्रागेव कृत इति नेह प्रपञ्च्यते । विस्तृतं चैतन्न्यायामृतेऽख्यातिवादान्यथाऽनुपपत्तिभङ्गे । निषेध्यत्वानुपपत्तिभङ्गे च । तथा च सिद्धमत्यन्ताभावस्य तुच्छप्रतियोगिकत्वम् ।

ननु तथाऽपि तन्मात्रप्रतियोगिकत्वं कुत इति चेत् । शृणु । तुच्छप्रतियोगिकात्यन्ताभावस्यास्ति दैशिक इव कालिकप्रतियोगिना विरोधः । तत्रापि कालिकविरोधितावच्छेदकं न तुच्छाभावत्वं गौरवात् । किन्तु लाघवादत्यन्ताभावत्वमेव । तथा च नात्यन्ताभावकाले प्रतियोगी ।

अत्यन्ताभावस्य त्वनादिनित्यत्वात् सर्व एव काल इति[1] सकलकालावृत्तिप्रतियोगिकत्वसिद्धौ तुच्छमात्रप्रतियोगिकत्वमेव सम्पन्नमिति । अथवा त्वन्मते प्रतियोगितावच्छेदकावच्छिन्नस्य प्रतियोगिनस्तद्देशकालावच्छेदेन तत्तत्सम्बन्धेन तत्राधिकरणे सत्त्वं तत्राधिकरणेऽत्यन्ताभावविरोधित्वम् । तत्र यथा लाघवात्प्रतियोगितावच्छेदकावच्छिन्नांशत्यागेन प्रतियोगिसत्त्वं विरोधि कल्पयित्वा व्यासज्यवृत्तिधर्मावच्छिन्नाभावस्य व्यधिकरणधर्मावच्छिन्नाभावस्य चासम्भव उच्यते । तथा ततोऽपि लाघवाद्यत्र कुत्रापि प्रतियोगिसत्त्वमात्रस्यात्यन्ताभावविरोधित्वमास्थायास्माभिः सत्प्रतियोगिकात्यन्ताभावासम्भव उच्यत इति । अश्वे गोत्वं नास्तीत्यादिप्रतीतिस्तु व्यासज्यवृत्तिधर्मावच्छिन्नाभावव्यधिकरणधर्मावच्छिन्नाभाववत्प्रतीतिवद्विषयान्तरमासादयिष्यति । तच्च विषयान्तरमश्वे गोत्वादिसंसर्गात्यन्ताभाव एव । न च शब्दवत्प्रतीतिव्याख्यानमयुक्तमिति वाच्यम् । त्वन्मते व्यासज्यवृत्तिधर्मावच्छिन्नाभावादिस्थल इवानन्यगतिकत्वात् । अन्यथेदानीमपि धनं नास्त्यग्रे भविष्यति प्रागभूद्वेत्यादिप्रतीतिबलाद्वर्तमानप्रतियोगिकौ प्रागभावध्वंसाभावावप्यङ्गीकार्यौ स्याताम् । यदि च तत्र स्वरूपसंसर्गस्य प्रागभावः प्रध्वंसश्च विषयो लाघवेन प्रतियोगिवर्तमानत्वमात्रस्य प्रागभावप्रध्वंसविरोधिकत्वात् । न तु तेन तेन सम्बन्धेन तत्तत्कालावच्छेदेन तत्राधिकरणे प्रतियोगिसत्त्वे विरोधि गौरव इत्यङ्गीक्रियते तर्हि प्रकृतेऽपि दीयतां दृष्टिरिति सङ्क्षेपः ॥ नचेति ॥ जीवेश्वरयोर्मायाविद्यारूपोपाधिकृतभेदस्य सत्त्वात्सर्वज्ञत्वासर्वज्ञत्वव्यवस्थोपपत्तिरित्यर्थः ॥

---

[1] `अत्यन्ताभावस्यानादिनित्यत्ववत्सर्व एवं काले काल इति' मु.

**योगिनीति** । औपाधिकभेदवति प्रतियोगिनि सौभर्यादौ तत्तत्पदार्थविषयकज्ञानाज्ञानयोरदर्शनादित्यर्थः ।

(२४) (हु.) ॥ **एवञ्चेति** ॥ आत्मनो गुणाश्रयत्वव्यवस्थापनेन द्रव्यत्वसिद्धौ सत्यामित्यर्थ इति केचित् । वस्तुतस्तु धर्मिसत्तासमानसत्ताकानेकाश्रितत्वस्यावश्यकत्वं तत्रैव व्यक्त्यभेदस्य बाधकत्वमित्यस्य[1] सिद्धौ सत्यामित्यर्थः ॥ **इत्यादीन्यपीति** ॥ आदिनाऽऽत्मत्वं स्वाश्रयसमानसत्ताकस्वाश्रयप्रतियोगिकभेदवन्नानाव्यक्तिवृत्ति जातित्वाद्धटत्ववदित्यादेर्ग्रहणम् । सुस्थानि पारमार्थिकात्मभेदपर्यवसायीनीत्यर्थः । आरोपितभेदवन्नानाव्यक्तिनिष्ठत्वं जातेर्यदि स्यात् तर्हि आत्मनि द्रव्यत्व(त्वात्मत्वादि)जातय [2]आत्मान्तरघटान्तरप्रतियोगिकपारमार्थिकभेदेन विनाप्युपपन्न, न तस्यात्मान्तरघटादिभ्यः पारमार्थिकभेदव्यवस्थापनक्षमाः । यदि च व्यक्त्यैक्यं प्रत्यक्षादिप्रमाद्यविघटकत्वेन दूषणम् । तदाऽनुमानसिद्धात्मत्वस्यात्मन्यात्मान्तरप्रतियोगिकपारमार्थिकभेदव्यवस्थापकत्वं न सिध्येत् । तद्व्यवस्थापने त्विदं सिद्धं भवतीत्युपष्टम्भसङ्गतिः ॥ **चैत्रशरीरमिति** ॥ अत्र वस्तुतो मैत्रशरीरस्वामिभिन्नस्वामिकमित्येव पाठः । व्यावहारिकभेदमादाय सिद्धसाधनतावारणाय वस्तुत इत्युक्तमिति प्राचीनटिप्पण्युक्तेः । इदं च बहुजीववादिनं प्रति जीवानां परस्परं पारमार्थिकभेदसाधनाय प्रवृत्तमित्याशयेनैकजीववादिनिरासायैतदनुमानप्रयोगे तु तेन सिद्धसाधनता व्यावहारिकभेदमादायोद्भावयितुं न शक्यते । एकमेव शरीरं सजीवमन्यानि शरीराणि स्वप्नदृष्टकशरीराणीव

[1] `व्यक्तिभेदस्य बाधकमित्यस्य ' मु.

[2] अग्रिमवाक्यद्वयस्थाने मु.पाठे `आत्मान्तरघटकत्वे न' इत्येव दृश्यते ।

निर्जीवाण्येवेति वा सजीवत्वेऽपि सर्वशरीराधिष्ठितैक एव हिरण्यगर्भो नाम जीव इति वा तैरङ्गीकृतत्वेनैकशरीरस्वामिनि शरीरान्तर(रे )स्वामिप्रतियोगिकव्याहारिकभेदस्यापि तैरनङ्गीकृतत्वात् । तदा प्रातिभासिकभेदमादाय सिद्धसाधनतावारणाय वस्तुत इत्येतदप्रातिभासिकपरम् । अत एव केषुचित्कोशेषु तत्पदाघटित एव पाठो दृश्यते । तत्र प्रातिभासिकभेदमादाय सिद्धसाधनतावारणाय वस्तुत इति न वक्तव्यम् । पदानां प्रातिभासिकव्यावृत्तधर्मावच्छिन्नोपस्थापन एव(-स्थापकस्यैव) समर्थत्वेन भेदादिपदेन तदुपस्थापनस्यैवाभावात् । अन्यथा वस्तुतः पर्वतो वस्तुतो वह्निमानित्येव प्रयोगापत्तेरित्यभिप्रायः । (ननु) अत्र वस्तुत इत्यनेन पूर्वोक्तमतभेदेन पारमार्थिकत्वस्याप्रातिभासिकत्वस्य वा निवेशे मैत्रशरीरस्वामिप्रतियोगिकपारमार्थिकभेदवत्(-भेदेन) स्वामिरूपसाध्याप्रसिद्ध्याऽप्रसिद्धविशेषणता । अस्य भावसाध्यकत्वेन साध्याप्रसिद्धेर्दोषत्वस्यावश्यकत्वात् । न च वस्तुतो मैत्रशरीरस्वामितादात्म्यापन्नस्वामिकत्वाभाव एवात्र साध्यत्वेन विवक्षितोऽ(तोऽ)भावसाध्यकव्यतिरेक्ये(के) वेदमिति वाच्यम् । तथा च[1] वस्तुत इति विशेषणं प्रतियोकोटौ अभावे वा । नाद्यः[2] । विशिष्टप्रतियोगिन एवाप्रसिद्ध्या तन्निरूपितव्यापकताया हेत्वभावे दुर्ग्रहत्वात् । प्रतियोगिप्रसिद्धेरत्रा(-द्धेस्तत्रा)ङ्गीकारेऽपि तदभावरूपसाध्यस्य व्यावहारिकत्वेन वा प्रातिभासिकत्वेन वा सिद्धसाधनताया अनुद्धारात् । अस्य साध्यस्य शरीराधिकरणत्वेन सिद्धस्यापि पारमार्थिकत्वायोगाव्यावहारिकत्व-

---

[1] `तथा सति' इति पाठः सम्भाव्यते ।

[2] `प्रतियोगिकाभावे न वाच्यम्' मु.

स्यैवोचितत्वात् । सर्वस्याप्यत्यन्ताभावस्य पारमार्थिकत्वमेवेति मताश्रयणे प्रतियोगिकोटौ वस्तुत इत्यनुक्तावपि[1] तादृशस्य स्वामिकत्वसामान्यभावस्य पारमार्थिकत्वस्यैव (प्र)सिद्ध्या प्रतियोगिकोटौ तद्वैयर्थ्यात् । वस्तुतः पारमार्थिकस्वामि(क)त्वस्यैव तन्मते प्रसिद्धिरेव । एतेन प्रतियोगिनि पारमार्थिकत्वानुपादाने स्वामित्वसामान्याभावे पारमार्थिकत्वतादृश-स्वामित्वमिथ्यात्वपर्यवसायि स्यात्तेन पराभिमतस्यैव सिद्ध्याऽर्थान्तरता स्यादतस्तन्निवेशनं[2]तत्प्रतियोगिनि तद्दाने तु तस्य पारमार्थिकत्वेनैव गृहीतत्वात् न तन्मिथ्यात्वे पर्यवसानमिति निरस्तम् । अत्यन्ताभावस्य पारमार्थिकत्वसिद्धावपि तस्य तादृशस्वामिकत्वं[3] सामानाधिकरण्यासिद्ध्या मिथ्यात्वापर्यवसानाच्च । अत्यन्ताभावस्याप्रामाणिकत्वप्रतियोगिकत्वमेवेति[4] मते उक्तसाध्यीभूताभावस्य पारमार्थिकप्रतियोगिकत्वायोगाच्च[5] । नाप्युक्तसिद्धसाधनतावारणायाभाव एव वस्तुत इत्येतद्विशेषणमिति पूर्वोक्तद्वितीयक्षः । यद्धर्मावच्छिन्नव्यापकता हेत्वभावस्य गृहीता तदभावेन तद्धर्मावच्छिन्नाभावत्वेन सिध्यतु पारमार्थिकत्वेन सिद्धौ[6] तु बीजाभावः । अन्यथा व्यावहारिकत्वेन कुतो न सिध्येत् । न च प्र(भ्र)मात्मकानुमिति-सामान्यं स्वविषयं पारमार्थिकत्वेनैव विषयीकरोतीति वाच्यम् । तथात्वे

---

1 `प्रतियोगिकयोरवस्तुत इत्यनुत्त्वाऽपि' मु.

2 अग्रिमवाक्यस्थाने मु.पाठे `तत्प्रतियोगिनीति' इत्येतावदेव दृश्यते ।

3 `तादृशस्वामिकत्वे'ति विभक्तिरहिततया भाव्यमिति भाति ।

4 `अत्यन्ताभावस्य प्रामाणिकत्वप्रतियोगिकत्वमेवेति' मु. । अग्रिमपङ्क्तौ ह्.पाठे `अप्रामाणिकप्रतियोगिकत्वेति' दर्शनात् अत्रापि तथैव भाव्यमिति भाति ।

5 `पारमार्थिकत्वप्रति-' मु.

६. `सिद्ध्यै' मु.

वस्तुत इति विशेषणोपादानमनर्थकमेव । अन्यानुमितीनामिवास्याप्यनुमितेः स्वमहिम्नैवोक्तसाध्यस्य पारमार्थिकत्वव्यवस्थापकत्वसम्भवादिति चेन्न । अत एव वस्तुत इति पदाघटितोऽपि पाठः पुस्तकेषु दृश्यते । तद्दाने तु तस्य पारमार्थिकत्वेनैव गृहीतत्वान्न मिथ्यात्वपर्यवसानम्[1]। तत्सत्त्वेऽपि यथाश्रुतसाध्यमेवेदं नाभाससाध(ध्य)कम् । तत्र व्यावहारिकसाध्यादिकमादाय[2] सिद्धसाधनतावारणाय वस्तुत इति सार्थकम् । तच्च मैत्रशरीरस्वामिभेदेऽन्वेति । न चाप्रसिद्धविशेषणता दोषः । नैयायिकैरेव तदभ्युपगमात् । वेदान्तिमते तस्या अदूषणताया —

`आश्रयव्याश्रयसिद्धी साध्यासिद्धिश्च दूषणम् ।
केषाञ्चिन्न हि ते दोषाः व्याप्तौ सत्यां कथञ्चने'

त्यादिना भक्तिपादीयानुव्याख्याने सुधायां च निपुणतरमुपपादितम् । अद्वैतचन्द्रिकाकारोऽपि साध्यस्याप्रसिद्धिर्न दोषः । तत्काले यथाकथञ्चिद्वादिवाक्यादिना तदुपस्थितिमात्रेण साध्यसंशयस्य[3] व्यतिरेकव्याप्तेश्चानुकूलतर्कादिसाहित्येन ग्रहीतुं शक्यत्वादित्युपपादितवान्द्वित्रिस्थलेषु । तथा च क्वचिन्नैयायिकरीतिमवलम्ब्य ग्रन्थप्रवृत्तावप्यत्र शुद्धवादिप्रतिवादिरीतिमवलम्ब्यैव ग्रन्थप्रवृत्तौ बाधकाभावात् । यदि चा(वा)ऽयमपि ग्रन्थोऽप्रसिद्धविशेषणताया दूषणत्वमवलम्ब्यैव लापनीय इत्याग्रहस्तदा नैरात्म्यं किञ्चिन्निष्ठाभावप्रतियोगि व्यतिरेकिधर्मत्वादित्यादिना सामान्यतः सात्मकत्वसिद्ध्यनन्तरमेव जीवच्छरीरं सात्मकं प्राणादिमत्त्वादिति व्यतिरेक्यनुमानं प्रवर्तते । तथाऽत्रापि मैत्रशरीरस्वामिभेदश्चिद्वृत्तित्व-

---

[1] इदं वाक्यं हु.पाठे नास्ति ।    २. `व्यावहारिकमादाय' मु.

[3] `साध्यसंशयमत्रस्य' हु.

पारमार्थिकत्वोभयवान् अपारमार्थिकानिरूपककत्वे सति चिद्वृत्तित्वात् चिन्निष्ठानन्दसत्तादिवत् । चिद्वृत्तिशुद्धत्वादौ व्यभिचारवारणाय सत्यन्तम् । तेषां जडामिश्रितत्वादिरूपतयाऽपारमार्थिकानिरूपितत्वाभावात् । सत्ताऽपि ब्रह्मस्वरूप(त्व)मेवातो न देशनिरूपितातो न दृष्टान्तासिद्धिः । तस्यास्तथात्वेऽप्यानन्दज्ञानयोर्दृष्टान्तत्वसम्भवाच्च । गगने स्वाभावाद्यनात्मकतयाऽपारमार्थिकानिरूपिते व्यभिचारवारणाय विशेष्यदलम् । चिंति डित्थपिण्डनिष्ठायां भेदस्याज्ञकल्पितस्य परैरप्यङ्गीकारान्न पक्षा(प्र)सिद्धिः । नापि हेत्वसिद्धिः । विशेष्यीभूतचिद्वृत्तित्वस्योपपादितत्वात् । स्वामिपदेन तत्त्वोपलक्षितचेतनस्यैव ग्रहणात् । तस्य पारमार्थिकत्वेनापारमार्थिकानिरूपकत्वरूपविशेषणभागस्यापि सत्त्वात् । तथा चोक्तानुमानेन मैत्रशरीरस्वामिप्रतियोगिकपारमार्थिकभेदवत्सिद्ध्यनन्तरं प्रतिशरीरं जीवभेदसिद्ध्यर्थं तादृशचिदेव स्वामितानिरूपकत्वसम्बन्धेन चैत्रशरीरे[1] प्रधानतो व्यतिरेकलिङ्गेन साध्यत इति न कश्चिद्दोषः । यद्वा मैत्रशरीरस्वामी चैत्रशरीरे पारमार्थिकप्रतियोगिकत्वापारमार्थिकत्वोभयाभाववत्स्वप्रतियोगिकभेदवत्स्वामिकत्वसम्बन्धेन साध्यते । अयं च मैत्रस्वामिकघटे घटान्तरस्य सम्बन्धः प्रसिद्धः । घटान्तरप्रतियोगिकमैत्रनिष्ठे भेदे पारमार्थिकप्रतियोगिकत्वाभावप्रयुक्तोभयाभावसत्त्वात् । अनेन सम्बन्धेन मैत्रशरीरस्वामिनः साध्यत्वे सम्बन्धघटकतद्भेदेऽपारमार्थिकत्वाभावप्रयुक्तस्यैवोभयाभावस्य वक्तव्यतया मैत्रशरीरस्वामिप्रतियोगिकपारमार्थिकभेदवत्स्वामिकत्वस्योक्तानुमानबलादेव सिद्धेः । परमते

---

[1] इत आरभ्य अग्रिम 'चैत्रशरीरे' इति पदपर्यन्तम् हु.पाठे न दृश्यते । प्रायः चैत्रशरीरे इति पदस्य द्विधा सद्भावः लेखकं वञ्चयामास ।

उक्तसम्बन्धस्योक्तसाध्यं प्रति व्यधिकरणसम्बन्धतया तत्सम्बन्धावच्छिन्नाभावस्य केवलान्वयितयाऽङ्गीकृतत्वेऽप्युक्तविचारदशायां मैत्रशरीरातिरिक्तेषु सन्दिग्धत्वेन मैत्रशरीरमात्रे तदभावस्य हेत्वभावस्य वादिप्रतिपाद्युभयसम्मतत्वेन निश्चितसहचारेऽप्युभयोः वास्तवभेदो न स्यात्, तर्हि परस्परसुखदुःखानुभवः स्यादित्यादिरूपानुकूलतर्कसहितेन[1] व्यभिचारसंशयमनादृत्य व्याप्तिग्रहोपपत्तेः । उक्ततर्कबलादेवानुमानहेतोरपि नाप्रयोजकताशङ्काऽपि । अधिकं पूर्वपक्षविवरणेनानुसन्धेयम्[2] । उक्तानुकूलतर्कानुसन्धानाभावादेव सामान्यतो दृष्टान्ताभावकथनम् । अत्र तु तदभ्युपगमेन दृष्टान्तव्यवस्थापनाभिप्रायेण व्यतिरेकिदृष्टान्तकथनमिति न पूर्वोत्तरविरोधः ॥ **तद्विरुद्धेति** ॥ एककालावच्छेदेन तच्चेष्टासाध्यफलोत्पत्तिविरोधिव्यापाराश्रयत्वं तद्विरुद्धचेष्टाकत्वम् । प्रकृते तादृशव्यापारवन्तावेव चैत्रमैत्रौ ग्राह्याविति नासिद्धिः । वायूपघातादिवशात् मैत्रचेष्टाविरोधिचेष्टावति मैत्रस्वामिके घटे व्यभिचारापत्ति(-चार)वारणाय शरीरत्वमुपात्तम् । तावत्युक्ते मैत्रशरीर एव व्यभिचारवारणाय विशेषणदलम् । एकस्वामिकत्वे विरुद्धक्रियोत्पत्तिर्न स्यादित्यनुकूलतर्कोत्थापकतया व्याप्तिग्रहौपयिकत्वं सर्वविशेषणघटकानां वर्तत इति न कस्यापि वैयर्थ्यम् । एतत्तर्कोपष्टम्भिततयाऽपि नास्य हेतोरप्रयोजकत्वम् । यत्त्वत्र कथितमिन्द्रार्जुनयोरेककाल एव खाण्डववनदहनतच्छमनरूपविरुद्धचेष्टावतोरेकस्वामिकत्वस्यैव सत्त्वाद्व्यभिचार इति तन्न । उक्तानुमानस्य प्रकृतहेतुसाध्यघटितव्यतिरेकव्याप्तिमूलकस्य व्यभिचाराप्रसक्तेः । यच्छरीरं

---

[1] `निश्चितसहचारेण स्यादित्यादिरूप-' इत्यनयोः पदयोः मध्यभागः मु.पाठे नास्ति ।

[2] `विवरणेऽनुसन्धेयम्' मु.

यच्छरीरचेष्टाविरुद्धचेष्टकं तत्तत्स्वामिभिन्नस्वामिकमिति सामान्यव्याप्त्याऽनुमानस्याप्रवृत्तत्वेन सामान्यव्याप्तौ व्यभिचार-चोदनस्याकिञ्चित्करत्वात् । न चैवं सति डित्थविष्णुमित्रशरीरस्य जीवभेदसिद्धिः कथं स्यादिति वाच्यम् । तत्राप्येतादृशव्यतिरेक्यनुमानेन तत्सिद्ध्युत्तरतदृष्टान्तकान्वय्यनुमानात्तत्सिद्धिसम्भवात्[1] ।

ननु तर्ह्यर्जुनादिशरीरादिदृष्टान्तेनोक्तहेतोरप्रयोजकत्वमेव शङ्क्यत इति वाच्यम् । अनुकूलतर्कयोरुक्तत्वात् । तत्रैकस्मिन्नेव विरुद्धचेष्टानुकूलप्रयत्नोत्पादकभगवदिच्छारूपविशेषकारणरूपबलादेकस्वामिकयोः कदाचिद्विरुद्धचेष्टोत्पत्तावप्यन्यत्र भिन्नस्वामिकत्वं विना तन्निर्वाहायोगात्[2] । अस्या व्याप्तेरौत्सर्गिकत्वेन बलवद्बाधकैकापोद्यत्वेन सोपाधिकव्यभिचारस्यादूषकत्वादित्युक्तत्वात् । अन्यथा यागीयहिंसायाः पापाजनकत्वेन हिंसात्वस्यापि पापाजनकत्वयोग्यत्वानुपपत्तेः[3] । तत्र यागीयहिंसाभिन्नत्वविशेषणं देयमिति चेत्तर्ह्यत्राप्येकत्र विरुद्धचेष्टोत्पादकप्रयत्नजनकभगवच्छक्त्यादिरूपविशेषकारणा(णान)धीनत्वेन प्रमितत्वविशेषणं दत्वा सामान्यव्याप्त्यादिरपि निर्वोढुं शक्य (शक्यत) एव । विशेषव्याप्तिस्तु सौलभ्याय कुत्रापि विभिन्नस्वामिकत्वसिद्ध्यभावदशायां सामान्यव्याप्तेर्दर्शयितुमशक्यत्वाच्चोपात्तेत्यलम् । इयता भेदस्य व्यासज्यवृत्तित्वमवलम्ब्य तत्सिद्धये द्वित्वाद्यवच्छिन्नपक्षकानुमानन्दर्शयति — जीवेशाविति ॥ जीवे ईशे चेति भेदसिद्धौ द्वित्वेन पक्षीकरणसम्भवः । तत्सिद्धौ च सिद्धसाधनतेति

---

[1] `तत्सिद्ध्युत्तरदृष्टान्तकान्वय्यनुमानादिना वा तत्सिद्धि-' मु.

[2] `तद्वियोगात्' मु.

[3] `पापाजनकत्वे व्याप्यत्वानुपपत्तेः' मु.

शङ्कानवकाशः । द्वित्वावच्छेदेनैकभेदसिद्धेरभावात् । तत्सिद्धिस्तु द्वित्वस्य पक्षतावच्छेदकत्वमहिम्ना द्वितीयक्षणावच्छिन्नो घटो गन्धवानितिवत् । अत्र व्याप्तिस्तु यदुभयं परस्परविरुद्धधर्माधिकरणं तदुभयं स्वनिष्ठोभयत्वावच्छेदेन परस्परसम्बन्धभेदवदित्युक्तव्याप्तिज्ञानस्य द्वित्वावच्छेदेनैव भेदानुमिति-जनकत्वानुरोधेनैव (तत्)सिद्धिः । एतेन पक्षतावच्छेदकत्वमाहिम्ना सिद्धिरित्यनेन तद्भानं न परामर्शकार्यतावच्छेदकमिति सम्प्राप्तम् । तथात्वे उक्तद्वित्वोपलक्षितेऽपि भेदानुमितिजनकत्वं स्यात् । विशिष्टघटे बाधदशायामुत्पत्तिकालोपलक्षितघटे तत्स्थलीयपरामर्शबलेनानुमिति-दर्शनात् । तत्रेष्टापत्तौ च चैत्रमैत्रौ चैत्रभेदवन्तावित्यत्रानुमितिर्द्वित्वावच्छेदेन बाधग्रहणदशायां तदुपलक्षिते स्यात् । न च तदाकारानुमितिः[1] कस्याप्यनुभवसिद्धा । तथान्यायोऽपि स न्याय[2] इति कस्यचिदनुमित इति शङ्कानवकाशः । उक्तज्ञानदशायामनुमितिजनकत्वस्यैव सत्त्वात् ॥ **सम्मतवदिति** ॥ जलानलोभयवदित्यर्थः । अन्यत्र द्वित्वावच्छेदेन भेदमङ्गी-कृत्य जीवेशद्वित्वावच्छेदेन परस्य भेदे विप्रतिपत्तिदशायामेवानुमानस्य प्रवृत्तिरिति सम्मतवदित्यनेन सूचितत्वान्न दृष्टान्ते साध्यवैकल्यशङ्कावकाशः ॥ **वध्यघातुकभावलक्षण इति** ॥ परस्पराभावात्मकत्वं परस्पर-विरहव्यापकत्वं वा । तच्चैकत्ववादिनाऽपि लौकिकव्यवहारादङ्गीकार्यम् । अन्यथा सर्वमर्यादोल्लङ्घने कथकताया एवासिद्धिप्रसङ्गादित्याशयः । सिद्धान्ते (अभावस्य) प्रामाणिकप्रतियोगित्वनैयत्येऽपि यथेदं घटते तथोपपादितं

---

[1] `चैवमाकारानुमितिः' मु.

[2] `तथा सत्ये सन्याय' इति ह्.पाठः । द्वयोरपि अर्थः न स्फुटः ।

पुरस्तात् (द्वैतद्युमणौ) । नन्वेकस्मिन्नप्यारोपित[1]योर्विरुद्धधर्मयोर्द्वित्वस्य सत्त्वाद्व्यभिचारः । तदर्थं धर्मिसत्तासमानसत्ताकत्वस्य हेतुविशेषणे परस्यासिद्धिरिति चेन्न । पल्लवाज्ञानकार्यत्वाभावरूपप्रातिभासिकत्वाभावस्य हेतुविशेषणत्वाङ्गीकारे दोषाभावात् । मन्मते च पल्लवाज्ञानस्याप्रसिद्ध्या तद्घटितप्रतियोगिताकाभावस्य सत्प्रतियोगिकत्वेनारोपितविरुद्धधर्मयोः सत्त्वेऽपि तयोरसत्त्वेन तद्वत्वस्यैव[2] कुत्राप्यभावादेव[3] न व्यभिचार-प्रसक्तिरिति ज्ञेयम् । यद्वा भेदस्या(स्य)व्यासज्यवृत्तित्वपक्षेऽपि पूर्वं ब्रह्म-पक्षकानुमानजीवपक्षकानुमाने तयो परस्परं पारमार्थिकभेदसिद्ध्यर्थं पृथगुक्त्वेदानीमेकेनैव तत्साधनार्थमाह — **जीवेशादिति** ॥ अत्र द्वित्वाव-च्छेदेन साध्यसाधनं नाम तद्व्यापकत्वेन साधनम् । स्वरूपसम्बन्धरूपा-वच्छेदकत्वस्यैव तत्पक्षे[4] बाधितत्वात् । व्यापकता च प्रत्येकवृत्त्योरपि परस्परभेदयोः परस्परप्रतियोगिकपरस्परानुयोगिकभेद(व)त्त्वरूपसाध्यता-वच्छेदकरूपेणैवानुमानान्तरेष्विवेति बोध्यम् । संयोगतदभावा-धिकरणत्वयोरंशभेदेनैवाङ्गीकृतत्वाद्वृक्षरूपधर्मिणि संयोगसत्त्वमेव न संयोगाभावस्यापि तत्र सत्त्वमिति द्वैतद्युमणौ व्यवस्थापितत्वान्न तदुभयमुपादायोक्तव्याप्तिभङ्गः ॥ **न चेति** ॥ **उपाधिमात्रेणेति** ॥ भेदसम्पादकद्वारेत्यादिः ॥ **तत्प्रतियोगिनीति** ॥ उपाधिप्रतियोगिनि तदभाव इति यावत् । तददर्शनात् उपाधिसामानाधिकरण्यादर्शनादित्यर्थः । भवेदुपाधिभेदसम्पादनद्वाराऽन्ययोर्विरोधमेकाधिकरणवृत्तित्वेऽप्युपपादनक्ष मः । यदि स्वाभावविरोधं स्वस्मिन्स्वाभावं स्वं चैकस्मिन्घटमानः स्यात् ।

---

1 `-एकस्मिन्नाकारारोपित-' मु.

२. `सद्वृत्तस्यैव' मु.

3 `कुत्राप्यभावेन' मु.

४. `स्वरूपसम्बन्धरूपावच्छेद्यत्वपक्षे' मु.

न चैतदस्ति । घटावच्छिन्नाकाशो घटाघटभावस्यांशभेदमनुपादाया-काशमात्रे वोपाध्यभावा व्यवहारात् । आकाशे घटसंयोगो नास्ति । घटावच्छिन्नाकाशे घटसंयोगो नास्तीत्यप्रतीतेः । आकाशान्तरे[1] तु स्वाभाविकत्वान्नोपाधिकृतत्वमतोऽस्वस्वाभावयोरेवैकवृत्तित्वं विरुद्धत्वं चोपपादयितुमक्षमः । स्वयमनवतीर्ण इति न्यायेन कथमन्यत्र व्यवस्थां कुर्यादित्याशयः । उपाधिकृतभेदमात्रेणेति पाठे[2] तत्प्रतियोगिन्यौपाधिक-परस्परस्वप्रतियोग्यनुयोगिकभेदप्रतियोगित्वेन त्वदभ्युपगतेषु (कायव्यूह-वद्योगिषु) सर्वज्ञत्वाल्पज्ञत्वयोरदर्शनादौपाधिकभेदप्रयोजक इत्यर्थः । तद्वति योगिनीति पाठे औपाधिकभेदवत्सौभर्यादियोगिनि सर्वज्ञत्वाल्पज्ञत्वयो-रदर्शनादित्यर्थः[3] ।

(२४) (का.) ॥ **एवं चेति** ॥ उक्तरीत्या प्रथमानुमाने व्यवस्थापिते चेत्यर्थः । अपारमार्थिकभेदेन सिद्धसाधनवारणाय **धर्मिसत्तासमान-सत्ताकेति** । इत्यादीत्यादिना सुखं नानाव्यक्तिनिष्ठं गुणत्वादित्यादीना-मुपसङ्ग्रहः ।

आदिपदेनात्मत्वं नानाव्यक्तिनिष्ठं जातित्वादित्यस्य ग्रहणमिति तु मन्दम् । एतावता प्रबन्धेन तस्यैव व्यवस्थापितत्वात् । प्राथमिकत्वेन तस्यैव कण्ठत उपादातुमुचितत्वाच्च ।

॥ **सुस्थानीति** ॥ उक्तविधया द्रव्यत्वस्यात्मनि सिद्धत्वेनोक्तासिद्ध्य-नवकाशात् । भेदे धर्मिसत्तासमानसत्ताकत्वनिवेशेन सिद्धसाधनस्य चानवकाशादिति भावः ।

नन्वेतावता सुखादिपक्षकानुमाने कथं पूर्वोक्तदोषपरिहार इति

---

1 `अंशान्तरस्य' मु. २. `-मात्रेणेति ॥ पटे' मु. ३. `-त्वयोर्दर्शनात्-' मु.

चेदित्थम् । सुखादीनामप्ययावद्द्रव्यभावित्वेनात्मन्यङ्गीकारे बाधकाभावात् । तेषां प्रत्यक्षत्वेन तत्प्रयोजकमहत्त्वशून्यमनोगुणत्वासम्भवाच्च । सुखं मनोभिन्ननानाव्यक्तिनिष्ठं गुणत्वाद्रूपवदित्यनुमीयते । तथाच न सिद्ध-साधनम् । न चैवमपसिद्धान्तः । तार्किकरीत्यैतत्प्रयोगात् । आश्रयत्वानु-सन्धातृत्वान्यतरसम्बन्धस्य साध्यघटकत्वाद्वा दोषाभावात् । मनोवृत्ते-र्मनोभिन्नाश्रितत्वानुपपत्त्या मनोभिन्नानुसन्धातृकेनैव साध्यपर्यवसाना-दुद्देश्यसिद्धेरिति । अस्यार्थस्य द्वित्वादीनामिति ग्रन्थेनैव लाभान्न पृथगुक्तिः ।

ननु चैत्रशरीरमित्याद्यनुमाने प्रागुक्तदोषापरिहारात् कथमस्य सुस्थत्वमत आह — **चैत्रशरीरमिति** ॥ उक्तरीत्या सिद्धसाधनवारणाय वस्तुत इति भेदविशेषणम् । धर्मिसत्तासमानसत्ताकेत्यर्थः । अयं भावः । तद्विरुद्धचेष्टाकत्वं तत्क्रियाजनकप्रयत्नानुसन्धात्रननुसंहितप्रयत्नजन्यक्रिया-वत्त्वम् । अतो नोक्तव्यभिचारः । घटादौ प्रयत्नजन्यक्रियाविरहात् । एतदर्थमेव चेष्टापदम् । न चैवं घटादेर्दृष्टान्तत्वासम्भव इति वाच्यम् । व्यतिरेकेण मैत्रशरीरस्यैव दृष्टान्तत्वसम्भवादिति ।

यत्तु तद्विरुद्धचेष्टावत्त्वं तत्क्रियाकार्यप्रतिबन्धकक्रियावत्त्वम् । शरीरत्वेन हेतुविशेषणान्न घटादौ व्यभिचार इति । तन्न । इन्द्रार्जुनयोः खाण्डवदाहादौ विरुद्धकार्यक्रियावतोर्व्यभिचारात् । न चोभयसम्प्रतिपन्नैकस्वामिकत्वाभावे सतीति विशेषणान्न दोष इति वाच्यम् । विशेषणवैयर्थ्यादप्रयोजकत्वाच्च ।

विमतौ भिन्नौ विरुद्धधर्माधिकरणत्वाद्दहनतुहिनवदित्यस्योक्तदोष-वारणाय विवक्षितार्थमाह — **जीवेशाविति** ॥ ननु विरुद्धधर्माधिकरणत्वस्य परस्परधर्मवदवृत्तिधर्मवत्वरूपस्य हेतोरसिद्धिः । मायिमते जीवेश्वरधर्मयोरे-

काधिकरणकत्वादित्याशङ्कावारणाय विरोधं विवृणोति — **विरोधश्चेति** ॥ **सहानवस्थाननियमः** परस्पराधिकरणावृत्तित्वम् । वध्यघातुकभावश्च न नाश्यनाशकभावरूपः । सर्वज्ञत्वासर्वज्ञत्वादीनां तदभावात् । किन्तु भावाभावत्वरूप इति ज्ञापनाय नित्यत्वानित्यत्वादावित्युक्तम् ।

अथ सिद्धान्ते अत्यन्ताभावस्याप्रामाणिकप्रतियोगिकत्वनियमात् कथमीशवृत्तिसर्वज्ञत्वात्यन्ताभावरूपत्वमसर्वज्ञत्वस्य, कथं वा जीवगतासर्वज्ञत्वात्यन्ताभावरूपत्वं सर्वज्ञत्वस्येति चेत् इत्थम् । जीवे आरोपिसर्वज्ञत्वप्रतियोगिकात्यन्ताभाव एवासर्वज्ञत्वम् । स च मतान्तरे प्रतियोगिनेव सिद्धान्ते प्रधानेन विरुध्यते । सर्वज्ञत्ववतीश्वरे सर्वज्ञत्वं नास्तीत्यप्रतीतेः । ईशगतसर्वज्ञत्वस्यासर्वज्ञत्वं प्रति प्रधानत्वादेव प्रतियोगित्वव्यवहारः ।

एवमसर्वज्ञत्वं सर्वज्ञतादात्म्यनिषेधः । सर्वज्ञतादात्म्यं च सर्वज्ञत्वमेवेति तत्प्रतियोगिकत्वमसर्वज्ञत्वस्य । अन्योन्याभावस्य प्रामाणिकप्रतियोगिकत्वोपपत्तेः । तदभावश्च सर्वज्ञत्वमेव । भावभिन्नात्यन्ताभावस्यैव प्रामाणिकप्रतियोगिकत्वनिषेधात् । **`निषेधस्य निषेधश्च भाव एव बलाद्भवेदि'**ति वचनात् । अधिकमन्यत्रानुसन्धेयम् ।

॥ **सर्वज्ञत्वेति** ॥ ननु किमिदं सर्वज्ञत्वम् । न तावत् सर्वविषयकज्ञानवत्त्वम् । मेयत्वादिना सामान्यतः सर्वविषयकज्ञानस्य जीवसाधारण्यात् । नापि यावन्तः पदार्थाः तत्तद्व्यक्तित्वेन तावद्विषयकज्ञानवत्त्वम् । असर्वज्ञादीनां विशिष्य तावद्विषयकज्ञानाभावेन दुर्ज्ञेयत्वापत्तेः । उच्यते । विषयितासम्बन्धावच्छिन्नप्रतियोगिताकाभावानधिकरणज्ञानवत्त्वं सर्वज्ञत्वम् । मेयत्वेन सर्वविषयकेऽपि ज्ञाने घटत्वेन घटाभानाद्विषयितासम्बन्धाव-

च्छिन्नघटत्वावच्छिन्नप्रतियोगिताकाभावस्यैव सत्त्वान्नातिव्याप्तिः । असर्वज्ञस्याप्येतादृशसर्वज्ञत्वज्ञानसम्भवान्न दुर्ज्ञेयत्वम् । आदिपदेन स्वातन्त्र्यास्वातन्त्र्यादिपरिग्रहः ।

नन्वप्रयोजको हेतुः । धर्मिसत्तासमानसत्ताकभेदाभावेऽपि तन्न्यूनसत्ताकभेदेनैव विरुद्धधर्मवत्त्वोपपत्तेरित्याशङ्कां निराचष्टे — **न चेति** ॥ जीवेशयोरविद्याद्युपाधिकृतभेदेनैवोक्तविरुद्धधर्मवत्त्वोपपत्तिरित्यर्थः । **योगिनि** योगोपात्तनानादेहवति । **तददर्शनात्** उक्तविधविरुद्धधर्मवत्त्वादर्शनात् । तथाचौपाधिकभेदस्य विरुद्धधर्मवत्त्वनिर्वाहकत्वे योगिनोऽपि तत्प्रसङ्ग इति भावः । पूर्वमौपाधिकभेदस्य विशिष्य दुःखानुसन्धातृत्वतदभावोभयनिर्वाहकत्वं निराकृतम् । इदानीं तु सामान्यतो विरुद्धधर्मद्वयनिर्वाहकत्वमिति न पुनरुक्तिः ।

**(२४) (श.)** इदानीं पूर्वपक्षदूषितानुमानान्युद्धरति ॥ **एवं चेति** ॥ आत्मनो द्रव्यत्वे आत्मत्वस्य जातित्वे च सिद्धे सतीत्यर्थः । असिद्ध्यभावादिति भावः । आदिपदेनाऽत्मत्वं नानाव्यक्तिनिष्ठं जातित्वादित्याद्यनुमानग्रहणम् । चैत्रशरीरपक्षकानुमानोक्तदोषं परिहरन्नाह — **चैत्रशरीरमिति** ॥ व्याख्यातमेतदधस्तात् । सिद्धसाधनवारणाय वस्तुत इति । अत्र एकस्वामिकयोर्घटपटयोर्व्यभिचारपरिहाराय हेतौ शरीरपदप्रवेशेऽपि न दृष्टान्तासिद्धिरिति भावः । विमतपक्षकानुमानोक्तदोषं परिहरन्नाह — **जीवेशाविति** ॥ धर्मिसत्तासमानसत्ताकभेदसाधनात् पारमार्थिकभेदसाधनेऽप्रसिद्धविशेषणत्वम् । व्यावहारिकभेदसाधने सिद्धसाधनमिति चोद्यानवकाश इति भावः । सम्मतवत् दहनतुहिनवत् । अनभिमतपक्षं दूषयन्नभिमतपक्षमाह — **विरोध इति** ॥

**सहानवस्थाननियमेति** ॥ नियमेनैकत्रानवस्थिततत्वरूपेत्यर्थः । कुत इत्यत आह — **ऐक्यवादिन इति** ॥ तन्मते आत्मनामेकत्वेन विरुद्धधर्मत्वे वक्ष्यमाणयोरेकत्रैवावस्थानेनैकत्रानवस्थानासम्भवेन स्वरूपासिद्धेरित्यर्थः ॥ **वध्यघातुकेति** ॥ ननु 'नाजात एकोऽन्यं हंति नाप्यनाधार' इति न्यायेन वृश्चिकादीनां स्वजन्मना मात्रादिहन्तृत्वं भटादीनां समरभूमौघटितानां हन्तृत्वमिति लोके दृष्टम् । तत्र वक्ष्यमाणसर्वज्ञत्वादेर्वध्यघातुकभावे एकस्मादन्यजन्माभावेन घटादीनामिवैकस्थानसम्बन्धो वाच्यः । स च तदाधारजीवेशयोरैक्यमेवापेक्षत इति कथं वध्यघातुकभावविरोधविशिष्ट-धर्माधिकरणत्वेन भेदसाधनमिति चेन्न अत्र जहल्लक्षणया वध्यघातुक-भावशब्देन परस्परविरहरूपत्वस्य विवक्षितत्वात् । वक्ष्यमाणसर्वज्ञत्वादेरपि तथात्वात् । संयोगतदत्यन्ताभावावयोश्चसामानाधिकरण्यं नेत्यावयो-र्मतमिति न तदाश्रये व्यभिचारः । अत एवैतादृशविरोधविशिष्टं धर्मं दृष्टान्ततयोपादत्ते — **नित्यत्वेति** ॥ सुखदुःखादावुक्तविरोधविशिष्टत्वाभावा-त्तादृशविरुद्धधर्मः क इत्यपेक्षायामाह — **तादृश इति** ॥ **तद्व्यवस्था** विरुद्धधर्मव्यवस्था । तथाच धर्मिसत्तासमानसत्ताकभेदासिद्ध्याऽर्थान्तरमिति भावः ॥ **योगिनीति** ॥ योगिषु देहान्तःकरणाद्युपाधिकृतभेदसद्भावेऽपि सुखदुःखादिविरुद्धधर्मव्यवस्थाया अदर्शनान्नोपाधिभेदमात्रेण तद्व्यवस्थो-पपत्तिरित्यर्थः ।

**(२५) एवं देवदत्तान्तःकरणं यज्ञदत्तान्तःकरणावच्छिन्न-चैतन्याद्वस्तुतो भिन्नचैतन्यावच्छेदकं तद्वृत्त्यनिवर्त्यनिवर्तकत्वात् । व्यतिरेकेण यज्ञदत्तान्तःकरणवत् । एवं देवदत्तस्मरणं (देवदत्तस्य स्मरणं) वस्तुतो न यज्ञदत्तीयं यज्ञदत्तानुभवाजन्यत्वात् । व्यतिरेकेण**

**यज्ञदत्तस्मरणवदित्यादीनि भेदसाधकान्यूहनीयानि (इत्याद्यूह्यम्)। न चासिद्धिः । देवदत्तानुभूते यज्ञदत्त(स्य) स्मरणानुदयात् । आत्मनां (च) स्वाभाविकाभेदे सुखदुःखादिव्यवस्थाऽनुपपत्तिर्बाधिका[1] मन्दार-मञ्जर्यामस्माभिरुपपादिता द्रष्टव्या ।**

(२५) (भ.) एवं जीवेश्वरभेदेऽनुमानमभिधायान्योन्यजीवभेदेऽप्यनुमानान्याह — **एवं देवदत्तान्तःकरणमिति** ॥ चैतन्याद्वस्तुतो यद्भिन्नं चैतन्यं तदवच्छेदकमित्यर्थः । नित्यसापेक्षत्वाद्भिन्नपदस्य समासः । **तद्वृत्त्यनिवर्त्यनिवर्तकत्वादिति** ॥ यज्ञदत्तान्तःकरणवृत्तिज्ञानेनानिवर्त्यं यदज्ञानं तन्निवर्तकवृत्तिमत्त्वादित्यर्थः ॥ **एवं देवदत्तस्य स्मरणमिति** ॥ देवदत्तयज्ञदत्तयोरभेदस्य पारमार्थिकत्वे देवदत्तस्मरणस्य व्यवहारतोऽयज्ञदत्तीयस्यापि वस्तुतो यज्ञदत्तीयत्वं सम्भवत्येव । अतस्तन्निरासाय वस्तुत इति । तेन च देवदत्तयज्ञदत्तयोर्वस्तुतो भेदः सिध्यतीति भावः । देवदत्तयज्ञदत्तयोर्वस्तुत ऐक्याद्देवदत्तीयस्मरणस्य यज्ञदत्तानुभवजन्यत्वमेवास्त्वित्याशङ्क्य निराकरोति ॥ **न चासिद्धिरिति** ॥ ननु देवदत्तस्मरणस्य यज्ञदत्तीयानुभवजन्यतायास्तयोर्व्यावहारिकभेदेनाप्युपपत्तेर्नस्वाभाविकैक्यं विरुणद्धीति तत्राह — **आत्मनां चेति** ॥ **मन्दारमञ्जर्यामिति** ॥

`सुखदुःखादिभोगश्च स्वरूपैक्येन भेदतः ।
दृश्यो ही' त्यादिमूलीयटीकाव्याख्यावसर इत्यर्थः ।

---

[1] `पारमार्थिकसुखदुःखादि-' इति मु.पाठः प्रामादिक इति भाति व्यवस्थायाः पारमार्थिकत्वस्य मायावाद्यसम्मतत्वात् ।

(२५) (मु.) ॥ **तद्वृत्त्यनिवर्त्यनिवर्तकत्वादिति** ॥ यज्ञदत्तमनोवृत्त्यनिवर्त्यप्रागभावविषयावरणाज्ञानादिनिवर्तकत्वादित्यर्थः । न च विशेषणासिद्धिः । यज्ञदत्तस्य ज्ञानोत्पत्तौ देवदत्तगताज्ञानानिवृत्तेः ॥ **वस्तुतो न यज्ञदत्तीयमिति** ॥ यज्ञदत्तीयं नेत्येतद्वस्तुत इत्यर्थः । तेन सर्वमिथ्यात्ववादिनो यज्ञदत्तीयत्वस्याप्यवास्तववत्त्वात्सिद्धसाधनतेति निरस्तम् । व्यावहारिकेण यज्ञदत्तीयत्वाभावेन सिद्धसाधनतावारणाय वस्तुत इति ॥ **इत्यादीनीति** । देवदत्तेच्छा न वस्तुतो यज्ञदत्तीया तज्ज्ञानाजन्यत्वात्[1] । तद्भोगानिवृत्त्यत्वाच्च । देवदत्तब्रह्महत्या न वस्तुतो यज्ञदत्तीया । तत्सेतुदर्शनानिवृत्त्यत्वादित्याद्यूह्यम् । विपक्षे बाधकाभावादप्रयोजकाहेतव इत्यत आह — **आत्मनामिति** ॥ **मन्दारमञ्जर्यामिति** ॥ तथा हि । यद्यात्मानो न भिन्नाः स्युस्तर्हि परस्परसुखाद्यनुसन्धानं स्यात् । न च शरीरभेदेनोपपत्तिः । तथाऽपि योगिनस्तद्दर्शनात् । तदभावेऽपि मातृगर्भस्थितयो रावणादिशरीरस्थयोश्च तददर्शनात् । न चान्तःकरणभेदेनोपपत्तिः । योगिन्यपि तस्योपपादितत्वात् । एकस्याप्यहरहः सुप्तवतः कारणविलयाङ्गीकारात् । उत्तराहे पूर्वार्थीयानुसन्धानं न स्यात् । नाप्यविद्याभेदानुपपत्तिः । मुक्तस्य संसाराविद्याभिन्नाविद्याभावेन तद्दुःखाद्यनुसन्धानापत्तेः । न चाविद्यैक्यमनुसन्धाने प्रयोजकम् । मुक्तस्य स्वानन्दानुभवस्याप्यभावापत्तेरिति ।

(२५) (कु.) ॥ **एवं देवदत्तान्तःकरणमिति** ॥ **भिन्नचैतन्यावच्छेदकमिति** ॥ समासस्तु नित्यसापेक्षत्वाद्बोध्यः ॥ **तद्वृत्त्यनिवर्त्यनिवर्तकत्वादिति** ॥ तद्वृत्त्याऽनिवृत्त्यज्ञानसंशयविपर्ययादितन्निवतकवृत्तिमत्त्वादित्यर्थः ।

---

[1] `देवदत्ते वस्तुतो यज्ञदत्तीयतज्ज्ञानाजन्यत्वात्' मु.

(२५) (हु.) ॥ एवं देवदत्तेति ॥ वस्तुतो भिन्नेति ॥ एकजीववादिनं प्रति प्रयोगे पूर्वोक्तरीत्या वस्तुत इत्यस्याप्रातिभासिक इत्येवार्थः । तन्मतेऽन्तःकरणस्य जीवौपाधित्वाभावेऽप्येकमहाविद्योपाधिकत्वेन महतस्तत्परिणामभूतनानान्तःकरणावच्छिन्नत्वस्यैकस्मिन्नपि सम्भवात् । बहुजीववादिनं प्रति तु प्रागेव वस्तुत इत्यस्य परमार्थत इत्यर्थः । उद्देश्यसिध्यर्थमेकजीवपक्षेऽपि परमार्थत इत्येवार्थो वा । अप्रसिद्ध-विशेषणतोद्धारप्रकारस्तु चैत्रशरीरमित्युक्तानुमानविवरणोक्तक्रमेण बोध्यः (-क्रमेणोह्यः) ॥ तद्वृत्तीति । तद्वृत्तिर्यज्ञदत्तान्तःकरणवृत्तिरूपघटा-भावज्ञानादिः । तदनिवर्त्यस्य पटसंशयविपर्यादेर्निवर्तकत्वात् पट-ज्ञानोत्पत्तिद्वारा[1] निवर्तकत्वादित्यर्थः । तद्वृत्त्यनिवृत्त्यनुवर्तकत्वादिति पाठे तद्वृत्तिभिः स्रक्चन्दनभोगरूपप्रत्यक्षादिभिरनिष्पाद्यसुखादेर्विषयान्तर-भोगद्वारा निष्पादकत्वादित्यर्थः । न वस्तुतो यज्ञदत्तीयमिति यज्ञदत्तीयत्वप्रतियोगिकपारमार्थिकाभाववदित्यर्थः । न च मिथ्यात्ववादिना मिथ्यात्वसिद्धये तद्वत्त्वेऽपि तदभावस्य पारमार्थिकस्याङ्गीकारत्सिद्ध-साधनता । पारमार्थिकत्वाप्रक्षेपेऽपि तमेवाभेदमादाय सिद्धसाधनता । यज्ञदत्तस्मरणेऽपि पारमार्थिकस्य यज्ञदत्तीयत्वाभावस्य सत्त्वाद्यतिरेका-सिद्धिश्च । प्रतियोगिवैयधिकरण्यावच्छिन्नस्य तस्य साध्यत्वेऽपि सिद्धसाधनतैव । देवदत्तस्मरणे तथाभूतस्यैव यज्ञदत्तीयत्वप्रतियोगिक-पारमार्थिकाभावस्याङ्गीकृतत्वाच्चेति वाच्यम् । न वस्तुतो यज्ञदत्तीयमित्यस्य यज्ञदत्तपिण्डावच्छिन्न[2]भोक्तृत्वोपलक्षितचित्स्वामिकत्वाभाववदित्यर्थः ।

---

[1] `पटोत्पत्तिद्वारा' मु.

[2] '-न्ने' मु.

देवदत्तस्मरणे तादृशोपेतचित्स्वामिकत्वं च परेणाप्यङ्गीकृतम् । अन्यथैक्यमित्यस्य पारिभाषिकत्वापत्तेः । तथा च तस्य प्रतियोगिवैयधिकरण्यावच्छिन्नस्य साध्यत्वान्न सिद्धसाधनत्वादिकं व्यतिरेकासिद्धिश्चेति द्रष्टव्यम् ॥ **इत्यादीनीति** । देवदत्तसुखादिपक्षका(नुमाना)दीनीत्यर्थः ॥ **द्रष्टव्येति** ॥ तथा चानुकूलर्कसनाथत्वान्नाप्रयोजकतेति भावः ॥

(२५) (का.) मिथो जीवभेदकानुमानान्तरमाह — **एवमिति** ॥ अत्र यज्ञदत्तान्तःकरणावच्छिन्न-चैतन्यप्रतियोगिकधर्मिसत्तासमानसत्ताक-भेद-विशिष्टस्यैव साध्यत्वम् । चैतन्यावच्छेदकपदं तु चैतन्यनिरूपितस्य स्वभोग्यवृत्तिकत्वरूपावच्छेदकत्वस्य सम्बन्धत्वलाभार्थम् । नातः साध्याप्रसिद्धिः । तादृशभेदविशिष्टस्य घटादेः प्रसिद्धत्वात् । तस्य चोक्तसम्बन्धेन वृत्त्यसम्भवाच्चैतन्यावच्छेदकत्वमादायैव साध्यपर्यवसानादुद्धेश्यसिद्धिः ॥ **तद्वृत्त्यनिवर्त्यनिवर्तकत्वादिति** ॥ यज्ञदत्तान्तःकरणवृत्तिरूपं यज्ज्ञानं तदनिवर्त्यं यदज्ञानादि तन्निवर्तकवृत्त्यारम्भकत्वादित्यर्थः ॥

**देवदत्तस्मरणमिति** ॥ देवदत्तकर्तृकस्मरणं यज्ञदत्तप्रतियोगिकवास्तवतादात्म्यापन्नकर्तृकस्मरणान्यत् यज्ञदत्तकर्तृकानुभवाजन्यत्वादित्यर्थः । अत्र यद्यपि घटादेरन्वयदृष्टान्तत्वं सम्भवति । तथापि यज्ञदत्तीयस्मृतेस्तदीयानुभवजन्यत्वेन व्यतिरेकव्याप्तेः सुग्रहत्वात्तदनुसरणम् । अत्र च फलतो देवदत्तयज्ञदत्तयोर्भेदसिद्धिः । आदिपदेन देवदत्तानुभवो न वस्तुतो यज्ञदत्तीयो यज्ञदत्तस्मरणाजनकत्वाद् व्यतिरेकेण यज्ञदत्तानुभववदित्यादेः सङ्ग्रहः । देवदत्तस्मरणस्य यज्ञदत्तानुभवजन्यत्वादसिद्धिरित्याशङ्कां वारयति — **न चेति** ॥ न च मायिमते देवदत्तानुभवस्यैव यज्ञदत्तीयत्वाद-

सिद्धिर्दुर्वारैवेति वाच्यम् । चैतन्यमात्राभेदेऽपि विशिष्टभेदेन तव तदीयत्वासम्भवात् । अन्यथा देवदत्तानुभूते यज्ञदत्तस्मरणप्रसङ्गात् । उक्तानुमानेषु विपक्षे बाधकमाह — **आत्मनामिति** ॥ **सुखदुःखव्यवस्थानुपपत्तिः** ॥ तत्सुखं तेनैवानुभूयत इत्यादिनियमानुपपत्तिः । चैत्रादेर्मैत्रादिसुखाद्यनुभवस्यापत्तिरिति यावत् ।

ननु सुखादिव्यवस्थायाः पारमार्थिकत्वे भवेत्स्वाभाविकभेदापेक्षत्वम् । न चैवम् । तस्याः काल्पनिकत्वादित्याशङ्कापनोदाय मन्दारमञ्जर्यामुपपादितेत्युक्तम् । तथाहि । काल्पनिकी व्यवस्था किं व्यवस्थापकमेव नापेक्षते । किं वा पारमार्थिकम् । आद्ये काल्पनिकजीवत्वादिव्यवस्थानिर्वाहायाविद्यादिकल्पनानर्थक्यप्रसङ्गः । द्वितीये काल्पनिकस्यापि व्यवस्थापकस्य स्वाभाविकभेदं विनाऽनुपपत्तेरित्यादिकं तत्र द्रष्टव्यम् ।

**(२५) (श.)** जीवनामन्योन्यभेदसाधकानुमानान्याह — **एवमिति** ॥ अत्र यज्ञदत्तान्तःकरणस्य देवदत्तान्तःकरणावच्छिन्नचैतन्यभिन्नचैतन्यावच्छेदकत्वे यज्ञदत्तदेवदत्तयोर्भेदसिद्धिः ॥ **देवदत्तेति** ॥ यज्ञदत्तान्तःकरणावच्छिन्नं परिच्छिन्नं यच्चैतन्यं यज्ञदत्तचैतन्यं तस्माद्वस्तुतोभिन्नं यच्चैतन्यं देवदत्तचैतन्यं तस्यावच्छेदकं परिच्छेदकमित्यर्थः ॥ **तद्वृत्तीति** ॥ तद्वृत्त्या यज्ञदत्तान्तःकरणवृत्तिरूपज्ञानेनानिवर्त्यं देवदत्ताज्ञानं तन्निवर्तकत्वादित्यर्थः ॥ **यज्ञदत्तान्तःकरणवदिति** ॥ तत्र साध्याभावरूपयज्ञदत्तान्तःकरणावच्छिन्नचैतन्यावच्छेकत्वं वर्तते । तादृशचैतन्यं देवदत्तचैतन्यमेव । तदनवच्छेदकत्वात् । तथा तद्वृत्यनिवर्त्यनिवर्तकत्वाभावस्तद्वृत्तिनिवर्त्यनिवर्तकत्वं चास्ति । तद्वृत्त्या यज्ञदत्तान्तःकरणवृत्तिज्ञानेन । निवर्त्यं यद्यज्ञदत्ताज्ञानं तन्निवर्तकत्वादिति ध्येयम् ।

अत्रैवानुमानान्तरमाह — एवमिति ॥ अत्र देवदत्तयज्ञदत्तयोरभेदेन देवदत्तस्मरणस्यापि यज्ञदत्तानुभवजन्यत्वेन द्वितीयहेतोः स्वरूपासिद्धिरित्याशङ्क्य निराकरोति ॥ नचेति ॥

ननु जीवानामन्योन्यभेदसाधकानुमाने विपक्षे बाधकाभावादप्रयोजकत्वम् । नच तथात्वे सुखदुःखव्यवस्थानुपपत्तिर्बाधिकेत्युक्तमिति वाच्यम् । पारमार्थिकभेदाभावेन पारमार्थिकव्यवस्थानुपपत्तावपि तद्भिन्नव्यस्थाभ्युपगमे बाधकाभावादित्यत आह — आत्मनामिति ॥ पारमार्थिकव्यवस्थासम्भवेऽपि काल्पनिकीव्यवस्था सम्भवतीति चेत् सा किं व्यवस्थापकमेव नापेक्षते उत पारमार्थिकम् । नाद्यः । यक्षानुरूपबलिवदनुगुणव्यवस्थापकस्यावश्यकत्वात् । अन्यथाऽपारमार्थिकजीवादिव्यवस्थासिद्धयेऽविद्यानङ्गीकारप्रसङ्गात् । न द्वितीयः । अपारमार्थिकस्यापि व्यवस्थापकस्य स्वाभाविकभेदातिरेकेण निराकरिष्यमाणत्वादित्यादिमन्दारमञ्जर्यामुपपादिता काल्पनिकव्यवस्थाया अनुपपत्तिर्द्रष्टव्येत्यर्थः ।

**(२६) श्रुतयश्च द्वा सुपर्णेत्यादिकाः । व्यावहारिकभेदपरास्ता इति चेत् (न)। स किं बाध्यः ? बाढमिति चेत् (न)। तर्हि श्रुतेः प्रामाण्यं न स्यात्, बाध्यार्थग्राहित्वात् शुक्तिरूप्याध्यक्षवत् । प्रामाण्यं (च) व्यावहारिकमिति चेत् । किन्तर्ह्यप्रामाण्यं पारमार्थिकम् ? कः (कस्य) सन्देहः? अस्ति महान्सन्देहस्तथागतचरणशरणत्वमजानतः (तथागतचरणशरणं प्राप्तवान्यतः) । ननु श्रुत्युप(स्थित)स्थापितार्थानङ्गीकारे हि श्रुत्यप्रामाण्यं स्यात् । न चास्माभिः श्रुतिप्रतिपादितो भेदो नाङ्गीक्रियते । नाप्यस्माभिरनङ्गीकृतं तत्सत्यत्वं श्रुति(तौ)प्रतिपाद्यम् ।**

**श्रुतौ(तत्र) सत्यपदाश्रवणादिति चेत् । नैष दोषः । स्वगोचरार्थाबाधो हि प्रामाण्यम् । तद्बाधश्चाप्रामाण्यम् । तत्कथं श्रुतिवेद्यस्य भेदस्य बाधे श्रुतेः प्रामाण्यम् (प्रामाण्यप्रसङ्गः) । सत्यपदाश्रवणमात्रेण तदनङ्गीकारे एकमेवाद्वितीयं ब्रह्मेत्यादावपि सत्यपदाश्रवणेनाद्वैतमपि पारमार्थिकं न स्यात् । अथ अद्वैतश्रुतेः षड्विधतात्पर्यलिङ्गयुक्तत्वात्तदर्थः पारमार्थिक इति चेन्न । उपक्रमादीनि हि स्वार्थे तात्पर्यं ज्ञापयन्ति । एवञ्चाद्वैतमात्रपरमस्तु(-मात्रं सिध्यति) तात्पर्यलिङ्गवशात् । न तत्सत्यत्वपरं(तत्सत्यत्वं) तस्यातदर्थत्वात् । भेद एव षड्विध-तात्पर्यलिङ्गयुक्तत्वमस्माभिरन्यत्रोपपादितम् ।**

(२६) (भ.) एवं जीवेशभेदे प्रत्यक्षानुमाने अभिधायागमं चाह — **श्रुतयश्चेति** ॥ जीवेश्वरभेदे प्रमाणमिति शेषः । व्यावहारिकभेदः किं बाध्य उताबाध्य इति विकल्पं हृदि निधायाद्यं दूषयितुं पृच्छति ॥ **स किं बाध्य इति** ॥ तं पक्षं पूर्वपक्षी कक्षीकरोति ॥ **बाढमितीति** । बाध्य इत्येतदेव दृढमित्यर्थः । दूषयति — **तर्हीति** । शुक्तिरूप्याध्यक्षवद्बाध्यार्थग्राहित्वेऽपि न श्रुतेः सर्वथा प्रामाण्याभावः । किन्तु प्रतिपाद्यभेदवत्प्रामाण्यमपि व्यावहारिकमेव । नैवंशुक्तिरूप्याध्यक्षस्य । किन्त्वप्रामाण्यमेवेत्याशयेन शङ्कते — **प्रामाण्यमिति** ॥ श्रुतिप्रामाण्यस्य व्यावहारिकत्वाङ्गीकारेऽ-प्रामाण्यस्य व्यावहारिकत्वे तदभेदस्य पारमार्थिकत्वमिति भावेन सोल्लुण्ठं पृच्छति ॥ **किन्तर्हीति** । अपहासमजानानस्तमेव पक्षमङ्गीकृत्य शङ्कते — **कः सन्देह इति** ॥ अप्रामाण्यस्य पारमार्थिकत्वविषये न कोऽपि सन्देह इत्यर्थः । उत्तरमाह — **अस्तीति** । कुत इत्यत आह — **तथागतेति** ॥ तथागतो बौद्धः । अजानतोऽमन्यमानस्य । आत्मनः । तवेति शेषः । अयं

भावः । न हि भवान् बौद्ध इव सर्वथा श्रुत्यप्रामाण्यवादी । किन्त्वद्वैतभागस्य तत्त्वावेदकत्वलक्षणं भेदभागस्यातत्त्वावेदकत्वलक्षणं प्रामाण्यमङ्गीकुरुते । यदीदानीमप्रामाण्यमेव पारमार्थिकमित्युच्यते तर्हि बौद्धमतप्रवेशः स्फुटमेव तवापद्यत इति शङ्कते — **श्रुत्युपस्थापितेति** ॥ श्रुतिप्रतिपादितेत्यर्थः । नाङ्गीक्रियते किन्तु भेदमङ्गीकृत्य तत्सत्यत्वं नाङ्गीक्रियत इत्यर्थः । भेदसत्यत्वं श्रुतिप्रतिपाद्यं नेति कथं ज्ञायत इत्यत आह — **तत्रेति** ॥ श्रुतावित्यर्थः । द्वेत्यादिपदं तु भेदव्याप्यद्वित्वमात्राभिधायीति भावः । उत्तरमाह — **नैष इति** ॥ श्रुतौ सत्यपदाश्रवणेऽपि तत्सत्यत्वस्य दुर्वारत्वात्सत्यत्वानङ्गीकारे श्रुतेरप्रामाण्यापत्तिर्दुर्वारेत्यर्थः । एतदेवो-पपादयति — **स्वगोचरार्थेति** ॥ स्वप्रतिपाद्येत्यर्थः । तथा चाबाधितार्थ-प्रतिपादकत्वं प्रामाण्यं बाधितार्थप्रतिपादकत्वमप्रामाण्यम् । तथा च श्रुतिप्रतिपादितभेदस्य त्वया बाध्यत्वाङ्गीकारे कथमप्रामाण्यं न स्यादिति भावः । सत्यपदाश्रवणादित्युक्तदोषं प्रतिबन्द्या परिहरति ॥ **सत्यपदेति** ॥ तदनङ्गीकारे सत्यत्वानङ्गीकारे । प्रमेयसाम्ये हि प्रतिबन्दीग्रहणम् । नात्र प्रमेयसाम्यमस्तीति भावेन शङ्कते — **अथेति** ॥ **षड्विधतात्पर्य-लिङ्गयुक्तत्वादिति** ॥ एकमेवाद्वितीयमित्युपक्रमः । तत्त्वमसीत्युपसंहारः । तत्त्वमसि तत्त्वमसीति नवकृत्वोऽभ्यासः । अद्वैतस्य प्रमाणान्तरा-प्राप्तत्वेनापूर्वत्वम् । तस्य तावदेवचिरमिति फलम् । येनाश्रुतं श्रुतं भवतीत्यर्थवादश्चेत्येवंषड्विधतात्पर्यलिङ्गयुक्तत्वादित्यर्थः । उपलक्षणमेतत् । मृत्पिण्डादिदृष्टान्तैरैक्यस्योपपादितत्वादुपपत्तिरपि ग्राह्या । उपक्रमा-दीनामप्युपपत्तिविशेषत्वादुपपत्तेः पृथगविवक्षया षड्विधेत्युक्तिः । तथा चाद्वैतश्रुतौ सत्यपदाभावेऽपि तात्पर्यलिङ्गबलेनाद्वैतस्य सत्यता सिध्यति ।

भेदश्रुतेस्तु तात्पर्यलिङ्गाभावेन न तदर्थस्य भेदस्य सत्यत्वमिति भावः । एतच्च वैषम्यमर्थसत्यत्वेऽप्रयोजकमिति भावेनाह — **उपक्रमादीनीति** ॥ स्वार्थे श्रुत्यर्थे । । अतदर्थत्वात् श्रुत्यर्थत्वाभावात् । अभ्युपगम्योक्तिरियम् । वस्तुतस्तु वैषम्यमसिद्धमेवेत्याह — **भेदेऽपीति** ॥ **अन्यत्रेति** ॥ **न्यायामृते द्वितीयपरिच्छेदे** । सन्ति च भेदश्रुतेरपि षड्विधतात्पर्यलिङ्गानि । तथा हि । आथर्वणे **द्वा सुपर्णेत्याद्युपक्रमः** । **परमं साम्यमुपैतीत्युपसंहारः** । **तयोरन्योऽनश्नन्नन्योऽन्यमीशमित्यभ्यासः** । शास्त्रैकगम्येश्वरप्रतियोगिकस्य तद्धर्मिकस्य वा कालत्रयाबाध्यभेदस्य शास्त्रं विनाऽप्राप्तेरपूर्वता । **पुण्यपापे विधूयेति** फलम् । **अस्य महिमानमिति** स्तुतिरूपार्थवादः । अत्त्यनश्नन्नित्युपपत्तिरित्यादिनोपपादितमित्यर्थः । अत्रापि सप्तविध-तात्पर्यलिङ्गयुक्तत्वमिति वक्तव्ये षड्विधेत्युक्तेरुक्त एवाभिप्रायः ।

(२६) (मु.) ॥ **श्रुतयश्चेति** ॥ श्रुतयः सूत्राणि चेति ग्राह्यम् ॥ **व्यावहारिकेति** ॥ यद्यप्यनुवादित्वमेव पूर्वपक्षोक्तं तदेवादौ परिहर्तव्यम् । तथाऽपि प्रासङ्गिकतया तस्यापि परिहारलाघवादेवमुक्तिः । यत्नशतेनापि श्रुतेः पारमार्थिकत्वानङ्गीकारे बौद्धवैलक्षण्यं बाध्यार्थत्वस्यैवाप्रामाण्य-पदार्थत्वादिति भावेनाह — **किमित्यादिना** ॥ **बाध्यार्थग्राहित्वादिति** ॥ नन्विदमेवाप्रामाण्यमिति चेन्न । प्रमाजनकत्वाभावस्येहाप्रामाण्यत्वात् । अङ्गीकरोति कः सन्देह इत्युक्तवतस्त्वास्माभिस्तदुद्भावने कृते महान्सन्देहः कर्तव्योऽस्तीत्यर्थः । ननु श्रुतेस्तदर्थस्य तत्प्रामाण्यस्य चैकसत्ताकत्वेन धर्मिसत्ताकं प्रामाण्यमङ्गीक्रियते । तथा च श्रुतेर्जगतश्च व्यावहारिकत्वाङ्गीकारेऽपि जगतः स्वागमोक्तप्रकारेणैव व्यवस्थामङ्गीकृत्य श्रुतेश्चात्यन्ताप्रामाण्यमङ्गीकृतमिति चेत्किमनेनाकाण्डताण्डवेन ।

शुक्तिरजतवद्बाध्यार्थत्वापरिहारात् । ब्रह्मज्ञानमात्रबाध्यार्थमपि प्रमाणमिति चेन्न । ब्रह्मणि क्षणिकत्वाद्यारोपस्यापि प्रामाण्यापत्तेः । किञ्च प्रामाण्यद्वैविध्ये गौरवमनुगतनिष्प्रकारकज्ञानेतरज्ञानाबाध्यार्थत्वं प्रामाण्याङ्गीकरणं सम्भवतीति चेन्न । तर्हि द्वैताद्वैतयोरुक्तरूपैकप्रामाण्यकत्वेन तदर्थयोर्व्यावहारिकत्वपारमार्थिकत्वभेदानुपपत्तेः । सर्वथाऽबाध्यार्थत्वं मुख्यप्रामाण्यम् । ब्रह्मज्ञानबाध्यार्थत्वेऽपि तदितराबाध्यार्थत्वममुख्यप्रामाण्यमित्यस्त्येव प्रामाण्येऽवान्तरभेद इति चेत् तर्हि विवक्षामात्रस्य निरङ्कुशत्वेन बौद्धोऽपि वेदार्थस्य ज्ञानविशेषबाध्यत्वं वदन्वेदवादी स्यात् । स्वबाधात्प्रागेवाबाध्यार्थत्वं प्रामाण्यम् । रजतस्थले तु रजतप्रत्यक्षस्य प्रातिभासिकतया प्रत्यक्षबाधात्प्रागेव रजतं बाध्यत इति चेन्न । निष्प्रकारकब्रह्मापरोक्षाव्यवहितपूर्वोत्पन्नरजतादिभ्रमेऽतिव्याप्तिः । किञ्चार्थबाधोनामार्थनाशो भावज्ञानं वा तत्प्रत्यक्षं वा । नाद्यः । श्रुत्यर्थभूतस्य घटादेः प्रपञ्चस्य श्रुतिबाधात्प्रागेव नाशाङ्गीकारात् । न द्वितीयः । विदितवेदान्तस्य नेहनानाऽस्तीत्यादिना प्रागेवापरोक्षतोऽर्थासत्त्वज्ञानात् । अत एव न तृतीयः । चन्द्रप्रादेशप्रत्यक्षस्य तादृशबाधाभावेन प्रामाण्यापत्तेरित्यलम् । ननु यावच्छ्रुत्युक्तं तन्मात्रानङ्गीकारे हि दोषः । इह तु श्रुत्युक्तं सर्वमङ्गीक्रियते । तत्पारमार्थ्यं न तच्छ्रुत्यर्थ इत्याशङ्कते — **श्रुतीति ॥ स्वगोचरेति ॥** एवञ्च श्रुत्युक्तं सर्वमङ्गीक्रियते तत्पारमार्थ्यं नेति रिक्तं वचः । अबाध्यप्रतिपत्तेरेवाङ्गीकारपदार्थत्वादिति भावः । किञ्च सत्त्वासत्त्वौदासीन्येन प्रतिपादनायोगात्सर्ववाक्यानां सत्यपदाभावे स्वार्थसत्तापर्यन्तत्वं व्युत्पत्तिसिद्धम् । अन्यथा सत्यं ज्ञानमित्यादावपि सत्यपदसत्त्वेऽपि सत्यतैव स्यान्न तु सत्यतायाः सत्यत्वमिति शङ्कापिशाची

दुरूच्चाटा स्यात् । दृश्यते च सत्यं भिदेत्यादौ सत्यपदमपीति । ननु सत्यं पदं विनाऽप्यसत्ये तात्पर्यायोगादैक्यस्य सत्यतासिद्धिः । तात्पर्यं च तल्लिङ्गाद्गम्यत इति शङ्कते — **अथेति** ॥ छान्दोग्ये एकमेवेत्युपक्रमः । तत्त्वमसीत्युपसंहारः । तत्त्वमसि तत्त्वमसीति नवकृत्वोऽभ्यासः । ऐक्यस्य प्रमाणान्तराप्राप्तत्वादपूर्वता । अथ सम्पत्स्यत इत्यैक्यज्ञानस्य फलम् । येनाश्रुतं श्रुतं भवतीत्यैक्यार्थवादश्चेति ज्ञेयम् । स्वार्थैति स्वप्रकरणे यावदुक्तं तावति तात्पर्यमस्ति । न तूक्तिमात्रमित्येतावन्मात्रमुपक्रमादीनि ज्ञापयन्ति । एवञ्च तात्पर्यमेव स्यान्न तु सत्यत्वमिति भावः । नन्वित्येतत्तात्पर्ययोगात्सत्त्वमपि लभ्यत इति चेत् तर्हि भ्रान्तादि-वाक्यस्योपक्रमादिलिङ्गावगततात्पर्यवदुपपत्तेः । वस्तुतस्तु 'एकमेवाद्वितीय-मित्यस्य[1] समाभ्यधिकराहित्यस्यान्यत्रोक्तत्वाद्विशेषनिषेधः शेषविधिं गमयतीति[2] भेदोपक्रमत्वादुपसंहारस्यापि दृष्टान्तानुगुण्यायातत्त्वमसीति विच्छेदेन वैकपदत्वमभ्युपेत्य तस्य भावस्तत्त्वमिति विग्रहाश्रयणेन वा नपुंकसकोपपत्त्यर्थं तत्वम्पदस्येदं सर्वमिति जगत्परामर्शकत्वेन वा सादृश्य इत्याद्यर्थकत्वेन वा भेदपरत्वात् । अत एवाभ्यासस्य भेदपरत्वाद्वेदैक-वेद्येश्वरभेदस्याप्यपूर्वत्वात्प्रकरणस्य भेदपरत्वे फलस्यापि तदन्वयात् । भेदज्ञानस्य हेति तत्पदादिकादिश्रवणाच्च भेद एव तात्पर्यमिति च ज्ञेयम् ॥ **भेद एवेति** ॥ एवञ्च तात्पर्यलिङ्गात्सत्यता-सिद्धिश्चेत्समं ममापीति भावः । अन्यत्र न्यायामृते । तथा हि । आथर्वणे द्वासुपर्णेत्युपक्रमः । साम्यमुपैतीत्युपसंहारस्तयोरन्यः अनश्नन्नन्यः, अन्यमीशमित्यभ्यासः ।

---

1 `वस्तुतस्त्वेकं वा द्वितीयमित्यस्य' मु.

2 `विशेषनिषेधः । शेषविधिं गमयती 'मु.

उक्तरीत्याऽऽपूर्वता । पुण्यपापे विधूयेति फलम् ।[1] अस्य महिमानमिति वीतशोक इत्यर्थवाद इति ।

(२६) (कु.) व्यावहारिकभेदो बाध्योऽबाध्यो वेति विकल्पं मनसि कृत्वाऽऽध्यमाशङ्कते — **स किमिति** ॥ भ्रान्त्योद्देशयति — **नन्विति** ॥ भ्रान्तिमाविष्करोति ॥ **स्वगोचरार्थाबोधो हीति** । श्रुतिप्रामाण्याङ्गीकारे तदर्थं सत्त्वाङ्गीकार आवश्यक इत्यर्थः । वैषम्यमाशङ्कते — **अथैतच्छ्रुतेरिति** ॥ अथ प्रयोजकं वैषम्यमित्याह — **उपक्रमादीनीति** । एवञ्चोपक्रमादि-बलादद्वैतश्रुतेस्तात्पर्यमात्रमायास्यति । न तु तदर्थं सत्यताप्रतारकवाक्ये सत्यपि तात्पर्यार्थसत्यत्वाभावात् । **अद्वैतमात्रमस्तु न तु सत्यत्वमिति** परभाष्योक्तिः । असिद्धं च वैषम्यमित्याह - **भेदेऽपीति** । अन्यत्र न्यायामृते ।

(२६) (हु.) ॥ **द्वा सुपर्णेत्यादिका इति** ॥ आसामागमतया भेदावगमकत्वमुपपादितं पूर्वपक्षविवरणावसरे ॥ **किन्तर्हीति** ॥ प्रामाण्यं व्यावहारिकमित्युक्ते व्यवहारमात्रं तत्र न वस्तुतस्तदस्तीत्यर्थः ॥ **तथा-गतेति** ॥[2] बौद्ध इत्यर्थः ॥ **प्रतिपादित इति** ॥ यस्मिन्धर्मिणि यो धर्मः श्रुत्या बोध्यते तद्विशिष्टधर्मिणोऽत्यन्ताभाव इत्यर्थः । अन्यथा श्रुतिघटक-वाक्यबोध्यस्य कस्यचिदनङ्गीकारस्याप्रामाण्यहेतुत्वे वेदघटकसत्वादि-पदबोध्यस्याभावात्तवाप्यप्रामाण्यं स्यादिति भावः ॥ **नाङ्गीक्रियत इति** ॥ किन्तु मिथ्यात्वेनाभ्युपगम्यत इति शेषः । जीवेशौ धर्मीकृत्य द्वा सुपर्णेत्यादिना तत्र भेदोक्ते तत्र तदनङ्गीकारेऽप्रामाण्यं दुर्वारमित्याशयेनाह

---

[1] अनश्नन्नन्य इत्यारभ्य फलमितिपर्यन्तं मु.पाठे नास्ति ।

[2] `वस्तुतस्तदस्तीत्यागतमित्यर्थतयागतेति' मु.

— **नैष दोष इति** ॥ सत्त्वेन प्रकारविधया प्रतिपाद्यस्यासत्त्व एव दोषो न प्रकृते तथेत्याशङ्क्याह — **सत्यपदेति** ॥ षड्विधेत्युपपत्तेर्बहिरङ्गत्वादन्तरङ्गविवक्षया वाऽर्थवादफलयोः सामान्यविशेषभावेनैक्यमाश्रित्य वा षड्विधत्वोक्तिः । उपक्रमादयस्तु न्यायामृते द्रष्टव्याः ॥ **न तत्सत्यत्वमिति** ॥ अन्यथा शून्यवादिग्रन्थस्थोपक्रमादिभिस्तत्तात्पर्यविषयस्य शून्यस्य सत्यत्वं स्यादित्यर्थः ॥ **भेद एवेति** ॥ तथा च त्वद्रीत्यैव सत्यत्वं श्रुतिप्रतिपाद्यं जातमित्यर्थः ।

(२६) **(का.)** एवं जीवेशभेदे प्रत्यक्षानुमाने अभिधायागममप्याह — **श्रुतयस्त्विति** ॥ न श्रुतयः पारमार्थिकभेदे प्रमाणमित्याशङ्कते — **व्यावहारिकेति** ॥ श्रुत्युक्तो भेदो बाध्योऽबाध्यो वेति विकल्पेन दूषयितुं पृच्छति — **स किमिति** ॥ **प्रामाण्यम्** अबाध्यार्थकत्वम् । नन्वारोपितमेव श्रुतेः प्रामाण्यम् । किं त्वब्रह्मज्ञानाबाध्यत्वात् व्यवहारार्हमित्याशङ्कते — **प्रामाण्यमिति** ॥ **अप्रामाण्यं** = प्रामाण्याभावः ॥ **पारमार्थिकमिति** ॥ भावाभावयोरेकस्य बाधेऽन्यस्याबाध्यत्वनियमादिति भावः । अत्रेष्टापत्तिमाशङ्कते — **कः सन्देह इति** ॥ तर्हि बौद्धमतप्रवेशप्रसङ्ग इत्याह — **अस्तीति** ॥ **तथागतो** बौद्धः स्वस्य तदनुयायित्वमनभ्युपगच्छत इत्यर्थः ।

शुक्तिरूप्याध्यक्षवदित्युक्तदृष्टान्ताभिप्रायमविज्ञाय शङ्कते — **नन्विति** ॥ **सत्यपदाश्रवणात्** ॥ भेदे सत्यत्वसमर्पकपदाश्रवणात् । अबोधकत्वमेव ह्यप्रामाण्यप्रयोजकम् । श्रुतीनां च भेदस्वरूपबोधकत्वान्न तदंशेऽप्रामाण्यम् । तस्य पारमार्थिकत्वं तु न श्रुतिबोधितम् । अतस्तदंशे तदप्रामाण्यमिष्यत एवेति भावः ॥ **स्वगोचरेति** ॥ अबाध्यार्थबोधकत्वमित्यर्थः । अयं भावः । अबोधकत्ववद्बाध्यार्थबोधकत्वमप्यप्रामाण्य-

प्रयोजकम् । अन्यथा शुक्तिरजतग्राहकदुष्टेन्द्रियादेरपि प्रामाण्यप्रसङ्गात् । तच्च श्रुतेरप्यविशिष्टमिति तदप्रामाण्यं दुर्वारमेव । न च ब्रह्मज्ञानेतराबाध्यबोधकत्वमेव प्रामाण्यम् । तच्च श्रुतिसाधारणमिति वाच्यम् । शुक्तिज्ञानेतराबाध्यबोधकत्वमेव प्रामाण्यं, तच्च दुष्टेन्द्रियसाधारणमित्यस्यापि सुवचत्वात् । किञ्च यच्छ्रुतेः प्रामाण्यं तद्बाध्यमेवेति तदभावलक्षणाप्रामाण्यप्रसङ्गस्तदवस्थ एवेति ।

भेदसत्यत्वं न श्रुत्युक्तमित्येतद्दूषयति — **सत्यपदाश्रवणादिति** ॥ द्वा सुपर्णेत्यादावित्यादिः । **तदनङ्गीकारे** भेदसत्यत्वानङ्गीकारे ॥ **न स्यादिति** ॥ अयमाशयः । सत्त्वासत्त्वोदासीनप्रतीत्यभावादुक्तश्रुत्याऽपि सत्त्वेनैव भेदप्रतीतेः सम्भवति श्रुतेस्तत्सत्यत्वे प्रामाण्यम् । अन्यथा श्रुतेरद्वैतस्वरूपमात्रग्राहकत्वापत्त्या सत्यत्वाग्राहकत्वादद्वैतमपि तव बाध्यं स्यादिति ।

ननु श्रुतेरद्वैतस्वरूपमात्रग्राहकत्वेऽपि तत्सत्यत्वमुपक्रमादितात्पर्यलिङ्गैरवसीयते । न तु भेदसत्यत्वमित्याशङ्कते — **अथेति** ॥ `सदेव सोम्येदमग्र आसी'`देकमेवाद्वितीय'मित्युपक्रमः । `ऐतदात्म्यमिदं सर्व'मित्युपसंहारः । `तत्त्वमसी'ति नवकृत्वोऽभ्यासः । ऐक्यस्य मानान्तराप्राप्तत्वादपूर्वता । `अथ सम्पत्स्यत' इति फलम् । `येनाश्रुतं श्रुतं भवती'त्यर्थवाद इति षड्विधतात्पर्यलिङ्गयुक्तत्वादित्यर्थः । यद्यप्युपपत्त्या सह तात्पर्यलिङ्गानि सप्तविधानि । अस्ति चाद्वैतेऽपि श्रौतोपपत्तिर्यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यादित्यादिः । तथाप्युपक्रमादेः सर्वस्यापि उपपत्तिरूपत्वेनार्थसिद्धत्वात् सा न पृथगुक्ता । स्यादेवम् । यद्युपक्रमादिप्रतिपाद्यमैक्यसत्यत्वं स्यात् । न चैवम् । अपि त्वैक्यमात्रम् । अतो न तत्सत्यत्वसिद्धिरित्याह — **उपक्रमादीनीति** ॥

ननूपक्रमादीनामैक्यसत्यत्वाप्रतिपादकत्वेऽपि तद्व्याप्यतया तत्साधकत्वमव्याहतमित्यत आह — **भेद इति** ॥ `द्वा सुपर्णे'त्युपक्रमः । `परमं साम्यमुपैती'त्युपसंहारः । `तयोरन्यः' `अनश्नन्नन्यः' `अन्यमीश'मित्यन्यशब्दाभ्यासः । शास्त्रैकसमधिगम्येश्वरभेदपरत्वादपूर्वता । `पुण्यपापे विधूये'ति फलम् । `अस्य महिमान'मित्यर्थवादः । अनश्नन्नित्युपपत्तिश्चेत्युपपत्तिसहितषड्विधतात्पर्यलिङ्गयुक्तत्वं भेदविषयश्रुतेरपि न्यायामृते उपपादितम् । ततश्च भेदसत्यत्वसिद्धिरित्याशयः । यद्वा, भेदविषय एव श्रुतेः षड्विधतात्पर्यलिङ्गयुक्तत्वमित्यर्थः । तथाहि । एकमेवाद्वितीयमिति सजातीयद्वितीयराहित्येनैवोपक्रमः । कालादेः सत्त्वश्रवणेन द्वितीयमात्रनिषेधायोगात् । ऐतदात्म्यमित्येतत्स्वामिकत्वेनोपसंहारो न त्वेतत्स्वरूपत्वेन । तद्धितवैयर्थ्यात् । तत्त्वमसीत्यनेनापि तत्सदृशत्वादिकमेवाभ्यस्यते । तत्त्वंपदमुख्यार्थविशिष्टाभेदबाधेन पदद्वयस्य चिन्मात्रलक्षणापेक्षया सामानाधिकरण्यमात्रस्य गौणत्वौचित्यात् । अतत्वमसीति च्छेदे तु स्फुटमेव भेदपरत्वम् । मानान्तरागम्येश्वरभेदपरत्वादपूर्वत्वम् । अथ सम्पत्स्यत इति ब्रह्मप्राप्तिः फलमुच्यते । येनाश्रुतं श्रुतं भवतीत्यर्थवादश्च सादृश्यादिनोपपद्यते । तथैव मृत्पिण्डादिदृष्टान्तैरुपपादनात् । सर्वमृण्मयानामेकमृत्पिण्डविकारत्वाभावेन तदभेदे तात्पर्यायोगादित्यादि द्रष्टव्यम् ।

**(२६) (श.)** एवं जीवेशभेदे प्रत्यक्षानुमाने अभिधायाऽगमञ्चाह — **श्रुतय इति** ॥ जीवेशयोः पारमार्थिभेदे मानमिति शेषः ॥ **व्यावहारिकेति** ॥ तथाच पारमार्थिकभेदे प्रमाणत्वेन एतच्छ्रुत्युदाहरणमयुक्तमिति भावः । व्यावहारिकभेदः किं बाध्य उताबाध्य इति विकल्पं हृदिनिधायाद्यं दूषयितुं

पृच्छति ॥ स **किमिति** ॥ उत्तरं शङ्कते — **बाढमिति** ॥ व्यावहारिकभेदो बाध्य इत्येतत् दृढमित्यर्थः । दूषयति — **तर्हीति** ॥ कुत इत्यत आह — **शुक्तिरूप्येति** ॥ शुक्तिरजतप्रत्यक्षस्यापि शुक्तिरजतरूपबाध्यार्थग्राहित्वादेव प्रामाण्याभावो दृष्टः । तथैवागमस्यापि व्यावहारिकभेदरूपबाध्यार्थग्राहित्वे प्रामाण्यं दुर्लभमिति भावः । ननु बाध्यार्थग्राहकस्य पारमर्थिक-प्रामाण्यविरोधित्वेन तदसम्भवेऽपि व्यावहारिकप्रामाण्याविरोधित्वा-त्तादृशप्रामाण्यमागमस्य सम्भवतीति शङ्कते — **प्रामाण्यमिति** ॥ तथात्वे शुक्तिरजताध्यासस्यापि व्यावहारिकप्रामाण्यं स्यादिति दोषे सत्येव दोषान्तरं वक्तुं पृच्छति ॥ **किन्तर्हीति** ॥ परस्परविरुद्धयोरन्यतर-निषेधस्यान्यतरविधिव्याप्तत्वादिति भावः ॥ **कस्येति** ॥ वेदप्रामाण्यस्य व्यावहारिकत्वं वदतो मम तदप्रामाण्ये पारमार्थिकत्वनिश्चय एवास्ति न तु संशय इत्यर्थः । दूषयति — **अस्तीति** ॥ तथागतः बौद्धः । बौद्धेन वेदाप्रामाण्यं पारमार्थिकमित्यङ्गीक्रियते त्वयाऽपि तदभ्युपगमे तन्मताभ्युपगमप्रसङ्गः । तथाच वेदप्रामाण्यस्य व्यावहारिकत्वेन तदप्रामाण्यं किं पारमार्थिकं उत तथाङ्गीकारे बौद्धराद्धान्ताभ्युपगमप्रसङ्गेन पारमार्थिकं नेति संशय एव स्यान्न पारमार्थिकमिति निश्चय इत्यर्थः । यद्वा सन्देहः शङ्का अनिष्टमिति यावत् ॥ **श्रुत्युपस्थापितेति** ॥ श्रुति-प्रतिपादितेत्यर्थः ।

ननु श्रुतिप्रतिपादितभेदाङ्गीकारेऽपि तत्प्रतिपादितभेदसत्यत्वानभ्युप-गमादप्रामाण्यं स्यादेवेत्यत आह — **नापीति** ॥ कुत इत्यत आह — **तत्र सत्यपदेति** ॥ द्वेत्यादिपदं तुभेदापरपर्यायद्वित्वमात्रवाचकमिति भावः । नच प्रामाण्याप्रामाण्ययोः प्रतिपाद्यार्थाङ्गीकारानङ्गीकारौ प्रयोजकौ । अपितु

प्रतिपाद्यार्थबाधाबाधावेव । तथाहि प्रतिपाद्यार्थाबाधादेव वह्निरुष्ण इत्यस्य प्रामाण्यं प्रतिपाद्यार्थबाधादेव वह्निरनुष्ण इत्यस्याप्रामाण्यम् । प्रकृते च श्रुतिप्रतिपाद्यार्थस्यभेदस्य बाध्यत्वेऽङ्गीकृते सत्यप्रामाण्यं दुर्वारमिति परिहरति ॥ **नैषदोष इत्यादिना** ॥ **स्वगोचरेति** ॥ स्वं प्रामाणत्वेनाभिमतम् । तद्बोध्येत्यर्थः । श्रुतिवेद्यस्य श्रुतिप्रतिपाद्यस्य । तत्र सत्यपदाश्रवणादित्येतत्प्रतिबन्द्या दूषयति — **सत्येति** ॥ तदनङ्गीकारे भेदसत्यत्वानङ्गीकारे । नन्वेकमेवाद्वितीयमिति श्रुतौ सत्यपदाश्रवणेऽपि तत्प्रतिपाद्यैक्यस्य पारमार्थिकत्वमेव । तस्याः श्रुतेरैक्ये उपक्रमादिषड्विधतात्पर्यलिङ्गयुक्तत्वात् । तथाहि । एकमेवाद्वितीयमित्युपक्रमः । तत्त्वमसीत्युपसंहारः । तत्त्वमसि तत्त्वमसीति नववारमभ्यासः । ऐक्यस्यान्यप्रमाणेनाप्राप्तत्वादपूर्वता । अथ सम्पत्स्यत इति फलम् । येनाश्रुतं श्रुतं भवतीति स्तुतिरूपोऽर्थवादः । यथा सोम्यैकेन मृत्पिण्डेनेति मृत्पिण्डादिदृष्टान्तैरुपपादितत्वादुपपत्तिश्चाधिकेति । नच भेदश्रुतेर्भेदे षड्विधतात्पर्यमस्ति । येन तदर्थस्य पारमार्थिकत्वं स्यादिति शङ्कते — **अथेति** ॥ यद्यपि तात्पर्यलिङ्गानामुपपत्त्या सह सप्तविधत्वम् । यथोक्तं –

> `उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
> अर्थवादोपपत्ती च लिङ्गन्तात्पर्यनिर्णय'

इत्यादिना । तथाप्युपपत्तिविशेषाणामुपक्रमादीनां षड्विधत्वादेवमुक्तमित्यदोषः । एकमेवाद्वितीयमित्युपक्रमादीन्यैक्यश्रुतेरैक्ये तात्पर्यं ज्ञापयन्ति । न त्वैक्यसत्यत्वे । कुत इति चेत् ऐक्यस्य श्रुत्यर्थत्वात् । तत्सत्यत्वस्य च श्रुत्यर्थत्वाभावात् । उपक्रमादीनां श्रुत्यर्थ एव तात्पर्यज्ञापकत्वस्वाभाव्यादिति परिहरति ॥ **उपक्रमादीनीत्यादिना तदर्थत्वादित्यन्तेन** ॥

स्वार्थे स्वं श्रुतिः तदर्थे । तात्पर्यं श्रुतेरिति शेषः । अद्वैतमात्रपरम् ऐक्यवाक्यमिति शेषः ॥ तात्पर्येति ॥ ऐक्यवाक्यस्यैक्ये उपक्रमादि-तात्पर्यलिङ्गयुक्तत्वादित्यर्थः । मात्रपदव्यावर्त्यमाह — नेति ॥ अतदर्थत्वात् श्रुत्यर्थत्वाभावात् । इदं चाभ्युपेत्योक्तम् । वस्तुतस्तु शकुनिसूत्रादि-दृष्टान्तबलेन स आत्मातत्त्वमसीति वाक्यस्यातत्त्वमसीति पदच्छेदेन भेदप्रतिपादकत्वमेव युक्तम् । नह्यभेदं प्रतिज्ञाय भेदे दृष्टान्ताभिधानं सङ्गच्छते । अत एवैकमेवाद्वितीयमित्येत्समाधिकराहित्यप्रतिपादनेन भेदपरम् । एवमेवैतदात्म्यमित्यपि । यथा सोम्येत्यादिप्राधान्यज्ञापनाय सृष्टिप्रतिपादकमित्यङ्गीकार्यम् । एवं चैकमेवाद्वितीयमित्यस्योपक्रमात् ऐतदात्म्यमिदं सर्वमिति तस्यैवोपसंहारात् अतत्त्वमसीति नववारमभ्यासात् शास्त्रं विना शास्त्रैकगम्येश्वरभेदस्या-प्रसक्त्याऽपूर्वत्वात् अथ सम्पत्स्यत इति फलश्रवणात् येनाश्रुतं श्रुतं भवतीत्यर्थवादात् शकुनिसूत्रादिदृष्टान्तैरुपपादनात् उपक्रमादितात्पर्य-लिङ्गानि भेदपराण्येवेति द्रष्टव्यम् । यदि सत्यपदा-श्रवणेऽप्यैक्यश्रुतेः षड्विधतात्पर्यलिङ्गवत्त्वात्तदर्थः पारमार्थिक इत्यङ्गीक्रियते तर्हि सत्यपदाश्रवणेऽपि भेदश्रुतेः षड्विधतात्पर्यलिङ्गोपेतत्वात्तदर्थः पारमार्थिक इत्यङ्गीक्रियतामित्याह — भेदे षड्विधेति ॥ आथर्वणे द्वासुपर्णेत्युपक्रमः, परमं साम्यमुपैतीत्युपसंहारः, तयोरन्यः अनश्नन्नन्यः अन्यमीशमित्यभ्यासः, शास्त्रैकगम्येश्वरप्रतियोगिकस्य तद्धर्मिकस्य वा भेदस्य शास्त्रं विनाऽप्राप्तेरपूर्वता, पुण्यपापे विधूयेति फलम्, अस्य महिमानमिति स्तुतिरूपोऽर्थवादः, अत्ति अनश्नन्निति विरुद्धधर्मोक्त्योपपत्तिरिति भेदश्रुतेर्भेदे तात्पर्यलिङ्गवत्त्वं न्यायामृते द्वितीयपरिच्छेदे उपपादितमित्यर्थः ।

(२७) यदि पुनरबाध्यो भेदस्तर्ह्यविवादः । कुतश्च

व्यावहारिकभेदपरत्वम् । अद्वैतश्रुतिविरोधादिति चेत्तर्ह्यद्वैतश्रुतेः प्रातिभासिकाद्वैतपरत्वमस्तु । विरोधपरिहारस्य साम्यात् । ननु न श्रुतिप्रतिपादितस्य (श्रुत्युपपादितस्य) बाधादप्रामाण्यम् । किन्त-ह्यभिप्रेतस्य (किन्तु तदभिप्रेतस्य)। अन्यथा मीमांसकमतेऽर्थवाद-भागस्याप्रामाण्यप्रसङ्गः । न चात्र भेदः श्रुतितात्पर्यगोचरः । श्रुतीनां नेह नानेति निषेधाय प्रत्यक्षप्राप्तभेदानुवादित्वादिति चेन्न । 'नेह नानाऽस्ती'त्यादि वेदवाक्यानि, 'विमता आत्मानः परमत्मानः परमार्थतो न भिद्यन्ते आत्मत्वात् परमात्मवदि'त्यनुमानप्राप्तमभेदं 'द्वा सुपर्णे'ति निषेधायानुवदन्तीति वैपरीत्यसम्भवात् (वैपरीत्य-प्रसङ्गात्)। भेदस्य तादात्म्यनिषेधात्मकतया भेदप्रतिपादकानां तादात्म्यनिषेधरूपत्वात् । एतेन निषेधवाक्यत्वादद्वैतवाक्यं प्रबलमिति निरस्तम् (प्रत्युक्तम्)। न हि प्रत्यक्षेण प्राप्तिरेवानुवादे (प्राप्तिरनुवादे) प्रयोजिका । तथा सत्यग्निर्हिमस्य भेषज'मित्यादावग्नेर्हिमनिवृत्तिं (शीतनिवृत्तिं) प्रति कारणत्वमन्वयव्यतिरेकरूपानुमानप्राप्तं प्रतिपादयत्सर्वसम्मतमनुवादकं न स्यात्।

(२७) (भ.) एवं व्यावहारिकभेदस्य बाध्यत्वपक्षं निरस्याबाध्यत्व-पक्षमाशङ्क्य निराकरोति — यदि पुनरिति ॥ अविवाद इति ॥ अबाध्यत्वमङ्गीकारे तदेव पारमार्थिकत्वमिति नावयोर्विवादोऽस्तीति भावः । एवं परोक्तव्यावहारिकभेदपरत्वं श्रुतीनामङ्गीकृत्य बाध्यत्वाबाध्यत्वविकल्पेन दूषणमभिहितम् । इदानीं तदेवानुपपन्नमिति भावेनाह — कुतश्चेति ॥ उत्तरं शङ्कते — अद्वैतेति ॥ अद्वैतस्य पारमार्थिकत्वात्तद्विरुद्धस्य भेदस्यापि

पारमार्थिकत्वायोगाद्व्यावहारिकत्वमङ्गीकृत्य भेदाभेदश्रुत्योर्विरोधः परिहरिष्यत इति भावः । एवं तर्हि माऽस्त्वेतया भेदश्रुतीनामद्वैतपरत्वं किन्नाम सादृश्याद्यर्थकत्वमेवास्तु । एवञ्च भेदश्रुतीनां पारमार्थिकभेदपरत्वेऽपि नाद्वैतश्रुतिविरोध इति भावेनाह — **किं तर्हीति** ॥ **विरोधपरिहारस्य साम्यादिति** ॥ यथा द्वैताद्वैतश्रुत्योर्विरोधप्राप्तेऽद्वैतस्य पारमार्थिकत्वं द्वैतस्य व्यावहारिकत्वमभिप्रेत्य विरोधः परिह्रियते एवं द्वैतस्यैव पारमार्थिकत्वमङ्गीकृत्वाऽद्वैतश्रुतेः सादृश्याद्यभेदार्थकत्वेन न द्वैताद्वैत श्रुत्योर्विरोध इत्यपि विरोधपरिहारस्य साम्यादित्यर्थः । ननु स्वगोचरार्थाबाधो हि प्रामाण्यमिति यदुक्तं तत्सत्यमेव । तथाऽपि न भेदश्रुतेः प्रामाण्यम् । स्वगोचरार्थो नाम स्वतात्पर्यगोचर एव । न स्वाभिहितमात्रो भेदश्च न श्रुतितात्पर्यगोचरः । येन तस्य बाध्यत्वाङ्गीकारे श्रुतीनामप्रामाण्यं प्रसज्येत । किन्नाम नाहं सर्वज्ञ इत्यादिप्रत्यक्षप्राप्तं भेदं निषेधार्थमनुवदन्त्येव श्रुतय इति भावेन शङ्कते — **नन्विति** ॥ अभिहितबाधेऽप्यप्रामाण्यं कुतो नेत्यत आह — **अन्यथेति** ॥ यदि श्रुत्युदितस्य बाधाच्छ्रुतेरप्रामाण्यमङ्गीक्रियते । तर्ह्युत्ताना वै देवगवा वहन्तीत्यर्थवादभागस्याप्रामाण्यं स्यात् । श्रुत्युदितस्य देवगवानामूर्ध्ववाहित्वस्य लौकिकगोष्वदृष्टत्वेन बाधितत्वात् । अतस्तत्र **मीमांसकमते** प्रथमाध्यायतृतीयपादे प्रयोगचोदनाभावार्थकत्वमविभागादिति सूत्रव्याख्यानावसरे यज्ञद्रव्यार्थत्वेन देवसम्बन्धिनो ये मनुष्याणां गावस्तत्स्तुतिपरमेवेदं वाक्यमित्यभिप्रेतार्थमुपपादयैव प्रामाण्यमुपपादितमिति भावः । केचित्तु सोऽरोदीद्यदरोदीदित्यर्थवादेषु मन्त्रेषु च शक्त्या प्रतिपादितानामतात्पर्यविषयीभूतानामर्थानां बाधादित्यर्थ इत्याहुः ॥

**वैपरीत्यसम्भवादिति** ॥ यदुच्यते तन्नेति वाक्यं परिहारे युक्तिविशेषं च विना निर्निमित्तमभेदे श्रुतीनां निषेधकत्वस्य भेदश्रुतीनामनुवादकत्वस्याङ्गीकारे उक्तरीत्या वैपरीत्यस्याप्यङ्गीकारप्रसङ्गादित्यर्थः । ननु भेदश्रुतीनां भेदमात्रप्रतिपादकत्वात्कथमभेदनिषेधपरत्वम् । येन वैपरीत्यप्रसङ्ग इत्यत आह — **भेदस्येति** ॥ भेदो नामान्योन्याभावः । स च तादात्म्यप्रतियोगिकः । तथा च तादृशभेदप्रतिपादकश्रुतीनां कथमभेदनिषेधपरत्वाभाव इति भावः । निषेधवाक्यत्वादद्वैतवाक्यं प्रबलं भेदवाक्यं तु न निषेधकमिति ततो दुर्बलमिति कश्चित् । तदप्यनेन निरस्तम् । भेदस्यापि तादात्म्यनिषेधरूपत्वादित्याह — **एतेनेति** ॥ ननु भेदश्रुतेरनुवादकत्ववदभेदश्रुतेरप्यनुवादकत्वमेवेति वक्तुं न शक्यते । अनुवादे प्रत्यक्षप्राप्तेरेव प्रयोजकत्वात् । न च भेदस्येवाभेदस्य प्रत्यक्षतः प्राप्तिः किन्त्वनुमानत एवेत्यत आह — **न हीति** ॥ तथा सतीति । कार्यकारणभावस्यातीन्द्रियत्वादग्नेर्हिमनिवृत्तिकारणत्वं न प्रत्यक्षसिद्धमिति भावः ।

(२७) (मु.) ननु श्रुत्युक्तभेदोऽबाध्य एव नाप्रामाण्यमित्यत आह — यदीति । प्रतीतभेदपारमार्थत्यागो निर्बीजश्चेत्याह — **प्रातिभासिकेति** ॥ विरोध्यन्यतरस्यार्थान्तरमेव वाच्यं न तु प्रतीतार्थस्य मुख्यसत्ताकत्वकल्पनं युक्तमिति भावः । यथाऽऽहैको मीमांसको ब्रूयाद्विरोधे शास्त्रयोर्मिथः । एकं प्रमाणमितरं त्वप्रमाणं भवेदिति । किञ्चैवं श्रुत्युक्तजगतो मिथ्यात्वे ब्रह्मापि मिथ्या स्यात् । सत्यं ज्ञानमित्यादिविरोध इति चेन्न । विश्वं सत्यमित्यादिवदुपपत्तेः । अनृतेन हि प्रत्यूढमिति जगतोऽसत्त्वमुच्यतेऽद्वैतं परमार्थत इति ब्रह्मणः पारमार्थ्यमुच्यत इति चेन्न । 'याथातथ्यतोऽर्थानि'तिवदुपपत्तेः । असद्वा इदमग्र आसीन्न तत्सन्नासदुच्यते । न सन्न चासञ्छिव

एव केवलं सन्न चासन्निषेधशेषो जयतादशेष इति ब्रह्मणोऽपि तथात्वापत्तेः । आहुरसदित्यादिना ब्रह्मासत्त्वं निन्द्यत इति चेन्न । प्रकृतेऽप्यसत्यमाहुर्जगदेतदज्ञा असत्यमप्रतिष्ठं त इत्यादि निन्द्यते च । एतच्छून्यवादिनिन्दनमिति चेत् । समं तवापि । अधिष्ठानज्ञानाय ब्रह्मैकं सत्यमावश्यकमिति चेत् । प्राधान्याय जगदेकमपि तथा स्यात् । निष्प्रधानकब्रह्माङ्गीकारे निरधिष्ठानकोऽपि किन्न स्यात् । मुक्तौ ब्रह्मावशेषः श्रूयत इति चेत् । स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वेति जगदवशेषोऽपि मुक्तौ श्रूयते । सगुणमुक्तावेव जगदवशेषो न निर्गुणमुक्ताविति चेत् । सन्मुक्तावेव ब्रह्मावशेषो नासन्मुक्तौ । सन्मुक्तिरप्रामाणिकीति चेत् । निर्गुणमुक्तिरपि तथैव । यत्र त्वस्य सर्वात्मैवाभूदित्यादिना निर्गुणमुक्तिः श्रूयत इति चेत् । असन्नेव स भवति असद्ब्रह्मेति वेद चेति ब्रह्मासत्त्वज्ञानेनासन्मुक्तिरपि महत्तमपुरुषार्थो श्रूयते । स्वरूपासत्त्वं न पुरुषार्थ इति चेन्न । नैर्गुण्यमपि तथैव । मुक्तौ स्वरूपसत्तावबोधकप्रमाणबाहुल्यादेतद्वचनमन्यथा नेयमिति चेत् । एवं भोगप्रतिपादकवचनबाहुल्यादेर्निर्गुणवचनमप्यन्यथा नेयमित्यलम् । अपि च श्रुत्यर्थानां[1] व्यावहारिकत्वं स्वरसतः प्रतीयते ब्रह्मवत्पारमार्थिकत्वं वा स्वरसतः प्रतीयते । नाद्यः । अनुभवविरोधात् । विमतमिथ्यात्वसाधने वैय्यर्थ्यापत्तेश्च । ऐक्यादेरपि स्वरसतः पारमार्थिकत्वानापत्तेश्च । द्वितीये जितमस्माभिः । सर्वत्र प्रतीतपारमार्थ्यं बाधवति त्यज्यते । इह तु भेदवाक्यमैक्यवाक्यबाधितमिति चेन्न । वैपरीत्यस्य प्रातिभासिकत्वस्य वा पारमार्थिक एव द्वैविध्यस्य वा त्रिविधातिरिक्तसत्तान्तरस्य वा सम्भवेनान्यथासिद्धिः । किञ्च

---

[1] नेयमित्यपि च श्रुत्यर्थताया' मु.

व्यावहारिकत्वस्यैव दुर्वचत्वेन श्रुतेः सत्यत्वमष्टमरसारितमिति । भेदस्याभिमतत्वेऽपि तात्पर्यगोचरत्वाभावेन नाप्रामाण्यमित्याशङ्कते — **श्रुतीति** ॥ **अर्थवादेति** ॥ उत्ताना वै देवगवा वहन्तीत्यादावभिहितार्थबाधे उपलक्षितप्राशस्त्यरूपं तात्पर्यगोचराबाधमात्रेण प्रामाण्याङ्गीकारादिति भावः । वाक्यान्यनुवदन्तीति सम्बन्धः । तर्हि विनिगमनाविरह इत्यत आह — भेदस्येति ॥ **निषेधात्मकतयेति** ॥ अन्योन्याभावविषयतयेत्यर्थः ॥ **निषेधरूपत्वादिति** ॥ निराकरणरूपत्वादित्यर्थः । अभावप्रतिपादनस्य प्रतियोगिप्रसञ्जनपूर्वकं तदपन्हवरूपत्वेनैव प्रवर्तनान्निषेधकत्वमुचितमिति भावः । एतेन पूर्वपक्षोक्तमनुवादित्वं निरस्तं ज्ञेयम् ॥ **एतेनेति** ॥ भेदवाक्यस्य निषेधकत्वस्वरूपप्रतिपादनेनेत्यर्थः ॥ **निषेधवाक्यत्वादिति** ॥ अद्वैतपदस्य नार्थगर्भितत्वमिति भावः । यद्वा नेह नानाऽस्तीत्यद्वैतवाक्यस्य नार्थगर्भितत्वादिति भावः ॥ **निरस्तमिति** ॥ शब्दनिषेधरूपत्वादर्थतो निषेधरूपत्वस्य प्रबलत्वादिति भावः । भेदस्येवैक्यस्य प्रत्यक्षप्राप्त्यभावात्कथमनुवादित्वमित्यत आह — **न हीति** । स्वानुपजीविमानान्तरप्राप्तिरेवानुवादित्वे तन्त्रमिति भावः ॥ **अनुमानप्राप्तमिति** ॥ कार्यकारणभावस्यातीन्द्रियत्वादिति भावः ।

(२७) (कु.) द्वितीयमाशङ्क्येष्टापत्तिमाह — **यदि पुनरिति** ॥ भेदश्रुतीनां व्यावहारिकभेदपरत्वं निष्प्रमाणिकमित्याह — **कुतश्चेति** ॥ **अर्थवादादिभागस्येति** ॥ सोऽरोदीद्यदरोदीदित्याद्यर्थवादेषु मन्त्रेषु च शक्त्या प्रतिपादितानामतात्पर्यविषयीभूतानामर्थनां बाधादित्यर्थः । वैपरीत्येवोचितमित्याह — **भेदस्य तादात्म्यनिषेधात्मकतयेति** ॥ **निषेधवाक्यत्वादद्वैतवाक्यं** प्रबलमिति वाचस्पत्युक्तमप्यत एव निरस्तमित्याह — **एतेनेनि** ॥ ननु भेदस्य

प्रत्येक्षेण प्राप्तेर्भेदवाक्येऽनुवादकता युज्यते नाभेदवाक्ये । अभेदस्य प्रत्यक्षेणाप्राप्तेरित्याशङ्कामाप्रयोजकत्वेन परिहरति — **न हीति** ॥

(२७) (हु.) अविवाद आवयोरिति शेषः । अस्माभिरपि तथैवाङ्गीकारादिति[1] भावः । भेदो व्यवहारकालाबाध्य एव न वस्तुत इत्याशङ्क्य द्वैताद्वैतयोः श्रुतिप्रतिपाद्यत्वसाम्येऽपि उक्तबाध्यत्वमेव[2] कुत इत्याशयेन दूषयितुं पृच्छति ॥ **कुतश्चेति** ॥ पूर्वं भेदस्य श्रुत्यर्थत्वेऽपि न सत्यत्वेन श्रुत्यर्थत्वमित्याशङ्का निराकृता । इदानीं श्रुत्यर्थत्वमेव नास्तीति शङ्कानिरासार्थो **नन्वित्यादिग्रन्थः** ॥ **श्रुत्यभिप्रेतस्येति** ॥ तात्पर्यप्रमाधीनश्रुतिजन्यबोधे[3] निषेधाप्रतियोगित्वेन भासमानस्येत्यर्थः ॥ **अर्थवादभागस्येति** ॥ प्रजापतिरात्मनो वपामुदखिददित्यादीनामित्यर्थः ।[4] प्रजापतिवपोत्खननस्य तात्पर्यविषयस्यासत्त्वेऽपि तेषां प्राशस्त्यलक्षकतया प्रामाण्यं वर्तते । तस्यैव तात्पर्यविषयत्वादित्यर्थः ॥ **न चेहेति** ॥ निषेधाप्रतियोगित्वेनेति शेषः । तस्यैवासत्त्वाङ्गीकारेऽप्रामाण्यं द्वैतवाक्यानि तु निषेधप्रतियोगितयैव द्वैतं बोधयन्तीत्यर्थः । अनुवादस्य प्राप्तिमूलक-प्रत्यक्षेणेत्युक्तम्[5] ।

(२७) (का.) अस्तु तर्ह्यबाध्य एव श्रुत्युक्तो भेद इत्यत आह — **यदि पुनरिति** ॥ **अविवाद इति** ॥ अबाध्यत्वस्यैव पारमार्थिकत्वरूपतयाऽस्मदभिमतसिद्धेरिति भावः । भेदश्रुतेर्व्यावहारिकभेदपरत्वे बाधकमभिधाय

---

[1] `अस्माभिस्तथाऽङ्गीकारादिति' मु.  २. `श्रुतिप्रतिपाद्यत्वमेव' मु.

[3] `-बोधो' मु.  ४. इतः वाक्यद्वयं हु.पाठे नास्ति ।

[5] इदं पदं हु.पाठे नास्ति । `प्राप्तिमूलकत्वात् प्रत्यक्षेणेत्युक्तम्' इति पाठेन भाव्यम् ।

साधकाभावमाह — **कुतश्चेति** ॥ अद्वैतस्य व्यावहारिकत्वासम्भवात् प्रातिभासिकेत्युक्तम् । नन्वेवमद्वैतश्रुतीनामप्रामाण्यप्रसङ्ग इति चेत् त्वन्मते द्वैतश्रुतीनामप्रामाण्यप्रसङ्गेन तुल्यत्वादिति भावः । स्यादेवम् । यद्यबाध्यार्थप्रतिपादकत्वं प्रामाण्यं स्यात् । न चैवम् । अपि त्वबाध्यार्थ-परत्वम् । द्वा सुपर्णेत्यादीनां च भेदानुवादकानां तन्निषेधपरत्वादेव प्रामाण्योपपत्तिः । अत एव तत्प्रतिपाद्यभेदस्य बाध्यत्वमपीत्याशयेन शङ्कते — **नन्विति** ॥ **अर्थवादभागस्येति** ॥ तस्य प्रतिपाद्यार्थाबाधनियमाभावेऽप्य बाध्यविध्यर्थकार्यपरत्वेनैव प्रामाण्याङ्गीकारादिति भावः । मतान्तरे प्रतिपाद्यार्थेऽपि प्रामाण्यात् मीमांसकमत इत्युक्तम् । एवं सत्यद्वैतश्रुतीनां प्रातिभासिकाद्वैतपरत्वेऽपि नाप्रामाण्यप्रसङ्ग इत्याशयेनाह — **नेहेति** ॥ वाक्यान्यनुवदन्तीत्यन्वयः । भेदवदभेदस्य प्रत्यक्षेण प्राप्त्यभावादाह — **विमता इति** ॥ ननु द्वासुपर्णेत्यादीनां कथमभेदनिषेधपरत्वम् ? तदर्थकपदाभावादत आह — **भेदस्येति** ॥ **तादात्म्यनिषेधरूपत्वात्** अभेदाभावरूपत्वात् । तथाच भेदार्थस्यैव तदर्थकत्वान्नोक्तदोष इति भावः ।

एवं भेदश्रुतेरभेदनिषेधकत्वसमर्थनेन वाचस्पत्युक्तमपि प्रत्युक्तमित्याह — **एतेनेति** ॥ **प्रबलमिति** ॥ तथाच तेन भेदश्रुतेरेव बाधः । अन्यथा नेदं रजतमिति प्रत्यक्षस्यापि प्राबल्यासिद्धेरिदं रजतमिति प्रत्यक्षबाधकत्वानु-पपत्तिरिति भावः ॥ **प्रत्युक्तमिति** ॥ भेदश्रुतेरपि निषेधकत्वसाम्ये दुर्बलत्वायोगादिति भावः । अथ भेदस्याभेदनिषेधरूपत्वेऽप्यभेदनिषेधत्वेन भेदाप्रतिपादकत्वात् द्वा सुपर्णेत्यादेर्दुर्बलत्वमेवेति चेदत्र वक्तव्यम् । किमभेदज्ञानं प्रति अभेदनिषेधत्वेनैव भेदज्ञानं विरोध्युत भेदत्वेनापि । आद्येऽनुभवविरोधः । घटः पटभिन्न इत्यादिज्ञानदशायां जात्वपि

तदभेदज्ञानानुदयात् । द्वितीये तु कथं द्वा सुपर्णेत्यादेर्दुर्बलत्वम् ? विरोधित्वाविशेषात् । न चैवमुक्तातिप्रसङ्गः । निश्चितप्रामाण्यकत्वेन प्राबल्यात् । परीक्षया च तन्निश्चयात् । निषेधकत्वमात्रस्याप्रयोजकत्वात् । अन्यथा 'न हिंस्या'दित्यादे'रग्नीषोमीय'मित्यादिश्रुतिबाधकत्वप्रसङ्गात् ।

न चैवं भेदाभेदवाक्ययोः प्राबल्यदौर्बल्यानिर्णयः । निरवकाशत्वादिना तन्निर्णयात् । निरवकाशत्वं च भेदवाक्यानामेवेत्यन्यत्र प्रपञ्चितम् ।

नन्वभेदश्रुतीनां नानुवादकत्वसम्भवः । अभेदस्य प्रत्यक्षेणाप्राप्तत्वात् । न च प्राप्तिमात्रमनुवादप्रयोजकम् । सर्वस्याप्यनुमानतः प्राप्तिसम्भवेन श्रुतिमात्रस्याप्यनुवादकत्वप्रसङ्गादित्यत आह — **न हीति** ॥ इति वाक्यमनुवादकं न स्यादित्यन्वयः । इष्टापत्तिनिरासार्थमनुवादकत्वेन सर्वसम्मतमिति । प्रत्यक्षप्राप्तप्रतिपादकत्वे दोषाभावादन्वयव्यतिरेक-रूपानुमानप्राप्तं कारणत्वमर्थं प्रतिपादयदिति । कारणत्वस्य कालादिघटितत्वेन प्रत्यक्षासम्भवादिति भावः । यत्सत्त्वे यत्सत्त्वमित्यन्वयमात्रस्य प्रमेयत्वा-भिधेयत्वयोः व्यभिचरितत्वात् व्यतिरेकनिवेशः । यदभावे यदभाव इति व्यतिरेकस्य नरश्रृङ्गशशश्रृङ्गयोर्व्यभिचारित्वादन्वयनिवेशः । न चैवमप्य-न्यथासिद्धान्वयव्यतिरेकवति व्यभिचारः । अनन्यथासिद्धत्वेनापि विशेषणी-यत्वात् । वस्तुतस्तु अन्वयव्यतिरेकवत्त्वस्य नियतपूर्ववृत्तित्वव्याप्यतया तेन तस्मिन् साध्यमाने हिमनिवृत्तिं प्रत्यग्नेरन्यथासिद्धनियतपूर्ववृत्तित्वबाधात् अनन्यथासिद्धनियतपूर्ववृत्तित्वरूपकारणत्वसिद्धिरित्यवधेयम् ।

**(२७) (श.)** एवं व्यावहारिकभेदस्य बाध्यत्वमित्याद्यपक्षं दूषयित्वा द्वितीयमनूद्य दूषयति — **यदीति** ॥ **अविवाद इति** ॥ श्रुतिप्रतिपाद्यभेदस्य पारमार्थिकत्वापरपर्यायाबाध्यत्वाङ्गीकारेऽस्मदभिमतस्यैवाङ्गीकारादावयोर्वि

वादो न स्यादित्यर्थः । एवं भेदस्य परोक्तव्यावहारिकत्वमभ्युपेत्य दूषणमभिहितम् । इदानीं व्यावहारिकत्वमेव भेदस्य नेत्याह — **कुतश्चेत्यादिना साम्यादित्यन्तेन** ॥ श्रुतिप्रतिपाद्यभेदस्य व्यावहारिकत्वं कस्मादङ्गीक्रियत इत्यर्थः । उत्तरं शङ्कते — **अद्वैतेति** ॥ पारमार्थिकाद्वैतेत्यर्थः ॥ **विरोधपरिहारस्येति** ॥ उभयोरपि श्रुत्योः पारमार्थिकभेदाभेदप्रतिपादकत्वेऽन्योन्यविरोधात् खद्द भेदश्रुतेर्व्यावहारिक-भेदपरत्वमभेदश्रुतेः पारमार्थिकाभेदपरत्वमङ्गीकृत्य तत्परिहारः क्रियते । तस्य च विरोधपरिहारस्य भेदश्रुतेः पारमार्थिकभेदपरत्वमभेदश्रुतेः प्रातिभासिकाभेदपरत्वमित्यङ्गीकारेऽपि समानत्वादित्यर्थः ।

ननु व्यावहारिकभेदस्य बाध्यत्वमित्याद्यपक्ष एव स्वीक्रियते । नच तथात्वे श्रुतेर्बाध्यार्थग्राहित्वेनाप्रामाण्यप्रसङ्ग इति वाच्यम् । श्रुति-तात्पर्यविषयार्थबाधस्यैवाप्रामाण्ये प्रयोजकत्वेन श्रुतिप्रतिपाद्यबाधस्या-प्रयोजकत्वात् । भेदस्य च श्रुतिप्रतिपाद्यत्वेऽपि श्रुतितात्पर्यगोचरत्वा-भावादिति शङ्कते — **नन्विति** ॥ उपपादितस्य प्रतिपाद्यस्य । अभिप्रेतस्य तात्पर्यगोचरस्य ॥ **अन्यथेति** ॥ यदि तस्य बाधाच्छ्रुतेरप्रामाण्यमङ्गी-क्रियते त`र्ह्युत्ताना वै देवगवा वहन्ती'त्याद्यर्थवादभागस्याप्यप्रामाण्यं स्यात् । श्रुत्युदितस्य देवगवानामूर्ध्ववाहित्वस्य बाधितत्वात् । मतान्तरेऽर्थवादाप्रामाण्यस्येष्टत्वान्मीमांसकमत इत्युक्तम् । कुत इत्यत आह — **श्रुतीनामिति** ॥ श्रुतीनां भेदानुवादित्वादिति सम्बन्धः । अप्राप्तस्यानु-वादासम्भवादाह — **प्रत्यक्षप्राप्तेति** ॥ नाहं सर्वज्ञ इत्यादिप्रत्यक्षप्राप्तेत्यर्थः । अनुवादे प्रयोजनमाह — **नेह नानेति** ॥ प्रतिबन्द्या समाधत्ते ॥ **नेति** ॥ ननु नेह नानेति वाक्यस्येह ब्रह्मणि जगति वा भेदो नास्तीति भेदनिषेधकत्वेन तेन

निषेधाय द्वासुपर्णेत्यादेर्भेदानुवादकत्वं युज्यते । द्वा सुपर्णेत्यादेस्तु भेदमात्रप्रतिपादकत्वेनाभेदनिषेधकत्वाभावात्कथं तेन निषेधाय नेह नानेत्यादेरभेदानुवादकत्वमित्यत आह — **भेदस्येति** ॥ भेदो ह्यन्योन्याभावरूपः । स च तादात्म्यप्रतियोगिकत्वेन तन्निषेधरूप एव । तथा च तादृशभेदप्रतिपादकवाक्यस्य तादात्म्यनिषेधरूपत्वेन निषेधाय नेह नानेत्यादेर्भेदानुवादकत्वं युक्तमेवेत्यर्थः ॥ **एतेनेति** ॥ भेदश्रुति-विरोधादभेदश्रुत्यर्थत्यागो वा उताभेदश्रुतिविरोधाद्भेदश्रुत्यर्थत्यग इति सन्देहे निषेधवाक्यत्वेनाभेदश्रुतेः प्राबल्यात्तद्विरोधेन भेदश्रुत्यर्थस्यैव भेदस्य परित्याग इति यदुक्तमद्वैतवादिना तद्भेदवाक्यस्यापि निषेधकत्वकथनेन निरस्तमित्यर्थः । ननु नाभेदवाक्यस्यानुवादकत्वं युक्तम् । अभेदस्य प्रामाणान्तराप्राप्तेः । नचानुमानतः प्राप्तिरुक्तेति वाच्यम् । अनुवादे प्रत्यक्षतः प्राप्तेरेव प्रयोजकत्वेनानुमानेन प्राप्तेरप्रयोजकत्वादित्यत आह — **नहीति** ॥ **तथा सतीति** ॥ प्रत्यक्षतः प्राप्तेरेवानुवादप्रयोजकत्वे `अग्निर्हिमस्यभेषज'मिति वाक्यमनुवादकं न स्यादित्यन्वयः । कुत इत्यत उक्तमग्नेरित्यादिप्रतिपादयदित्यन्तम् । अग्नेर्हिमनिवृत्तिकारणत्वं हि सत्यग्नौ हिमनिवृत्तिरन्यथा नेत्यन्वयव्यतिरेकदर्शनेन हिमनिवृत्तिरग्नितो जन्या । तदन्वयव्यतिरेकानुविधायित्वादित्यानुमानप्राप्तम् । तदेवप्रतिपादयदिदं वाक्यमनुवादकमङ्गीक्रियते । न च तत्रापि प्रत्यक्षप्राप्तस्यैवानुवाद इति वाच्यम् । कार्यकारणभावस्य कालादिघटितत्वेनातीन्द्रियत्वादिति भावः । इष्टापत्तिपरिहारायोक्तं सर्वसम्मतमिति । नेह नानेति वाक्यस्यानु-मानेनैक्यप्राप्तिरित्यभिहितम् ।

(२८) यद्वा, तत्त्वमसीति श्रुत्यर्थापरिज्ञानादद्वैतप्राप्तिरस्तु । अस्ति च श्रुत्यर्थापरिज्ञानप्राप्तस्य श्रुत्यन्तरेण निषेधः । यथेष्टापूर्तयोः परमपुरुषार्थत्वनिषेधः । अथवा प्रवाहतोऽनादिरूपया दुःशास्त्र-परम्परयाऽद्वैतप्राप्तिरस्तु । अस्ति च कुमतप्राप्तस्य निषेधः । `तद्धैक आहुरसदेवेदमग्र आसीत्', 'एकमेवाद्वितीयं', `तस्मादसतः सदजायते'ति, `कुतस्तु (खलु) सोम्यैवं स्यादिति होवाच', `कथमसतः सज्जायेते(सदजायते)'त्यादौ । अत्र हि बौद्धमतप्राप्तमसतः कारणत्वं निषिध्यते (इति) । तस्मात् द्वा सुपर्णेत्याद्याः श्रुतयो जीवेश्वरभेदे प्रमाणम् ।

'परमं साम्यमुपैति सह ब्रह्मणा विपश्चिता' 'मम साधर्म्यमागता' इत्याद्यास्तु न व्यावहारिकभेदपरत्वेन शङ्कितुमपि शक्याः । मुक्त्यनन्तरं भेदप्रतिपादकत्वात् ।

घटपटादि भेदे तु प्रत्यक्षं सुलभमेव ।

(२८) (भ.) अद्वैतश्रुतेरनुवादकत्वसिद्ध्यर्थं प्रकारान्तरेणाद्वैतस्य प्राप्तिं दर्शयति — यद्वेति ॥ तत्त्वमसीति श्रुतेस्तात्पर्यविषयीभूतोऽर्थस्तु तद्गुणसारत्वात्तद्व्यपदेश इति सूत्रकारेणैव सिंहो देवदत्त इत्यादिवज्जीव-ब्रह्मणोः सादृश्यरूपो दर्शितस्तदपरिज्ञानेनेत्यर्थः । श्रुत्यर्थापरिज्ञानप्राप्तस्य श्रुत्यन्तरेण निषेधः क्व दृष्ट इत्यत आह — अस्तीति । `दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'त्यादिश्रुतितात्पर्यापरिज्ञानप्राप्तमनीश्वरविषयं काम्यकर्मे-`ष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः । नाकस्य पृष्ठे सुकृते तेऽनुभूत्वा इमं लोकं हीनतरं वा विशन्ती' ति श्रुतिः । पूर्वार्धेनानूद्योत्तरार्धेन तस्य परमपुरुषार्थसाधनत्वं निराकरोति । निन्दायाः प्रतिषेधे तात्पर्यात् । न

चैवंविधकर्मणोऽन्यतः प्राप्तिरस्ति । अतः श्रुतितात्पर्यापरिज्ञानमेव तत्प्रापकं वाच्यम् । तद्वत्प्रकृतेऽपीति भावः ॥ **इष्टापूर्तयोरिति** ॥ इष्टं यजनं पूर्तमन्नदानादिकं तयोरित्यर्थः । अन्येषामपि दृश्यत इति दीर्घः श्रुत्यनुसारेण । श्रुतौ च द्वन्द्वैकवद्भावः । सर्वो द्वन्द्वो विभाषयैकवद्भवतीति वचनात् । वरिष्ठं परमपुरुषर्थसाधनम् । अन्यच्छ्रेयः परब्रह्मापूज्यम् । तत्प्रसादमिति यावत् । न वेदयन्ते न जानन्ति । वरिष्ठमिति वर्तते । प्रकारान्तरेणाप्यद्वैतप्राप्तिं दर्शयति — **अथवेति** ॥ कथमाधुनिक-दुःशास्त्रपरम्परया प्राप्तस्यानादिना वेदेन निषेध इत्यत उक्तं प्रवाहतोऽनादिरूपयेति । अनादिककालतो वृत्ताः समया हि प्रवाहत इति वचनादिति भावः । अस्यां श्रुतौ किं मतप्राप्तं किं निषिध्यत इत्यतः स्पष्टयति — **अत्र हीति** । इति शब्दः प्रप्तिप्रदर्शनप्रकरणसमाप्तिपरः । उपसंहरति — **तस्मादिति** ॥ उक्तरीत्या भेदस्य व्यावहारिकत्वाभावदनुवादकत्वा-भावाच्चेत्यर्थः । व्यावहारिकभेदपरत्वेन शङ्कितुमप्यशक्यमौक्तभेदश्रुतयः स्मृतयश्च सन्तीत्याह — **परममिति** ॥ न हि मुक्तौ व्यावहारिकभेदो युज्यत इति भावः । एवमात्मभेदे प्रमाणत्रयमुपन्यस्यैतेन घटपटादिभेदे प्रमाणं निरस्तमित्यादिना प्राक् कृतांशङ्कां निराह — **घटपटादीति** ॥ **सुलभ-मेवेति** ॥ नोपपादनसापेक्षं धर्मिप्रतियोगिनोरुभयोरपि प्रत्यक्षयोग्यत्वेन पूर्वशङ्कानवकाशादिति भावः ।

(२८) (मु.) ननु केवलानुमानान्नेश्वरप्राप्तिः । शास्त्रैकसमधिगम्यत्वा-दीश्वरस्य । आगममूलत्वे स्वानुपजीवत्वाभावात्कथमनुवादित्वमित्यतः प्राप्त्यन्तरमाह — **यद्वेति** ॥ **अपरिज्ञानादिति** ॥ तात्पर्यापरिज्ञानादापात-प्रतीतिमात्रादित्यर्थः । आधुनिकपुरुषज्ञानात्प्राप्तमर्थं कथमनादिश्रुतेरनुवाद

इत्यत आह — **अस्तीति** । अज्ञानस्यापि प्रवाहतोऽनादित्वादिति भावः ॥ **निषेध इति** ॥ इष्टापूर्तं मन्यमाना इति शेषः । अत्र साक्षान्निषेधश्रवणेऽपि निन्दार्थवादाद्गम्यत इति ज्ञेयम् । नन्वियं प्राप्तिः श्रुत्यर्थापरिज्ञानादेवेति कुतः शास्त्रादितोऽपि सम्भवादिति चेन्न । यामिमां पुष्पितां वाचं प्रवदन्ति विपश्चित इति समारव्यानात् । विषयव्याप्त्यर्थं प्राप्त्यन्तरमाह — **अथवेति** ॥ समयस्याधुनिकत्वात्कथमेतदित्याशङ्क्योक्तं प्रवाहत इति । एके शून्यवादिन इदमग्रेऽस्य जगतः पूर्वमेवाद्वितीयमसच्छून्यमेवासीत्तस्मादसतः सज्जगदासीत् । अजायतेत्याहुः । हे सोमार्ह कुतः कारणादेवं स्यादिति होवाच गुरुः शिष्यं प्रति कथमसतः सज्जायेतेति भावेनेत्यर्थः । किञ्च भेदाभेदवाक्ययोः पौर्वापर्यनियमाभावाद्यत्तच्छब्दभावद्भेदवाक्ये विधेयान्तर-श्रवणात् । भेदाभेदवाक्ययोरसन्निहितत्वाद्भेदस्याङ्गीकृतार्थान्तरेण सहपाठाच्च नानुवादनिषेध इति भावः । यच्चोक्तं सिद्धानुवादकत्वाद्भेदवाक्यं दुर्बलमिति । तन्न । ब्रहुप्रमाणसंवादस्य दाढर्यहेतुत्वेन गुणत्वात् । एतेन भेदवाक्यस्य वैयर्थ्यमिति निरस्तम् । व्यर्थत्वेऽपि तदर्थस्य सत्यत्वाविरोधाच्च न दोषः । वस्तुतस्त्वनुवादित्वेऽपि न वैयर्थ्यम् । अधिकारिभेदेन प्रवृत्त-समानार्थकशाखान्तरे व्यभिचारात् । अधिकारिभेदेनाप्रवृत्ते सतीति विशेषणे त्वसिद्धिः । यस्य वादिमत्या प्रत्यक्षं भेदनिश्चयग्रहश्च नेष्टे तं प्रति प्रवृत्तत्वात् । किञ्च मा हिं स्यात्सर्वा भूतानीति वाक्ये व्यभिचारः । कस्यापि सर्वहिंसाप्रसक्त्यभावात् । एकदेशेऽपूर्वताऽस्तीति चेत् । समं ममापि सर्वभेदस्य प्रत्यक्षाप्राप्तत्वात् । अपि च सौप्तिकसुखानुभवसिद्धानुवादे आनन्दं ब्रह्मण इति वाक्ये व्यभिचारः । तस्यैव त्रैकालिकत्वविधानार्थं तदिति चेत् । समं प्रकृतेऽपि । उक्तरीत्या भेदप्रत्यक्षस्य

श्रुत्युपजीव्यत्वादिति भेदस्य सत्यत्वेऽसन्दिग्धश्रुतिमपि पठति — **परममित्यादिना** ॥ नन्वत्र साम्यादिरेवोच्यते न च भेदः । न च तद्व्यापकोक्त्या तदनुमातुं शक्यत इति वाच्यम् । तर्ह्यागमतयोदाहरणानुपपत्तिरिति चेन्न । तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं सादृश्यमिति भेदगर्भत्वात् । न च तन्निष्ठत्वमेव लक्षणमस्त्विति वाच्यम् । स्वस्यापि स्वसादृश्यव्यवहारापत्तेश्च । अत एव गगनं गगनाकारमित्यादौ सदृशान्तरनिषेध एव तात्पर्यमिति वदन्ति । ननु तथाऽपि भवतां ब्रह्मसादृश्यं सिद्धान्तविरुद्धमिति चेन्न । `जगद्व्यापारवर्ज'मिति निर्णायकानुसरणसङ्कोचकरणात् । एवञ्च सहभावस्यापि तद्भिन्नत्वे सति तत्क्रियायोगित्वमिति ॥ **भेदगर्भ इत्याद्या इति** ॥ **परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते** । न यत्र माया किमुतापरे हरेरनुव्रत इत्यादिरूह्यम् । न चेयं सगुणमुक्तिरिति वाच्यम् । मुक्तिद्वैविध्ये मानाभावात् । स्वक्रियान्यथाऽनुपपत्त्या कल्पने त्वन्योन्याश्रयः । अस्तु वा तद्वैविध्यं साम्यवाक्ये पुण्यपापे विधूयेति निरञ्जनत्वोक्तेः । उपसत्तिवाक्ये स्नेहरूपेणेति मिथ्याकारे प्रहाणोक्तेः । अन्त्येन यत्र मायेति मायाभावोक्तेश्च न सगुणमुक्तिपरत्वमिति । एवमात्मभेदं प्रसाध्य जडभेदं साधयति — **घटपटेति** ॥ नायं घट इति प्रत्यक्षमित्यर्थः ।

(२८) (कु.) ॥ **श्रुत्यन्तरेणेति** ॥ इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढा इत्यादिनेत्यर्थः ॥ **मुक्त्यनन्तरमिति** ॥ आविद्यकस्य मुक्तावनुवृत्त्ययोगादित्यर्थः ॥ **सुलभमेवेति** ॥ धर्मप्रतियोगिनोर्योग्यत्वादित्यर्थः ।

(२८) (हु.) ॥ **इष्टापूर्तयोरिति** ॥ `इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः । नाकस्य पृष्ठे सुकृते तेऽनुभूत्वा इमं लोकं हीनतरं वा

विशन्तीत्याथर्वणश्रुतेरयमर्थः । इष्टं यजनं पूर्तमन्नदानादि । इष्टपदोत्तर`मन्येभ्योऽपि दृश्यत' इति दीर्घ इति विष्णुतत्त्वनिर्णयटीकायामुक्तम् । अन्यच्छ्रेयः परमात्मप्राप्तिलक्षणमोक्षरूपश्रेयो ब्रह्म वा वेदयन्ते स्वार्थे णिच् विन्दन्ति । नाकस्य पृष्ठे स्वर्गस्य स्थाने सुकृते सुकृतसाध्येऽनुभूत्वा सुखमनुभूय । इमं लोकमित्यादि । वाशब्दो व्यवस्थितविकल्पे । विष्णौ राजादिवत्सर्वोत्तमत्वज्ञानपूर्वकं[1] तद्विशेषापरिज्ञानपूर्वकं[2] च काम्यकर्म कृत्वाऽन्यदेवतोद्देश्यककर्माप्यन्ततो विष्णावेव समर्पयन्ति । ते स्वर्गं भुक्त्वेमं लोकं मानुषलोकं आविशन्ति प्राप्नुवन्ति । अन्येषां भगवत्साम्यमन्येभ्यो भगवतो हीनत्वमित्यादिज्ञानिनो दुर्योधनप्रमुखा अयोग्या दक्षिणा तदर्पितानामाचार्याणां द्रोणादीनां तेजसा स्वर्गं भुक्त्वा तदनन्तरं हीनतरं तमादिरूपं पुनरुत्थानशून्यं क्रमादाविशन्तीति । उक्तं ह्येतदाथर्वणभाष्ये –

'सर्वेभ्योऽपि परं विष्णुं राजवद्यस्तु मन्यते ।
याजी स मानुषं याति साम्यहीनत्ववित्तम' इति ।

अत्र विशेषो गीतातात्पर्यनिर्णयतोऽवगन्तव्यः । तथा चेष्टापूर्तादेः परमपुरुषार्थत्वज्ञानिनां निन्दाद्वारा श्रुतिः परमपुरुषार्थत्वं निषेधति । अर्थवादस्य विधिनिषेधावन्तरापर्यवसानायोगात् । निषेधश्च प्राप्तिपूर्वकः । प्राप्तिर्वक्तव्या सा च प्रत्यक्षानुमानाभ्याम् । स्वर्गादेस्तन्निष्ठपुरुषार्थताया-स्तज्जनकत्वादीनामतीन्द्रियत्वे प्रत्यक्षाप्रसक्तेः । पक्षसाध्यहेत्वादीनां ग्रहीतुमशक्यत्वेनानुमानस्याप्यप्रवृत्तेः । तथा च `यन्न दुःखेन सम्भिन्न'-मित्यादिवाक्यैः स्वर्गनिरूपणपरैर्ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादि-

---

[1] `राजादिसर्वोत्तमत्व' मु. २. `तद्विशेषापरिपूर्वकं ज्ञानं' मु.

वाक्यैश्च तात्पर्यमविदुषां यागादिसाध्यस्य स्वर्गादेः परमपुरुषार्थत्वभ्रमरूपा प्राप्तिर्वर्तते । तद्विषयीभूतं यथा श्रुत्या निषिध्यते तथेहाप्यस्त्विति भावः ॥ **प्रवाहतोऽनादिरूपयेति** । इदं चागन्तुकं कथमनादिरूपया श्रुत्याऽनूद्यत इति शङ्कानिरासाय । प्रवाहतोऽनादित्वं च यादृशरूपाश्रयाधिकरण[काल]-सामान्यं यादृशरूपाश्रय प्रतियोगिकप्रागभावध्वंसवत्तादृशरूपाश्रयत्वं तेन रूपेण प्रवाहतोऽनादित्वमिति रूपघटितं निर्वाच्यम् । मन्दारमञ्जर्युक्तस्यैक-प्रवाहेत्यादिलक्षणवाक्यस्योक्तार्थे पर्यवसानमन्यत्र प्रदर्शितमस्माभिर्ग्रन्थ-गौरवभयान्नेह प्रदर्शितं सुधीभिः स्वयमूह्यम् ॥ **तद्धैक आहुरिति** ॥ छान्दोग्योपनिषदि षष्ठेऽध्याये सदेव सौम्येदमग्र आसीदेक एवाद्वितीयमिति स्वमतमुक्त्वा तद्धैक आहुरित्यादिना बौद्धसिद्धन्तोऽनूद्यते । `कुतस्तत्खलु सौम्यैवं स्यादि'त्यादिना तन्निषेधार्थम् । तथेहापि प्रवाहतोऽनाद्यद्वैतमप्राप्त-जीवेश्वरैक्यादिकम् । [1]तादात्म्यनिषेधरूप(भेद)बोधकश्रुत्या निराक्रियत इत्यर्थः । [2]अत्र यद्यपि सर्वेषां प्राणिनां देहगेहादिकं प्रत्यपरायत्त-स्वामित्वभ्रमो वर्तते । तस्य च भावाभावसाधारणधर्मत्वाद्भगवत्तादात्म्य-भ्रमरूप एवेति चतुर्थेऽपि प्राप्तिः । प्रत्यक्षरूपा विष्णुतत्त्वनिर्णये आचार्यैरेवोपपादिता । तथाऽपि साति[3]स्फुटतया तादात्म्यभ्रमरूपतया ज्ञातुं शक्या [4]बहूपपादनसापेक्षेत्याशयेन तिसृणामेवोपपादनं कृतमिति ज्ञातव्यम् ॥ **आशङ्कितुमपि शक्या इति** ॥ मुक्तौ विद्यमानानां बाध्यत्वायोगादिति

---

[1] अत्र वाक्यादौ `तादात्म्यनिषेधः' इति पदं पठ्यते ।

[2] इतः वाक्यद्वयं मु.पाठे `बाध्यत्वायोगादिति भावः' इत्यस्यानन्तरं पठ्यते ।

[3] `सा न' मु.

[4] इत आरभ्य अग्रिमविद्यमानामितिपदपर्यन्तं हु.पाठे नास्ति ।

भावः ॥ **घट इत्यादि** ॥ अद्वैतिनां मध्ये मायावादिमते भेदस्य भ्रान्तिगोचरतयाऽङ्गीकृतत्वाद्भेदमात्रसाधने सिद्धसाधनता । भास्करमते सद्रूपत्वेन घटपटादीनामप्यभेद[1] एव घटत्वादिरूपेण तु भेद इत्यङ्गीकृतत्वेन तन्मात्रसाधने सिद्धसाधनता । उभाभ्यां तादात्म्यासामानाधिकरण्यस्य[2] भेदस्य कुत्राप्यनङ्गीकृतत्वादत्यन्ताभेदसाधने[3] चाप्रसिद्धविशेषणता घटपटादीनां त्वतात्त्विकस्वरूपं[4] ब्रह्मैवेति मायिभिरङ्गीकृतत्वाद्भेदे पारमार्थिकविशेषणं मायावादिनो[ना]ऽप्रसिद्धविशेषणतासम्पादकं भास्करस्य सिद्धसाधकसम्पादकमिति भेदसाधनमुपेक्ष्य तात्त्विकतादात्म्याभाव एव साधितः । स चाद्वैतवादिनामसम्मतमेवेति न सिद्धसाधनम् । यद्यपि तादात्म्यत्वावच्छिन्नाभावरूपसामान्याभावसाधनेनैव निर्वाहे तात्त्विकत्वं विशेषणं तादात्म्येनार्थवदिति भाति । तथाऽपि सेत्स्यमानस्य तदभावः पारमार्थिक एव संसिध्यति । न्यूनसत्ताकस्य तदभावस्य तद्विरोधित्वाभावेनानुमितेस्तत्संशयनिवर्तकत्वानुपपत्तेरिति द्योतनाय । यद्वा प्रातिभासिकतादात्म्यमादाय परेण साध्याभाव(रूप)तादात्म्यं प्रति हेत्वभावस्य व्यापकताभङ्गाद्व्यतिरेकव्याप्त्यनुपपत्तिशङ्कने आरोपितस्यासत्त्वेन तदधिकरणाप्रसिद्ध्योक्तशङ्कनमयुक्तमित्याद्युपपादनप्रयासविद्वेषेण साध्यीभूताभावप्रतियोगिकोटौ तन्निवेश इति ज्ञेयम् । यद्यपि वास्तवपदवत्तादात्म्यं ब्रह्मस्वरूपमेव परसिद्धं तच्च घटादावपि परैरङ्गीकृतम् । अन्यथैतद्ग्रन्थसमाप्तिभागस्थपरानुमानद्वयापत्ति(प्रवृत्ति)प्रसङ्गात् । तथा च कथं व्यतिरेके

---

[1] `घटपटादीनां मध्ये भेद' मु.

[2] `तादात्म्यासमानाधिकरणस्य' इति पाठेन भाव्यमिति भाति ।

[3] `-अत्यन्तभेद-' ह्.  २. `तात्त्विकस्वरूपं' मु.

व्याप्तिग्रह इति भाति । तथाऽपि घटे व्यतिरेकसहचारस्य निश्चयादन्यत्र घटे तत्सन्देहेऽपि घटो यदि पटात्मा स्यात्तत्कार्यकारी स्यादित्याद्यनुकूलतर्कबलात्तमवधूय व्याप्तिनिश्चयो भवतीति द्रष्टव्यम् । अभावसाध्यककेवलव्यतिरेकित्वान्नात्राप्रसिद्धविशेषणतेति । अनुपदमप्रसिद्धविशेषणं त्विति मूल एव व्यक्तम्[1] । अतस्तच्छङ्कानवकाशः ।

(२८) (का.) एवमनुमानादद्वैतप्राप्तिमभिधायाऽगमादपि तामाह — **यद्वेत्यादि** ॥ श्रुतिप्राप्ताद्वैतस्य श्रुत्यन्तरेण प्रतिषेधे श्रुतेरप्रामाण्यापत्तिरतः ॥ **श्रुत्यर्थापरिज्ञानादिति** ॥ श्रुतितात्पर्यविषयार्थापरिज्ञानात् । तत्सादृश्यादिरूपार्थे श्रुतितात्पर्यापरिज्ञानादिति यावत् ॥ **यथेष्टापूर्तयोरिति** ॥ स्वर्गकामो यजेतेत्यादिश्रुतितात्पर्यविषयस्वार्गपदार्थपरमात्मज्ञानसाधनत्वापरिज्ञानप्राप्तस्य अनित्यसुखस्वरूपस्वर्गसाधनत्वस्य **`इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढा'** इत्यादौ प्रतिषेध इत्यर्थः । **इष्टं** यजनं **पूर्तम्** अन्नदानादि ।

सयुक्तिकशब्दाभासादप्यद्वैतप्राप्तिमाह — **अथवेति** ॥ **दुःशास्त्रपरम्परया** पूर्वपूर्वोपजीव्युत्तरोत्तरमायिशास्त्रेण । ननु आधुनिकशास्त्रप्राप्ताद्वैतं कथमनादिवेदेन निषिध्यत इत्यत आह — [2]**प्रवाहतोऽनादिरूपयेति** ॥

---

[1] `वक्तव्यम्' मु.

[2] ॥ प्रवाहतोऽनादित्वं चेति ॥ अत्र श्रीप्रह्लादाचार्याः - कर्मणां प्रवाहतोऽनादित्वं चेत्थंकर्मणां य एकः प्रवाहः तन्मध्ये पतिताः अनेके प्रवाहिणः कर्माणि । तादृशकर्मणां प्रागभावश्च इदानीं विनष्टानां वर्तमानानां तथा भाविनां च कर्मणां प्रागभावाः भवन्ति । एते च प्रागभावाः विनाशिनोऽपि स्वरूपतोऽनादयः । तथा च तदृशप्रागभावविशिष्टः यो यः कालो भवति तत्र कस्यचन कर्मणः ध्वंसः विद्यते । अत एव च तादृशकर्मप्रवाह-घटक-

प्रवाहतोऽनादित्वं चैकप्रवाहमध्यपतितानेकप्रवाहिप्रतियोगिकप्रागभावावच्छिन्नकालावृत्तित्वानधिकरणध्वंसप्रतियोगिप्रवाहित्वमिति **मन्दारमञ्जर्या**मुक्तम् । तत्र च सादिप्रवाहघटकघटादिक्रियायामतिव्याप्तिवारणाय **कालावृत्तित्वानधिकरणेति** कालत्वव्यापकार्थकम् । सादिप्रवाहघटकवस्तुध्वंसस्य च न कालत्वव्यापकत्वम् । तस्य तत्प्रवाहोत्तरयावत्कालवृत्तित्वेऽपि तत्प्रवाहघटकानेकवस्तुप्रागभावावच्छिन्नयावत्कालवृत्तित्वाभावादित्येतल्लाभार्थमवच्छिन्नान्तोपादानम् । न त्वस्य लक्षणघटकत्वमनर्थकत्वात् । [1]**कालत्वव्यापकप्रवाहित्वमित्येवोक्तौ** अनित्यानादि-

---

प्रवाहिप्रतियोगिकध्वंसस्य तादृशप्रागभावावच्छिन्नकालावृत्तित्वानधिकरणत्वम् । एवं च तादृश प्रागभावविशिष्टकालत्वव्यापकत्वं कर्मध्वंसानामस्तीति तादृशध्वंसप्रतियोगिप्रवाहित्वस्य कर्मसु भावात् कर्मणां प्रवाहतोऽनादित्वम् ॥

सादिप्रवाहघटकानां च प्रवाहिणां न प्रवाहतोऽनादित्वम् । तत्प्रवाहघटकप्रवाहिध्वंसानां तत्प्रवाहोत्तारयावत्कालवृत्तित्वेऽपि तत्प्रवाहप्राक्काले अभावात् । एवं सादिप्रवाहघटकप्रवाहिध्वंसानां कालत्वव्यापकत्वं नास्तीति सूचयितुमेव तादृशप्रागभावावच्छिन्नेति कालविशेषणम् । वस्तुतस्तु कालत्वव्यापकध्वंसप्रतियोगिप्रवाहित्वमात्रं प्रवाहतोऽनादित्वमिति काशिकायां स्पष्टम्। यद्यपि प्रवाहतोऽनादित्वेन स्वीकृतस्य कस्यापि प्रवाहिणः ध्वंसः न कालत्वव्यापकः । उत्पत्तेः प्राक् तद्ध्वंस्याभावात् । अथपि तत्प्रवाहघटकस्य कस्यचन प्रवाहिणः ध्वंसः सर्वस्मिन् काले वर्तत इति तत्प्रवहघटकप्रवाहिध्वंसत्वेन सर्वेषां तादृशप्रवाहिध्वंसानां कालत्वव्यापकत्वसिद्धिरिति भावः ।

[1] ॥ **कालत्वव्यापकप्रवाहित्वमित्येवोक्ताविति** ॥ अत्र श्रीप्रह्लादाचार्याः - अत्र मनोवृत्तीनामिति कामकर्मादीनामप्युपलक्षणम् । मनोवृत्तिप्रवहस्येव कामकर्मादिप्रवाहस्यापि अनादित्वे सत्यनित्यत्वात् । कालत्वव्यापकप्रवाहित्वमात्रस्य प्रवहतोऽनादित्वरूपत्वे चरममनोवृत्याद्यनन्तरं कस्यापि मनोवृत्त्यादेः प्रवाहिणोऽभावात् तस्य

प्रवाहघटकमनोवृत्तीनामसङ्ग्रहात्तादृशध्वंसप्रतियोगित्वपर्यन्तनिवेशः । यद्यप्यनादिप्रवाहघटककामकर्मादिध्वंसानामपि न प्रत्येकं कालत्वव्यापकत्वसम्भवः । तथापि [1]तत्प्रवाहघटकवस्तुध्वंसत्वेन व्यापकत्वं विवक्षणीयमिति ज्ञापनाय प्रवाहिपदम् । यद्यप्येवं न कामकर्मादिध्वंसप्रवाहसङ्ग्रहः । तद्घटकवस्तुध्वंसाप्रसिद्धेः । तथाप्यत्र भावानामेव लक्ष्यत्वान्न दोषः । अभावानामपि लक्ष्यत्वे तत्प्रवाहघटक-प्रवाहिप्रागभावावच्छिन्नकालत्वव्यापकप्रवाहित्वं प्रवाहतोऽनादित्वं बोध्यम् । एतेन यथाश्रुतलक्षणस्यानादिप्रवाहघटकचरमव्यक्तावव्याप्तिः । तद्ध्वंसस्य तत्प्रवाहघटकवस्तुप्रागभावावच्छिन्नकालावृत्तित्वात् । एवं तादृशकालावृत्तित्वानधिकरणत्वस्य तादृशकालवृत्तित्वरूपतया तस्य च सादिप्रवाहघटकवस्तुसाधारणत्वादतिव्याप्तिः । तादृशयत्किञ्चित्कालावृत्तित्वा-

---

प्रवहतोऽनादित्वानुपपत्तिः । प्रवाहिध्वंसस्य कालत्वव्यापकताविवक्षणे तस्य प्रवाहतोऽनादित्वं अनित्यानादिप्रवाहघटकानां सुघटमिति स्पष्टम् ।

[1] ॥ **तत्प्रवाहघटकेति** ॥ अत्र श्रीप्रह्लादाचार्याः - अनादिप्रवाहघटकध्वंसानां तत्प्रवाहघटकप्रवाहित्वेन कालत्वव्यापकताऽस्तीति तेषां सङ्ग्रहाय कालत्वव्यापकप्रवाहित्वमित्येवालम् । तथापि अनित्यानादिप्रवाघटकानां प्रवाहिणां प्रवाहतोऽनादित्वसिध्यर्थं तत्प्रवाहघटकप्रवाहिप्रागभावावच्छिन्नत्वस्य कालविशेषणत्वं आवश्यकम् । अन्यथा तादृशप्रवाहघटकचरमव्यक्तिनाशानन्तरं कस्यपि प्रवाहिणोऽभावात् तादृशप्रवाहघटकानां प्रवाहतोऽनादित्वानुपपत्तिः । तादृशप्रागभावावच्छिन्नत्वस्य कालविशेषणत्वे तु अनित्यानादिप्रवाहघटकप्रवाहिणः तत्प्रवाहघटकप्रवाहिप्रागभावविशिष्टकालावृत्तित्वाभावेन तादृशकालत्वव्यापकप्रवाहित्वोपपत्तिः । तत्प्रवाहघटकव्यक्तिनाशानन्तरकाले कस्यापि प्रवाहिणोऽवृत्तित्वेऽपि तस्य कालस्य तत्प्रवाहघटकप्रवाहिप्रागभावावच्छिन्नत्वाभावान्न कश्चिद्दोषः ।

नधिकरणत्वस्य तादृशयावत्कालवृत्तित्वपर्यवसितस्य विवक्षायामसम्भवः । कस्यापि ध्वंसस्य तादृशयावत्कालावृत्तित्वात् अवच्छिन्नान्तवैयर्थ्यं चेत्यादिकमपास्तम् ।

केचित्तु एकप्रवाहेत्यादिनैकप्रवाहघटकाः यावन्तः प्रवाहिणस्तत्तत्प्रागभावावच्छिन्नकालवृत्तिध्वंसप्रतियोगित्वं विवक्षितम् । तत्र च सादिप्रवाहवारणायावच्छिन्नान्तोपादानम् । तद्घटकवस्तुध्वंसानां च न तद्घटकप्रथमव्यक्तिप्रागभावावच्छिन्नकालवृत्तित्वमित्यदोषः। यद्यपि सामान्यतो यावत्प्रागभावावच्छिन्नकालवृत्तित्वनिवेशेऽपि तद्दोषवारणसम्भवः । तथापि अव्यावर्तकानन्तप्रागभावनिवेशवैयर्थ्यात् तत्प्रवाहघटकप्रवाहिप्रागभावानामेव निवेशः । न चानादिप्रवाहघटकवस्तुध्वंसानामपि प्रत्येकं तादृशयावत्प्रागभावावच्छिन्नकालवृत्तित्वाभावादसम्भव इति वाच्यम् । तत्तत्प्रागभावावच्छिन्नकालवृत्तिवृत्तितत्प्रवाहघटकवस्तुध्वंसत्वाश्रयीभूतध्वंसप्रतियोगित्वस्य विवक्षितत्वात् । न चैवं तत्तत्प्रागभावावच्छिन्नकालवृत्तिवृत्तितत्प्रवाहघटकत्वस्यैव सम्यक्त्वात् ध्वंसप्रतियोगित्वपर्यन्तनिवेशो निष्फल इति वाच्यम् । यथा सन्निवेशेन वैयर्थ्यानवकाशादित्याहुः । एवं च दुःशास्त्राणामप्युक्तरूपानादित्वादनादित एवाद्वैतस्य प्राप्तिसम्भवाद्भेदनिषेध्यत्वोपपत्तिरिति भावः ।

॥ **निषेध इति** ॥ `असदेवे'त्यादिना परमतमनूद्य `**कुतस्त्वि**'त्यादिना निषेध इत्यर्थः । कस्य मतेन प्राप्तं किमत्र निषिध्यत इत्याकाङ्क्षायामाह — **अत्र हीति** ॥ द्वा सुपर्णेत्यादिश्रुतेः पारमार्थिकभेदपरत्वमुपसंहरति ॥ **तस्मादिति** ॥ अद्वैतश्रुतीनामुक्तरीत्या बाधोपपत्तेरित्यर्थः ।

व्यावहारिकभेदपरत्वशङ्कानिराससौकर्यात् श्रुत्यन्तराण्यप्याह —

**परममिति** ॥ `यदा पश्यः पश्यते रुग्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ।'; `यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' ।; `इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागता' इत्याद्या इत्यर्थः ॥ **मुक्त्यनन्तरमिति** ॥ तद्भिन्नत्वे सति तद्धर्मजातीयधर्मवत्त्वस्यैव साम्यादिशब्दार्थत्वात्तद्भिन्नतत्समानदेशत्वस्यैव तत्सहभावरूपत्वात् तस्य च ब्रह्मदर्शनफलत्वेनोक्तस्याविद्यानिवृत्त्युत्तर-भावित्वेनाऽविद्यकत्वासम्भवादिति भावः ।

एवमात्मभेदं प्रसाध्यानात्मभेदमपि व्यवस्थापयति — **घटपटादीति** ॥ **सुलभमेवेति** ॥ धर्मिप्रतियोगिनोः प्रत्यक्षत्वेनोक्तशङ्कानवकाशादिति भावः । अतीन्द्रियभेदे तु पूर्ववदीश्वरप्रत्यक्षमुदाहर्तव्यम् । न च प्रत्यक्षस्य व्यावहारिकविषयकत्वम् । मानाभावात् । अस्यैवार्थस्य व्यावहारिकत्वा-व्यावहारिकत्वयोर्व्याघाताच्च । न च भेदस्य प्रत्यक्षत्वेऽपि तस्य परमार्थसत्त्वे किं मानमिति वाच्यम् । सत्त्वेनैव भेदस्य प्रतीयमानत्वात् । तस्य च बाधाभावेन परमार्थत्वादित्यन्यत्र विस्तरः ।

(२८) (श.) प्रकारान्तरेणापि तत्प्राप्तिं दर्शयति — **यद्वेति** ॥ तत्त्वमसीतिश्रुतेस्तात्पर्यविषयीभूतोऽर्थः `तद्गुणसारत्वत्ताद्व्यपदेश' इति ब्रह्मसूत्रोक्तरीत्या सिंहो देवदत्त इत्यादिवत्तत्सदृशोऽसीति तत्वनिर्णया-द्युक्तरीत्या अतत्वमसीति पदच्छेदेन तद्भिन्नोऽसीति च । तदपरिज्ञान-दशायामैक्यमर्थतया प्रतीयते तदनुवदति नेह नानेति वाक्यमित्यर्थः । श्रुत्यर्थापरिज्ञानेन प्राप्तं श्रुत्यन्तरेण निषिध्यत इत्येतददृष्टचरमित्यत आह — **अस्तीति** ॥ `दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'ति श्रुतितात्पर्यार्थः स्वर्गपदवाच्येश्वरविषयकं निष्कामं कर्म कार्यमिति । तदपरिज्ञानदशायां

प्राप्तमनीश्वरविषयं काम्यकर्म `इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढा' इत्यनूद्य `नाकस्य पृष्ठे सुकृते तेऽनुभूत्वा इमं लोकं हीनतरं वाविशन्ती'ति निराक्रियते । निन्दायाः प्रतिषेधे तात्पर्यात् । नचैवंविधस्य कर्मणोऽन्यतः प्राप्तिरस्तीति भावः । इष्टं यजनम् । पूर्तम् अन्नदानादिकम् । प्रकारान्तरेणाद्वैतप्राप्तिं दर्शयति — **अथवेति** ॥

ननु अनादिना वेदेनाऽऽधुनिकवादिकृतशास्त्रपरम्परया प्राप्ताद्वैतनिषेधः कथं क्रियत इत्यत उक्तमनादिरूपयेति ॥ **स्वरूपानादित्वायोगादुक्तं प्रवाहत इति** ॥ यथोक्तम् । `अनादिकालतो वृत्तास्समया हि प्रवाहत' इति । दुःशास्त्रपरम्परया प्राप्तस्य श्रुत्या निषेधो न दृष्ट इत्यत आह — **अस्तिचेति** ॥ तदेव दर्शयति — **तद्धेति** ॥ तत् तत्र जगत्कारणत्वे निरूपणीये । एके शून्यवादिनः । आहुः ह प्रसिद्धम् । किमाहुः । `असदेवेदमग्र आसीत्' अत्रासच्छब्देन शून्यमुच्यते । स्वकार्यं प्रति अन्यन्नास्तीत्येके मन्यन्ते ।[1] शून्यातिरेकेण शून्यस्य सहकारिणं द्वितीयं प्रतिषेधति ॥ **अद्वितीयमिति** ॥ विप्रतिपत्त्यन्तरमाह — **तस्मादिति** ॥ **तस्मादसतः सज्जगदुत्पद्यत इति** ॥ एवमनूदितं पक्षं दूषयन्ति ॥ **कुत इति** ॥ तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । हे सोम्य कथमेवमसदासीदिति कुत एवं स्यात् न कुतोऽपि । व्याहतेः प्रमाणाभावाच्चेति होवाच । विप्रतिपत्त्यन्तरं दूषयति — **कथमिति** ॥ कथमसतः सदुत्पद्येत । अदृष्टत्वादसतः कारणत्वानुपपत्तेरित्यर्थः । इत्यादौ निषेधोऽस्तीति सम्बन्धः । अत्र केषां मतेन प्राप्तं किं निषिध्यत इति स्फुटमप्रतीतेराह — **अत्रेति** ॥ **बौद्धेति** ॥ बौद्धैकदेशिमाध्यमिकेत्यर्थः । उपसंहरति ॥ **तस्मादिति** ॥ उक्तरीत्या व्यावहारिकत्वाभावादनुवादकत्वा-

---

1 `स्वकार्यपतित मन्यन्नास्तीत्येकेमन्यन्ते ।' मु.

भावाच्चेत्यर्थः । उदाहृतभेदश्रुतेर्व्यावहारिकभेदपरत्वशङ्कानिरासप्रयासगौरवमिति मन्वानो व्यावहारिकभेदपरत्वशङ्कानास्पदभेदश्रुतीरुदाहरति ॥ **परममित्यादिता** ॥ यदा पश्य इति श्रुतेरयमर्थः । पश्यतीति पश्यो जीवः । सुवर्णवर्णं जगत्कर्तारं तन्नियामकं चतुर्मुखोत्पादकं परमपुरुषं यदा साक्षात्करोति तदाऽपरोक्षज्ञानी स जीवोऽनिष्टं पुण्यं पापं च विनाश्य निर्लेपस्सन् स्वयोग्यज्ञानानन्दादिना परमपुरुषस्य साम्यं यातीति । `यो वेद'ति श्रुतेश्च योऽधिकारी हृदयगुहायां परमे व्योम्नि निहितं ब्रह्म वेद स विपश्चिता ब्रह्मणा साकं स्वयोग्यान्सर्वान्कामानश्नुत इत्यर्थः । **इदं ज्ञानमिति** गीतावाक्यस्य च इदं पूर्वोक्तज्ञानं समाश्रित्य ज्ञानानन्दादिना मम समानधर्मत्वं प्राप्ताः सृष्टौ न जायन्ते प्रलये न व्यथन्तीत्यर्थः । अत्रोक्तसाम्यसहभावसाधर्म्याणां भेदेन विनाऽयोगात्तत्सिद्धिरिति भावः ॥ **मुक्त्यनन्तरमिति** ॥ पुण्यपापविधूननस्य सर्वविषयभोगस्य सृष्टावजननादेश्च संसारेऽभावान्मुक्त्यनन्तरं भेदप्रतिपादकत्वम् । अविद्यानिवृत्तिरूपमुक्तावनुवृत्तस्य चाविद्यातत्कार्यान्यतरत्वव्याप्तव्यावहारिकत्वं त्वया नाङ्गीकृतमिति भावः ।

**(२९) अनुमानं च घटः पटप्रतियोगिकतात्त्विकतादात्म्याधिकरणं न भवति । प्रतियोगिसामानाधिकरण्यावच्छेदकानवच्छिन्नपटनिष्ठात्यन्ताभावप्रतियोगिधर्माधिकरणत्वात् (धर्मवत्त्वात्) व्यतिरेकेण पटवत् । अप्रसिद्धविशेषणत्वं चात्मभेदसाधकानुमान इव परिहर्तव्यम् । व्यावहारिकभेदमात्रेण पक्षदृष्टान्तभावश्च घटपटयोरुदाहरणीयः (उपपादनीयः)।**

(२९) (भ.) ॥ **अनुमानं चेति** ॥ प्रमाणमिति शेषः ॥ **प्रतियोगीति** ॥

प्रतियोगिसामानाधिकरण्यावच्छेदकेनानवच्छिन्नो यः पटनिष्ठात्यन्ताभावस्तत्प्रतियोगिभूतघटत्वरूपधर्माधिकरणत्वादित्यर्थः । अत्र प्रतियोगिपदं तत्समानप्रधानपरम् । अत्यन्ताभावप्रतियोगिनोऽसत्त्वस्य व्यवस्थापितत्वेन घटस्य तदधिकरणत्वायोगादित्यर्थः ॥ **व्यतिरेकेण पटवदिति** ॥ पटे पटतादात्म्यस्य घटत्वानधिकरणत्वस्य च सत्त्वेन साध्यसाधनयोरभावादिति भावः ॥ **अप्रसिद्धविशेषणत्वं चेति** ॥ यद्यपि मायावादिना प्रपञ्चमिथ्यात्वं वदता घटपटयोरतात्त्विकतादात्म्यं नाङ्गीक्रियत इत्यप्रसिद्धविशेषणत्वशङ्काप्रसरो नास्त्येव । तथाऽपि जीवब्रह्मणोरैक्यं सर्वप्रमाणविरुद्धमङ्गीकुर्वत इदमपि सम्भावितमिति तन्मतस्यातीवहेयताज्ञापनायेयंशङ्केति द्रष्टव्यम् ॥ **आत्मभेदसाधकानुमान इवेति** ॥ घटः पटप्रतियोगिकतात्त्विकतादात्म्यापन्नं न वेति संशयासम्भवेऽपि पटप्रतियोगिकतादात्म्यं घटेऽस्ति न वेति सन्देहमात्रेण घटस्य पक्षत्वोपपत्त्या हेतोः पक्षधर्मतोपपत्तेरिति वा केवलव्यतिरेकिणि साध्याभावस्य साधनाभावेन व्याप्तिग्रहादत्र साध्याभावस्य पटतादात्म्यस्य पटे प्रसिद्धत्वेन व्याप्तिविघटकत्वाभावादिति वा परिहरणीयमित्यर्थः । ननु घटपटयोर्भेदसिद्धेः प्राक् कथं पक्षदृष्टान्तभाव इत्यत आह — **व्यावहारिकभेदेति** ॥ अन्यथा तव कुत्रापि पारमार्थिकभेदाभावेन पक्षदृष्टान्तघटितानुमानप्रयोग एव क्वचिदपि न स्यादिति भावः । अत्र व्यावहारिकेति पराङ्गीकारसूचनार्थम् । वस्तुतस्तु भेदमात्रेणैवेत्येतावदेवोपयुक्तम् । तेन व्यावहारिकभेदस्य भवद्भिरनङ्गीकारात्कथं तदुक्तिरिति शङ्कानवकाश इति ध्येयम् ।

(२९) (मु.) ॥ घट इति ॥ व्यावहारिकसत्तातादात्म्यानङ्गीकारे

सिद्धसाधनतावारणाय तात्त्विकेति ॥ **प्रतियोगीति** । प्रतियोगिना सामानाधिकरण्यस्यावच्छेदको यो धर्मो निष्प्रकारकचैतन्यापरोक्षोत्पत्तिपर्यन्तं स्वाधिकरणे स्वप्रतियोगिप्रतीत्यविरोधित्वरूपो धर्मस्तदनवच्छिन्नस्तद्रहितो यः पटनिष्ठात्यन्ताभावस्तत्प्रतियोगिकम्बुग्रीवादिधर्माधिकरणत्वादित्यर्थः । अयं भावः । परेण हि सर्वमिथ्यात्ववादिना घटत्वादीनां पटादाविव स्वाधिकरणघटादावप्यभावोऽङ्गीक्रियत एव । परन्तु घटत्वस्य पटे योऽत्यन्ताभावः स तत्प्रतियोगिकसमानाधिकरणः । अतः स्वाधिकरणे प्रतियोगिप्रतीतिं निरुणद्धि । पटे तु प्रतियोगिसमानाधिकरणः । अत एव घटे घटत्वाभावसत्त्वेऽपि घटत्वप्रतीत्यविरोधः । इयं प्रतियोगिप्रतीतिर्निष्प्रकारकब्रह्मापरोक्षपर्यन्तमेव । उत्पन्ने तु तस्मिन्नयमपि प्रतियोगिविरोध्येव भवति । एवञ्च प्रतियोगिसामानाधिकरण्यावच्छेदको यो धर्मः स्वप्रतियोगिप्रतीत्यविरोधित्वरूपस्तद्रहितो **योऽत्यन्ताभावस्तत्प्रतियोगिघटत्वादिधर्माधिकरणत्वं** हेतुरिति ॥ पटनिष्ठेत्येवोक्ते पट एव व्यभिचारः । परेण स्वात्यन्ताभावसमानाधिकरणत्वं मिथ्यात्वमित्यङ्गीकुर्वता पटत्वादेरपि पटनिष्ठात्यन्ताभावप्रतियोगित्वाङ्गीकारात् । अतः प्रतियोगिसामानाधिकरण्यावच्छेदकानवच्छिन्नेत्युक्तम् । पटे पटत्वात्यन्ताभावस्तु स्वाधिकरणप्रतीत्यविरोधित्वरूपोक्तधर्मावच्छिन्न एव । घटत्वात्यन्ताभावस्तु न तथा । न च घटे पटत्वादिप्रतीतिरपि भ्रमरूपा सम्भवतीति तस्यापि प्रतियोगिसामानधिकरण्यावच्छेदकानवच्छिन्नत्वं नास्त्येव । न च प्रतीतिः प्रमाकारा विवक्षितेति घटे घटत्वप्रतीतिः प्रमात्वानङ्गीकारादिति वाच्यम् । प्रतीतेर्ब्रह्मज्ञानेतरज्ञानाबाध्याया एव विवक्षितत्वात् । प्रतियोग्यसमानाधि-

करणेत्येवोक्ते[1] पट एव व्यभिचारः । पटत्वात्यन्ताभावस्य पट एव प्रतियोग्यसमानाधिकरणत्वस्य वक्तुं शक्यत्वात् । तथा हि । प्रतियोग्यसमानाधिकरणत्वं हि प्रतियोगिसमानाधिकरणत्वाभावः । प्रतियोगिसमानाधिकरणत्वं प्रत्यभावोऽन्य एव[2] । एवञ्च प्रतियोगिसमानाधिकरणस्याप्यभावस्य[3] प्रतियोगिसमानाधिकरणान्तरगतप्रतियोगिसमानाधिकरणत्वरूपधर्मराहित्यं युज्यत[4] एव । अतः प्रतियोगिसामानाधिकरण्यावच्छेदकानवच्छिन्नेत्युक्तम् । एवञ्चाभावान्ततरगतप्रतियोगिसमानाधिकरणत्वस्याभावेऽपि प्रतियोगिसामानाधिकरण्यावच्छेदकत्वं नास्तीति नं व्यभिचारः । तत्र प्रतियोगिपदं प्रतियोगितावच्छेदकानवच्छिन्नपरम् । तेन प्रतियोगिसामानाधिकरण्यस्यापि प्रतियोगिविशेषसामानाधिकरण्यावच्छेदकानवच्छिन्नत्वसम्भवाद्यभिचार इति निरस्तम् । यद्वा पटनिष्ठसंयोगस्य स्वात्यन्ताभावसामानाधिकरणत्वेन तद्वति पटे व्यभिचारवारणाय प्रतियोगिसामानाधिकरण्यावच्छेदकानवच्छिन्नेति विशेषणम् । ननु घटपटोर्धर्मिसत्तासमानसत्ताकभेदः परेणाङ्गीक्रियत एवेति किं तत्साधनेन । न च पारमार्थ्यसाधनार्थं यत्नः । धर्मिणामेव तस्य साध्यत्वात् । एकाधिष्ठानाध्यस्तत्वमेव जडानामैक्यमिति तन्मतम् । न च भेदसाधनप्रसङ्गाच्छिष्यं प्रतीदमुच्यत इत्युत्तरं मायावादिरीत्यैव ग्रन्थचलनाच्छिष्यं प्रति सिद्धसाधनत्वान्नेति चेन्न । घटः पटतादात्म्याधिकरणं न भवतीत्यस्य पटारोपाधिष्ठानाध्यस्तो न भवतीत्यर्थकत्वात् ।

---

1 `प्रतियोग्यसमानाधिकरणे' मु. २. `प्रत्यभावमन्यान्यदेव' मु.

3 `प्रतियोगिसमानाधिकरणत्वं चान्त्यस्याप्यभावस्य' मु.

4 `त्यज्यत' मु.

हेतुवाक्यस्यापि पटधर्मात्यन्तविलक्षणधर्माधिकरणत्वादिति निष्कृष्टार्थः । अत्यन्तविलक्षणयोरेकाधिष्ठाने आरोपासम्भवादिति भावः । यद्वा वाचारम्भणमित्याद्यर्थकत्वेन यज्जडैक्यं तेनाङ्गीकृतं तदभाव एवात्र साध्यत इत्यदोषः । ननु सर्वपदार्थानामैक्याङ्गीकारादप्रसिद्धविशेषणतेत्यत आह — **अप्रसिद्धेति** ॥ व्याप्त्याद्यविघटकत्वेनेति शेषः । एतदनुमानात्पूर्वं जडभेदासिद्धेः पक्षदृष्टान्तानुपपत्तिरित्यत आह — **व्यावहारिकेति** ॥ असत्प्रतियोगिकवैलक्षण्येन भेदस्य साधनसाधनाङ्गत्वम् । अन्यथाऽयं पट एतत्तन्तुनिष्ठ इत्यादावपि समानमिति भावः ।

(२९) (कु.) ॥ **अनुमानं चेति** ॥ घटपटभेदे प्रमाणमिति शेषः । अभावस्य साध्यत्वान्न साध्याप्रसिद्धिर्दोष इत्याह — **अप्रसिद्धविशेषणत्वं चेति** ॥ प्रतियोगिसामानाधिकरण्यावच्छेदकेनावच्छिन्नः पटनिष्ठो योऽत्यन्ताभावस्तत्प्रतियोगी यो धर्मो घटत्वादिस्तदधिकरणत्वं घटत्वस्य तदा यदि घटत्वादिर्घटवृत्तिधर्मः पटे न स्यात् । तत्तदपि तदा यदि तयोः पारमार्थिको भेदस्त्वद्याप्यसिद्धः ।

(२९) (हु.) ॥ **प्रतियोगीत्यादि** । प्रतियोगिपदं स्वप्रतियोगिपरम् । अन्यथा तस्याव्यावर्तकतापत्तेः । अनवच्छिन्नान्तमत्यन्ताभावविशेषणम् । सामानाधिकरण्यं किञ्चिन्निष्ठं ग्राह्यम् । न तु हेतुशरीरनिविष्टात्यन्ताभावनिष्ठम्[1] । स्वमते सर्वत्र न्यायमते च व्याप्यवृत्त्यभावे प्रसिद्धेः । तस्य सामानाधिकरण्यस्य योऽवच्छेदक उभयाधिकरण्यं, घटे गगनाभावे[2] घटत्वसामानाधिकरण्यं न पट इति प्रतीतेः । गगनाभावनिष्ठघटत्वसामानाधिकरण्यं घटावच्छेद्यं न पटावच्छेद्यमिति तदभिलापवाक्यार्थः ।

---

[1] `शरीरनिष्ठात्यन्ताभावनिष्ठम्' मु.     २. `उभयाभावधिकरण्यं घटगगनाभावे' मु.

पटे गगनाभावे न घटत्वसामानाधिकरण्यमित्यत्र तु गगनाभावनिष्ठघटत्वसामानाधिकरण्याभावः पटावच्छेद्य इति इदं सार्वभौमेनाङ्गीकृतम् । प्रतियोग्यसमानाधिकरणयत्समानाधिकरणेत्यादिसिद्धान्तलक्षणे मणिकृताङ्गीकृतत्वात् । अयं चात्र ग्रन्थस्तदनुसारेण प्रवृत्तः । घटत्वात्यन्ताभावप्रतियोगिघटत्वसामानाधिकरण्यं यद्गगाभावनिष्ठं[1] तदवच्छेदकः पटो न, किन्तु घट एव । तदनवच्छिन्नपटनिष्ठेत्यत्र पटवृत्तित्वविशिष्टेऽभावेऽनवच्छिन्नत्वस्य विशेषणत्वे फलतो पट[घट]निरूपिताधेयतायां घटत्वा[पटत्वा]भावनिष्ठायां पटत्वसामानाधिकरण्यरूपायां विशेषणं पर्यवस्यति । घटत्वाभावे तस्याव्यावर्तकत्वात् । तथा च स्वप्रतियोगिसामानाधिकरण्यावच्छेदकानवच्छिन्नपटनिरूपिताधेयतावदभाव इत्यर्थः । तादृशश्च घटत्वात्यन्ताभावस्तत्प्रतियोगिघटत्वरूपधर्मवत्त्वं घटे [हेतौ] वर्तत इत्यर्थः । अस्य प्रयोजनमुत्तरग्रन्थे स्फुटीभविष्यति । घटपटसंयोगादिकमव्याप्यवृत्त्यभावप्रतियोगिनमादाय व्यभिचारवारणाय चेदम् । घटपटसंयोगात्यन्ताभावस्य घट[पट]निष्ठत्वेऽपि तन्निष्ठसंयोगरूपप्रतियोगिसामानाधिकरण्यं प्रति पटस्यावच्छेदकत्वात्तन्निष्ठतदत्यन्ताभावमुपादाय पटादौ व्यभिचारः । सामानाधिकरण्यस्याव्याप्यवृत्तित्वानङ्गीकर्तृदीधितिकृद्रीत्या तु प्रतियोगिसामानाधिकरण्येत्यादेः प्रतियोगिसामानाधिकरण्यानिरूपकनिरूपितपटनिरूपिताधेयतेत्यर्थः[2] । किञ्चिन्निष्ठप्रतियोगिसामानाधिकरण्यनिरूपकत्वं प्रतियोग्यधिकरणस्यैवेत्युक्तविशेषणेन स्वप्रतियोग्यनधिकरणपटनिष्ठात्यन्ताभावप्रतियोगि-

---

[1] `यद्गगनत्वाभावादिनिष्ठं' मु.

[2] `प्रतियोगिसामानाधिकरण्यानिरूपकानिरूपिताधेयतेत्यर्थः' हु.

धर्मवत्त्वादिति हेतुः पर्यवस्यति । प्रतियोगिवैयधिकरण्ये प्रतियोग्य-धिकरणता हेतुतावच्छेदकसम्बन्धावच्छिन्ना बोध्या । प्रयोजनं स्वयमूह्यम् । केचित्तु प्रतियोगिसामानाधिकरण्यरूपं यदवच्छेदकधर्मस्तदनवच्छिन्न-स्तद्विशिष्टः सन्पटनिष्ठो योऽभाव इत्यर्थः । प्रतियोगिसमानाधि-करणान्यस्याभावविशेषणत्वे वक्ष्यमाणन्यायेन पटत्वाभावादेरतथात्वा-देवमुक्तम् । उक्तवाक्यस्यापि प्रतियोयोग्यनधिकरणपटनिष्ठात्यन्ताभावेत्या-द्युक्तहेतौ पर्यवसानमत इदमपि कथमिति शङ्कानवकाश इत्याहुः ।

(२९) (का.) अत्रैवानुमानान्याह – **अनुमानं चेति** ॥ पटेत्यादेः पटप्रतियोगिकतादात्म्याधिकरणत्वावच्छिन्नप्रतियोगिताकभेदवानित्यर्थः । **तात्त्विकतादात्म्येति** पाठे पटत्वविशिष्टतादात्म्यावच्छिन्नभेदमादाय सिद्धसाधनवारणाय तात्त्विकपदं तदुपलक्षिततादात्म्यनिवेशलाभार्थम् । तदवच्छिन्नव्यावहारिकभेदसिद्ध्याऽर्थान्तरत्वं त्वात्मभेदसाधकानुमानरीत्या परिहरणीयम् ॥ **प्रतियोगीति** ॥ [1]अव्याप्यवृत्तिसंयोगादिकं व्याप्यवृत्ति-

---

[1] ॥ अव्याप्यवृत्तिसंयोगादिकमिति ॥ अत्र श्रीप्रह्लादाचार्याः - पटनिष्ठात्यन्ताभाव-प्रतियोगिधर्माधिकरणत्वमात्रस्य हेतुत्वे पटनिष्ठस्य संयोगस्य योऽत्यन्ताभावः तत्प्रतियोगिसंयोगरूपधर्माधिकरणत्वेन हेतुमति पटे पटप्रतियोगिकतात्विकतादात्म्याधि-करणत्वाभावरूपसाध्याभावेन व्यभिचारः । अतः प्रतियोगिसामानाधिकरण्यावच्छेदका-नवच्छिन्नेति पटनिष्ठात्यन्ताभावविशेषणम् । पटनिष्ठश्च संयोगाभावः प्रतियोगिसमाना-धिकरणः । प्रतियोगिसमाधिकरण्यावच्छेदकं संयोगाभावत्वम् । पटनिष्ठस्य संयोगा-भावस्य च तदनवच्छिन्नत्वाभावात् न तमादाय पटे व्यभिचारः ।

अत्यन्ताभावे पटनिष्ठत्वाविशेषणेऽपि पटे व्यभिचारः । तथाहि-पटत्वात्यन्ताभावः न प्रतियोगिसमानधिकरण इति पटत्वाभावत्वं न प्रतियोगिसामानाधिकरण्यावच्छेदकम् ।

पटत्वादिकं चादाय पटे **व्यभिचारवारणायानवच्छिन्नान्त**-निष्ठान्तयोरभावविशेषणत्वेन निवेशः । न च प्रतियोग्यसमानाधिकरणत्व-विशेषणेनैव संयोगाभावादिव्यावृत्तेरनवच्छिन्नान्तव्यावृत्त्यभाव इति वाच्यम् । गुणादौ प्रतियोग्यसमानाधिकरणस्यैव संयोगाभावस्य पट-निष्ठत्वेन तदव्यावृत्तेः । अनवच्छिन्नान्तनिवेशे च प्रतियोगिसामानाधि-करण्यावच्छेदकं यत्संयोगाभावत्वं तदनवच्छिन्नत्वाभावेन तद्व्यावृत्तेः । न चैवं घटत्वाभावादेरपि घटत्वादिरूपप्रतियोगिसामानाधिकरण्याव-च्छेदकप्रमेयत्वाद्यवच्छिन्नत्वादसिद्धिरिति वाच्यम् । स्वनिरूपक-प्रतियोगिसामानाधिकरण्यावच्छेदकं यद्यत्तदनवच्छिन्नत्वस्य विवक्षितत्वात्, प्रमेयत्वादिनिरूपकप्रतियोग्यप्रसिद्ध्या स्वपदेन तदुपादानायोगात् । संयोगभावत्वादेरेव च तथात्वात् ।

ननु सर्वस्यैव पटतादात्म्याधिकरणत्वात् तदवच्छिन्नभेद-रूपसाध्याप्रसिद्धिरत आह — **अप्रसिद्धेति** ॥ **परिहर्तव्यमिति** ॥ प्रकृतानुमित्यविरोधित्वेन ज्ञेयमित्यर्थः । अभावसाध्यकव्यतिरेक्यनुमाने तद्दोषत्वस्योपपादितत्वादिति भावः ।

(२९) (श.) एवमात्मभेदे प्रमाणत्रयमभिधायानात्मभेदेऽपि तदुप-पादयन् प्रत्यक्षं तावदाह — **घटपटादीति** ॥ प्रत्यक्षं घटः पटो न भवतीत्याद्यं सुलभमेव नानुमानवत्प्रयासेनोपपादनीयम् । नचास्य प्रत्यक्षस्य नेह नानेति श्रुतिबाधितत्वादप्रामाण्यमिति वाच्यम् । तस्याः श्रुतेश्च ब्रह्मणि

---

किन्तु संयोगाभावत्वं तादृशम् । तदनवच्छिन्नपटत्वात्यन्ताभावप्रतियोगिपटत्व-रूपधर्माधिकरणे पटे साध्याभावाद् व्यभिचारः । पटत्वात्यन्ताभावस्य पटनिष्ठत्वाभावात् पटनिष्ठत्वविशेषणेन व्यभिचारपरिहारः ।

गुणकर्मादिभेदनिषेधकत्वेन घटपटभेदबाधकत्वाभावादिति भावः ॥ **प्रतियोगीति** ॥ घटे घटत्वात्यन्ताभावस्य घटत्वरूपप्रतियोगि-समानाधिकरणत्वाभावेन प्रतियोगिसामानाधिकरण्याप्रसिद्ध्या तदवच्छेद-कस्याप्रसिद्धत्वेन तदनवच्छिन्नः पटनिष्ठो योऽत्यन्ताभावः घटत्वात्यन्ताभावः तत्प्रतियोगिधर्मो घटत्वं तदधिकरणत्वादित्यर्थः । प्रतियोगीत्यादिविशेषणकृत्यं स्वयमेव वक्ष्यति ॥ **पटवदिति** ॥ तत्र हि पटप्रतियोगिकतादात्म्याधिकरणत्वाभावाभावः पटप्रतियोगिकतादात्म्या-धिकरणत्वे वर्तते । तादृशघटत्वरूपधर्माधिकरणत्वाभावश्च वर्तत इत्यर्थः ।

ननु मया पटप्रतियोगिकतादात्म्याधिकरणत्वस्यैवाङ्गीकारात्त-दभावरूपसाध्यस्याप्रसिद्धत्वेनाप्रसिद्धविशेषणत्वमित्यत आह — **अप्रसिद्धविशेषणत्वं चेति** ॥ यथा जीवो ब्रह्मप्रतियोगिकतादात्म्याधिकरणं न भवतीत्यत्राभावस्य साध्यत्वान्नाप्रसिद्धविशेषणत्वस्य दोषत्वं तथेहाप्य-भावस्य साध्यत्वाद्व्याप्त्यादिविघटकत्वाभावान्नाप्रसिद्धविशेषणत्वं दूषणमि-त्यर्थः । ननु घटपटयोर्भेदसिद्धेः पूर्वं कथं तयोः पक्षदृष्टान्तभाव इत्यत आह — **व्यावहारिकभेदमात्रेणेति** ॥ आत्मभेदसाधकानुमानवदिति वर्तते । तथाच पक्षदृष्टान्तभावे पारमार्थिकभेदस्य प्रयोजकत्वे त्वया तस्य कुत्राप्यनङ्गीकारेणानुमानमात्रोच्छेदापत्त्या भेदमात्रस्य प्रयोजकत्वे वाच्ये तस्य घटपटयोरपि विद्यमानत्वात्तयोः पक्षदृष्टान्तभावोपपत्तिरित्यर्थः ।

**(३०) ननु तथाऽपि (नन्वथापि) घटपटयोरपारमार्थिकभेदं वदता मया घटत्वादेरपि पटनिष्ठत्वाङ्गीकारेण पटनिष्ठात्यन्ताभावप्रतियोगिक-धर्माधिकरणत्वं घटस्य नास्तीत्यसिद्धिरिति चेन्न (चेत्) । (किं)· पटे**

**घटत्वं तथ्यमतथ्यं (मिथ्या) वा । नाद्यः । अपसिद्धान्तात् । द्वितीये तु कथं पटे घटत्वात्यन्ताभावानङ्गीकरणम् ।**

**'सर्वेषामेव भावानां स्वाश्रयत्वेन सम्मते ।**
**प्रतियोगित्वमत्यन्ताभावं प्रति मृषात्मते'ति**

**वचनात् त्वया स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं मिथ्यात्वमित्यङ्गीकारात् । पटस्य घटत्वं प्रत्याश्रयत्वमेव नास्तीति तत्र तदत्यन्ताभावाभावेऽपि तत्र तस्य मिथ्यात्वं न विरुध्यत (विरुद्धम्) इति चेत् तर्हि पटे (पटस्य) घटत्वं प्रत्यनाश्रये (प्रत्यनाश्रयत्वे) घटत्वात्यन्ताभावाधिकरणत्वं सुप्रसिद्धमिति कथमसिद्धिः ।**

(३०) (भ.) ननु घटपटयोरैक्यवादे पटत्वस्यापि घटे सत्त्वेन पटनिष्ठात्यन्ताभावप्रतियोगित्वाभावाद्धटत्वस्य तदनधिकरणत्वं घटेऽसिद्धमिति शङ्कते — **नन्विति** ॥ अथाऽप्यप्रसिद्धविशेषणत्वाभावेऽपि कथञ्चित्पक्षदृष्टान्तभावोपपत्तावपीत्यर्थः । पटे घटत्वात्यताभावमङ्गीकारयितुं विकल्पेन पृच्छति — **पट इति** ॥ **सर्वेषामिति** ॥ सर्वेषामपि भावानां घटादिपदार्थानां स्वाश्रयत्वेन सम्मते भूतलादावत्यन्ताभावं प्रति प्रतियोगित्वमेव मृषात्मता मिथ्यात्वमिति वचनार्थः । तथा च घटे पटत्वमतथ्यं चेत्तन्निष्ठात्यन्ताभावप्रतियोगित्वं घटत्वस्य दुर्वारमिति कथमसिद्धिरिति भावः । नन्वत एव स्वाश्रयत्वेन सम्मत इत्युक्तम् । तथा च पटस्य घटत्वाश्रयत्वाभावात्तदत्यन्ताभावस्य पटेऽनङ्गीकारेऽपि न घटत्वस्य तथ्यत्वापत्तिः । स्वाश्रयत्वेन सम्मते घटे स्वात्यन्ताभावसामानाधिकरण्यस्य सत्त्वात्तावन्मात्रेणैव मिथ्यात्वोपपत्तेरिति भावेन शङ्कते — **पटस्येति** ॥ एवं तर्हि न सुतरामसिद्धेरवकाश इति भावेन परिहरति ॥

**तर्हीति** । तस्यैवार्थः पटस्य घटत्वं प्रत्यनाश्रयत्व इति ॥ **सुप्रसिद्धमितीति** । घटानाश्रयस्य भूतलस्य घटात्यन्ताभावाधिकरणतानैयत्यस्य सर्वसम्मतत्वादिति भावः ।

(३०) (मु.) विशेषणासिद्धिमाशङ्क्य समाधत्ते ॥ **नन्विति** ॥ अपारमार्थिकभेदाङ्गीकारादित्युपलक्षणम् । वास्तवतादात्म्याङ्गीकारादित्यपि द्रष्टव्यम् । घटत्वादेरित्यादिपदेन पृथुबुध्नोदराकारत्वादेर्ग्रहणम् । घटपटयोरैक्ये घटस्यैव पटत्वेन घटत्वादेः पटावृत्तित्वं नास्तीत्यर्थः । उक्तरीत्या घटत्वादेः पटत्वे पटनिष्ठात्यन्ताभावप्रतियोगित्वं वाच्यम् । यावत्स्वाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वाङ्गीकारात् । एवञ्च तन्मात्रमेवास्तु हेतुविशेषणमिति भावेन परिहरति — **पटे घटत्वमिति** ॥ **कथमिति** ॥ तस्यैव मिथ्याशब्दार्थत्वाङ्गीकारात् । तत्र परसम्मतिमाह — **परेषामिति** ॥ भावानां स्वाश्रयत्वेन सम्मते वस्तुन्येवाधिकरणेऽत्यन्ताभावं प्रति प्रतियोगित्वं मृषात्मेति सम्बन्धः । स्यादेतत् । यदि घटोऽपटत्वं प्रत्याश्रयः स्यात्तदा मिथ्यात्वघटनाय तदत्यन्ताभावोऽपि तत्राङ्गीकार्यः स्यात् । न चैवम् । पूर्वमसिद्धिचोदनं तु पटस्य पटत्वविशेषाघटत्वं प्रत्याश्रयत्वाभावेऽपि घटपटयोस्तादात्म्यमाश्रित्येत्यत आह — **पटस्य घटत्वं प्रतीति** ॥ सुप्रसिद्धमितीति । तदत्यन्ताभावस्यैव तदन्याश्रयत्वशब्दार्थत्वादिति भावः । यदुक्तं पटत्वविशेषाश्रयत्वं नास्तीति । तन्न । पटस्यैव स्वभावत्वेन तद्विना पटस्य वास्तववेषान्तराभावात् । न हि चेतनेष्विव जडेषु भागत्यागेनैक्यमुच्यत इति ।

(३०) (कु.) यस्त्वपारमार्थिको भेदो मयाऽप्यङ्गीकृतः स न परस्परधर्मसङ्क्रान्तिनिवर्तक इत्यतोऽसिद्धिरित्यत आह — **नन्वथाऽपीति** ।

अप्रसिद्धविशेषणत्वस्य दोषंत्वाभावेऽपीत्यर्थः । परस्परधर्मसङ्क्रान्तौ पक्षदृष्टान्ताभावेऽपि दुरुपपादनीय एवेति न तदङ्गीकारोऽथाऽपीत्यर्थः ॥ **असिद्धिरिति** ॥ हेत्वसिद्धिरित्यर्थः । अनयैव रीत्या सर्वेषां सर्वधर्मवत्त्वेन पटनिष्ठात्यन्ताभावप्रतियोगिधर्माधिकरणत्वस्याप्रसिद्धेः । द्वितीये त्वि-त्यादि । पटे घटत्वस्य मिथ्यात्वे त्वया स्वसमानाधिकरणात्यन्ताभावप्रति-योगिकत्वं मिथ्यात्वमित्यङ्गीकारात् । पटे घटात्यन्ताभावोऽवश्य-मङ्गीकार्यः । तथा च नासिद्धिः । यदि च घटत्वस्याधिकरणं घट एव तन्निष्ठात्यन्ताभावप्रतियोगित्वेनैव तस्य मिथ्यात्वमित्युच्यते । तदा सुतरां घटत्वात्यन्ताभावः पट इति समुदायार्थः ।

(३०) (हु.) ॥ **तथ्यमिति** ॥ अत्रेदं पारमार्थिकमिति प्रामाणिक-व्यवहारगोचरीभूतं न वेत्यर्थः ॥ **मृषात्मतेतीति** । मृषात्वं मतमित्यर्थः । मृषात्मेति पाठः साधुः ॥ **सुप्रसिद्धमिति** ॥ घटत्वं नास्तीति त्वदीयव्यवहारबलादागतस्य कथमनङ्गीकार इत्यर्थः ॥ **असिद्धिरिति** ॥ स्वपदेन घटत्वात्यन्ताभावस्य ग्रहणे स्वप्रतियोगिभूतघटत्वाश्रयाप्रसिद्ध्या तद्धटितसाधनाप्रसिद्धिः । अत्यन्ताभावस्यासत्प्रतियोगिकत्वादुक्ता-वच्छिन्नत्वाभावघटितसाधनप्रसिद्ध्यङ्गीकारे तादृशधर्मवत्त्वं पटे नास्तीति स्वरूपासिद्धिरित्यर्थः ।

(३०) (का.) ॥ **पटनिष्ठत्वाङ्गीकारेणेति** ॥ घटपटयोः स्वरूपैक्यादिति भावः । यद्यप्येवं पटे घटव्यवहारापत्तिरिति वक्ष्यमाणदूषणमत्र शक्यते वक्तुम् । तथापि पटे घटत्वात्यन्ताभावस्यैव प्रकृतोपयुक्तत्वात्तमेव तावदङ्गीकारयति — **पट इति** ॥ अङ्गीक्रियमाणमिति शेषः । ननु पटे घटत्वस्य मिथ्यात्वेऽपि तत्र तदत्यन्ताभावाङ्गीकारः कुत इत्यत आह —

**सर्वेषामिति** ॥ घटादीनां तत्त्वतः स्वाधिकरणाप्रसिद्धेः स्वाधिकरणत्वेन सम्मत इत्युक्तम् । स्वप्रकारकधीविशेष्ये यावतीत्यर्थः । **इति वदता त्वयेति** सम्बन्धः । तथाच घटत्वादेरेतादृशमिथ्यात्वानुरोधादेव पटादौ तदत्यन्ताभावाङ्गीकार इति भावः ।

ननु स्वाश्रयनिष्ठाभावप्रतियोगित्वमेव मिथ्यात्वम् । स्वाश्रयत्वं च न वास्तवम् । नापि प्रातिभासिकसाधारणम् । येन विरोधः सिद्धार्थता वा स्यात् । अपि तु व्यावहारिकमेवेत्याशयेन शङ्कते — **पटस्येति** ॥ **सुप्रसिद्धमेवेति** ॥ परस्परविरुद्धयोरन्यतरनिषेधस्यान्यतरविधिव्याप्तत्वनियमादिति भावः ।

(३०) (श.) ननु घटपटयोरेकत्वेन घटत्वं यथा घटे वर्तते तथा पटेऽप्यस्ति । एवं च पटे घटत्वात्यन्ताभावो नास्तीति घटत्वस्य पटनिष्ठात्यन्ताभावप्रतियोगित्वाभावेन तदाश्रयस्य पटनिष्ठात्यन्ताभावप्रतियोगिधर्माधिकरणत्वाभावादसिद्धिरिति शङ्कते — **नन्विति** ॥ अप्रसिद्धविशेषणत्वाभावेऽपि स्वरूपासिद्धिरस्तीत्यर्थः । तेनैव पटे घटत्वात्यन्ताभावमङ्गीकारयितुं विकल्पेन पृच्छति ॥ **पट इति** ॥ **अपसिद्धान्तादिति** ॥ घटत्वस्यापि सत्यत्वाङ्गीकारे ब्रह्मण एकस्यैव सत्यत्वमिति सिद्धान्तविरोधादित्यर्थः । कुत इत्यत आह — **स्वसमानाधिकरणेति** ॥ स्वं मिथ्यात्वेनाभिमतम् । तत्समानाधिकरणो योऽत्यन्ताभावः तत्प्रतियोगित्वमित्यर्थः । यथा शुक्तिरूप्यं मिथ्या । तत्रेदं लक्षणमस्ति । स्वं शुक्तिरूप्यम् । तत्समानाधिकरणः तेन सहैकाधिकरणे शुक्तिशकले विद्यमानो योऽत्यन्ताभावः रूप्यात्यन्ताभावः । तत्प्रतियोगित्वमस्ति रूप्यस्य । एवं पटनिष्ठघटत्वस्यापि मिथ्यात्वम् । स्वं

घटत्वम् । तत्समानाधिकरणः तेन सहैकाधिकरणे विद्यमानो योऽत्यन्ताभावः घटत्वात्यन्ताभावः तत्प्रतियोगित्वं घटत्वस्याङ्गीकार्यमिति कथं घटत्वात्यन्ताभावः पटे न स्यादित्यर्थः । अङ्गीकारश्च तद्वाक्यादेव ज्ञायते इत्याशयेनोक्तम् ॥ **सर्वेषामेवेति** ॥ अस्यार्थः सर्वेषां भावानां पदार्थानां स्वाश्रयत्वेन सम्मते विद्यमानात्यन्ताभावप्रतियोगित्वरूपं मिथ्यात्वं तदा विरुध्येत यदि घटत्वं प्रत्याश्रयत्वं पटस्य सम्मतं स्यात् । नचैवमिति शङ्कते — **पटस्येति** ॥ तत्र पटे । तत् घटत्वम् । तत्र पटे । तस्य घटत्वस्य ॥ **सुप्रसिद्धमिति** ॥ पटस्य घटत्वं प्रत्याश्रयत्वं नेत्युक्ते तदभावं प्रत्याश्रयत्वस्य परस्परविरुद्धयोरिति न्यायप्राप्तत्वादिति भावः ॥ **कथमसिद्धिरिति** ॥ पटस्य घटत्वात्यन्ताभावाधिकरणत्वे घटस्य पटनिष्ठात्यन्ताभावप्रतियोगिधर्माधिकरणत्वसद्भावादिति भावः ।

**(३१) ननु तर्हि घटे (घटेऽपि) घटत्वस्य मिथ्यात्वेन घटस्यापि घटत्वं प्रत्याश्रयत्वं (घटाश्रयत्वं) नास्तीत्यसिद्धिरिति चेन्न । घटस्य घटत्वात्यन्ताभावं प्रत्याश्रयस्यापि घटत्वाश्रयत्वस्याप्यङ्गीकार्यत्वात् । (घटत्वात्यन्ताभावं प्रत्याश्रयस्य घटस्य घटत्वं प्रत्याश्रयत्वस्याप्यङ्गीकार्यत्वात् ।) अन्यथा घटत्वस्य (घटत्वादेः) निरधिकरणत्वेन स्वात्यन्ताभावसमानाधिकरणत्वरूपं मिथ्यात्वं(रूपमिथ्यात्वं) घटत्वादेर्न स्यात् । ननु तथाऽपि पटे व्यभिचारः । पटे साध्याभावसद्भावेऽपि साधनाभावाभावात् । पटे पटत्वस्य (पटत्वस्यापि) मिथ्यात्वेन पटनिष्ठात्यन्ताभावप्रतियोगिपटत्वं प्रति पटस्याश्रयत्वादिति चेदत एव हेतुर्विशेषितः प्रतियोगिसामानाधिकरण्यावच्छेदकानवच्छिन्नेति ॥ पटे पटत्वात्यन्ताभावे सत्यपि**

(पटत्वात्यन्ताभावसद्भावेऽपि) तस्य पटत्वरूपप्रतियोगिसमानाधिकरणत्वेन प्रतियोगिसामानाधिकरण्यावच्छेदकावच्छिन्नतया साधनाभावसद्भावात् । ननु तर्ह्यसिद्धिः । घटपटयोरभेदं वदता पटे (पटेऽपि) घटत्वस्याङ्गीकारेण पटेऽपि (पटे) घटत्वात्यन्ताभावस्य प्रतियोगिसामानाधिकरण्यादिति चेन्न । त्वयाऽपि घटपटयोरपारमार्थिकभेदं(रभेदं) वदता पटे घटव्यवहारप्रसङ्गविरोधपरिहाराय व्यावहारिकभेदमात्रेण बिम्बप्रतिबिम्बत्वसत्त्वासत्त्वव्यवस्थावत्पटे घटत्वात्यन्ताभावस्याङ्गीकार्यत्वात् । घटत्वस्य सार्वत्रिकत्वेऽ(सर्वत्राविशेषे)प्यविद्यावशातिनियतो व्यवहार इति चेत् (न) । न ह्यविद्याऽऽरोपितरजताभावेऽपि शुक्त्यादौ रजतमिति व्यवहारं जनयति । तथात्वे पटेऽपि तं जनयेत् । घटपटयोस्तादात्म्यस्य (च) पारमार्थिकत्वाङ्गीकारे (तु) जीवब्रह्मणोरिव घटपटयोः स्वरूपस्यापि पारमार्थिकत्वं (स्वरूपं पारमार्थिकं) स्यादिति प्रपञ्चमिथ्यात्ववाचोयुक्तिरयुक्ता स्यादित्यनुकूलतर्को द्रष्टव्यः ।

(३१) (भ.) नन्वेवं सति पनुरसिद्धिर्दुर्वारैव । घटस्यापि घटत्वाधिकरणत्वाभावात् । घटत्वस्य घटेऽपि मन्मते मिथ्यात्वाङ्गीकारात् । अत्यन्ताभावप्रतियोगित्वस्यैव मिथ्यात्वरूपत्वात् । तथा च यदा घटे घटत्वस्यात्यन्ताभावस्तदा घटत्वं प्रत्यनाश्रयत्वमेव तस्य प्राप्तमिति प्रतिबन्दीमाश्रित्य शङ्कते — ननु तर्हीति ॥ अत्यन्ताभावाधिकरणस्य प्रतियोग्यनाश्रयत्वाङ्गीकार इत्यर्थः । घटत्वात्यन्ताभाववति पटे घटत्वं प्रत्यनाश्रयत्ववद्घटत्वात्यन्ताभाववति घटेऽपि तदनाश्रयत्वं त्वया नाङ्गीकर्तुं शक्यम् । तथा सति घटत्वस्य स्वात्यन्ताभावसमानाधिकरणत्व-

रूपमिथ्यात्वाभावापातात् । तथा च घटस्य घटत्वाश्रयताया अवश्याङ्गीकार्यत्वेन कथमप्रसिद्धिरिति भावेन प्रतिबन्दीं परिहरति ॥ **नेति** ॥ **घटत्वस्य निरधिकरणत्वेनेति** ॥ पटस्य तु घटत्वं प्रत्याश्रयत्वं नास्त्येव । तद्वद्घटेऽपि घटत्वानङ्गीकारे घटत्वादेर्निरधिकरणत्वमेव प्रसज्यत इत्यर्थः । प्रतियोगिसामानाधिकरण्यावच्छेदकानवच्छिन्नेति विशेषणकृत्यं वक्तु-माक्षिपति — **नन्विति** ॥ तथाऽपीति । असिद्धिपरिहारेऽपीत्यर्थः ॥ **पटे व्यभिचार इति** ॥ व्यतिरेका दृष्टान्तभूते पटे व्यतिरेकव्याप्तेर्व्यभिचार इत्यर्थः । तमेवोपपादयति — **पट इति** ॥ साध्याभावसद्भावेऽपीति । पटप्रतियोगिकतात्त्विकतादात्म्यसद्भावेऽपीत्यर्थः ॥ **साधनाभावाभावादिति** ॥ साधनस्यैव सत्त्वादित्यर्थः । तमेवोपपादयति — **पट इति** ॥ **नन्वत्यन्ताभावाधिकरणे कथं प्रतियोगिनोऽवकाश इत्यत उक्तं पटे पटस्य मिथ्यात्वेनेति** ॥ स्वसमानाश्रयात्यन्ताभावप्रतियोगित्वस्यैव मिथ्यात्वतया मन्मतेऽङ्गीकारादित्यर्थः ॥ **अत एवेति** ॥ उक्तव्यभिचारपरिहारार्थमेवेत्यर्थः ॥ **हेतुरिति** ॥ हेत्वन्तर्गतोऽत्यन्ताभाव इत्यर्थः ॥ **प्रतियोगि-सामानाधिकरण्येति** ॥ प्रतियोगिना पटत्वेन यत्सामानाधिकरण्यं तदवच्छेदकं यत्पटीयपटत्वात्यन्ताभावत्वं तदवच्छिन्नतयाऽनव-च्छिन्नताऽभावस्तद्गर्भितसाधनाभावादित्यर्थः । यद्यप्यत्र प्रतियोग्य-समानाधिकरणेत्येव पटनिष्ठात्यन्ताभावो विशेष्टुं शक्यस्तावतैव पटत्वात्यन्ताभावव्यावृत्तिसिद्धेः । तथाऽपि घटत्वात्यन्ताभावस्यापि घटे प्रतियोगिसमानाधिकरणत्वात्प्रतियोग्यसमानाधिकरणत्वस्याभावात्तत्प्रतियो गिधर्मोऽप्रसिद्ध एवेति पुनरसिद्धिशङ्का स्यात्तन्निरासाय प्रतियोगि-सामानाधिकरण्यावच्छेदकानवच्छिन्नेत्युक्तिः । एवमुक्ते तु नासिद्धिः ।

घटत्वात्यन्ताभावस्य सर्वत्रैकत्वेऽपि प्रकृते पटनिष्ठात्यन्ताभावपदेन न सामान्यरूपोऽभावो विवक्षितः । किन्तु पटनिष्ठत्वाववच्छिन्नात्यन्ताभाववान् । एतच्चात्यन्ताभावत्वं न घटत्वसामानाधिकरण्यावच्छेदकं तदवच्छेदकं तु घटनिष्ठत्वावच्छिन्नमेव मायिमते । अतो न घटान्तर्भावेन पटनिष्ठात्यन्ताभावस्य घटत्वरूपप्रतियोगिसामानाधिकरण्यमादाय प्रतियोग्यसमानाधिकरणस्याभावस्याप्रसिद्धिः शङ्क्या । ततश्च तद्घटितहेतोः कथमसिद्धिरिति ॥ नन्विदमेकं सन्धित्सताऽन्यच्चयवत इत्यापन्नम् । यतो व्यभिचारवारणाय विशेषणोपादाने पुनरसिद्धिः प्राप्ता । घटपटयोरभेदवादे पटेऽपि घटत्वसत्त्वात् । तस्य च मिथ्यात्वेन तदत्यन्ताभावस्य प्रतियोगिसामानाधिकरण्यसद्भावेन तदवच्छेदकावच्छिन्नतयाऽनवच्छिन्नत्वाभावादिति भावेन शङ्कते — ननु तर्हीति ॥ त्वयाऽपीति । घटपटयोरभेदं वदताऽपि त्वया पटे घटत्वात्यन्ताभावस्याङ्गीकार्यत्वादिति सम्बन्धः । अत्र प्रतियोग्यसमानाधिकरणस्येति पूरणीयम् । तथा च पटे घटत्वस्यानङ्गीकार्यत्वादिति तात्पर्यं बोध्यम् । अन्यथा घटत्वात्यन्ताभावस्य तेनाप्यङ्गीकृतत्वाद्दोषानिवृत्तेः । कुतो घटत्वं पटे नाङ्गीकार्यं मयेत्यत उक्तं पटे घटव्यवहारप्रसङ्गनिरोधायेति । यदि पटेऽपि घटत्वं स्यात् तर्हि घट इव पटेऽपि घटव्यवहारः स्यादिति भिया नाङ्गीकार्यमिति भावः । घटपटयोः पारमार्थिकभेदाङ्गीकारे कथं पटे घटत्वस्यानङ्गीकारः सम्भवेत् । न हि प्रयोजनाधीना प्रमेयसिद्धिर्येन पटे घटव्यवहारप्रसङ्गनिरोधाय तदनङ्गीकार इति स्यादित्यत उक्तं घटपटयोरपारमार्थिकभेदं वदतेति । अत एव त्वयाऽपारमार्थिको भेदोऽप्यङ्गीकृतोऽस्तीति भावः । भेदस्यापारमार्थिकत्वेऽसत्त्वस्यैवापत्त्या पुनरुक्तदोषानिवृत्तिरित्यत उक्तं

व्यावहारिकभेदमात्रेणेति । अपारमार्थिकशब्देन व्यावहारिक एव भेदो विवक्षितो नासन्नित्याशयः । नन्विदमप्यसम्भवत्येव । स्वाभाविकैक्ये व्यावहारिकभेदमात्रेण कथं घट एव घटत्वं न पटे इति व्यवस्थोपपत्तिरित्यत उक्तं बिम्बप्रतिबिम्बेत्यादि । यथा त्वन्मते बिम्बप्रतिबिम्बयोरभेदेऽपि व्यावहारिकभेदमात्रेण बिम्बे मुखे बिम्बत्वमेव न प्रतिबिम्बत्वम् । प्रतिमुखे च प्रतिबिम्बत्वमेव न बिम्बत्वम् । तथा बिम्बे सत्यत्वमेव नासत्यत्वं प्रतिबिम्बेऽसत्यत्वमेव न सत्यत्वमिति व्यवस्था स्वीकृतैवमिहापीत्यर्थः । ननु घटपटतादात्म्यवादे घटत्वं घट इव पटेऽप्यस्त्येव । न च तथात्वे पटेऽपि घटव्यवहारापत्तिः । अविद्यावशात्प्रतिनियतव्यवहारोपपत्ते-रित्याशङ्कते — **घटत्वस्येति** ॥ सर्वत्र पटादौ । अविशेषेऽपि सत्त्वेऽपीति यावत् । यद्यविद्यावशात्पटे घटत्वसत्त्वेऽपि घटव्यवहारनिरोधस्तदा त्वन्मते घटपटयोरिव शुक्तिरजतयोरप्यभेदाच्छुक्तौ रजतत्वसद्भावेऽपि कुतस्तत्र सर्वदा न रजतव्यवहार इति पृष्टेऽविद्यावशादेवेति वक्तव्यम् । ततश्च रजतारोपकालेऽपि रजतव्यवहारो न स्यात् । व्यवहारविघटिकाया अविद्याया जागरूकत्वात् । अथैवं ब्रूषे । न केवलाविद्या व्यवहारस्य साधिका बाधिका वा किन्त्वारोपितसापेक्षैव । तथा च रजतारोपसद्भावे रजतमिदमिति व्यवहारं जनयति तदभावे न जनयतीति । तर्ह्यारोपितविषयलक्षणनिमित्तभावाभावयोरेव व्यवहारतदभावप्रयोजकत्वं न केवलाविद्याया इत्यायातम् । तथा च पटे घटत्वरूपनिमित्तसद्भावे तत्र घटव्यवहारो दुर्वार एव । अविद्यामात्रस्याकिञ्चित्करत्वदिति भावेन परिहरति ॥ **न हीति** । कुतो न जनयतीत्यत आह — **तथात्व इति** ॥ तं रजतमिति व्यवहारम् । अत्रानुमाने हेतोरप्रयोजकताशङ्कां परिहरति ॥ **घटपटयोरिति**

॥ साध्ये तात्त्विकतादात्म्येत्युक्तत्वात्तदनुरोधेन तादात्म्यस्य पारमार्थिकत्वाङ्गीकार इत्युक्तम् । केचित्तु किं तदैक्यं पारमार्थिकमुतापारमार्थिकमिति विकल्प्याद्यपक्षे दूषणमिदमित्याहुः ॥ **घटपटयोः स्वरूपस्येति** ॥ न हि धर्मिप्रतियोगिनोरपारमार्थिकत्वे तत्तादात्म्यस्य पारमार्थिकत्वं सम्भवतीति भावः । इष्टापत्तिं परिहर्तुमाह — **प्रपञ्चेति** ॥ वाचोयुक्तिरित्यलुक् । वाक्प्रयोग इत्यर्थः ।

(३१) (मु.) एवं हेतुविशेषणासिद्धिमुद्धृत्येदानीं विशेष्यासिद्धिमाशङ्क्योद्धरति ॥ **घटे घटत्वस्येति** ॥ हेतौ पटावृत्तिर्घटत्वादिधर्माधिकरणत्वं खलु विवक्षितम् । घटे पटत्वादेर्मिथ्यात्वेन तदत्यन्ताभावसत्त्वात् । पक्षे हेत्वभावस्यैवासिद्धिशब्दार्थत्वादिति शङ्कार्थः । न च हेत्वभावमात्रमसिद्धिः । किन्तु प्रतियोग्यसमानाधिकरण एव हेत्वभावः । प्रकृते घटत्वाभावसत्त्वेऽपि घटत्वमप्यङ्गीकरणीयम् । अन्यथा पटावृत्तिनो घटेऽप्यसत्त्वेनानिराश्रयत्वं स्यात् । स्वात्यन्ताभावसमानाश्रयत्वरूपमिथ्यात्वहानिश्च स्यादिति भावः । प्रतियोगिसामानाधिकरण्यावच्छेदकानवच्छिन्नेति पदकृत्यं स्पष्टीकर्तुमाह — **नन्विति** ॥ पटे तादात्म्यसत्त्वेन साध्याभावसत्त्वात् । पटत्वात्यन्ताभावादेर्मिथ्यात्वेन पटावृत्तिधर्माधिकरणत्वरूपहेतोश्च सत्त्वादिति भावः ॥ **हेतुर्विशेषित इति** ॥ हेत्वन्तर्गताभावो विशेषित इत्यर्थः । तेन व्यभिचारप्रकारमाह — **पटे पटत्वात्यन्ताभाव इति** ॥ घटपटयोरेकत्वेन घटत्वस्यापि पटे सत्त्वात्पटेऽपि घटत्वात्यन्ताभावस्य प्रतियोगिसामानाधिकरण्यसत्त्वात्पुनर्विशेषणासिद्धिमाशङ्कते — **ननु तर्हीति** ॥ एवञ्च सर्वपदार्थानामभेदमङ्गीकृत्य सर्वत्र सर्वधर्माङ्गीकारेऽपि प्रतिनियतव्यवहारसिद्ध्यर्थं व्यवस्थाविशेषोऽङ्गीकर्तव्य

एवेति नैवास्माभिरसिद्धिः सुपरिहरेत्याह — **नेति** ॥ सर्वत्र सर्वधर्माङ्गीकारेऽपि घटत्वात्यन्ताभावो घट एव प्रतियोगिसमानाधिकरणः । पटे तु नेति व्यवस्थाऽङ्गीकार्यैव । एवञ्च तादृशप्रतियोग्यसामानाधिकरण्यमेव हेतुविशेषणमिति नासिद्धिरिति फलितोऽर्थः ॥ **अविद्यावशादिति** ॥ तस्या अघटितघटनापटीयस्त्वादिति भावः । अविद्याऽपि तद्वति तद्व्यवहारं जनयेत्तद्रहिते तदभावव्यवहारं जनयेन्नान्यथा दर्शनादित्याह — **नेति** ॥ आरोपितरजताभावेऽप्यधिष्ठानभूतंशुक्त्यादि तदेव रजतमिति व्यवहारं न हि जनयतीत्यर्थः । अविद्याया अघटितघटकत्वेऽरजतेऽपि रजतमिति व्यवहारं जनयेत् । तदर्थं प्रातिभासिकरजतजन्माङ्गीकारः कुत इति भावः । व्यावहारिकभेदमात्रेण घटे पटावृत्तिधर्मोपपत्तौ पारमार्थिकप्रयोजको हेतुरित्यतस्तर्कमाह — **घटपटयोश्चेति** ॥ जीवब्रह्मतादात्म्यस्य पारमार्थिकत्वेन यथा तत्सम्बन्धिनोर्जीवब्रह्मणोः पारमार्थिकत्वं तथेति भावः ॥ **वाचो युक्तिरिति** ॥ वाचः प्रयोगः ।

(३१) (कु.) ननु तर्हीति । यथा पटे घटत्वस्य मिथ्यात्वेन तत्र तदत्यन्ताभावस्तथा घटेऽपि घटत्वस्य मिथ्यात्वेन तत्रापि तदत्यन्ताभावः । तथा च तादृशघटत्वाधिकरणत्वं घटेऽपि नास्तीऽति नासिद्धिरित्यर्थः । घटस्य घटत्वप्रतीतिर्यदि घटत्वं कुत्रापि न स्यात्तदा स्वात्यन्ताभावसमानाधिकरणत्वरूपं मिथ्यात्वं तस्य न स्यात् । 'अतः कुत्रचिदङ्गीकरणीयम् । तच्च प्रतीतिबलाद्धट एवाङ्गीकार्यमिति नासिद्धिरिति भावः ॥ **ननु तथाऽपीति** । पटत्वस्यापि मिथ्यात्वेन पटेऽपि तदत्यन्ताभावसत्त्वात्पटनिष्ठात्यन्ताभावप्रतियोगिधर्मसामान्याभावेन पट इति व्यतिरेकेव्याप्तौ व्यभिचार इत्यर्थः । अवच्छिन्नेति हेतुविशेषणबलादेव

न व्यभिचार इत्याह — **अत एवेति** ॥ हेतुविशेषितो हेत्वन्तर्गतोऽत्यन्ताभाव इत्यर्थः ॥ **पटे पटत्वात्यन्ताभावे सत्त्वेऽपीति** । पटे पटत्वात्यन्ताभावसत्त्वेऽपि स प्रतियोग्यसमानाधिकरणः । उक्तरीत्या पटत्वस्यापि तत्र सत्त्वात् । तादृशश्च पटत्वादेरभावतदधिकरणत्वसामान्याभावः पट इति न व्यभिचार इत्यर्थः । अत्र प्रतियोग्यसमानाधिकरणत्वमात्रोक्तौ पटत्वात्यन्ताभावस्यापि घटे प्रतियोगिसमानाधिकरणत्वात्प्रतियोग्यसमानाधिकरणपटनिष्ठात्यन्ताभावप्रतियोगिधर्मोऽप्रसिद्ध एव स्यादिति हेत्वप्रसिद्धिः स्यात् । अतः प्रतियोग्यसामानाधिकरण्यावच्छेदकानवच्छिन्नेति ॥ ननु तथाप्युक्तदोषानिवृत्तिः । पटवृत्तिघटत्वात्यन्ताभावस्य घटरूपप्रतियोगिसामानाधिकरण्यावच्छेदकावच्छिन्नत्वेन तादृशाभावाप्रसिद्धेरिति चेन्न । प्रतियोग्यधिकरणत्वेन पटस्यैव विशेषणात् ॥ ननु तर्हीति ॥ व्यभिचारवारणार्थं हेतुविशेषण इत्यर्थः ॥ **त्वयाऽपीति** ॥ घटपटयोः पारमार्थिकभेदमनङ्गीकुर्वताऽपीत्यर्थः ॥ **पटे घटत्वात्यन्ताभावस्येति** ॥ पटे घटत्वस्यानङ्गीकार्यत्वादिति भावः । अन्यथा भावस्य तेनाप्यङ्गीकृतत्वाद्दोषानिवृत्तेः । यद्यप्येतावन्मात्रं प्रागेव वक्तव्यम् । तावतैवासिद्धिपरिहारो भविष्यति कृतं पटे घटत्वमिथ्यात्वविचारेण । तथाऽपि न विचारचातुरीशिक्षायै प्रागेव नोक्तमिति मन्तव्यम् ॥ **घटत्वस्येति** ॥ मया पटे घटत्वमङ्गीक्रियत एव । न च घटे पटत्वव्यवहारप्रसङ्गः । अघटितघटनापटीयस्याविद्ययैव तन्निरोधोपपत्तिरित्यर्थः ॥ **न ह्यविद्यारोपितेति** ॥ अविद्या आविद्यकविषयसापेक्षे व्यवहारनिर्वाहिका । अन्यथाऽऽविद्यकरजताभावेऽपि शुक्त्यादौ रजतमिति व्यवहारं जनयेत् ।

ततश्च तत्राविद्यकरजताङ्गीकारो व्यर्थः स्यात् । पटेऽपि रजत-व्यवहारप्रसङ्गश्च स्यात् । एवञ्च घटे आविद्यकघटत्वसत्त्वेऽविद्याया अपि व्यवहारनिरोधो न सम्भवतीति भावः । यद्यपि शुक्तौ शुक्तित्व-सत्त्वेऽप्यविद्यायास्तद्व्यवहारनिरोधकत्ववद्धटत्वसत्त्वेऽप्यविद्याया व्यवहार-निरोधः सम्भावितस्तथाऽपि तत्र बाधोत्तरंशुक्तिव्यवहारस्य सत्त्वात्सतोऽपि शुक्तित्वस्य व्यवहारनिरोधोऽविद्याकृत इत्यङ्गीक्रियते । न चैवम् । प्रकृते घटपटव्यवहारस्य कदाऽप्यभावादिति नात्राविद्याकृतस्तन्निरोध इति भावः ।

(३१) (हु.) **मिथ्यात्वं न स्यादिति** ॥ घटत्वादीनामविद्याशक्तित्वमिति मतेनेदम् । तेन तेषामपि ब्रह्मस्वरूपत्वादिष्टापत्तिरिति चोद्यानवकाशः । तन्मतं त्वन्यत्रास्माभिर्निरस्तम् । प्रतियोगिसामानाधिकरण्येत्यादि-विशेषणप्रयोजनंशङ्कासमाधानाभ्यां व्यनक्ति ॥ **नन्वित्यादिना** ॥ **बिम्बेति** ॥ एकस्यैव मुख्यस्य व्यावहारिकौपाधिकमात्रेणास्य बिम्बत्वमेवास्य प्रतिबिम्बत्वमेव बिम्बस्य सत्यत्वमेव प्रतिबिम्बस्य मिथ्यात्वमेवेति व्यवस्थायाः सत्त्वात् । तादृशव्यवस्थाया न्यायप्रयोगकालेऽपि सत्त्वेनोक्तरीत्या त्वदुद्भावितसाधनाप्रसिद्ध्यप्रसक्तेः । अविद्यैव व्यवहार-नियामिका सा यथा जनयति[1] तथा व्यवहारो भवति । नैतावता पटे घटत्वानधिकरणत्वं सिध्यतीत्युक्त[क्ति]साधनाप्रसिद्धिर्दुर्वारेति शङ्कते — **घटत्वस्येति** ॥ अविद्याऽपि स्वकल्पितविषयानपेक्षैव व्यवहारं जनयति । अन्यथाऽतिप्रसङ्गादित्यतो व्यवहारविषयव्यवस्थाऽङ्गीकर्तव्येत्याह । ॥ **न हीति** ॥ अविद्या शुक्तावारोपितरजताभावेऽपीदं रजतमिति व्यवहारं ते तव

---

[1] `जयति' मु.

मतेऽपि जनयति किं ? न हि[1] जनयतीत्यर्थः । इष्टापत्तौ बाधकमाह — **तथात्व इति** ॥ नन्वारोपे सति निमित्तानुसरणम् । न हि निमित्तमस्तीत्यारोप इति न्यायेन व्यवहारसत्त्वे तस्याविद्यामूलकत्वं कल्प्यते । न त्वविद्याऽस्तीत्येतावता तद्व्यवहारापादनं युक्तमिति चेन्न । प्रामाणिकार्थविषयकत्वात्तन्न्यायस्य । न हि पटे घटत्वसत्वे[2] किमपि प्रमाणमस्ति । सर्ववस्त्वभावेऽप्यविद्या व्यवहारं जनयतीत्यपि वक्तुं शक्यत्वेन ब्रह्मस्वरूपस्यानिर्वचनीयाम्बरादिप्रपञ्चस्यापि व्यवहारकाल एवासत्त्वप्रसङ्गात् ॥ **घटपटयोरिति** ॥ **जीवब्रह्मणोरिति** ॥ तत्र बिम्बत्वप्रतिबिम्बत्वरूपविरुद्धाकारत्यागेनोभयानुगतचैतन्यमात्रस्वरूपमिवा त्रापि घटत्वपटत्व(स्व) रूपविरुद्धाकारपरित्यगेनोभयस्वरूपभूतमेकं जडपारमार्थिकं[3] स्यादित्यर्थः । न च ब्रह्मैवोभयस्वरूपभूतं तत्त्वम् । `शुक्तिकाज्ञाने रजतं तत्त्वतो ज्ञातं भवति सा हि तस्य तत्त्वमि'ति वाचस्पत्युक्तेरिति वाच्यम् । तथा सति घटपटयोर्जीववच्चिदात्मकत्वेन जडत्वानुपपत्तेः । प्रपञ्चितं चेदमन्यत्र ।

(३१) (का.) हेतुघटकचरमाधिकरणत्वं वास्तवमेव निविष्टमित्याशयेन शङ्कते — **नन्विति** ॥ व्यावहारिकसाधारणमधिकरणत्वमेव हेतुघटकमित्याशयेन समाधत्ते ॥ **घटस्येति** ॥ प्रातिभासिकानैकान्त्यं तु न दूषणमिति भावः । **अन्यथा** घटस्य घटत्वं प्रति व्यावहारिकाधिकरणत्वानङ्गीकारे ॥ **निरधिकरणत्वेनेति** ॥ घटातिरिक्ते तादृशाधिकरणत्वस्यासम्भावितत्वादिति भावः । स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्व-

---

[1] `किञ्चिन्न हि' मु. २. `घटे घटस्य सत्त्वे' मु.

[3] `जडं पारमार्थिकं' इति पाठेन भाव्यमिति भाति ।

स्वात्यन्ताभावसमानाधिकरणत्वयोरविशेषादाह — **स्वात्यन्ताभावेति** ॥ अनवच्छिन्नान्तविशेषणमव्याप्यवृत्त्यभावमात्रवारकमिति मन्वानो दर्शयति — **नन्विति** ॥ न च पटे पटत्वाधिकरणत्वस्यापि मिथ्यात्वेन तदभावसत्त्वान्न व्यतिरेकव्यभिचार इति वाच्यम् । व्यतिरेकिणि प्रतियोगिव्यधिकरणसाधनाभावनिरूपितव्याप्तेरेव प्रयोजकत्वात् । पटे पटत्वाधिकरणत्वाभावस्य च प्रतियोगिसमानाधिकरणत्वात् । अन्यथा पृथिवीत्वाभावव्यापकाभावप्रतियोगिसंयोगवत्त्वेन जलादौ पृथिवीत्व-सिद्धिप्रसङ्गात् ॥ अनवच्छिन्नान्तदानादेव नायं दोष इति समाधत्ते ॥ **अत एवेति** ॥ एतादृशदोषप्रसङ्गादपीत्यर्थः । हेतुर्हेतुघटकाभावः ॥ **प्रति-योगीति** ॥

अथैवं घटत्वाद्यभावस्यापि घटादौ प्रतियोगिसमानाधिकरणत्वेन प्रतियोगिसामानाधिरण्यावच्छेदकानवच्छिन्नाभावाप्रसिद्धिरिति चेदत्राहुः । [1]प्रतियोगिसामानाधिकरण्यस्य निरूपकतया यदवच्छेदकं तदनवच्छिन्न-

---

[1] ॥ **प्रतियोगिसामानाधिकरण्यस्य निरूपकतयेति** ॥ अत्र श्रीप्रह्लादाचार्याः - प्रतियोगिसामानाधिकरण्यावच्छेदकानवच्छिन्नेत्यत्र प्रतियोगिसामानाधिकरण्यम् नाम प्रतियोग्यधिकरणवृत्तितानिरूपितावच्छेदकतावत् । अत्र चावच्छेकता निरूपकता-सम्बन्धावच्छिन्ना विवक्षिता । तादृशवृत्तिताया निरूपकं प्रतियोग्यधिकरणं तादृशनिरूपकतासम्बन्धावच्छिन्नावच्छेदकतावद्भवति । एवं च प्रतियोगिसामाना-धिकरण्यावच्छेदकं यत्प्रतियोग्यधिकरणं तदनवच्छिन्नत्वं पटनिष्ठात्यन्ताभावे विशेषण-तयाऽभिप्रेतम् । पटनिष्ठस्य घटत्वात्यन्ताभावस्य यत्प्रतियोगि घटत्वं तदधिकरणं घट एव । आधेयतासम्बन्धेन तद्विशिष्टत्वात्मकं तदवच्छिन्नत्वं घटनिष्ठघटत्वात्यन्ताभावे । पटवृत्तिघटत्वात्यन्ताभावे च तादृशप्रतियोगिसामानाधिकरण्यावच्छेदकानवच्छिन्नत्वं प्रसिद्धमिति भावः ।

पटवृत्तिकात्यन्ताभावप्रतियोगिधर्मवत्त्वं विवक्षितम् । घटत्वाद्यभावश्च पटादौ तादृश इति नाप्रसिद्धिरिति । तदसत् । प्रतियोग्यधिकरणस्य प्रतियोगिसामानाधिकरण्यावच्छेदकत्वेन निवेशने बीजाभावात् । यत्तु प्रतियोगिसामानाधिकरण्यावच्छेदकानवच्छिन्नेत्यस्य प्रतियोग्यनधिरणत्वेन पटविशेषणे तात्पर्यान्नाप्रसिद्धिरिति । तच्चिन्त्यम् । तथासति प्रतियोग्यनधिकरणेत्यनुक्त्वा प्रतियोगिसामानाधिकरण्यावच्छेदकानवच्छिन्नेत्युक्तौ बीजाभावप्रसङ्गात् । अव्याप्यवृत्त्यधिकरणत्वस्याव्याप्यवृत्तित्वे संयोगमादायानैकान्त्याच्च ।

[1]वस्तुतस्तु परमते अभावानामधिकरणात्मकत्वात् घटनिष्ठघटत्वा-

---

[1] ॥ वस्तुतस्तु परमत इति ॥ अत्र श्रीप्रह्लादाचार्याः - अभावानामधिकरणात्मकत्वे घटनिष्ठघटत्वात्यन्ताभावः घटात्मको भवति । पटनिष्ठस्तु पटात्मकः । तथा च घटपटनिष्ठौ घटत्वात्यन्ताभावौ भिन्नौ घटत्वरूपप्रतियोग्यधिकरणीभूतघट-निष्ठघटत्वात्यन्ताभावे अनुयोगिताविशेषरूपं प्रतियोगिसामानाधिकरण्यावच्छेदकीभूतं यत् घटाभावत्वं तदनुयोगिभेदेन भिन्नमिति तदनवच्छिन्नत्वं पटनिष्ठघटत्वात्यन्ताभावे प्रसिद्धमिति भावः ।

वस्तुतस्तु अभावानामधिकरणात्मकत्वेऽपि घटपटयोरभेदवादिमते अधि-करणैक्यात् घटनिष्ठघटत्वात्यन्ताभावात् पटनिष्ठो घटत्वात्यन्ताभावो न भिन्नः । तथा च प्रतियोगिसामानाधिकरण्यावच्छेदकीभूतं घटात्यन्ताभावत्वं घटनिष्ठघटत्वात्यन्ताभाव इव पटनिष्ठघटत्वात्यन्ताभावेऽप्यस्तीति प्रतियोगिसामानाधिकरण्यावच्छेदकानवच्छिन्नाभावः अद्वैतमते अप्रसिद्ध एव । अत एव अथवेत्यादिप्रकारान्तरानुसरणम् ।

**॥ इति श्रीमदधोक्षजतीर्थाधिष्ठित-उडुपीपेजावरमठाधीश-विद्वत्तिमिङ्गिलसागर-श्रीश्री१०८श्रीविश्वेशतीर्थचरणान्तेवासिना श्रीप्रह्लाद-पद्मातनूजेन तिरुमलाचार्यकुलकर्णिना विरचिता विद्वत्तल्लजश्रीमदनन्ततन्त्रिमहोदयपरामृष्टा श्रीकाशीतिरुमलाचार्यविरचितायाः**

भावस्य प्रतियोगिसामानाधिकरण्यावच्छेदकावच्छिन्नत्वेऽपि पटनिष्ठाभावस्य तदनवच्छिन्नत्वमव्याहतमेव । न च प्रतियोगिसामानाधिकरण्यावच्छेदकीभूतघटत्वाभावत्वस्यैक्यान्न पटनिष्ठाभावस्य तदनवच्छिन्नत्वसम्भव इति वाच्यम् । अनुयोगिताविशेषरूपाभावत्वस्याभावभेदेन भिन्नत्वात् । अथवा **प्रतियोगिसामानाधिकरण्यरूपं यदवच्छेदकम्,** विशेषणं **तदनवच्छिन्नत्वं** तद्विशिष्टभिन्नत्वमिति यावत् । तदुपलक्षितभिन्नत्वस्य परमते पटवृत्तित्वविशिष्टघटत्वाभावादावभावेऽपि तद्विशिष्टभिन्नत्वमक्षतमेव । पटवृत्तित्वविशिष्टसंयोगाद्यभावे च न प्रतियोगिसामानाधिकरण्यविशिष्टभिन्नत्वमिति न कश्चिद्दोषः ।

परमते प्रतियोगिसामानाधिकरण्यावच्छेदकानवच्छिन्नाभावाप्रसिद्धिरित्याशङ्कते — **ननु तर्हीति** ॥ घटपटयोरभेदं वदताऽपि त्वया, पटे घटत्वात्यन्ताभावस्य प्रतियोग्यसमानाधिकरणघटत्वाभावाङ्गीकार्यत्वादिति सम्बन्धः । ननु घटपटयोरभेदे घटत्वाभावस्य पटे प्रतियोग्यसामानाधिकरण्यमेव कथमुपपद्यत इत्याशङ्क्योक्तम् – **घटपटयोर्व्यावहारिकभेदमात्रेणेति** ॥ अत्र दृष्टान्तः – **बिम्बेति** ॥ यथा बिम्बप्रतिबिम्बयोः स्वरूपैक्येऽपि, व्यावहारिकभेदबलाद् बिम्बस्यैव बिम्बत्वं सत्त्वं च, प्रतिबिम्बस्यैव प्रतिबिम्बत्वमसत्त्वं चेति व्यवस्था, तथा घटस्यैव घटत्वम्, न तु पटस्येत्यङ्गीकार्यमिति भावः । ननु घटवत् पटेऽपि घटत्वमङ्गीक्रियत एव । 'न चैवं घट एव घटव्यवहारो न पट' इति व्यवस्थानुपपत्तिरिति वाच्यम् । अविद्यासामर्थ्येन तदुपपत्तेरित्याशङ्कते — **घटत्वस्येति** ॥ तथा चोक्तहेत्वप्रसिद्धितादवस्थ्यमिति भावः । विषयनिरपेक्षाविद्यायाः

---

भेदोज्जीवनटिप्पण्याः काशिकायाः टिप्पणिः काशिकाविवृतिः समाप्ता ॥

साक्षात्तादृशव्यवहारनियामकत्वमसिद्धमित्याह — **न हीति** ॥ अन्यथाऽऽविद्यकविषयवैयर्थ्यप्रसङ्गात् । विषयसम्पादनद्वारैव तस्यास्तादृशव्यवहारनियामकत्वमङ्गीकार्यमिति भावः । ततः प्रकृते किमित्यत आह — **तथात्व इति** ॥ विषयसम्पादनद्वारा व्यवहारनिर्वाहकत्वे चेत्यर्थः ॥ **पटेऽपि तं जनयेदिति** ॥ पटे घटत्वरूपविषयसत्त्वादविद्या तद्व्यवहारं जनयेदित्यर्थः ।

यत्तु तथात्वे आरोपितरजताभावेऽप्यविद्यायाः रजतव्यवहारजनकत्वे, पटेऽपि रजतव्यवहारं जनयेदिति व्याख्यानं तदसत् । अविद्यासामर्थ्यात् पटे घटव्यवहारं परिहरन्तं प्रति पटे रजतव्यवहारापादनायोगात् । घटरजतयोरविशेषात् । अथ शुक्तौ रजतारोपदशायां शुक्तित्वरूपविषयसत्त्वेऽपि तदव्यवहारवत्, पटे घटत्वसत्त्वेऽपि तदव्यवहार उपपद्यतामिति चेन्न । शुक्तौ विरोध्यारोपेण शुक्तित्वव्यवहारप्रतिबन्धसम्भवात् । पटे च विरोध्यारोपाभावदशायां घटत्वव्यवहारस्यापादनीयत्वात् । न च अविद्यासामर्थ्यादेव तत्र तत्प्रतिबन्धोऽस्त्विति वाच्यम् । पटे घटत्वकल्पकाविद्यायास्तद्व्यवहारविरोधित्वायोगात् । पटे घटत्वं परिकल्प्याविद्यायास्तद्व्यवहारविरोधित्वकल्पनस्य प्रक्षालनाद्धीति न्यायेनानुचितत्वाच्च ।

स्यादेतत् । उक्तानुमानेऽसिद्ध्यादिवारणेऽपि विपक्षे बाधकाभावादप्रयोजकत्वं दुर्वारमत आह — **घटपटयोरिति** ॥ यदि घटपटयोर्भेदः पारमार्थिको न स्यात्तदा तदभेदः पारमार्थिकः स्यात् । ततश्च तयोरपि पारमार्थिकत्वप्रसङ्गः । अन्यथा घटपटनिवृत्तौ तदभेदस्यापि निवृत्त्यापत्तिरिति भावः ।

(३१) (श.) प्रतिबन्द्या प्रकारान्तरेण स्वरूपासिद्धिं शङ्कते — **नन्विति**

॥ **तर्हीति** ॥ यदि घटे घटत्वस्य मिथ्यात्वात्तदत्यन्ताभावाधिकरणत्व-मङ्गीक्रियते तर्हीत्यर्थः ॥ **मिथ्यात्वेनेति** ॥ तथात्वे घटे घटत्वात्यन्ता-भावप्राप्तेरिति भावः ॥ **घटस्येति** ॥ उक्तात्यन्ताभावप्रतियोगिघटत्व-रूपधर्माधिकरणत्वस्य घटे सत्वान्न स्वरूपासिद्धिरिति भावः ॥ **अन्यथेति** ॥ यदि घटत्वं प्रति घटस्याश्रयत्वं नाङ्गीक्रियते तर्ह्यन्यस्याश्रयस्याभावात् घटत्वस्याश्रय एव नास्तीति स्यात् । तथाच स्वाश्रयत्वेन सम्मते विद्यमानात्यन्ताभावप्रतियोगित्वरूपं मिथ्यात्वं घटत्वस्य न स्यादित्यर्थः । प्रतियोगिसामानाधिकरण्यावच्छेदकानवच्छिन्नेति विशेषणकृत्यं वक्तु-माक्षिपति — **नन्विति** ॥ उक्तरीत्याऽसिद्धिपरिहारेऽपि पटे व्यभिचारः स्यादित्यर्थः । साधनाभावमुपपादयति — **पटे पटत्वस्य मिथ्यात्वेनेति** ॥ इदं पटे पटत्वात्यन्ताभावोपपादनायोक्तम् । तथाच पटनिष्ठो योऽत्यन्ताभावः पटत्वात्यन्ताभावः । तत्प्रतियोगिपटत्वं तदाश्रयत्वेन पटे पटनिष्ठात्यन्ताभावप्रतियोगिधर्माधिकरणत्वरूपसाधनसद्भावादित्यर्थः ॥ **अत एवेति** ॥ यत एवं पटनिष्ठात्यन्ताभावप्रतियोगिधर्माधिकरणत्वरूपो हेतुः पटे व्यभिचरितोऽत एव प्रतियोगिसामानाधिकरण्यावच्छेदका-नवच्छिन्नत्वेन विशेषित इत्यर्थः । यद्यपीदमत्यन्ताभावविशेषणम् । तथापि तद्विशेषणत्वे तद्विशिष्टहेतुविशेषणत्वमप्यस्तीत्यभिप्रेत्यैवमुक्तमिति ध्येयम् । दत्तेऽपि विशेषणे कथं व्यभिचारपरिहार इत्यत आह — **पट इति** ॥ **प्रतियोगिसमानाधिकरणत्वेनेति** ॥ पटत्वात्यन्ताभाववति पटे पटत्व-रूपप्रतियोगिनोऽपि सत्त्वादिति भावः ॥ **प्रतियोगिसामानाधिकरण्येति** ॥ पटत्वरूपप्रतियोगिसामानाधिकरण्यं पटत्वात्यन्ताभावेऽस्ति । तदवच्छेदकं पटत्वात्यन्ताभाववत्त्वम् । तदवच्छिन्नतयेत्यर्थः ॥ **साधनाभावेति** ॥

प्रतियोगिसामानाधिकरण्यावच्छेदकानवच्छिन्नत्वगर्भितसाधनस्याभावान्न व्यभिचार इत्यर्थः । यदि व्यभिचारपरिहाराय विशेषणोपादानं तर्हि स्वरूपासिद्धिरिति शङ्कते — **नन्वित्यादिना** ॥ **प्रतियोगिसामानाधिकरण्यादिति** ॥ पटे घटत्वात्यन्ताभावस्य घटत्वरूपप्रतियोगिसमानाधिकरणत्वे प्रतियोगिसामानाधिकरण्यावच्छेदकघटत्वात्यन्ताभाववत्त्वावच्छिन्नत्वेन प्रतियोगिसामानाधिकरण्यावच्छेदकानवच्छिन्नत्वगर्भितहेतोरभावादित्यर्थः । घटपटयोरभेदं वदता त्वयाऽपि पटे घटत्वात्यन्ताभावस्याङ्गीकार्यत्वादित्यर्थः । कुत इत्यत उक्तं पटे घटव्यवहारप्रसङ्गेति । यदि पटे घटत्वं तर्हि घटपदव्यवहारप्रयोजकसद्भावात्पटे घटव्यवहारः स्यात् । अतस्तत्परिहाराय पटे घटत्वं नाङ्गीकार्यमित्यर्थः । तयोरभिन्नत्वेन घटो घट एव न पट इति, घट एव घटत्वं न पट इति व्यवस्थैव कथमित्यत उक्तम् ॥ **घटपटयोरपारमार्थिकभेदं वदतेति** ॥ अभेदमङ्गीकुर्वताऽपि तयोर्व्यावहारिकभेदाङ्गीकारादुक्तव्यवस्थोपपद्यत इत्यर्थः । वस्तुतोऽभिन्नत्वे कथं व्यावहारिकभेदमात्रेणेयं व्यवस्थेत्युक्तं व्यावहारिकेति । यथा हि त्वन्मते बिम्बे बिम्बत्वमेव न प्रतिबिम्बत्वं तथा बिम्बे सत्यत्वमेव न त्वसत्यत्वं प्रतिबिम्बेऽसत्यत्वमेव न सत्यत्वमिति व्यवस्था तथेहापीत्यर्थः । ननु मया पटे घटत्वमङ्गीक्रियत एव । न च तर्हि निमित्तसद्भावात्पटे घटव्यवहारापत्तिरिति वाच्यम् । घटव्यवहारनिमित्तस्य घटत्वस्य घटपटादिसर्वपदार्थेष्वविशेषेऽप्यविद्यासामर्थ्येन घट एव घटव्यवहारो न पट इतिव्यवस्थोपपत्तेरिति शङ्कते — **घटत्वस्येति** ॥ प्रतिनियतः प्रतिवस्तुनियतः । घटे घट इत्येव न पट इत्यादिरूपः । अविद्याया एतादृशसामर्थ्यमेवासिद्धमित्याह — **नहीति** ॥

यदि व्यवहारतदभावौ प्रति निमित्ततदभावयोरप्रयोजकत्वमङ्गीकृत्याविद्याया एव तन्निर्वाहकत्वमङ्गीक्रियते । तर्ह्यविद्या शुक्तिकायां रजतारोपाभावदशायां तत्र रजतव्यवहारं जनयेत् । आरोपितरजतत्वरूपनिमित्तस्य त्वयैवा-प्रयोजकत्वाभ्युपगमात् । नचैवं तथात्वे घटेऽपि रजतत्वव्यवहारं जनयेदविशेषात् । अतः शुक्तिकायां रजतव्यवहारनिमित्तारोपितरजतत्व-सद्भावाज्जनयति । पटे तदभावान्न जनयतीति निमित्ततदभावयोरेव व्यवहारतदभावप्रयोजकत्वमिति पटे घटत्वसत्त्वे घट इति व्यवहारप्रसङ्गो दुर्वार इत्यर्थः । ननूक्तानुमाने हेतुरस्तु घटपटयोरैक्यमेवास्तु नतु तदभावरूपं साध्यमित्यप्रयोजकत्वमिति चेत् अत्र वक्तव्यम् । किमैक्यं पारमार्थिकमुतापारमार्थिकम् । नान्त्यः परस्परविरुद्धयोरिति न्यायेनैक्यस्यापारमार्थिकत्वे तद्विरुद्धभेदस्य पारमार्थिकत्वापत्तेः । आद्य आह — **घटपटयोरिति** ॥ पारमार्थिकं न निवर्तते अपारमार्थिकं तु निवर्तत इति खलु वस्तुगतिः । तत्र घटपटयोरपारमार्थिकत्वाङ्गीकृतावैक्यमपि निवर्तेत । ततश्च कुतः पारमार्थिकत्वम् । अत ऐक्यस्यापारमार्थिकत्वे घटपटयोः पारमार्थिकत्वमपरिहार्यमिति भावः ॥ **जीवब्रह्मणोरिति** ॥ यथा तयोः पारमार्थिकाभेदाश्रयत्वेन पारमार्थिकत्वं तथेहापीत्यर्थः । इष्टापत्तिं परिहरति ॥

**(३२) किञ्च घटः घटसंसर्गानवच्छिन्नप्रतियोगिताकपटादिधर्मिक-त्रैकालिकाभावप्रतियोगी द्रव्यत्वात्पटवत् । घटात्यन्ताभावो वा घटप्रतियोगिकपटादिधर्मिकत्रैकालिकाभावान्यः अभावत्वात्पटाभाव-वत् । घटसंसर्गो वा पटादिधर्मिकत्रैकालिकाभावप्रतियोगिता-वच्छेदकघटनिष्ठधर्मान्यः संसर्गत्वात्पटनिष्ठसंसर्गवत् । घटप्रागभावो**

वा घटसंसर्गानवच्छिन्नप्रतियोगिताकपटादिधर्मिकानाद्यभावान्यः अभावत्वात् पटप्रध्वंसवत् । घटप्रध्वंसो वा घटसंसर्गानवच्छिन्नप्रतियोगिताकपटादिधर्मिकनित्याभावान्यः अभावत्वात् पटप्रागभाववत् । घटपटयोरभेदवादिनाऽपि (पटे घटप्रतियोगिकान्योन्याभावाभावेऽपि) पटप्रतियोगिकात्यन्ताभावादेर्घटसंसर्गानवच्छिन्नप्रतियोगिकत्वादेरङ्गीकार्यत्वान्न साध्यवैकल्यादि दृष्टान्तस्य । तयोः पारमार्थिकाभेदेऽपि व्यावहारिकभेदमात्रेण पटप्रतियोगिकात्यन्ताभावादेर्घटसंसर्गानवच्छिन्नप्रतियोगिकत्वमित्यङ्गीकार्यत्वात् । अन्यथा घटार्थिनः पटे (पटार्थिनः) प्रवृत्तिप्रसङ्गः । सिद्धघटस्य पुंसः पटसामाग्र्यनुपादानप्रसङ्गश्च ॥ न च व्यावहारिकान्योन्याभावसिद्ध्याऽर्थान्तरत्वम् । त्रैकालिकत्वादिनाऽन्योन्याभावस्य विशेषितत्वात् । व्यावहारिकत्वे च तदयोगात् । अनुकूलतर्कस्यात्रैवो(न्यत्रो)क्तत्वान्नोपाध्याभाससमानयोगक्षेमत्वाप्रयोजकत्वानि (च)।

(३२) (भ.) उक्तानुमानेऽप्रसिद्धविशेषणत्वादिदोषपरिहारक्लेशमालोच्य यथा तदप्रसक्तिः स्यात्तथाऽनुमानान्तरमाह — किञ्चेति ॥ पटो न घट इति साक्षिकमन्योन्याभावमादाय पक्षे साध्यपर्यवसानं बोध्यम् । अत्राभावप्रतियोगीत्युक्तौ प्रागभावप्रध्वंसादावादायार्थान्तरता ॥ अतस्त्रैकालिकेति ॥ यद्याप्यनित्यगतो भेदोऽनित्य एव तथाऽपि `नष्टानामपि वस्तूनां भेदो नैव विनश्यती'ति मतं नैयानिकमतं चावलम्ब्य त्रैकालिकत्वोक्तिः । घटे घटो नास्तीति प्रतीयमानं घटधर्मिकघटात्यन्ताभावमादायार्थान्तरतानिरासाय पटादिधर्मिकेति । तावत्युक्ते पटे घटो नास्तीति प्रतीयमानं घटात्यन्ताभावमादायार्थान्तरता । तन्निवृत्त्यै संसर्गानवच्छिन्न-

**प्रतियोगिताकेति ॥** अत्यन्ताभावस्य संसर्गाभावप्रभेदत्वेन संसर्गावच्छिन्न-प्रतियोगिताकतया तदनवच्छिन्नप्रतियोगिताकत्वाभावात् । इदमपि न्यायमतरीत्यैव । स्वमतेऽत्यन्ताभावस्य संसर्गाभावत्वानङ्गीकारात् । अत्यन्ताभावत्वस्य साक्षादेवाभावविभाजकत्वेन संसर्गाभावप्रभेदत्वस्य तत्त्वसङ्ख्यानटिकायां दूषितत्वात् । संसर्गप्रतियोगिभावस्य यथासम्भवं प्रागभावादिष्वेवान्तर्भावकथनाच्चेति मन्तव्यम् । पटे पटो नास्तीति प्रतीयमाने पटधर्मिकत्रैकालिकात्यन्ताभावे पटसंसर्गावच्छिन्नप्रतियोगिताके पटसंसर्गानवच्छिन्नप्रतियोगिताकत्वाभावेन दृष्टान्ते साध्यवैकल्यमिति शङ्कानिरासाय घटेति । तथा च पटे पटात्यन्ताभावस्य पटसंसर्गावच्छिन्नप्रतियोगिताकत्वेऽपि घटसंसर्गावच्छिन्नप्रतियोगिता-कत्वाभावान्न साध्यवैकल्यमिति पदकृत्यं बोध्यम् । अस्मिन्नप्य-नुमानेऽत्यन्ताभावव्यावृत्त्यर्थं संसर्गावच्छिन्नप्रतियोगिताकेति विशेषण-प्रवेशाद्गौरवं मन्यमानोऽनुमानान्तराण्याह — **घटात्यन्ताभाव इत्यादिना ॥** अत्रान्योन्याभावमादायैव पक्षे तदन्यत्वपर्यवसानं बोध्यम् । दृष्टान्ते पटात्यन्ताभावमादाय तदन्यत्वपर्यवसानम् । अत्राभावान्य इत्युक्ते प्रागभावप्रध्वंसावादाय तदन्यत्वसिद्ध्याऽर्थान्तरत्वम् । अतस्त्रैकालिकेति । तावत्युक्ते घटनिष्ठपटात्यन्ताभावन्यत्वसिद्ध्याऽर्थान्तरता । तद्व्यावृत्त्यर्थं घटप्रतियोगिकेति । तादृशश्चाभावोऽन्यो नास्तीत्यन्योन्याभावमादायैव तदन्यत्वेवाऽन्ये घटपटयोर्भेदसिद्धिरिति भावः । घटसंसर्गो वेति । अत्र पटे घटो नेति प्रतीतिसाक्षिकमन्योन्याभावमादायैव तत्प्रतियोगितावच्छेदको घटनिष्ठो यस्तादात्म्यरूपो धर्मस्तदन्यत्वरूपसाध्यपर्यवसानं पक्षे बोध्यम् । अत्र घटनिष्ठधर्मान्य इत्युक्ते रूपाद्यन्यत्वसिद्ध्याऽर्थान्तरता ।

अतोऽभावप्रतियोगितावच्छेदकेति । तावत्युक्ते प्रागभावप्रध्वंसाभावप्रतियोगितावच्छेदकोत्तरपूर्वकालीनत्वरूपघटनिष्ठधर्ममादाय तदन्यत्वेऽसिद्ध्याऽर्थान्तरता । तन्निवृत्त्यै त्रैकालिकेति । घटे घटो नास्तीति प्रतीतिसिद्धघटधर्मिकघटप्रतियोगिकात्यन्ताभावमादाय तत्प्रतियोगितावच्छेदकघटनिष्ठसंसर्गरूपधर्मान्यत्वस्य घटसंसर्गे बाधितत्वात्तद्वारणाय पटादिधर्मिकेति । तादृशश्चाभावोऽन्योन्याभावं विना नान्यो भवितुमर्हतीति घटपटयोर्भेदसिद्धिरिति भावः । दृष्टान्ते च पटे घटो नास्तीति प्रतीयमानघटात्यन्ताभावप्रतियोगितावच्छेदकघटनिष्ठसंसर्गान्यत्वमादाय साध्यपर्यवसानम् ॥ **घटप्रागभावो वेति** ॥ अत्र पटो न घट इति प्रतीतिसाक्षिकमनादिभूतमन्योन्याभावमादायैव तदन्यत्वरूपं साध्यं पक्षे बोध्यम् । अत्रानाद्यभावान्य इत्युक्ते घटनिष्ठपटात्यन्ताभावमादायार्थान्तरता । तद्वारणाय पटादिधर्मिकेति । तावत्युक्ते पटनिष्ठघटात्यन्ताभावमादायार्थान्तरता । तन्निरासाय घटसंसर्गानवच्छिन्नप्रतियोगिताकेति । तादृशश्चाभावो घटप्रतियोकपटधर्मिकान्योन्याभाव एव भवितुमर्हतीति घटपटयोर्भेदसिद्धिः । दृष्टान्ते च पटेपटो नास्तीति प्रतीतिसाक्षिकपटनिष्ठात्यन्ताभावमादाय तदन्यत्वरूपं साध्यं बोध्यम् ॥ **घटध्वंसो वेति** ॥ अत्रापि घटप्रतियोगिकपटधर्मिकमन्योन्याभावमादायैव तदन्यत्वं पक्षे पर्यवसेयम् । अत्र नित्याभावान्य इत्युक्ते घटे पटात्यन्ताभावमादायार्थान्तरता । अतः पटादिधर्मिकेति ॥ तावत्युक्ते पटे पटात्यन्ताभावमादायार्थान्तारता । अतः संसर्गानवच्छन्नप्रतियोगिताकेति ॥ तथापि पटे पटात्यन्ताभावमादायार्थान्तरता । तस्य पटसंसर्गानवच्छिन्नप्रतियोगिताकत्वादतो घटेति ॥ तादृशश्चाभावः पटो न घट इति

प्रतीयमानोऽन्योन्याभाव एव भवतीति विवक्षितसिद्धिः । दृष्टान्ते पटप्रागभावे च पटे पटात्यन्ताभावमादाय तदन्यत्वरूपसाध्यपर्यवसानम् । ननु पूर्वानुमाने एतदनुमाने च घटसंसर्गानवच्छिन्नप्रतियोगिताक-पटान्तरादिधर्मिकपटात्यन्ताभावमादाय तदन्यत्वं पक्षेऽस्त्वेति सिद्ध-साधनम् । तन्निवृत्त्यर्थं घटप्रतियोगिकत्वेनाभावविशेषणे दृष्टान्ते साध्यवैकल्यम् । घटध्वंसतत्प्रागभावयोर्घटप्रतियोकत्वाभावादिति चेन्न । पटादिधर्मिकेत्यत्र पटादिपदेन पटादिसामान्यस्यैव विवक्षणीयत्वेन प्रतियोगिभिन्नघटादेर्ग्रहीतुमशक्यत्वात् । पटस्य घटादि पटान्तरेणापि भिन्नत्वस्याद्याप्यसिद्धत्वात् । सिद्धौ वा घटेनापि किमपराद्धम् । केचित्त्वेतच्छङ्कानिरासार्थं स्वप्रतियोगिप्रतियोगिकत्वेनाभावं विशिंषन्ति । तच्चिन्त्यम् । उक्तरीत्या पटादिपदेन पटादिसामान्यविवक्षायामुक्तशङ्काया एवानवकाशेन विशेषणदानवैयर्थ्यात् । तादृशाभावस्यान्योन्या-भावमत्यन्ताभावं च विनाऽन्यस्याभावादनाद्यभावपदयोर्नित्याभावपदयोर्वा वैयर्थ्यापाताच्चेति ॥ नन्वत्र घटात्यन्ताभावादिपक्षकानुमानचतुष्टये साध्येऽन्यपदेनान्योन्याभाव एव ग्राह्यः । तथा च जडमात्रे तदनङ्गीकारिणं प्रति तस्य कुत्राप्यप्रसिद्धत्वात्कथं तत्साधने नाप्रसिद्धविशेषणता । अन्यथा परम्परां विना साक्षादेव घटः पटाद्भिन्न इत्येव प्रयोगप्रसङ्गादिति चेन्न । अत्र सर्वत्रान्यपदेन भेदमात्रस्य विवक्षितत्वात् । तस्य च व्यावहारिकभेदाङ्गी-कारिणाऽप्यङ्गीकारादिति । नन्वत्र घटपक्षकाद्यानुमाने दृष्टान्तस्य साध्यवैकल्यम् । घटपटयोरभेदवादे पटाभावस्यापि घटभावरूपत्वेन पटप्रतियोगिकपटधर्मिकात्यन्ताभावस्य घटसंसर्गावच्छिन्नप्रतियोगिता-कत्वावश्यम्भावात्तदनवच्छिन्नप्रतियोगिताकत्वाभावेन तादृशाभावं प्रति

पटस्य प्रतियोगित्वाभावात् । एवं द्वितीयानुमानेऽपि । दृष्टान्तीकृतस्य पटधर्मिकपटाभावस्य घटपटयोरैक्यवादे घटप्रतियोगितयाऽपि सत्त्वेन घटप्रतियोगिकाभावरूपतासम्भवेन साध्यवैकल्यम् । दृष्टान्तदार्ष्टान्तिकभावस्य भेदव्याप्तत्वेन घटादिपक्षकानुमाने पटस्य वा पटाभावादेर्वा दृष्टान्तत्वानुपपत्तिश्चेत्यत आह — **घटपटयोरिति** ॥ अत्र प्रथमादिपदेन पटनिष्ठसंसर्गग्रहणम् । द्वितीयादिपदेन द्वितीयतृतीयानुमानयोर्घटप्रतियोगिकपटधर्मिकत्रैकालिकाभावान्यत्वे पटादिधर्मिकत्रैकालिकाभावप्रतियोगितावच्छेदकघटनिष्ठधर्मान्यत्वयोर्ग्रहणम् । साध्यवैकल्यादीत्यदिपदेन तु दृष्टान्तत्वानुपपत्तिः । नन्वभेदवादे कथमिदमङ्गीकर्तुमर्हतीत्यत आह — **तयोरिति** ॥ घटपटयोरित्यर्थः । अत्राप्यादिपदद्वयेन पूर्वोक्तानामेव ग्रहणम् । ततश्चायमार्थः । आद्यानुमाने तावन्न दृष्टान्ते साध्यवैकल्यम् । पटादिधर्मिकपटप्रतियोगिकात्यन्ताभावस्य घटपटयोर्व्यावहारिकभेदाङ्गीकारेण घटसंसर्गानवच्छिन्नप्रतियोगिकत्वसत्त्वे पटस्य तादृशाभावप्रतियोगितासद्भावात् । नापि द्वितीयानुमाने । घटपटयोर्व्यावहारिकभेदमात्रेण पटात्यन्ताभावस्य घटप्रतियोगिकपटधर्मिकात्यन्ताभावान्यत्वासम्भवात् । न चापि तृतीयानुमाने । पटनिष्ठसंसर्गस्य घटपटयोर्व्यावहारिकभेदाङ्गीकारादेव पटनिष्ठघटात्यन्ताभावप्रतियोगितावच्छेदकघटनिष्ठसंसर्गरूपधर्मान्यत्वसम्भवात् । अत एव घटघटात्यन्ताभावघटसंसर्गपक्षकानुमानेषु पटपटाभावपटनिष्ठसंसर्गानां दृष्टान्तत्वेनोपादानं चोपपद्यत इति ॥ विपक्षे बाधकद्वयमाह — **अन्यथेति** ॥ व्यावहारिकभेदमात्रेणोक्तव्यवस्थानङ्गीकार इत्यर्थः ॥ **सिद्धघटस्येति** ॥ बहुव्रीहिः । पटार्थिन इति शेषः । घटपटयोः पारमार्थिकाभेदस्य जागरूकत्वादिति भावः ।

पटसामग्र्यादीत्यादिपदेन पटपरिग्रहः । एषा च साध्यवैकल्यशङ्का-तत्परिहारश्चाद्यानुमानत्रयविषय एव । न चतुर्थपञ्चमविषयः । तत्र दृष्टान्तीकृतयोः पटध्वंसतत्प्रागभावयोरनाद्यभावनित्याभावान्यत्वस्यैव सत्त्वात् । तर्हि तदनुमानत्रयान्तरमेवैष चर्चः कर्तव्य इति चेत् । सत्यम् । तथाऽपि घटपटभेदसाधनायैतदनुमानपञ्चकस्यापि प्रक्रान्तत्वेन मध्ये चर्चान्तरस्यानुचितत्वात्तदेव साधन एवायं चर्च उचित इति मन्तव्यम् । एके तु घटपक्षकानुमानविषय एवायं चर्च इत्याचक्षते । तत्रादिपदानां कृत्यं किमिति चिन्त्यम् । अन्ये तु घटात्यन्ताभावपक्षकद्वितीयानुमानविषय एवायं चर्च इत्यभिप्रेत्य दृष्टान्तस्य साध्यवैकल्यमुपपाद्यम् । एवं सिसाधयिषितान्योन्याभावेऽपि न घटसंसर्गानवच्छिन्नप्रतियोगिताकत्वम् । घटात्यन्ताभावतदन्योन्याभावयोरभेदात् । तथा च बाध इत्यभिप्रेत्य साध्यवैकल्यादीत्यादिपदेन बाधो ग्राह्यः । दृष्टान्तस्येति पक्षस्याप्युपलक्षणमित्याहुः । तत्राप्याद्यद्वितीययोरादिपदयोः कृत्यं चिन्त्यमेवेति ॥

**व्यावहारिकत्वे चेति** ॥ व्यावहारिकस्याविद्यकत्वेनाविद्यानिवृत्तौ मोक्षे तन्निवृत्तेरप्यावश्यकत्वेन त्रैकालिकत्वायोगादित्यर्थः । ननु जडभेद-साधकानुमानेषु सर्वत्र पक्षे तरत्वमुपाधिः । एवमेव साध्याभावस्यापि साधयितुं शक्यत्वेनाभाससमानयोगक्षेमत्वम् । हेतूनामप्रयोजकता चेत्यत आह — **अनुकूलतर्कस्येति** ॥ अन्यत्र न्यायामृत उक्तत्वादित्यर्थः । तत्र हि प्रथमपरिच्छेदे द्वैतप्रत्यक्षस्याद्वैतश्रुतिबाधकत्वखण्डनभङ्गे इदं रूप्यं गौरोऽहमित्यादिभ्रमाणां प्रमात्वं स्यात् । आत्मनि देहाद्भेदस्यानृतादि-व्यावृत्तेश्च बोधकानां वेदान्तानामप्रामाण्यं च स्यात् । घटज्ञानेनैव तदभिन्नस्य ब्रह्मतदभेदादेः सर्वस्यापि वस्तुनो ज्ञातत्वेन सार्वज्ञं वेदान्तानां

वैयर्थ्यं सद्यो मोक्षश्च स्यात् । सुखदुःखबन्धमोक्षभेदाभेददूषणभूषणजय-पराजयभ्रान्तिप्रमादेरपि वस्तुतोऽभिन्नत्वेन सर्वसङ्करापत्त्या स्वक्रिया-स्वन्यायस्ववचनविरोधाश्च स्युरित्याद्युक्तम् । यद्यप्यत्रैव घटपटयो-स्तादात्म्यस्य पारमार्थिकत्वाङ्गीकारे तु जीवब्रह्मणोरिव घटपटस्वरूपस्य पारमार्थिकत्वं स्यादित्यादिनाऽनुकूलतर्कः प्रागुक्तः । दूरस्थवनस्पत्योर-भेदग्राहि च प्रत्यक्षं तत्त्वावेदकं स्यादिति वक्ष्यते च । तथाऽपि बहूनामनुकूलतर्काणां ज्ञापनार्थमन्यत्रेत्युक्तमिति ज्ञातव्यम् । केचित्त्वन्यत्र न्यायमृत उक्तत्वादुक्तप्रायत्वादिति व्याख्याय यदि घटपटयोस्तात्त्विकमैक्यं स्यात् तर्हि घटनाशे पटनाशः स्यात् । घटज्ञाने पटज्ञानं स्यादित्यादेस्तर्कस्य सत्त्वादित्याहुः ।

(३२) (मु.) नन्वेवं तादात्म्यस्य मिथ्यात्वमस्तु । कथं तावता भेदपारमार्थिकत्वम् । न हीदानीं तादात्म्यनिराकरणमात्रेण परपक्षदूषणमुपक्रान्तम् । किन्तु भेदसत्यत्वसाधनेन स्वपक्षसमर्थनमेव । न च परस्परविरुद्धयोरन्यतरस्त्वत एव सेत्स्यतीति वाच्यम् । भेदसिद्धावपि तत्पामार्थ्यसाधनोपायाभावादिति चेन्न । यत्र यत्सत्तावच्छिन्नस्य निषेधस्तत्र तत्सत्तावच्छिन्नस्यैव तद्विरुद्धस्यैव धर्मस्य विधिः । एवञ्च पारमार्थिक-तादात्म्यनिषेधे तादृशस्यैव भेदप्राप्तिः प्रयोगश्च । तादात्म्यं स्वनिषेधप्रतियोगितावच्छेदकसत्तावत्स्वविरुद्धवन्निष्ठात्यन्ताभावप्रतियोगि मिथ्यात्वाज्जीवेश्वरभेदवत् । न च धर्मिणोऽपि तादृशसत्ताकत्वमुपाधिः । अन्यथा शशविषाणे नित्यत्वस्य मिथ्यात्वेऽनित्यत्वं स्यादिति वाच्यम् । तादात्म्यमुक्तधर्मवत्यधिकरणेऽभावप्रतियोगीति साधने उपाधेरपि पक्षे लाभात् । न चैवमुक्ते शशविषाणनित्यत्वे व्यभिचारः । मिथ्यात्वादित्यस्य

सत्तावत्यधिकरणे **निषेधप्रतियोगित्वादित्यर्थकत्वादिति** ॥ ननु तथाऽपि तादात्म्यनिषेधमुखेन भेदोपलम्भो न साक्षात् । तथाऽपि धर्मिसत्त्वसाधनायासग्रस्तम् । न चैवं साक्षादेव घटः पटाद्भिन्न इति साधयामीति वाच्यम् । भेदाख्यपदार्थस्यैवाभावेनाप्रसिद्धविशेषणत्वात् । भेदव्यवहारस्त्वन्योन्यधर्मात्यन्ताभावेनैवोपपन्नः । न चैवं सर्वाद्वैतवादेऽन्योन्यधर्मात्यन्ताभावोऽप्ययुक्त इति वाच्यम् । धर्माणां स्वात्यन्ताभावसमानाधिकरणत्वाङ्गीकारात् । किञ्च भेदमात्रसाधने व्यावहारिकभेदे सिद्धसाधनम् । पारमार्थिकेति विशेषणे त्वप्रसिद्धिः । न चात्मभेदसाधन इव धर्मिसत्तासमानसत्ताकेति विशेषणसम्भवः । धर्मिणामपि व्यावहारिकत्वादित्यस्वरसात्प्रकारान्तरेण प्रयुङ्क्ते । घटसंसर्गानवच्छिन्नप्रतियोगिताकश्चासौ त्रैकालिकाभावश्च स च घटान्योन्याभाव इत्यभिप्रेतोऽर्थस्तत्प्रतियोगीत्यर्थः । घटप्रतियोगिकपटादिधर्मिकात्यन्ताभावेनान्यथासिद्धिवारणाय **घटसंसर्गानवच्छिन्नप्रतियोगिताकेति** ॥ अत्यन्ताभावस्योक्तसम्बन्धावच्छिन्नप्रतियोगिताकत्वेन तद्व्युदासः । अत्र संसर्गान्योन्याभावरूपस्थलद्वयेऽपि संसर्गतादात्म्ययोः प्रतियोगितावच्छेदकत्वेन लोकप्रसिद्ध्यनुसारादेवमुक्तिरिति ज्ञेयम् । वस्तुतस्तु तयोरारोप्यसम्बन्धमात्रं नावच्छेदकमित्युक्तं पुरस्तात् । एवञ्चात्र घटसंसर्गानारोप्यकेति तदर्थो ज्ञेयः । एवमुत्तरत्रापि । घटतादात्म्यावच्छिन्नेत्येवोक्तावप्रसिद्धसाध्यवैकल्ये स्यातामित्येवमुक्तिः । संसर्गानवच्छिन्नेत्याद्येवोक्तावपि तावेव दोषावित्यत आदौ संसर्गविशेषतया घटग्रहणम् । अप्रस्तुतचेतनभेदेनार्थान्तरतावारणाय **घटादिधर्मिकेति** ॥ वियदादिपदेन जडमात्रं विवक्षितमिति ज्ञेयम् । घटप्राग-

भावान्योन्याभावैरन्यथासिद्धिवारणाय **त्रैकालिकेति** ॥ अस्मिन्मते प्रागभावध्वंसयोः समवायिदेशवृत्तित्वनियमाभावेन पटादिधर्मिकेत्यनेनैव तद्व्युदासोपपत्तेः । कुतस्तदिति शङ्कानवकाशः । ननु प्रागभावध्वंसयोः संसर्गाभावत्वेन संसर्गानवच्छिन्नेत्यनेनैव व्युदासान्न तदर्थं त्रैकालिकपदमिति चेन्न । अत्रात्यन्ताभावस्यैव संसर्गाभावत्वरीत्याऽनुमानप्रवृत्तेः । यथोक्तं जयतीर्थश्रीमच्चरणैः । यच्चान्यैरत्यन्ताभावस्वरूपमुक्त्वा **संसर्गप्रतियोगिकाभावोऽत्यन्ताभाव इति** ॥ यद्वा संसर्गानवच्छिन्नेत्यस्य विशेषणान्तराघटितसंसर्गमात्रावच्छिन्नेत्यर्थः । एवञ्चात्रात्यन्ताभावे तन्मात्रावच्छेदकत्वेन तद्व्युदास इति ॥ व्यावहारिकान्योन्याभावमात्रव्युदासाय त्रैकालिकेति ॥ **पटवदिति** ॥ पटात्यन्ताभावस्य संसर्गानवच्छिन्नत्वेऽपि घटसंसर्गावच्छिन्नप्रतियोगिताकत्वाभावात्तत्प्रतियोगिनि पटे विशिष्टाभावेन साध्यमुपपादनीयम् । **घटात्यन्ताभावो वेति** ॥ घटप्रतियोगिकः पटादिधर्मिको यस्त्रैकालिकोऽभावस्तदन्य इत्यर्थः । स चान्योन्याभाव एवं वक्तव्य इति भावः । घटाद्यत्यन्ताभावेनार्थान्तरतावारणाय घटप्रतियोगिकेति पटादिधर्मिकेति त्रैकालिकेति पूर्ववत् ॥ **पटाभाववदिति** ॥ तस्योक्तरूपघटात्यन्ताभावान्यत्वेन साध्यवत्त्वं ज्ञेयम् । ननु तथाऽप्येकस्यात्यन्ताभावस्य घटादिप्रतियोगिकात्यन्ताभावान्यपरत्वेन सिद्धसाधनतेति चेन्न । घटत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावस्य भेदेऽप्यवच्छेदकभेदाभावेनैकत्वात् । न च घटात्यन्ताभावस्य नीलघटात्यन्ताभावान्यत्वेन स एव दोष इति वाच्यम् । प्रतिज्ञायां घटप्रतियोगिकेत्यस्य घटत्वावच्छिन्नप्रतियोगिताकेत्यर्थकत्वात् । ननु तथाऽपि संयोगारोप्यघटात्यन्ताभावस्य सम्बन्धान्तरारोप्यकघटात्यन्ताभावत्वेना-

न्यथासिद्धिरेव । न चात्र स्वज्ञानकारणीभूतप्रतियोग्यारोपनिष्ठसम्बन्धान्यसम्बन्धानारोप्यकेति ॥ अभावो विशेषयितुं शक्यः । अन्योन्यभावस्यात्यन्ताभावाद्विलक्षणसम्बन्धारोप्यकत्वेन बाधात् । न चात्यन्ताभावमात्रस्यापि पक्षत्वान्नोक्तदोष इति वाच्यम् । सर्वात्यन्ताभावानामन्यत्वेनान्यथासिद्धेः । न चात्यन्ताभावोऽन्य इत्यस्यात्यन्ताभावावच्छिन्नाधिकरणताकान्यत्ववानित्यर्थो विवक्षित इति वाच्यम् । **दृष्टान्तसाध्यवैकल्यापत्तेरिति** ॥ मैवम् । घटात्यन्ताभावोऽन्य इत्यस्य यावत्स्वाधिकरणकमेकाभावनिरूपितं यदन्यत्वं तद्वानित्यर्थकत्वात् । स्वाधिकरणपदं स्वसमभिव्याहृतपरमिति न साध्यवैकल्यादिदोषः । नन्वत्रान्योन्याभावमात्रासिद्धिदशायामन्य इत्युक्ते साध्याप्रसिद्ध्याऽप्रसिद्धविशेषणतेति चेन्न । अन्यत्रान्यपदस्यान्योन्याभावमङ्गीकुर्वताऽप्यन्यादिव्यवहारविषयतया यद्विवक्षितं तन्मात्रार्थकत्वात् ॥ **घटसंसर्गो वेति** ॥ घटादिधर्मिको यस्त्रैकालिकाभावास्तत्प्रतियोगितावच्छेदकयोर्घटनिष्ठस्तदन्य इत्यर्थः । संसर्गस्तादात्म्येति धर्मद्वयं ह्यभावप्रतियोगितावच्छेदकतया विवक्षितम् । अत्र संसर्गस्य तादृशधर्मान्यत्वं तादृशतादात्म्यरूपधर्मान्यत्वेन पर्यवस्यति । तदवच्छेद्यप्रतियोगिताको योऽभावोऽन्योन्याभाव एवेति भावः । अत्र घटनिष्ठधर्मान्य इत्येवोक्ते रूपाद्यन्यत्वेनार्थान्तरम् । अतोऽवच्छेदकान्तं विशेषणम् । घटनिष्ठतादृशधर्मान्यत्वसिद्धिवारणाय घटनिष्ठेति ॥ **पटनिष्ठसंसर्गवदिति** ॥ तस्य पक्षभूतसंसर्गान्यत्वेन साध्यत्वं ज्ञेयम् । शेषं पूर्ववत् । **घटप्रागभावो वेति** ॥ घटसंसर्गानवच्छिन्नः पटधर्मिको योऽनाद्यभावः स घटाद्यन्योन्याभाव एवेति भावः । अत्र पटनिष्ठकुड्यात्यन्ताभावान्यत्वसिद्धिवारणाय घटप्रतियोगिके-

त्यपि विशेषणं ग्राह्यम् । घटात्यन्ताभावान्यत्वासिद्धिवारणाय घटसंसर्गानवच्छिन्नप्रतियोगिताकेत्युक्तम् । व्यावहारिकान्योन्याभावसिद्धिवारणायादीति । इदं तु व्यावहारिकभेदस्यागन्तुकत्वाभिप्रायेणेति ज्ञेयम् । यद्वाऽनादीत्यनौपाधिकेत्यर्थः । अथवा ध्वंसान्यद्वारणायानादीति । अत्र संसर्गानवच्छिन्नेत्यनेनैव पूर्ववद्द्रष्टव्यः ॥ **घटप्रध्वंसवदिति** ॥ तस्योक्तरूपपक्षीकृत्य तद्घटप्रागभावान्यत्वेन साध्यत्वं ज्ञेयम् ॥ **घटप्रध्वंसो वेति** ॥ अत्रापि घटप्रतियोगिकेत्यपि ग्राह्यम् । वियत्पदं पूर्ववद्व्यावहारिकवारणाय वा प्रागभावव्युदासार्थं वेति ज्ञेयम् ॥ **घटप्रागभाववदिति** ॥ तस्योक्तरूपध्वंसान्यत्वेन साध्यवत्त्वं ज्ञेयम् । नन्वेतेष्वनुमानेषु दृष्टान्तीकृतपटादौ घटसंसर्गानवच्छिन्नत्वेत्यन्ताभावप्रतियोगित्वादिना साध्यमुपपादनीयम् । तन्न युज्यते । सर्वाभेदवादिनो मम घटस्यैव पटत्वे पटात्यन्ताभावादेरपि घटसंसर्गानवच्छिन्नप्रतियोगिताकत्वात् । एवञ्च साध्यवैकल्याप्रसिद्धविशेषणत्वादीत्यत आह — **घटपटयोरिति** ॥ घटात्यन्ताभावपदेन कुड्यात्यन्ताभावादेर्ग्रहणम् । न तु घटपटप्रागभावादेः । प्रतियोगित्वादिरित्यादिपदेन द्वितीयाद्यनुमानाभिप्रेतघटादिप्रतियोगिकत्वादेर्ग्रहणम् । तदुपपादयति — **तयोरिति** ॥ त्वया घटपटादिव्यवहारसाङ्कर्याय व्यावहारिकभेदोऽङ्गीकृतः । तामेव व्यवस्थामाश्रित्य वयं साधयामः । वैयात्याद्व्यवस्थामनङ्गीकुर्वतोऽतिप्रसङ्गमाह — **सिद्धपटस्येति** ॥ घटपटयोरेकत्वेनोदितोत्पादनीयत्वाभावादिति भावः ॥ **त्रैकालिकत्वादिनेति** ॥ अत्रादिपदेनानादित्वादेर्ग्रहणम् । ननु किमिदं त्रैकालिकत्वम् । त्रिकालसम्बन्धित्वं वा त्रिकालाबाध्यत्वं वा । नाद्यः । व्यावहारिकेऽप्याकाशादिवत्तदविरोधात् । न द्वितीयः । साध्यवैकल्याप्रसिद्ध-

विशेषणत्वापत्तेः । एवमनादित्वमपि प्रागभावाप्रतियोगित्वं वाऽविद्या-प्रयोज्यत्वाभावो वा । तथा नित्यत्वमपि ध्वंसाप्रतियोगित्वं वा बाधागोचरत्वं वेति **विकल्पासहमिति** ॥ मैवम् । त्रैकालिकाबाध्यत्वमेव त्रैकालिकत्वम् । न चोक्तदोषः । अभावपारमार्थिकवादिनं प्रत्युपपत्तेः । न चैवमन्योन्या-भावमात्रसाधने तस्य पारमार्थ्यं स्वतः सेत्स्यतीति त्रैकालिकेति विशेषणं व्यर्थमिति वाच्यम् । संसर्गाभावमात्रस्य पारमार्थिकत्वमङ्गी-कृत्यान्योन्याभावमेव यो नाङ्गीकरोति । कथञ्चित्सम्भवेऽपि बाध्य एव भवेदिति मन्यते तं प्रत्युपपत्तेः । यद्वा त्रिकालसम्बन्धित्वं त्रैकालिकत्वम् । न चोक्तदोषः ।

भेदस्य सत्योपाधिजडान्यत्वं तद्विनाशनाश्यत्वं सर्वस्यापि सत्यत्वं यो भास्करोऽङ्गीकरोति तं प्रत्युपपत्तेः । अस्मिन्पक्षे मूले व्यावहारिक-पदमौपाधिकपरमिति ज्ञेयम् । **एवमनादित्वमपि निर्वचनीयमिति** ॥ नन्वेतेष्वप्यनुमानेषु घटान्यत्वमुपाधिः । न च पक्षेतरत्वान्नोपाधित्वम् । पक्षमात्रानभ्युपगतसाध्यकानुमाने तादृशस्यैव वक्तव्यत्वात् । दूषकताबीजसद्भावे पक्षेतरत्वरूपमात्रस्याप्रयोजकत्वात् । किञ्चैते आभाससमानयोगक्षमाः । आद्यप्रयोगे संसर्गानवच्छिन्नेतिवत्तादत्म्या-नवच्छिन्नेति प्रयोगे संसर्गाभावान्योन्याभावविलक्षणाभावान्तरसिद्ध्यापत्तेः । घटादिधर्मिकेति स्थाने घटधर्मिकेत्युक्ते स्वस्यैव स्वभेदापत्तेश्च । एवं द्वितीयप्रयोगेऽपीति । अपि च नेति प्रयोजकाः । हेतुसाध्ययोरनु-बन्धानुपलम्भे इत्यत आह — **अनुकूलेति** ॥ **अन्यत्रेति** ॥ **न्यायामृते** । तथा हि । यदि जडानां परस्परभेदो न स्यात् । यदि चैक्यं पारमार्थिकं स्यात् तर्हि दूरस्थवनस्पत्यैक्यं प्रत्यक्षं न भ्रान्तिस्तद्बाध एव प्रमा स्यात् ।

स्वपरपक्षयोरैक्येन परदूषणे स्वक्रियाविरोधः स्यात् । दूषणसाधनयोरेकत्वेन परदूषणमेव तत्साधनं स्यात् । उपाध्यारोपकत्वेन जीवयोरौपाधिकभेदो न स्यात् । घटार्थिनः पटे प्रवृत्तिः स्यात् । परस्य नित्यदुःखमेव भूषणं स्यादित्यादि ।

ननु वनस्पत्यैक्यप्रत्यक्षं व्यावहारिक्यं गृह्णाति । तच्च नास्तीति भ्रान्तिरिति चेत् । तस्यैक्यमात्रग्राहकत्वेन व्यावहारिकत्वोल्लेखस्यानानुभाविकत्वात् । अनुल्लेखिप्रत्यक्षस्यापारमार्थिकार्थस्वाभाव्याद्गृह्यमाणमैक्यमारोपितमेवेति चेत् तर्हि एको वनस्पतिरिति वाक्यजन्यं ज्ञानं प्रमा स्यात् । वाक्यस्य पारमार्थिकविषयत्वोपपत्तेः । तदप्यारोपिताविषयमिति चेत् तर्हि जीवब्रह्मैक्यमपि तथा स्यात् । किञ्चारोपितस्य बाधकोन्नेयत्वेन निर्बाधस्य वायुवनस्पत्यैक्यस्य नारोपितत्वम् । द्वौ वृक्षावित्युत्तरप्रत्यक्षस्य भ्रान्तित्वेन विषयाभावरूपप्रमात्वेन रूपबाधत्वायोगात् । तच्च व्यावहारिकभेदस्वक्रियाविरोधादिपरिहारः सम्भवतीति तन्नापरमार्थतस्तदापत्तिरिति ।

(३२) (कु.) ॥ किञ्च घट इति ॥ घटसंसर्गेणानवच्छिन्ना प्रतियोगिता यस्य पटादिधर्मिकत्रैकालिकाभावस्य तस्य प्रतियोगीत्यर्थः । पटे पटात्यन्ताभावमादाय साध्यं बोध्यम् । पक्षे तु घटात्यन्ताभावस्य घटसंसर्गावच्छिन्नप्रतियोगिताकत्वेन तमादाय साध्यपर्यवसानमित्यन्योन्याभावसिद्धिः । तस्य तादात्म्यावच्छिन्नप्रतियोगिताकत्वेन घटसंसर्गानवच्छिन्नप्रतियोगिताकत्वादिति भावः । त्रैकालिकत्वविशेषणं त्वन्योन्याभावस्य त्रैकालिकत्वरूपोद्देश्यसिद्ध्यर्थं साऽपि व्यावहारिकमन्योन्याभावमादाय सिद्धसाधनतानिवृत्त्यर्थमित्यग्रे स्फुटम् । न तु प्रागभावध्वंसा-

भावमादाय सिद्धसाधनतानिवृत्त्यर्थम् । तयोर्घटसंसर्गावच्छिन्नप्रतियोगिताकत्वेन सिद्धसाधनतानवकाशात् । **एवं पटादिधर्मिकेति** ॥ यद्यपि पटधर्मिकस्य घटान्योन्याभावस्य न सिद्धान्ते त्रैकालिकत्वं पटाद्यात्मकत्वात्तस्य तथाऽपि न्यायरीत्येदम् । अतद्गुणसंविज्ञानबहुव्रीहिणा नित्यधर्मिकान्योन्याभावाभिप्रायको वेति बोध्यम् ॥ **घटात्यन्ताभावो वेति** ॥ घटप्रतियोगिकपटधर्मिको यस्त्रैकालिकाभावस्तदन्य इत्यर्थः । पटात्यन्ताभावमादाय सिद्धसाधनतावारणाय **घटप्रतियोगिकेति** ॥ दृष्टान्ते घटात्यन्ताभावमादाय साध्यं बोध्यम् ॥ **पटसंसर्गो वेति** ॥ पटधर्मिको यस्त्रैकालिकाभावस्तत्प्रतियोगितावच्छेदको घटनिष्ठधर्मस्तदन्य इत्यर्थः । पटादिसंसर्गान्यत्वमादाय सिद्धसाधनतावारणाय **घटनिष्ठेति** ॥ धर्मपदार्थं तादात्म्यसंसर्गयोर्विशेषणम् । तेन घटतदवच्छिन्नप्रतियोगिताकस्त्रैकालिकपटधर्मिकोऽभावः सिध्यन् अन्योन्याभाव एव सिध्यति । संसर्गान्यत्वस्य पक्षे बाधादिति भावः । घटसंसर्गान्यत्वमादाय दृष्टान्ते साध्यमिति भावः ॥ **घटप्रागभावो वेति** ॥ घटसंसर्गेणानवच्छिन्ना प्रतियोगिता यस्य तादृशो यः पटधर्मिकोऽनादिरभावस्तदन्य इत्यर्थः । घटात्यन्ताभावान्यत्वमादाय सिद्धसाधनतावारणाय **संसर्गानवच्छिन्नप्रतियोगिताकेति** ॥ दृष्टान्तीकृते पटध्वंसे पटादिधर्मिकपटात्यन्ताभावान्यत्वमादाय **साध्यसत्त्वात्तदर्थं घटेति** ॥ धटात्यन्ताभावो यद्यपि संसर्गानवच्छिन्नप्रतियोगिताकस्तथाऽपि न घटसंसर्गानवच्छिन्नप्रतियोगिताक इति पटघटभेदसिद्ध्यर्थं **पटादिधर्मिकेति** ॥ पटधर्मिकपटीयरूपादिध्वंसान्यत्वमादाय सिद्धसाधनतावारणायानादीति । घटसंसर्गानवच्छिन्नप्रतियोगिताकभिन्नपटादिधर्मिकपटत्वान्यत्वमादाय

**तद्वारणायाभावेति ॥**

ननु दृष्टान्तीकृतपटध्वंसे यथा पटात्यन्ताभावन्यत्वमादाय साध्यम् । तथा पक्षेऽपि तदन्यत्वमेवादाय साध्यमस्त्येवेति सिद्धसाधनम् । न च तन्निवृत्त्यर्थं घटप्रतियोगिकत्वविशेषणं देयमिति वाच्यम् । दृष्टान्ते साध्यवैकल्यापत्तेः । न च दृष्टान्ते घटप्रागभावान्यत्वमादाय साध्यं भविष्यतीति वाच्यम् । तस्य घटसंसर्गानवच्छिन्नप्रतियोगिताकत्व-घटादिधर्मिकत्वयोरभावात् । अग्रिमग्रन्थविरोधाच्च । सेयमुभयतः पाशारज्जुरिति चेन्न । स्वप्रतियोगिप्रतियोगिकत्वेनाभावविशेषणात् । स्वशब्दः समभिव्याहृतपरः पक्षे साध्ययोजनदशायां घटप्रागभावं बोधयति । दृष्टान्ते तद्योजने तु पटध्वंसम् । एवञ्च न सिद्धसाधनं न वा दृष्टान्ते साध्यवैकल्यमिति ॥ अनाद्यभावपदं तूपरञ्जके भविष्यतीति इति न किञ्चिदनुपपन्नम् ॥ **घटप्रध्वंसो वेति** ॥ पूर्ववदेवात्र सर्वं बोध्यम् । ननु जडानां परस्परं तत्त्वतो भेदस्याभाव इति मते घटपटयोरभेदेति घटात्यन्ताभावपटात्यन्ताभावयोरभेदाच्च न पटात्यन्ताभावस्य घटसंसर्गानवच्छिन्नप्रतियोगिताकभिन्नत्वमिति दृष्टान्ते साध्यवैकल्यम् । एवं सिषाधयिषिताऽन्योन्याभावेऽपि न घटसंसर्गानवच्छिन्नप्रतियोगिताकत्वम् । घटात्यन्ताभावतदन्योन्याभावयोरभेदात् । तथा च बाध इत्यत आह — **घटपटयोरभेदवादिनेति** ॥ इदमुपलक्षणम् । तदुभयात्यन्ताभावयोर-भेदवादिना घटात्यन्ताभावघटान्योन्याभावयोरभेदवादिनेत्यपि बोध्यम् ॥ **साध्यवैकल्यादीति** । आदिपदेन बाधः । दृष्टान्तेत्युपलक्षणं पक्षस्यापि ॥ **अन्यथेति** ॥ व्यावहारिकभेदानङ्गीकार इत्यर्थः । ननु सर्वत्रापि पक्षेतरत्वस्य तत्समीपशीलस्यैवोपाधेः सम्भवात् । सोपाधिकत्वमन्योन्याभावत्वस्यापि साध्यशरीरप्रवेशेन सम्पन्नस्याभाससमानयोगक्षेमताऽप्रयोजकत्वं चेत्यत

आह — **अनुकूलतर्कस्येति** ॥ अन्यत्र न्यायामृते । उक्तत्वात् उक्तप्रायत्वात् । यदि घटपटयोस्तात्त्विकमैक्यं स्यात् तर्हि घटनाशे पटनाशः स्यात् । घटज्ञाने पटज्ञानं स्यात् । सिद्धघटस्य पुंसः पटसामग्र्युपादानं न स्यादित्यादेस्तर्कस्य सत्त्वात् । हेतोः साध्यव्याप्यत्वेन साध्यव्याप्यहेत्वव्यापकत्वेनोपाधेः साध्यव्यापकत्वात् । न सोपाधिकत्वम् । अन्योन्याभावान्यत्वस्यापि साध्यशरीरे प्रवेशेन सम्पन्नस्याभावस्याभाससमानात्मकस्याभासानामनुकूलतर्काभावेन न समानयोगक्षेमता । अत एव नाप्रयोजकत्वमपीति भावः ।

(३२) (हु.) ॥ **किञ्चेति** ॥ **घटसंसर्गानवच्छिन्नेति** ॥ पटनिष्ठघटात्यन्ताभावमादाय सिद्धसाधनतावारणाय घटसंसर्गानवच्छिन्नेति । संसर्गानवच्छिन्नत्वमात्रोक्तौ भेदसिद्धेः प्राग्घटनिष्ठतादृशत्रैकालिकाभावाप्रसिद्ध्या साध्याप्रसिद्धिः स्यादतो घटसंसर्गेति । दृष्टान्ते तादृशं पट[घट]निष्ठं पटात्यन्ताभावमादाय साध्योपपत्तिः । तस्य घट[पट]सर्गावच्छिन्नत्वेऽपि पटसंसर्गानवच्छिन्नत्वात् । पक्षे चोक्तसाध्यसिद्धिरन्योन्याभावं विना न पर्यवस्यति । घटीयप्रागभावप्रध्वंसयोः प्रतियोगिसमवायकारणवृत्तित्वेन पटधर्मिकत्वाभावात् । प्राचीनमते पूर्वापरकालावच्छिन्नसमवाययोरेव तत्प्रतियोगितावच्छेदकतया घटसंसर्गानवच्छिन्नत्वा[न्ना]भावात् । त्रैकालिकत्वाभावाच्च । तादृशाभावान्योन्याभाव एव वक्तव्य इति तत्सिद्धिः । न च पटधर्मिकेति विशेषणं व्यर्थम् । पटनिष्ठघटभेदरूपोद्देश्यसिद्ध्यर्थत्वात् । त्रैकालिकेत्यपि तदर्थमेव । तस्य पारमार्थिकत्वसिद्ध्यर्थत्वमप्यग्रे ग्रन्थ एव व्यक्तम्[1] । न च व्यधिकरणसम्बन्धावच्छिन्नघटात्यन्ताभावं

---

[1] `वक्तव्यम्' मु.

पटनिष्ठमादाय सिद्धसाधनमिति वाच्यम् । संसर्गावच्छिन्नपट[घट]-निष्ठप्रतियोगित्वानिरूपकत्वस्य तदर्थत्वात् ॥ घटात्यन्ताभाव इति ॥ घटप्रतियोगिकत्वं पटात्यन्ताभावभेदमादाय सिद्धसाधनतावारणायान्यत्र भेदमङ्गीकृत्य घटपटस्थल एव व्यभिचारवेलायामेतत्साध्यस्य प्रवृत्तत्वान्न भेदघटितसाध्याप्रसिद्धिः शङ्क्या । पटधर्मिकत्वत्रैकालिकत्वयोः कृत्यं तु पूर्ववदेव । दृष्टान्ते पक्षीभूतघटात्यन्ताभावभेदमादाय साध्यमुपपादनीयम् । पक्षे तत्सिद्धेः स्वभेदमादाय पर्यवसानायोगात् । तादृशान्योन्याभाव-सिद्धिः । न च पटनिष्ठघटप्रतियोगिकनानासम्बन्धावच्छिन्नात्यन्ताभावानां मध्ये एकस्मिन्परभेदमादाय[1] साध्योपपादनसम्भवेन सिद्धसाधनता । घटात्यन्ताभावत्वावच्छेदेन साध्यसाधनेऽप्येकस्मिन्परभेदमादाय[2] सर्वपक्षेषु साध्यसत्त्वात्साध्यतावच्छेदकरूपेण पक्षतावच्छेदकव्यापकत्वमबाधितमेव । भेदघटितव्यापकताभानमनुमितौ पूर्वमेव निराकृतमिति न तद्भानबलाद्भेदसिद्धिः स्यात् । घटप्रतियोगिकपटधर्मिकत्रैकालिका-भावत्वावच्छिन्नप्रतियोगिताकभेदसाधने पक्षेऽप्युक्तप्रतियोगितावच्छेदका-क्रान्ते साध्यस्याभावद्बाधापत्तिरिति चेन्न । अन्योन्याभावघटितैव यापकता[3] सर्वत्रानुमितावुत्सर्गतो भासते । लघुशरीरत्वात् । तद्बाधग्रहसहकृत-सामग्र्यधीनानुमितावत्यन्ताभावघटिता भासत इत्यभ्युपगमेन प्रकृते बाधनिश्चयाभावेनान्योन्याभावघटितव्यापकतया एव भावेनाभिमतसिद्धिः । लाघवज्ञानबलाद्वा प्रकृते तद्भानाङ्गीकारादभिमतसिद्धेः । अथवाऽऽश्रय-निष्ठप्रतियोगिताकत्वस्वसामानाधिकरण्योभयसम्बन्धेन घटात्यन्ता-

---

[1] `-स्मिन्पट-' मु. 2. `-स्मिन्पट-' मु.

[3] `अन्योन्याभावघटितव्यापकतयैव' मु.

भावत्ववदन्यत्वेन साध्यीभूतभेदस्य विशेषणीयतयोक्तभेदानां तादृशत्वेन तद्वारणेनेष्टसिद्धेः ॥ घटसंसर्ग इति ॥ घटसम्बन्धिसंसर्ग इत्यर्थः । घटनिष्ठत्रैकालिकाभावप्रतियोगितावच्छेदको यो घटनिष्ठधर्मस्तदन्य इत्यर्थः । दृष्टान्ते पटनिष्ठाभावान्तरीयप्रतियोगितावच्छेदकसंसर्गे एतादृशघटसंसर्गभेदमादाय साध्यमुपपादनीनयम् । तत्सिद्धेः स्वान्यत्वमादाय पर्यवसानायोगात् । तादृशाभावप्रतियोगितावच्छेदकीभूतं घटसंसर्गभिन्नतादात्म्यमुपादाय[1] तद्भेदो वक्तव्यः । प्राचीनैस्तादात्म्यस्य संसर्गरूपत्वानङ्गीकारात् । आधाराधेयभावनियामकसंयोगसमवाय-स्वरूपादेरेव तथात्वाभ्युपगमात् । स एव भेद इत्युद्देश्यसिद्धिः । प्राचीनैस्तादात्म्यावच्छिन्नप्रतियोगिताकाभावस्यैव भेदत्वाभ्युपगमात् । न च तर्हि विषय[यि]तासम्बन्धस्य भवदुक्तसंसर्गपदार्थत्वाभावात्तत्साधारणरूपेण पक्षत्वेऽसिद्धिप्रसङ्गात्तस्य पक्षबहिर्भावावश्यकत्वे पटनिष्ठविषयता-(सम्बन्धा)वच्छिन्नाभावप्रतियोगितावच्छेदकीभूतविषयताभेदमादाय सिद्ध-साधनता विषयत्वादीनाम् । वृत्त्यनियामकतया तादात्म्यातिरिक्त-वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितावच्छेदकत्वानङ्गीकर्तृप्राचीननैयायिकमते तस्य तादृशावच्छेदकत्वमेव नास्तीत्युच्यते । तथाऽप्य-त्यन्ताभावीयप्रतियोगितावच्छेदघटत्वभेदस्य घटसंसर्गेषु सत्त्वात्सिद्ध-साधनमेवेति वाच्यम् । संसर्गविधया या विलक्षणावच्छेदकता तद्वत्त्वावच्छिन्नप्रतियोगिताकभेदस्यैव साध्यत्वात् । अन्योन्याभाव-निरूपितप्रतियोगितानिरूपिततादृशावच्छेदकतायास्तादात्म्य एवाङ्गी-कारात्तद्भेदस्यैव[2] साध्यत्वप्राप्तेः । घटत्वस्य वा तथात्वान्न तद्भेदमादाय

---

[1] `-संसर्गभिन्नआ तत्तादात्म्य-' ह.  2. `-कतायास्तादात्म्याङ्गीकारात्-' मु.

सिद्धसाधनता । न चैकसंसर्गे अपरसंसर्गभेदमादाय[1] सिद्धसाधनम् । तादृशाभावीयप्रतियोगितानिरूपितविलक्षणावच्छेदकताकत्वावच्छिन्नप्रतियोगिताकभेदस्य साधने बाधः । पक्षस्यापि तथाविधप्रतियोगितावच्छेदकधर्माक्रान्तत्वादिति चेन्न । पूर्वोक्तरीत्या घटनिष्ठसंसर्गत्वावच्छेदेन तादृशप्रतियोगितावच्छेदकभेदस्य साध्यता व्यापकता च भेदघटितैव भासत इति वा स्वसमानाधिकरणप्रतियोगिताकत्वस्वसमानाधिकरणानुयोगिकत्वोभयसम्बन्धेन घटसंसर्गत्वविशिष्टान्यत्वस्य साध्यीभूतभेदे निवेशनीयतया वारणसम्भवात् । न च प्रतियोगितावच्छेदके घटनिष्ठत्वविशेषणं दृष्टान्तीभूतपटसंसर्गे[2] पटनिष्ठतादृशाभावीयप्रतियोगितावच्छेदकघटसंसर्गभेदाभावाद्यभिचारवाणायेति वक्तव्यम् [वाच्यम्] । तच्च न घटते । तादृशस्तम्भसंसर्गभेदमादाय[3] साध्यसत्त्वादिति वाच्यम् । पक्षेऽपि तमादायैव साध्यसत्त्वोपपत्त्या भेदासिद्धिप्रसङ्गवारणाय तस्य सार्थकत्वात् ॥ घटप्रागभावो वेति ॥ घटसंसर्गानवच्छिन्नप्रतियोगिताकपटादिधर्मिको योऽनाद्यभावस्तदन्य इत्यर्थः । दृष्टान्ते घटसंसर्गानवच्छिन्नप्रतियोयोगिताकपटादिधर्मिकोऽनाद्यभावः पटरूपप्रागभावस्तदन्यत्वं वर्तते । पक्षे चैतादृशसाध्यं सिध्यत्पटभेदमादायैव पर्यवस्यति । घटात्यन्ताभावस्य घटसंसर्गानवच्छिन्नप्रतियोगिताकत्वविरहात् । अत एव तद्विशेषणं सार्थकम् । अन्यथाऽत्यन्ताभावाभेदमादायार्थान्तरतापातात् । संसर्गानवच्छिन्नप्रतियोगिताकत्वमात्रनिवेशे पटे पटभेदस्येवान्यभेदस्यापि[4] विचारदशायां तुल्यन्यायेन सन्दिग्धतया

---

1 `यत्संसर्ग-' मु.

२. `विशेषणदृष्टा-' मु.

3 `तादृशसम्भवसंसर्ग-' मु.

४. `-भेदस्यैवान्य-' मु.

पटनिष्ठरूपप्रागभावात्यन्ताभावानां संसर्गानवच्छिन्नप्रतियोगिताकत्वेन संसर्गानवच्छिन्नप्रतियोगिताकपक्षनिष्ठानाद्यभावप्रसिद्धिरतो घटसंसर्गेति । अनादित्वानुपादाने पटनिष्ठरूपध्वंसभेदमादाय[1] सिद्धसाधनता स्यादतोऽनादीति । ननु पटनिष्ठरूपप्रागभाव एव हेतोर्व्यभिचारः । न च तादृशरसादिप्रागभावादिभेदसत्त्वान्न व्यभिचार इति वाच्यम् । तथापीति[2] पक्षीभूतपटप्रगभावेऽपि तमादाय साध्यसत्त्वादेव सिद्धसाधनता । तादृशाभावत्वावच्छिन्नभेदसाधने घटप्रागभावस्य पटधर्मिकत्वाभावेनोक्ताभावत्वावच्छिन्नप्रतियोगिताकभेदसत्त्वात्सिद्धसाधनम् । पटे विद्यमानानाद्यभावेषु व्यभिचारश्चाधिकः । पटधर्मिकानाद्यभावे घटप्रतियोगित्वोपादाने[3] भेदसिद्धेः प्राग्घटसंसर्गानवच्छिन्नघटप्रतियोगिकपटधर्मिकाभावाप्रसिद्ध्याऽप्रसिद्धेः । घट[पट]प्रतियोगिकप्रागभावस्य घट[पट]-संसर्गानवच्छिन्नत्वविरहात् । पटधर्मिकत्वाच्च । अत्यन्ताभावस्य घटसंसर्गानवच्छिन्नप्रतियोगिताकत्वविरहात्[4] । व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकघटप्रतियोगिकपटधर्मिकानाद्यभावभेदमुपादाय सिद्धसाधनतावारणाय घटसंसर्गेत्यस्य संसर्गानवच्छिन्नघटवृत्तिप्रतियोगिताकान्यत्वपर्यन्तमवश्यं विवरणीयतया तस्याप्यघटकत्वात् । अनादिपदवैयर्थ्यं च । पटनिष्ठसंयोगध्वंसादेर्घटप्रतियोगिकत्वेनैव वारितत्वेन तद्भेदमादाय सिद्धसाधनत्वाभावात् । मैवम् । पटधर्मिकोक्ताभावस्यैव स्वप्रतियोगिप्रतियोगिकत्वस्वभिन्नत्वोभयसम्बन्धेन साध्यत्वाङ्गीकारात् । पटध्वंसरूपे दृष्टान्ते पटधर्मिकपटात्यन्ताभाव एवोक्तसम्बन्धेन वर्तते । पक्षे

---

1 `घटनिष्ठरूपध्वंसे भेदमादाय' मु.

२. `तथात्वेऽपि' मु.

3 `पटधर्मिकानाद्यघट-' मु.

४. `-संसर्गावच्छिन्न-' मु.

(च) घटप्रतियोगिकानाद्ये भावान्तरभेदमादाय सिद्धसाधनत्वादेरनवकाशात् । न चैवं गगनाभावे प्रमेयत्वभेदे च पटनिष्ठे व्यभिचारः । तत्प्रतियोगिप्रतियोगिकाभावान्तरस्य तत्राभावादिति वाच्यम् । पटे प्रमेयत्वस्य स्वरूपसम्बन्धेन सत्त्वेऽपि व्यधिकरणसम्बन्धानवच्छिन्नानां बहूनामभावानां सत्त्वेनैकस्मिन्नपराभावमादाय साध्यत्वोपपत्तेः । एवं गननस्य समवायस्वरूपसम्बन्धाद्यनवच्छिन्ननानाभावानां घटे सत्त्वेनैकाभावमादायापरस्मिन्साध्यत्वान्न कुत्रापि व्यभिचारः । न च पटधर्मिकत्वानादित्वविशेषणयोर्वैयर्थ्यम् । घटप्रतियोगिकाभावानां घटप्रागभाव उक्तसम्बन्धेनासत्त्वात् । घटीय[पटीय]संसर्गाभावानां घटसंसर्गानवच्छिन्नत्वेनैव वारणादिति वाच्यम् । पटे घटभेदसिद्धेरुद्देश्यत्वेन पटधर्मिकत्वस्य, भेदे ज्ञानकल्पितत्वाभावरूपमिथ्यात्वाभावसिद्ध्यर्थमनादित्वस्य सार्थक्यात् । न चोक्ताभावस्य स्वप्रतियोगिप्रतियोगिकत्वसम्बन्धमात्रेण साध्यत्वेऽप्युक्तसाध्यस्यान्योन्याभावं विना पर्यवसानाभावाद्भेदघटितोभयसम्बन्धेन साध्यता व्यर्थैति वाच्यम् । उक्तवैयर्थ्यपरिहाराय प्रतियोगिप्रतियोगिकत्वस्य पटधर्मिकाभावांशाभाव एव साध्यकोटौ विशेषणीयत्वात् । न च तर्हि स्वप्रतियोगिप्रतियोगिताद‍ृशाभावकत्वमात्रं साध्यमस्तु ताद‍ृशा[श]भावान्यत्वं व्यर्थमिति वाच्यम् । बहुव्रीह्यर्थसम्बन्धस्यावश्यं निवेशनीयतया तद्भिन्नत्वस्यैव तत्कत्वपदार्थत्वात् । पक्षद‍ृष्टान्तयोः स्वत्वा[सत्त्वा]ननुगमासहिष्णुतायां स्वप्रतियोगिप्रतियोगित्वसम्बन्धेन स्वविशिष्टो यः संसर्गावच्छिन्नघटवृत्तिप्रतियोगिताकान्यपटधर्मिकाभावस्तन्निष्ठप्रतियोगिताकभेदवत्त्व-

तादात्म्योभयसम्बन्धेन किञ्चिद्विशिष्टत्वं पक्षे साध्यम् । संसर्गकोटौ स्वत्वं परिचायकमिति नाननुगमः[1] । सम्बन्धद्वयप्रयोजनं स्फुटमेव । अत्रेदमवधेयम् । उक्तसिद्धसाधनतापरिहाराय स्वप्रतियोगिप्रतियोगिकत्वस्य साध्यतावच्छेदकशरीरान्तः पातितया वा पूर्वोक्तोभयसम्बन्धत्वेन साध्यतावच्छेदकशरीरान्तःपातित्वे[2] वा प्रकृतानुमानसिद्धान्योन्याभाव एव व्यभिचाराद्धेतोर्वस्तुतो दुष्टत्वापत्तिरतो भेदांशोऽनुपादेय एव व्यर्थत्वाद्दोषसम्पादकत्वाच्च[त्वात्] । न च मूलविरोधः । अस्या गोरन्योऽन्वेष्टव्य[3] इत्यादावन्यपदस्य भेदघटितसाजात्यावच्छिन्नार्थकताया दृष्टत्वात् । प्रकृते साजात्यघटकप्रतियोगिप्रतियोगिकत्वमुपादाय भेदांशपरित्यागेऽपि मूलार्थस्यापरित्यक्ततया तद्विरोधविरहात् । प्रतियोगिमात्रोक्तावपि स्वप्रतियोग्यप्रतियोगिकत्वस्वभिन्नत्वोभयसम्बन्धेन[4] तादृशाभाव एव साध्यमिति वस्तुतः पूर्वोक्तसाध्ये न कोऽपि दोषः । (वस्तुतः) घटसामान्यभेदतद्धटभेदानु[वु]पादाय परस्परसाध्यसत्त्वान्न व्यभिचारप्रसक्तिः । तथाऽपि मूलोक्तान्यत्ववैयर्थ्यपरिहाराय यथाकथञ्चि-त्सार्थकीकर्तुमुक्तप्रयास इत्यलमित्याहुः । परे तु घटरूपप्रागभावादिक-मादाय सिद्धसाधनतावारणाय[5] घटप्रतियोगिकत्वमेवाभावे विशेषणं देयम् । घटप्रतियोगिकपटधर्मिकभेदसिद्धेः प्रागुक्तविशेषणाक्रान्ता-भावाप्रसिद्ध्या साध्याप्रसिद्धिरिति न शङ्क्यम् । पटादिधर्मिक इत्यस्य पटावृत्तित्वप्रागभावाभिन्नत्वैतदुभयाभाववदर्थकत्वात् । आदिपदं तु

---

1 `नानुगमः' मु.

२. `साध्यतावच्छेदकीभूतसम्बन्धशरीरान्तः-' मु.

3 `अस्मद्गोरन्यो-' मु.

४. `स्वप्रतियोगिमात्राप्रतियोगिकत्व-' मु.

5 `-साधनतामादाय' मु.

स्तम्भादिकमपि निवेश्यमेव[1] प्रयोक्तव्यमित्यभिप्रायेण । तादृशश्च पक्षीभूत एव घटप्रागभाव इति तदन्यत्वरूपसाध्यप्रसिद्ध्या दृष्टान्ते तमादायैवोपपादनसम्भवात् । पक्षीभूते स्वस्मिन्स्वभेदमादाय साध्यापर्यवसानात् । घटप्रतियोगिकपटधर्मिकभेदसिद्धिः । घटसंसर्गानवच्छिन्नघटप्रतियोगिकोक्ताभावकत्वमात्रोक्तौ[2] घटप्रागभावरूपपक्ष एव तादृश इति स्ववैशिष्ट्यसामान्यं स्वस्मिन्वर्तत इति सिद्धसाधनमर्थान्तरता च स्यादतस्तदन्यत्वपर्यन्तानुधावनम् । ध्वंसप्रागभावप्रतियोगितयोः संसर्गानवच्छिन्नत्वमिति मताश्रयणान्न पुनः साध्याप्रसिद्धिशङ्कावकाशः । घटपटोभयवृत्तिद्वित्वावच्छिन्नप्रतियोगिताकभेदस्य पटाद्यवृत्तित्वाभावेनोभयाभाववत्त्वात् । घटप्रतियोगिकत्वाच्च तदन्यत्वमादाय सिद्धसाधनतानवकाशः । व्यासज्यवृत्तिधर्मावच्छिन्नभेदस्य पटादिरूपप्रतियोगिन्यवृत्तित्वाङ्गीकारेणोक्तोभयाभावविरहात् । अङ्गीकारे वा व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकान्यत्वेनाप्यभावस्य विशेषणीयत्वात् । घटमात्रप्रतियोगिकत्वं वा प्रतियोग्यवृत्तित्वं वाऽभावे निवेश्योक्तदोषो वारणीय इति तु न सत् । प्रथमविशेषणेन घटद्वय[द्वये ]भेदस्यावारणेन तदन्यत्वमादाय सिद्धसाधनत्वावारणात् । द्वितीयविशेषणपक्षे घटात्यन्ताभावस्याप्यनेनैव वारणेन घटसंसर्गानवच्छिन्नेत्यस्य वैयर्थ्यापत्तेरिति प्राहुः । वस्तुतस्तु घटसंसर्गानवच्छिन्नेत्यस्य घटसंसर्गावच्छिन्नप्रतियोगिताकोऽभाव इति विग्रहः । घटपदोत्तरषष्ठ्यर्थस्य प्रतियोगित्वस्याभाव एवान्वयः । संसर्गानवच्छिन्नप्रतियोगिताकेत्ये-

---

[1] `निवेश्य एवमेव' इति पाठेन भाव्यमिति भाति ।

[2] `पटसंसर्गिकानवच्छिन्नघटप्रतियोगिकोक्तोभयाभावकत्वमात्रोक्तौ' मु.

तदत्यन्ताभावभिन्नत्वतात्पर्यकम् । अत्यन्ताभावप्रतियोगिताया अवश्यं संसर्गावच्छिन्नत्वनियमात् । प्रागभावध्वंसप्रतियोगित्वयोर्धर्मावच्छिन्नत्व-संसर्गावच्छिन्नत्वाङ्गीकारात् । पटा[घटा]दीत्यत्रादिपदग्राह्यतावच्छेदकरूपं घटत्वाभाववत्त्वम् । तथा च घटप्रतियोगिकोऽत्यन्ताभावभिन्नो घटत्वाभाववद्धर्मिको योऽनाद्यभावस्तदन्यत्वं साध्यं पर्यवसितम् । अत्र घटत्वानधिकरणकपालवृत्तिघटप्रागभावभेदमादाय दृष्टान्तादिषु सर्वत्र साध्यसत्त्वनिर्वाहः । पक्षे स्वभेदमादाय पर्यवसानायोगाद्धटभेदस्य पटादिनिष्ठस्य सिद्धिः । कपालवृत्तिरूपप्रागभावभेदमादाय सिद्धसाधनता-वारणाय घटप्रतियोकिति ॥ घटत्वानधिकरणवृत्तिघटात्यन्ताभावभेदमादाय तद्वारणायात्यन्ताभावभिन्नेति ॥ घटध्वंसभेदमादाय सिद्धसाधनता-वारणायानादीति । घटत्वेतरधर्मानवच्छिन्नघटवृत्तिप्रतियोगिकत्वं वक्तव्यम् । तेन घटासमवेतभेदस्यापि घटप्रतियोगि(ता)कतया प्रागभावनिष्ठतद्भेदमादाय नार्थान्तरता । घटप्रागभावप्रतियोगिताया धर्मानवच्छिन्नत्वात्तद्भेदमादाय दृष्टान्ते साध्यत्वनिर्वाहः ।[1] घटान्य-स्मिन्सर्वत्र घटभेदसिद्धेरुद्देश्यायाः सम्पत्तये [च] घ[प]टत्वाभाववद्धर्मिकेति विशेषणमिति सारम् ॥ घटध्वंसो वेति ॥ पूर्वानुमानवदेव सर्वम् । ज्ञानोच्छेद्यस्वरूपं[2] मिथ्यात्वादित्यादिमतनिरासपूर्वकं भेदस्य पारमार्थिकत्वद् सिद्धये नित्यत्वविशेषणमनुसन्धेयम् । घटाभेदस्य (पटे) स्वसिद्ध्यभाववेलायां पटात्यन्ताभावस्यापि घटसंसर्गा(न)वच्छिन्न-

---

[1] एतद्वाक्यादौ मु.पाठे ह.पाठे च `पट भेदस्य घटत्वानधिकरणघटावृत्तित्वेनार्थान्तरता-वारणाय' इति पदद्वयं दृश्यते । ह.पाठे लेखकेनायं भागः अङ्कनेन मृष्टः ।

[2] `ज्ञानं वेद्यत्वरूपं' मु.

प्रतियोगिताकत्वेन पटात्यन्ताभावप्रतियोगितात्वमुपादाय कथं पटस्वरूपे दृष्टान्ते साध्यसत्त्वमित्याशङ्कां व्यावहारिकभेदस्य सर्वव्यवहारनिर्वाहक्षमत्वे (न उक्तदूषण)परिहारक्षमत्वमपि वर्तत इत्याशयेन परिहरति — **घटपटयोरित्यादिना न दोषप्रसङ्गश्चेत्यन्तेन** ॥ अन्योन्याभावोऽपि घटसंसर्गावच्छिन्नो न भवतीति क्रमेण । बाधः साध्यवैकल्यादीत्यत्रादिपदार्थः । त्रै[1]कालिकत्वादिनेति पदार्थाय कालिकत्वादिनेति ॥ आदिनाऽनादित्वनित्यत्वयोर्ग्रहः ॥ **व्यावहारिकत्वे चेति** ॥ अज्ञानकल्पितत्वे ज्ञानोच्छेद्यत्वे चेत्यर्थः ॥ **अनुकूलतर्काणामिति** ॥ न्यायामृतादावित्यर्थः । भेदस्य पारमार्थिकत्वे[2] घटनाशे सति पटनाशः[3] स्यात् । बन्धमोक्षयोरैक्यापत्त्येदानीं मुक्तत्वापत्त्या तदर्थं श्रवणाद्यनुपपत्तिरूपस्तर्क इति ज्ञेयम् ॥ **नोपाधीति** । पक्षेतरत्वमुपाधिः । घ(प)टतादात्म्यानवच्छिन्नघटप्रतियोगिकत्वमप्यभावे निवेश्य प्रयोगे पञ्चमाभावसिद्ध्यापत्त्याऽऽभाससाम्यप्रयोजकत्वं[4] (चे)वेत्यर्थः ।

(३२) (का.) ॥ **किञ्चेत्यादि** ॥ घटसंसर्गेणानवच्छिन्ना प्रतियोगिता यस्य तादृशो यः पटादिधर्मिकः त्रैकालिकोऽभावस्तत्प्रतियोगीत्यर्थः । दृष्टान्ते पटात्यन्ताभावमादाय साध्यसत्त्वं, पक्षे च तत्प्रतियोगित्वबाधाद्घटपटभेदमादायैव साध्यपर्यवसानादुद्देश्यसिद्धिः । घटात्यन्ताभावप्रतियोगितामादाय सिद्धसाधनवारणाय **घटसंसर्गानवच्छिन्नेति** । तत्र

---

[1] `न पटसामग्र्यनुपादानप्रसङ्गश्च' इति पाठेन भाव्यमिति भाति ॥

[2] `अपारमार्थिकत्वे' इति पाठेन भाव्यमिति भाति।

[3] `पटानाशः' हु.

[4] `-साम्यमप्रयोजक-' मु.

घटपदं दृष्टान्ते साध्यवैकल्यवारणाय । न च संयोगेन पटो नास्तीति प्रतीत्या संयोगसामान्यस्यैव प्रतियोगितावच्छेदकत्वावगाहनात् कथं पटाभावस्य घटसंसर्गानवच्छिन्नप्रतियोगिताकत्वमिति वाच्यम् । लाघवेन प्रतियोगिसंसर्गस्यैव प्रतियोगितावच्छेदकत्वात् । घटत्वसहितसंसर्गानवच्छिन्नत्वविवक्षणाद्वा दोषाभावात् । आत्मानात्मभेदसिद्ध्याऽर्थान्तरवारणाय **पटादिधर्मिकेति** । पटे घटभेदसिद्धेरुद्देश्यत्वे पटधर्मिकत्वमभावविशेषणम् । दण्डादौ तत्सिद्धेरुद्देश्यत्वे च तद्धर्मिकत्वमेव तथेत्यावेदयितुमादिपदम् । घटध्वंसप्रागभावप्रतियोगितामादाय सिद्धसाधनवारणाय **त्रैकालिकेति** । न च तयोः प्रतियोगिसमवायिमात्रवृत्तित्वनियमेन पटादिधर्मिकत्वाभावादेव वारणसम्भव इति वाच्यम् । तादृशनियमे मानाभावात् । ध्वंसप्रागभावयोः प्रतीतिबलेन प्रतियोगिसम्बन्धिमात्रवृत्तित्वौचित्यात् । पटादेरपि संयोगादिना प्रतियोगिसम्बन्धित्वात् ।

यत्तु घटध्वंसप्रागभावयोः संसर्गाभावत्वेन घटसंसर्गानवच्छिन्नप्रतियोगिताकत्वाभावादेव वारणं सम्भवतीति । तच्चिन्त्यम् । ध्वंसप्रागभावयोः संसर्गावच्छिन्नप्रतियोगिताकत्वानङ्गीकर्तृतार्किकैकदेशिमतेनैतत्प्रयोगात् । अत एव सिद्धान्ते पटादिधर्मिकभेदस्य धर्मिस्वरूपत्वेन त्रैकालिकत्वानुपपत्तावपि न बाधप्रसङ्गः । यत्त्वतद्गुणसंविज्ञानबहुव्रीहिणा पटादिपदस्य नित्यमात्रपरत्वान्न दोष इति । तदसङ्गतम् । तथा सति प्रक्रान्तघटपटभेदासिद्धिप्रसङ्गात् । पटादिधर्मिकसमवायादिप्रतियोगित्वसिद्ध्याऽर्थान्तरवारणायाभावपदम् । एवमग्रेऽपि ।

**॥ घटात्यन्ताभावो वेति ॥** अत्र घटात्यन्ताभावान्यत्वमादाय दृष्टान्ते साध्यसत्त्वम् । पक्षे तद्बाधादन्योन्याभावान्यत्वमादायैव साध्यपर्यवसाना-

दुद्देश्यसिद्धिः । पटात्यन्ताभावादन्यत्वमादाय सिद्धसाधनवारणाय **घटप्रतियोगिकेति** विशेषणं पूर्ववत् । यद्यपि घटात्यन्ताभावस्यापि घटप्रतियोगिकपटादिधर्मिकत्रैकालिकाभावत्वेन तदन्यत्वासम्भवाद्बाधः । तथापि यादृशाभावादन्य इत्येकवचनान्तेन समासात्, तादृश-यत्किञ्चिदभावान्यत्वस्यैव साध्यत्वलाभान्न दोषः । न चैवं तादृशघट-पटोभयाभावान्यत्वमादाय सिद्धसाधनम् । घटात्यन्ताभावत्वावच्छेदेन तदन्यत्वसाधनात् ।

॥ **घटसंसर्गो वेति** ॥ अत्र घटात्यन्ताभावप्रतियोगितावच्छेदको यो घटसंसर्गस्तदन्यत्वमादाय दृष्टान्ते साध्यं बोध्यम् । पक्षे च तदयोगात् पटधर्मिकभेदप्रतियोगितावच्छेदकीभूततादात्म्यान्यत्वमादाय साध्यपर्यव-सानादुद्देश्यसिद्धिः । न च घटात्यन्ताभावप्रतियोगितावच्छेदकघटत्वा-न्यत्वमादाय सिद्धसाधनमिति वाच्यम् । पटधर्मिकत्रैकालिक-यत्किञ्चिदभावप्रतियोगितावच्छेदकत्वावच्छिन्नभेदस्य साध्यत्वात् । यत्किञ्चिदभावपदेन घटात्यन्ताभावपरिग्रहे तत्प्रतियोगिताच्छेदकत्वाव-च्छिन्नभेदस्य पक्षे बाधितत्वेन भेदसिद्धेरावश्यकत्वात् । न च घटस्यैकसंसर्गे अपरसंसर्गावच्छिन्नात्यन्ताभावप्रतियोगितावच्छेदकत्वावच्छिन्नभेदस्य सिद्धत्वात् सिद्धसाधनमिति वाच्यम् । घटसंसर्गत्वावच्छेदेन साध्य-सिद्धेरुद्देश्यत्वेन दोषाभावात् । पटसंसर्गावच्छिन्नपटात्यन्ताभाव-प्रतियोगितावच्छेदकभेदमादाय सिद्धसाधनभङ्गाय घटनिष्ठेति । अन्यत् पूर्ववत् । संसर्गत्वं च मिथो भिन्नप्रतियोग्यनुयोगिकसम्बन्धत्वं, तादात्म्यातिरिक्तसम्बन्धत्वं वेति ध्येयम् ॥

॥ **घटप्रागभावो वेति** ॥ घटस्य यः संसर्गानवच्छिन्नप्रति-

योगिताकपटादिधर्मिकानाद्यभावस्तदन्य इत्यर्थः । दृष्टान्ते घटप्रागभावान्यत्वमादाय साध्यसत्त्वम् । पक्षे च तदनुपपत्त्या पटधर्मिकभेदभिन्नत्वमादायैव साध्यपर्यवसानादुद्देश्यसिद्धिः । घटध्वंसान्यत्वेन सिद्धसाधनवारणायानादीति । अन्यधर्मिकभेदसिद्ध्याऽर्थान्तरवारणाय **पटादिधर्मिकेति** । घटात्यन्ताभावान्यत्वेन सिद्धार्थताभङ्गाय **संसर्गानवच्छिन्नप्रतियोगिताकेति** । पटादिधर्मिकरूपादिप्रागभावान्यत्वमादाय तद्दोषवारणाय **घटेति** । तस्य च घटप्रतियोगिकत्वाभावान्न दोषः । अत्राभावान्तरस्य दृष्टान्तत्वसम्भवेऽपि पटधर्मिकानाद्यभावान्यत्वस्य पटध्वंसे स्फुटत्वात्तस्यैव दृष्टान्तीकरणमिति ज्ञातव्यम् ।

केचित्तु घटसंसर्गेणानवच्छिन्नप्रतियोगिताको यः पटधर्मिकानाद्यभावस्तदन्यत्वं साध्यार्थः । घटात्यन्ताभावान्यत्वमादाय सिद्धसाधनवारणाय **घटसंसर्गेत्यादि** । तत्र घटपदं तु दृष्टान्ते पटात्यन्ताभावान्यत्वमादाय साध्यसत्त्वनिर्वाहार्थम् । घटपटभेदरूपोद्देश्यसिद्ध्यर्थं **पटादिधर्मिकेति** । पटीयरूपादिध्वंसान्यत्वमादाय सिद्धार्थत्वनिरासायानादीति । प्रथमदलस्य घटसंसर्गावच्छिन्नप्रतियोगिताकान्यपरतया तथाविधपटत्वाद्यन्यत्वमादाय तद्दोषवारणायाभावपदम् ।

नन्वेवं दृष्टान्तवत् पक्षेऽपि पटात्यन्ताभावान्यत्वमादाय सिद्धसाधनम् । न च घटप्रतियोगिकत्वेनाभावो विशेषणीयः । दृष्टान्ते साध्यवैकल्यापत्तेः । न च घटप्रागभावान्यत्वमादाय दृष्टान्ते साध्यसत्त्वनिर्वाह इति वाच्यम् । तस्य घटसंसर्गानवच्छिन्नप्रतियोगिताकत्व-पटादिधर्मिकत्वशून्यत्वात् । घटपटयोरित्यग्रिमग्रन्थविरोधाच्च । तस्य पटात्यन्ताभावान्यत्वमादाय दृष्टान्ते साध्यसत्त्वोपपादनपरत्वादिति चेन्न । स्वप्रतियोगि-

प्रतियोगिकत्वेनाभावविशेषणात् । स्वपदस्य प्रतिज्ञायां पक्षपरत्वादुदाहरणे च दृष्टान्तपरत्वात् न कोऽपि दोष इत्याहुः । तच्चिन्त्यम् । अनादिपदवैयर्थ्यापत्तेः । अनुमानपञ्चकेऽप्यत्यन्ताभावमादायैव दृष्टान्ते साध्यसत्त्वोपपादने त्रैकालिकत्वानादित्वनित्यत्वरूपविभिन्नविशेषणोपादानस्य निर्बीजत्वप्रसङ्गाच्च । एतेन व्यावहारिकभेदसिद्ध्याऽर्थान्तरवारणमनादिप्रदप्रयोजनमित्यपास्तम् । तावन्मात्रस्य तत्प्रयोजनत्वे पूर्वानुमानेऽप्यनादित्वस्यैव लाघवेन निवेशनौचित्यात् । अग्रिमग्रन्थस्त्वनुकूलतयैव व्याख्यास्यते । तस्माद्घटध्वंसप्रागभावयोः संसर्गानवच्छिन्नप्रतियोगिताकत्वपटादिधर्मिकत्वाभ्युपगमाभिप्रायक एवायं ग्रन्थ इति युक्तमुत्पश्यामः ।

॥ **घटध्वंसो वेति** ॥ घटस्य यः संसर्गानवच्छिन्नप्रतियोगिताकपटादिधर्मिकनित्याभावस्तदन्य इत्यर्थः । दृष्टान्ते घटध्वंसान्यत्वमादाय, पक्षे च घटभेदान्यत्वमादाय साध्यमुपपादनीयम् । घटप्रागभावान्यत्वमादाय सिद्धसाधनवारणाय **नित्येति** । उद्देश्यसिद्ध्यर्थं **पटादिधर्मिकेति** । घटात्यन्ताभावान्यत्वमादाय सिद्धार्थताभङ्गाय **संसर्गानवच्छिन्नप्रतियोगिताकेति** । पटीयरूपध्वंसान्यत्वमादाय तद्दोषनिरासार्थं **घटेति** । अत्रापि पटध्वंसादेर्दृष्टान्तत्वसम्भवेऽपि पूर्ववत् स्फुटप्रतिपत्तये प्रागभावग्रहणम् ।

नन्वत्र घटपक्षकानुमाने दृष्टान्तस्य साध्यवैकल्यम् । घटपटयोरभेदमते पटात्यन्ताभावस्यापि घटसंसर्गावच्छिन्नप्रतियोगिताकत्वेन तदन्याभावप्रतियागित्वस्य पटादावभावात् । एवं घटात्यन्ताभावादिपक्षकानुमानेषु सिद्धसाधनम् । पटात्यन्ताभावस्यापि घटप्रतियोगिकतया, पटसंसर्गस्यापि

घटनिष्टधर्मतया, पटप्रागभावध्वंसयोरपि घटप्रतियोगिकत्वपटधर्मिकत्वसम्भवेन च तत्तदन्यत्वरूपसाध्यस्य घटात्यन्ताभावादिरूपपक्षे सिद्धत्वादित्यत आह – **घटपटयोरिति** ॥ पटात्यन्ताभावादेरित्यादिपदेन पटसंसर्गपटप्रागभावपटध्वंसानां परिग्रहः । घटसंसर्गानवच्छिन्नप्रतियोगिताकत्वादेरित्यादिपदेन घटप्रतियोगिकत्वघटनिष्ठधर्मत्वपटधर्मिकत्वानां राहित्यपरिग्रहः । दृष्टान्तस्य साध्यवैकल्यादीत्यादिपदेन सिद्धसाधनपरिग्रहः । यत्त्वत्यन्तान्योन्याभावयोरैक्यमते घटान्योन्याभावस्य घटसंसर्गावच्छिन्नप्रतियोगिताकान्यत्वायोगाद् बाधस्यादिपदेन सङ्ग्रह इति तन्न । उभयसिद्धप्रमाणविरोधाभावेन बाधानवकाशात् । अत्यन्ताभावस्य सत्यत्वेन मिथ्याभूतान्योन्याभावैक्यायोगाच्च । अन्यथा पटात्यन्ताभावस्य त्रैकालिकत्वायोगेन दृष्टान्तवैकल्यस्य दुरुद्धरत्वप्रसङ्गात् । तस्माद्भावाद्वैतनिरासपरोऽसौ ग्रन्थ इत्यवधेयम् ।

॥ **अन्यथेति** ॥ उक्तव्यवस्थानिर्वाहकव्यावहारिकभेदानङ्गीकार इत्यर्थः । **सिद्धघटस्य** लब्धघटस्य पटसामग्र्यां प्रवृत्तिर्न स्यादित्यर्थः । कारणीभूतपटेच्छानुपपत्तेरिति भावः । त्रैकालिकत्वादिनेत्यादिनाऽनादित्वनित्यत्वपरिग्रहः ॥ **तदयोगादिति** ॥ त्रैकालिकत्वाद्ययोगादित्यर्थः । व्यावहारिकस्याविद्याकार्यत्वादिति भावः ।

नन्वेतावताऽप्यर्थान्तरत्वं दुर्वारमेव । यावत्कालवृत्तित्वरूपत्रैकालिकत्वस्य व्यावहारिकभेदेऽपि सम्भवात् । कालस्याप्यविद्याकार्यत्वेन तदभावे तदभावावश्यम्भावात् । एवं पूर्वोत्तरकालराहित्यरूपानादित्वनित्यत्वयोरपि सम्भवो द्रष्टव्यः । मैवम् । प्रागभावाप्रतियोगित्वमनादित्वम् । ध्वंसाप्रतियोगित्वं नित्यत्वम् । तदुभयशालित्वं च त्रैकालि-

कत्वम् । न चैतद् व्यावहारिके सम्भवति । न च व्यावहारिकेऽप्य-विद्यावदनादित्वमिष्यत इति वाच्यम् । स्वरूपतोऽनादित्वेऽविद्या-कार्यत्वानुपपत्तेः । अन्यथा नित्यस्य निवृत्तिरित्यपि स्यात् । प्रतियोगितादात्म्याविद्यानधीनप्रतीतिकत्वरूपानादित्वविवक्षायामर्थान्तरश ङ्कानवकाशाच्चेति दिक् । ननूक्तानुमानेषु पक्षेतरत्वादिकमुपाधिः । अनुकूलतर्काभावे पक्षेतरत्वस्याप्युपाधित्वसम्भवात् । अत एव तादात्म्यानवच्छिन्नप्रतियोगिताकत्वेनाभावविशेषणादाभाससमानयोगक्षेम त्वमप्रयोजकत्वं चेत्यत आह — **अनुकूलतर्कस्येति** ॥ घटपटाद्यभेदस्य पारमार्थिकत्वे घटपटादिस्वरूपं पारमार्थिकं स्यादित्यतिप्रसङ्ग-रूपस्यात्रैवोक्तत्वात् । अन्यत्रेति पाठे जडभेदाभावे मुक्तिसाङ्कर्यादि-प्रसङ्गरूपस्य न्यायामृतादौ चोक्तत्वादित्यर्थः । इदमुपलक्षणम् । 'आत्मन **आकाशः सम्भूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः'** इत्यादयः श्रुतयोऽपि जडभेद उदाहर्तव्याः ।

(३२) (श.) **प्रपञ्चेति** ॥ उक्तानुमानेऽप्रसिद्धविशेषणत्वस्वरूपा-सिद्धिव्यभिचारपरिहारे प्रयासगौरवमित्यपरितोषादाह — **किञ्चेति** ॥ **घटसंसर्गानवच्छिन्नेति** ॥ घटसंसर्गेणानवच्छिन्ना अव्यावृत्ता प्रतियोगिता यस्यासौ घटसंसर्गानवच्छिन्नप्रतियोगिताकः । यत्प्रतियोगिता घटसंसर्गेण नावच्छिद्यते घटसंसर्गलक्षणप्रतियोगितावच्छेदकरहित इति यावत् । स चासौ पटादिधर्मिकः पटादिवृत्तिः । त्रैकालिकः त्रिकालवृत्तिर्योऽभावः तत्प्रतियोगीत्यर्थः । अत्र पटादिधर्मिकाभावप्रतियोगीत्युक्ते प्रागभावध्वंसा-भावप्रतियोगित्वमादायार्थान्तरता अतस्त्रैकालिकेति । तयोश्च क्रमेण प्रतियोगिपूर्वोत्तरकालमात्रवृत्तित्वात् । तावत्युक्तेऽत्यन्ताभावप्रतियोगित्व-

मादायार्थान्तरता । अतो घटसंसर्गानवच्छिन्नप्रतियोगिताकेति । अत्यन्ताभावस्य संसर्गरूपप्रतियोगितावच्छेदकोपेतत्वान्न तथात्वम् । तावत्युक्ते दृष्टान्ते साध्यवैकल्यम् । एवंविधस्यान्योन्याभावरूपत्वेन तत्प्रतियोगित्वस्य पटे परेणानभ्युपगमात् । अतो घटेति । तादृशश्च पटात्यन्ताभावः तत्प्रतियोगित्वं पटे । परेणाभ्युपगमात् । पटात्यन्ताभावस्य पटसंसर्गावच्छिन्नप्रतियोगिताकत्वेन घटसंसर्गानवच्छिन्नप्रतियोगिताकत्वात् । एवमभावत्रयव्यावृत्ताभावप्रतियोगित्वे घटस्य सिद्धे तादृशाभावस्यान्योन्याभावानतिरेकद्धटपटभेदसिद्धिः । उक्तानुमानेऽत्यन्ताभावव्यावृत्त्यर्थं घटसंसर्गानवच्छिन्नप्रतियोगिताकेति विशेषणप्रवेशाद्गौरवमित्यपरितोषादाह — घटात्यन्ताभाव इति ॥ **घटप्रतियोगिकेति** ॥ घटप्रतियोगिकः पटादिधर्मिकः त्रैकालिकोयोऽभावः तदन्य इत्यर्थः । अत्र पटप्रतियोगिकपटादिधर्मित्रैकालिकपटात्यन्ताभावान्यत्वसिद्ध्याऽर्थान्तरवारणाय **घटप्रतियोगिकेति** ॥ इतरत्पूर्ववद्द्रष्टव्यम् ॥ **पटाभाववदिति** ॥ तत्रोक्तविधघटात्यन्ताभावान्यत्वसद्भावादिति भावः । प्रतियोगितावच्छेदकपक्षकानुमानमाह — **घटसंसर्ग इति** ॥ पटादिधर्मिकोयोयं त्रैकालिकोभावः तस्य प्रतियोगितावच्छेदकीभूतोयोयं घटनिष्ठधर्मः तदन्य इत्यर्थः । अयमर्थः । त्रैकालिकाभावोहिद्विविधः । अत्यन्ताभावोऽन्योन्याभावश्च । तत्रात्यन्ताभावप्रतियोगितावच्छेदधर्मः संसर्गः । अन्योन्याभावप्रतियोगितावच्छेदकं तादात्म्यम् । तत्र घटसंसर्गस्यपटादिधर्मिकत्रैकालिकाभावप्रतियोगितावच्छेदकघटनिष्ठधर्मान्यत्वे सिद्धे घटे तादृशाभावप्रतियोगितावच्छेदकधर्मान्तरसिद्धिः । तस्य तादृशाभावप्रतियोगितावच्छेदकत्वञ्च तादृशाभावं विनानसिध्यति । तादृशश्चान्योन्याभाव

एवेति घटपटयोर्भेदसिद्धिरिति अत्र पटादिधर्मिकाभावप्रतियोगितावच्छेदकधर्मान्यत्वमात्रसाधने पटात्यन्ताभावप्रतियोगितावच्छेदकपटनिष्ठसंसर्गान्यत्वसिद्ध्याथा । न्तरम् । **अतो घटनिष्ठेति** ॥ पटादिधर्मिकाभावप्रतियोगितावच्छेदकघटनिष्ठधर्मान्यत्वसाधने प्रध्वंसप्रागभावप्रतियोगितावच्छेदकपूर्वोत्तरकालीनत्वरूपधमा । न्यत्वसिद्ध्याऽर्थान्तरम् । अतस्त्रैकालिकेति ॥ **पटनिष्ठसंसर्गेति** ॥ तत्रोक्तविधसंसर्गरूपधर्मान्यत्वसद्भावादिति भावः । त्रैकालकत्वविशेषराप्रवेशेनानुमानद्वयमाह — **घटप्रागभाव इत्यादिना** ॥ **घटसंसर्गानवच्छिन्नेति** ॥ घटसंसर्गानवच्छिन्नप्रतियोगिताकः पटादिधर्मिको योऽभावः तदन्य इत्यर्थः । अत्र प्रध्वंसान्यत्वसिद्ध्याऽर्थान्तरवारणायानादीति । तस्य सादित्वात् । अत्यन्ताभावान्यत्वसिद्ध्याऽर्थान्तरवारणाय घटसंसर्गानवच्छिन्नप्रतियोगिताकेति ॥ **(घटप्रध्वंसवदिति) घटसंसर्गेति** ॥ अत्र प्रागभावान्यत्वसिद्ध्याऽर्थान्तरवारणाय **नित्येति** ॥ तस्यानित्यत्वात् । शेषं पूर्ववत् ॥ **घटप्रागभाववदिति** ॥ व्याख्यातप्रायमेतत् । नन्वत्र द्वितीये घटपक्षकानुमाने पटरूपदृष्टान्ते साध्यवैकल्यम् । घटेपटप्रतियोगिकात्यन्ताभावेविद्यमानेऽपि तस्य घटसंसर्गानवच्छिन्नप्रतियोगिताकत्वं नास्ति । घटपटयोरैक्येन पटप्रतियोगिकात्यन्ताभावस्यापि घटसंसर्गावच्छिन्नप्रतियोगिकत्वेन घटत्वसंसर्गानवच्छिन्नप्रतियोगिताकत्वाभावादित्यत आह — **घटपटयोरिति** ॥ अत्यन्ताभावादेरित्युद्देश्यम् । प्रतियोगिकत्वादेरिति विधेयम् । ननु भेदाभावात्कथमिदमङ्गीकारे तयोरेकत्वादिति भावः ॥ **सिद्धघटस्येति** ॥ सिद्धोघटो यस्य स तथोक्तः तस्येत्यर्थः ॥ **पटसामग्रीति** ॥ घटपटयोरैक्येन घटस्य लाभे पटस्यापि

लभ्यत्वेन पटलाभायतत्सामग्रयां प्रवृत्तिर्न स्यादित्यर्थः ॥ **व्यावहारिकेति** ॥ उक्तानुमानेषु पारमार्थिकत्वविशेषणाभावादिति भावः ॥ **तदयोगादिति** ॥ ब्रह्मज्ञानबाध्यत्वस्यैव व्यावहारिकत्वेनान्योन्याभावस्य व्यावहारिकत्वे ब्रह्मज्ञानोत्तरम्बाधः स्यात् । एवं च न त्रिकाले विद्यमानत्वमिति भावः । ननु जडभेदसाधकानुमानेषु सर्वत्र पक्षेतरत्वस्योपाधित्वम् । घटः पटसंसर्गानवच्छिन्नप्रतियोगिताकघटादिधर्मिकत्रैकालिकाभावप्रतियोगित्य पिसाधनसौलभ्येनाभाससमानयोगक्षेमत्वं हेत्वङ्गीकारेण साध्यपरित्याग-सम्भवेनाप्रयोजकत्वं चेत्यत आह — **अनुकूलतर्कस्यान्यत्रोक्तत्वादिति** ॥ जडभेदाभावेभेदसिद्ध्यसिद्ध्योर्दोषतदभावयोश्चाभेदेन स्वक्रियाविरोधः स्यात् । मुक्तिसाङ्कर्यं च स्यादित्यनुकूलतर्कस्य न्यायामृते द्वितीयपरिच्छेदे उक्तत्वादित्यर्थः । उपलक्षणमेतत् । घटपटयोस्तादात्म्यस्य पार-मार्थिकत्वाङ्गीकार इत्यादिना प्रागुक्तत्वात् दूरस्थावनस्पत्योश्चशुक्ति-रूप्ययोश्चाभेदग्राहिप्रत्यक्षन्तत्वावेदकं स्यादित्यादिना वक्ष्यमाणत्वाच्चेत्यपि द्रष्टव्यम् ।

**(३३) यदुक्तमभेदे प्रत्यक्षं प्रमाणमिति तदसत् । अहङ्कारस्य चिदचित्संवलनात्मकस्य त्वया भिन्नत्वाङ्गीकारेणाहंप्रत्ययस्य तदभेदेऽप्रमाणत्वात् । आद्यानुमानेऽवेद्यत्वरूपस्वप्रकाशत्वस्या-स्माभिरनङ्गीकारादसिद्धिः । अबाध्यत्वं तर्ह्यात्मत्वमिति चेत्तर्ह्य-स्माभिर्देहादेः स्वरूपेणाबाध्यत्वाङ्गीकाराद्व्यभिचारः । न च तदपि पक्षतुल्यमिति वाच्यम् । त्वया(अपि) देहात्माभेदस्याध्यस्तत्वाङ्गीकारेण तदभेदस्यापारमार्थिकतया परमार्थतो न भिद्यन्त इति साध्याभावात् । भेदाभावस्यैवाभेदत्वात् । ज्ञानत्वं चेदात्मत्वं (तदा) नैयायिकं**

**प्रत्यसिद्धेः । ज्ञानाधारत्वं चेदात्मत्वं तवैवासिद्धेः । उपाधेर्बाध-व्यभिचारान्यतरोद्भावनद्वारा(व्यभिचारोद्भावनद्वारा) दूषणत्वपक्षे परमात्माननुसंहितदुःखाननुसन्धातृत्वमुपाधिश्च ।**

(३३) (भ.) एवं भेदे प्रमाणान्यभिधाय यदुक्तमभेदे प्रमाणत्रितय-मस्तीति तत्र तावत्प्रत्यक्षं निराकर्तुमाह — **पदुक्तमित्यादिना** ॥ **अहङ्कारस्येति** ॥ यद्यप्यहम्प्रत्यय आत्मन एकत्वं गृह्णाति । तथाऽपि त्वन्मते तस्य नात्मविषयः किन्त्वहङ्कार एव । स च चिदचित्संवलना-त्मकः । चेतनाचेतनमिश्रान्तःकरणरूप इति यावत् । अतोऽसावात्मना भिन्न एवाङ्गीकृतः । तथा चात्मभिन्नाहङ्कारविषयस्याहम्प्रत्ययस्यात्माभेदे प्रमाणत्वेनाभिधातुमशक्यत्वादित्यर्थः । उपलक्षणमेतत् । अस्तु वाऽहम्प्रत्ययस्यात्मैक्यविषयत्वं तथाऽपि न तेन जीवेश्वराभेदसिद्धिः । अयं स्तम्भ इत्येकाकारेणानुभूयामानस्यापि स्तम्भस्य पिशाचाभेदासिद्धे-रित्यपिद्रष्टव्यम् । अथाभेदविषयाण्यनुमानानि क्रमेण निराचष्टे ॥ **आद्यानुमान इत्यादिना** । विमता आत्मानः परमात्मनः परमार्थतो न भिद्यन्ते आत्मत्वत्परमात्मवदित्यनुमान इत्यर्थः । तत्रात्मत्वं नाम स्वप्रकाशत्वमिति परेणैवोक्तम् । स्वप्रकाशत्वं च न स्वविषय-प्रककाशरूपत्वम् । कर्तृत्वकर्मत्वयोरेकत्र त्वन्मतेऽनङ्गीकारात् । किन्त्ववेद्यत्वे सत्यपरोक्षव्यवहारविषयत्वमेवेत्यङ्गीकृतम् । तच्च प्रमण-वेद्यत्वाङ्गीकारिणामस्माकमसिद्धमित्यर्थः । देहादेर्नित्यत्वाद्यारोपित-धर्मरूपेण बाध्यत्वेऽपि शक्तिरजतादिवत्स्वरूपेण बाध्यत्वाभावाद्धेतुमति देहादौ साध्याभावाद्व्यभिचार इत्याह — **तर्हीति** । मायिमते देहादेः स्वरूपेणैव बाध्यत्वाङ्गीकारादस्माभिरित्युक्तम् । यद्यपि सिद्धान्ते

देहादेरेत्मनि स्वरूपेण वाऽऽत्मत्वादिधर्मरूपेण वाऽऽरोपितत्वं नास्त्येव । मम देह इति ह्येव न देहोऽहमिति प्रमा । उपचारश्च कृष्णोऽहमितीत्यादिवचनात् । यैर्वस्त्रमाल्याभरणानुलेपनैः श्वभोजनं स्वात्मतयोपलालितमित्यादिपुराणवचनानि तु देहात्मनोः स्पष्टविवेकाभावपराणीत्युक्तत्वाच्च । तथाऽप्यत्र नित्यत्वादिधर्मरूपेणारोपमङ्गीकृत्य स्वरूपेणाबाध्यत्वोक्तिरिति मन्तव्यम् । न च सर्वात्मनाऽबाध्यत्वमेव हेतुत्वेन विवक्षितमिति वाच्यम् । **पक्षसपक्षयोरपि धर्मरूपेण बाध्यतासद्भावादसिद्धिसाधनवैकल्ययोरारोपापत्तिरिति** ॥ तदपि देहादिकम् ॥ **पक्षतुल्यत्वमिति** ॥ सन्दिग्धसाध्यममित्यर्थः । तथा च तत्र साध्याभावनिश्चयाभावान्न व्यभिचारचोदनावकाश इति भावः । देहादौ साध्याभावमुपपादयति — **त्वाऽपीति** । आत्माभेदवादिनाऽपीत्यर्थः । तदभेदस्य देहात्माभेदस्य । ननु देहात्माभेदस्याध्यस्तत्वेनापारमार्थिकत्वेऽपि प्रकृतसाध्यस्य भेदाभावत्वेन तस्य सत्यत्वोपपत्त्या कथं देहादौ साध्याभाव इत्यत आह — **भेदाभावस्यैवेति** ॥ तथा चाभेदो भेदाभाव इति पर्यायत्वान्न देहादौ साध्यसत्त्वमिति भावः । नन्वेवं चेत्सिद्धान्ते कथं कार्यकारणादीनां भेदाभेदोभयाङ्गीकार इति चेत् । सत्यम् । यद्यप्यभेदो न भेदाभावरूपः किन्तु तद्विरोधी । विरोधश्च वध्यघातुकभावरूपः । स च विरोधः क्वचिद्विशेषबलेन प्रतिबद्धो भवति । यत्रात्यन्ताभेद एव तत्र भेदसामान्यघटको विशेषो नास्त्येव । तथा च न सिद्धान्ते काऽप्यनुपपत्तिः । तथाऽपि परमते नैवमङ्गीकर्तुं शक्यते । भेदाभेदयोः क्वचित्सामानाधिकरण्यस्य विशेषानङ्गीकारिणा निर्वोढुमशक्यत्वात् । अतस्तन्मते भेदाभावस्यैवाभेदरूपत्वेनावश्याङ्गीकार्यत्वा-

त्तन्मतरीत्यैवेयमुक्तिरिति ॥ ननु सिद्धान्तेऽपि कथमभेदस्य भेदाभावाद्बहिर्भावः । भेदस्य तादात्म्यप्रतिषेधरूपत्वात् । अभावाभावस्य प्रतियोगिस्वरूपत्वनियमेन तादात्म्यस्य भेदाभावरूपत्वावश्यम्भावादिति चेन्न । तथा सत्यत्यन्ताभावप्रतियोगिनोर्भेदाभेदयोरुभयोरप्यप्रामाणिकत्वप्रसङ्गात् । प्रामाणिकस्यात्यन्ताभावप्रतियोगित्वा सम्भवस्योपपादितत्वात् । अतो भेदो नाम तादात्म्यप्रतिषेधरूपोऽप्यन्योन्येभाव एव । अत एव तस्य धर्मिस्वरूपत्वमङ्गीकृतम् । भावाभावस्वरूपत्वान्नान्योन्याभावता पृथगित्यादौ । अभेदस्तु भावस्वरूप एव न भेदात्यन्ताभावरूपः । अत एव तस्यापि धर्मिस्वरूपत्वमङ्गीकृतम् । अत्यन्ताभावरूपत्वे धर्मिस्वरूपत्वायोगात् । तथा च सिद्धोऽभेदभेदाभावयोर्भेद इत्यलम् ॥ **ज्ञानत्वं चेदिति** ॥ यद्यपि सिद्धान्तेऽपि न ज्ञानत्वमात्मनः । ज्ञातुर्ज्ञानत्वायोगात् । अत एव प्रमाणलक्षणटीकायां स्वतन्त्रज्ञानमीशज्ञानमितीशज्ञानस्य लक्षणमभिधाय तत्र ज्ञानमितीशव्युदास इत्युक्तम् । तथाऽपि सविशेषतादात्म्यसत्त्वान्नैयायिकं प्रतीत्युक्तम् । तेन ज्ञानात्मनोरत्यन्तभेदस्यैवाङ्गीकारात् ॥ **तवैवासिद्धेरिति** ॥ ज्ञानरूपस्यात्मनो ज्ञानाधारत्वानङ्गीकारादिति भावः ॥ **परमात्माननुसंहितदुःखाननुसन्धातृत्वमिति** ॥ अत्र दुःखाननुसन्धातृत्वमित्युक्तौ परस्परदुःखाननुसन्धातृत्वस्य जीवेष्वपि सत्त्वादुपाधेः साधनव्यापकता स्यात् । अतः परमात्माननुसंहितेति दुःखविशेषणम् । ततश्च परमात्माननुसंहितं यद्दुःखं तदननुसन्धातृत्वमित्यर्थः । ततश्च जीवेषु परस्परदुःखाननुसन्धातृत्वसत्त्वेऽपि न परमात्माननुसंहितात्वावच्छेदेन दुःखाननुसन्धातृत्वम् । स्वस्वदुःखानुसन्धानसत्त्वात् । अतो न साधनव्यापकतेति भावः । यदि च

दुःखशब्देन दुःखमात्रं विवक्ष्यते तदोपाधि व्यतिरेकेण बाधाद्युद्भावनेऽप्रयोजकताशङ्कायामनुकूलतर्कस्फोरणार्थमिदं विशेषणमिति बोध्यम् । ननूपाधेः प्रतिपक्षोन्नायकत्वेनैव दूषणत्वं न स्वतः । प्रकृते च न प्रतिपक्षः सम्भवति । विमता आत्मानः परमात्मनः परमार्थतो भिद्यन्ते परमात्माननुसंहितदुःखानुसन्धातृत्वाद् व्यतिरेकेण परमात्मवदिति प्रतिपक्षानुमानं कार्यम् । एतच्च प्राक् जीवो ब्रह्मप्रतियोगिकधर्मिसत्तासमानसत्ताकभेदाधिकरणमित्यत्रैवोक्तम् । अतो व्यर्थमिदमुपाध्युद्भावनमित्यत उक्तमुपाधेरित्यादि । माऽस्त्वस्योपाधेः प्रतिपक्षोन्नायकत्वेन दूषणत्वम् । तथाऽपि साध्यव्यापकत्वादुपाधेः पक्षाद्व्यावृतौ पक्षे साध्याभावस्यावश्यकत्वाद्बाधः । पक्ष एव व्यभिचारो वा भविष्यतीति भावः । स एवोपाधिदोषोऽपीति प्रमाणलक्षणादौ प्रतिपक्षोन्नायकत्वेनैवोपाधेर्दूषणताया उक्तत्वाद्बाधव्यभिचारान्यतरोद्भावनद्वारा दूषणत्वपक्ष इत्युक्तम् । आधिक्याख्यनिग्रहस्थानपरिहारायान्यतरेति ।

(३३) (मु.) एवं भेदे प्रमाणं प्रतिष्ठाप्याभेदे प्रमाणं पराचष्टे — **यदुक्तमित्यादिना** ॥ **चिदचित्संवलनात्मकस्येति** ॥ अहमिति प्रत्ययस्याहङ्कारविशिष्टचैतन्यविषयकत्वेनाहमित्येकाकारेणानुभवेन न शुद्धैक्यसिद्धिरिति ॥ वस्तुतस्त्वहम्प्रत्ययस्य शुद्धविषयत्वेऽपि नाभेदविषयता । चैत्रेण चैत्र एवाहं मैत्रश्च भविष्यामीत्यननुभवात् । किन्तु सर्वात्मना प्रत्युक्तरूपैकाकाराक्रान्तत्वमात्रं गोचरयति । अन्यथा घटेषु घटत्वैकाकारप्रत्ययात्तेषामैक्यं स्यात् । तत्र स्थूलत्वाणुत्वादिभेदप्रत्ययोऽस्तीति चेत् । अत्रापि सुखदुःखादिभेदप्रत्ययोऽस्तीत्युक्तम् । एतेनाहमनुभवस्य विशिष्टैक्यसिद्धिरिति निरस्तम् ॥ आद्य इति ॥ विमता

आत्मान इत्याद्यनुमान इत्यर्थः । हेतूकृतमात्मत्वं नाम स्वप्रकाशत्वमित्युक्तम् । तदेव वेद्यत्वं स्वप्रकाशत्वं वा । नाद्य इत्याह — **अवेद्यत्वे सतीति** । न द्वितीयः । तस्यासिद्धेः । शिष्यशङ्कयाऽस्त्यप्रयोजकत्वं ब्रह्मानन्दाद्यननुसन्धानमुपाधिश्चेत्युत्तरं बाध्यम् । एतेन स्वव्यवहारे स्वातिरिक्तसंविदनपेक्षत्वं स्वप्रकाशत्वमिति परास्तम् ॥ **स्वरूपेणेति** ॥ अन्यथा विज्ञातस्य सम्यग्विदितत्वरूपं बाध्यत्वाङ्गीकारेऽपि स्वरूपेणाबाध्यत्वाङ्गीकारादित्यर्थः । सर्वथा बाध्यत्वविवक्षायामसिद्धिश्चेत्यपि ज्ञेयम् ॥ **अध्यस्तत्वाङ्गीकारेणेति** ॥ अन्यथा देहात्मवादिचार्वाकनिराकरणानुपपत्तिरिति ध्येयम् ॥ **इति साध्याभावादिति** ॥ परमार्थत इत्युक्तविशेषणस्य बाधितत्वादित्यर्थः । ननु तर्हि चिदाचिदैक्याभावे तस्य सर्वाद्वैतवादिनं कथमित्यत आह — **भेदाभावस्यैवेति** ॥ भेदापारमार्थिकत्वाभावस्येत्यर्थः । नाद्वैतवादित्ववादिविरोध इति वाक्यशेषः । यद्वा परमात्मनो न भिद्यन्त इत्यत्र परमात्मप्रतियोगिकभेदाभावमात्रस्यैव विवक्षितत्वेन देहादेरपि पक्षत्वे देहात्मभेदापत्तिरित्यत आह — **भेदाभावस्यैवेति** ॥ नैयायिकं प्रतीति भेदवादिनां सर्वेषां प्रतिवदित्वादिति भावः । वस्तुतस्तु ज्ञेयभावाज्ज्ञानत्वं दुर्निवाहम् । सव्यभिचारश्चेत्यूह्यम् ॥ **उपाधेश्चेति** ॥ यत्र परमात्मभेदस्तत्रोपाधिः । शिष्टं तु प्रयोजकतास्फुरणार्थम् । ननूपाधेः सत्प्रतिपक्षोन्नायकत्वेनात्र ब्रह्माननुसंहितदुःखानुसन्धातृत्वानुमानस्य साम्यमेव प्राप्तमिति नास्य स्वपक्षनिर्णायकत्वं स्यात्तथा चास्यैवानुमानस्य पृथक् स्वपक्षनिर्णायकप्रयोगो व्यर्थ इत्यत **उक्तमुपाधेर्बाधव्यभिचारोद्भावनद्वारा दूषकतापक्ष इति** ॥ परोक्तात्मत्वस्य प्रयोजकत्वादस्य च व्याहतिसत्त्वेन तद्बाधकत्वेनोपपत्तिरिति भावः ।

(३३) (कु.) ॥ अहङ्कारस्येति ॥ चिदचित्संवलनात्मकस्येत्यात्मभिन्नत्वे हेतुः । तदभेदे आत्माभेदेऽप्रमाणत्वात् । प्रमाणत्वाभावादित्यर्थः । अथवा प्रमाणत्वादिति पदच्छेदः । तदा तदभेदेऽहङ्कारभेदे । अहङ्काराभेदे एव प्रमाणत्वान्नात्मभेद इति योजना ॥ आद्यानुमान इति ॥ विमता आत्मानः परमात्मनस्तत्त्वतो न भिद्यन्ते आत्मत्वात्परमात्मवदित्यत्रेत्यर्थः ॥ असिद्धिरिति ॥ आत्मत्वं न हि जातिः किन्तु स्वप्रकाशत्वमिति त्वयैवोक्तं तच्चावेद्यत्वे सत्यपरोक्षव्यवहारयोग्यत्वमिति त्वयैव निरुच्यते स्वग्रन्थेषु । तत्रावेद्यत्वस्यास्मन्मते आत्मत्वस्यैवाभावादसिद्धिरित्यर्थः ॥ तर्हीति । मन्मते देहादेरारोपितं धर्मतो बाधोऽपि स्वरूपेणाबाध्यत्वात् । परमात्मप्रतियोगितात्त्विकभेदाभावाद्यभिचार इत्यर्थः । सर्वात्मना बाध्यत्वं न हेतूकर्तुं शक्यते पक्षसपक्षयोरपि धर्मतो बाधादिति भावः । ननु देहात्माभेदस्याध्यस्तत्वेऽपि देहात्मभेदाभावः सत्यः किन्न स्यादित्यत आह — भेदाभावस्यैवेति ॥ लाघवादिति भावः ॥ उपाधेरिति ॥ साध्यव्यापकस्य पक्षावृत्तिवृत्तित्वे बाधोद्भावनं तद्वृत्तित्वे व्यभिचारोद्भावनं द्वारमित्यर्थः ॥ परमात्माननुसंहितदुःखानुसन्धातृत्वमिति ॥ अत्र परमात्माननुसंहितेति नोपाधिघटकम् । अव्यावृत्तकत्वात् । किन्तूपाधि व्यतिरेकेण बाधोन्नयनदशायामनुकूलतर्कस्फोरणार्थम् । सत्प्रतिपक्षोन्नायकत्वेन दूषकत्वे तु सत्प्रतिपक्षत्वेऽपि पक्षमात्रव्यावर्त्तकविशेषणवत्त्वादयमेवोपाधिः स्यादिति नानेन सत्प्रतिपक्षोन्नयनं कर्तुं शक्यमिति स पक्षस्त्यक्त इति वा बोध्यम् । सुप्तमूर्छितेत्यादिव्यभिचारित्वं तु प्रागेव विवेचितम् ।

(३३) (हु.) एवं स्वपक्षे प्रमाणानि व्यवस्थाप्य भेदाभावे परोक्तप्रत्यक्षादिप्रमाणानि क्रमान्निराकरोति ॥ यदुक्तमित्यादिना ॥

**चिदचित्संवलनात्मकस्येति** ॥ अन्तःकरणावच्छिन्नचित्त एवाहं पदार्थतयाऽन्तःकरणानां च भिन्नत्वेन तद्भेदावश्यकत्वात् । सा प्रतीतिः सर्वचिदैक्ये न प्रमाणं किन्तु अन्तःकरण(त्वरूप)जात्यैक्य एव प्रमाणं स्यादित्यर्थः । तदभेदे चिदभेदेऽप्रमाणत्वात् प्रमाणत्वाभावादित्यर्थः ॥ **आद्यानुमान इति** ॥ विमता आत्मान इत्यनुमाने आत्मत्वं स्वप्रकाशत्वमिति पूर्वपक्षावसरे उक्तत्वात्तन्निराकरोति ॥ **अवेद्यत्वेऽति** ॥ अपरोक्ष-व्यवहारगोचरत्वे सति अवेद्यत्वमिति परैः स्वग्रन्थे निष्कर्षस्य कृतत्वात् ततासिद्धिमाह — **अस्माभिरिति** ॥[1] स्वातिरिक्तसंविदनपेक्षत्वमप्यसिद्धं सुषुप्तिकाले (स्व)व्यवहारस्यैवाभावात् । सुषुप्त्युत्तरकालीनस्याभिलपन-रूपस्य व्यवहारस्य देहादितादात्म्याध्यासमालादिज्ञानेष्टसाधनताज्ञानादि-रूपस्वभिन्नज्ञानसापेक्षताया[2] अपि नियमेन सत्त्वात् । स्वातिरिक्त-संविदधीनस्वव्यवहारस्यैवाभावादित्यपि द्रष्टव्यम् । उपलक्षणविधया दिङ्मात्रप्रदर्शनं कृतम् । अत (एव) एतादृश(स्व)प्रकाशत्वस्य हेतुत्वसम्भवात्कथमनुमानमसिद्धमिति शङ्कानवकाशः ॥ **देहादेरिति** ॥ **स्वरूपेणेति** ॥ आत्मतादात्म्यरूपेण वा परानायत्तस्वस्वात्मिकत्वरूपेण वा बाध्यत्वात्स्वरूपेणेत्युक्तम् । सर्वात्मना बाध्यत्वाभावादात्मन्यपि नास्ति, देहतादात्म्यादिरूपेण बाध्यत्वादिति भावः ॥ **पक्षतुल्यत्वमिति** ॥ परमात्मप्रतियोगिकपारमार्थिकभेदाभावस्य देहादावपि मयाऽङ्गीकारादिति भावः ॥ **त्वयाऽपीति** ॥ अपिर्नैयायिकादिसमुच्चये ॥ **देहात्माभेदस्येति** ॥ **साध्याभावादिति** ॥ भेदाभेदरूपविरुद्धधर्मयोर्मध्येऽभेदस्य पारमार्थिक-

---

1 इदं सावतरणं प्रतीकं मु.पाठे न दृश्यते ।

2 `देहादितादात्म्यरूपासन्मालादिज्ञानेष्टसाधनताज्ञानादिरूपस्य भिन्नज्ञानसापेक्षताया' मु. ।

तायास्त्वयैवोक्तत्वेन भेदस्य पारमार्थिकत्वं बलाद्वाऽऽगतमिति व्यभिचारो दुरुद्धर इति भावः ॥ **नैयायिकं प्रतीति** । तस्यापि भेदसत्यत्ववादित्वादिदानीं[1] तत्प्रक्रियामवलम्ब्यैव विचारस्य प्रवृत्तत्वादिति भावः । **तवैवेति** ॥ वृत्तिज्ञानोपादाने तदाधारत्वं मनस एव न पक्षीभूतात्मनि । स्वरूपज्ञानग्रहणेऽ न तदाधारत्वमात्मनि स्वस्य स्वाधारत्वायोगादित्यसिद्धिरित्यर्थः ॥ **उपाधेरिति** ॥ साध्यव्यापकत्वेन गृहीतोपाध्यभावात्साध्याभावस्यैव निश्चयेन बाध एव तस्यान्तर्भावादिति भावः । सत्प्रतिपक्षोत्थापकत्वे समबलत्वं स्यादिति समबलप्रमाणविरोधस्यैव सत्प्रतिपक्षत्वात् । तच्च न घटते । उक्तोपाध्यभावरूपपरमात्माननुसंहितदुःखानुसन्धातृत्वस्यानुकूलतर्कसाचिव्येन भेदनिर्णायकताया एव सत्त्वात्पक्ष इत्युक्तम् । सत्प्रतिपक्षोत्थापकत्वे पक्षेतरत्वपर्यवसाय्येतदुपाध्यभावरूपसत्प्रतिपक्षहेतावपि[2] पक्षेतरत्वस्योपाधित्वं वक्तुं शक्यत इति तत्पक्षपरित्याग इति केचित् । विशिष्टोपाध्यभावरूपहेतौ पूर्वोक्तरीत्या व्याप्तिग्रहौपयिकत्वाद्विशिष्टस्योपाधित्वं दुःखाननुसन्धातृत्वमात्रस्यैवोपाधित्वमितरांशस्य साध्याभावानुमानेऽनुकूलतर्कोत्थापकत्वेन सार्थक्यमेवेत्यवधेयम् ।

(३३) (का.) एवं भेदे प्रमाणमुपपाद्य परोक्तमभेदप्रमाणं खण्डयति — **यदुक्तमिति** ॥ **अहङ्कारस्येति** ॥ अहम्प्रत्ययविषयस्यान्तःकरणावच्छिन्नचिद्रूपस्य शुद्धचिद्रूपत्वाभावान्न तत्प्रत्ययस्य शुद्धचिदैक्यप्रमाणत्वमिति

---

[1] `भेदसत्यत्ववादिनीं' मु.

[2] अयं मु.पाठह्.पाठयोराधारेण निष्पन्नः पाठः । `-त्थापकत्व-' इति ह्. `-पर्यवसाने तदुपाधि-' इति मु.

भावः । यदप्युक्तमनुमानानि चेत्यादि तदप्यसदित्याह — **आद्यानुमान इति** ॥ विमता आत्मानः परमात्मनः परमार्थतो न भिद्यन्ते आत्मत्वात् परमात्मवदित्यनुमान इत्यर्थः । अत्र हेतुभूतमात्मत्वं स्वप्रकाशत्वमित्युक्तम् । तद्दूषयति — **अवेद्यत्वेति** ॥ प्रकाशाविषयत्वरूपस्य स्वेतरप्रकाशाविषयत्वरूपस्य वेत्यर्थः । अस्माभिरनङ्गीकारादित्यनेन स्वात्मकप्रकाशविषयत्वरूपस्वप्रकाशत्वस्य क्रियाकर्मविरोधेन परैरनङ्गीकारादसिद्धिरिति सूचितम् । इतोऽतिरिक्तस्वप्रकाशत्वं तु दुर्वचमेवेति भावः । तर्हि न स्वप्रकाशत्वमात्मत्वम् । अपि तर्ह्यन्यदेवेत्याशङ्कते — **अबाध्यत्वमिति** ॥ ननु देहादेरारोपितकर्तृत्वाद्याकारेण बाध्यत्वात् कथमबाध्यत्वमित्याशङ्कापरिहाराय **स्वरूपेणे**त्युक्तम् । अयं भावः । सर्वथाऽबाध्यत्वस्य हेतुत्वेऽसिद्धिः । आत्मनोऽप्यारोपिताकारेण बाध्यत्वात् । अतः सत्त्वेनाबाध्यत्वं वाच्यम् । तच्च सत्त्वप्रकारकप्रमितिविषयत्वपर्यवसितं देहेन्द्रियादौ साध्यशून्येऽप्यस्तीत्यनैकान्त्यमिति ।

ननु देहादावप्यात्माभेदसाधनान्न दोष इत्याशङ्कां निराह — **न चेति** ॥ पक्षतुल्यं प्रकृतधर्मितुल्यं सन्दिग्धसाध्यकमिति यावत् । निश्चितसाध्याभाववति व्यभिचारस्यैव दोषत्वादिति भावः । देहादेः पक्षतुल्यत्वमसिद्धम् । तत्रात्माभेदाङ्गीकारेऽपसिद्धान्तापत्तेरित्याह — **त्वयाऽपीति** ॥ **अध्यस्तत्वेति** ॥ अन्यथा देहात्मनोरितरेतराध्याससमर्थनानुपपत्तेरिति भावः । **तदभेदस्य** देहपरमात्माभेदस्यापारमार्थिकतया पारमार्थिकभेदाभावरूपसाध्याभावादित्यर्थः । नन्वभेदस्यापारमार्थिकत्वेऽपि कुतस्तादृशसाध्याभाव इत्यत आह — **भेदाभावस्येति** ॥ न चाभेदस्तादात्म्यम् । तच्च स्वरूपमेव न भेदाभाव इति वाच्यम् । आत्मस्वरूपस्या-

प्यध्यस्तत्वेन मिथ्यात्वापातात् । न चाध्यस्तमपि देहादिस्वरूपमेव मिथ्या, नात्मस्वरूपमिति वाच्यम् । इतरेतराध्यासे वैचित्र्यकल्पनस्यायुक्तत्वात् । देहात्मनोः पारमार्थिकभेदाभावे तत एव तदुभयस्वरूपैक्यापत्तेश्च । इदमुपलक्षणम् । देहादेः पक्षतुल्यत्वेऽपि सन्दिग्धानैकान्त्यं दुर्वारमेव । अनुकूलतर्काभावे तस्यापि दोषत्वादित्यपि बोध्यम् । ।

॥ **असिद्धेरिति** ॥ नैयायिकेनात्मनो ज्ञानाधारत्वस्यैवोपगमात् पक्ष-दृष्टान्तयोः साधनस्य व्याप्तेश्चासिद्धेरित्यर्थः । यद्यपि वृत्तिज्ञाने व्यभिचारः सिद्धान्तेऽपि शक्यते वक्तुम् । तथापि नित्यज्ञानत्वस्य हेतुत्वे न तथेत्याशयः ॥ **तवैवासिद्धेरिति** ॥ आत्मनो ज्ञानमात्रत्वाङ्गीकारादिति भावः । न चाजडत्वमात्मत्वमिति वाच्यम् । जडत्वस्यानात्मत्वरूपतया परस्पराश्रयात् । न च पृथिव्यादिद्रव्यान्यत्वे सति गुणाद्यन्यत्वमात्मत्वमिति वाच्यम् । मां प्रति गुणाद्यन्यत्वासिद्धेः । तदनुक्तौ तार्किकमते गुणादौ व्यभिचारात् । कथञ्चित् हेतुनिर्वचनेऽप्यनुकूलतर्काभावादुपाध्यादिग्रस्तत्वं दुर्वारमित्याह — **उपाधेरिति** ॥ अत्र परमात्माननुसंहिताननुसन्धातृत्वमात्रं दुःखाननुसन्धातृत्वमात्रं वोपाधिः । प्रथमे दुःखेति स्वरूपकीर्तनम् । द्वितीये परमात्माननुसंहितेत्युपाधेः साध्यव्यापकत्वोपपादनमित्यवगन्तव्यम् । ननू-पाधेर्बाधव्यभिचाराद्यनात्मकत्वाददूषणत्वमित्यत उक्तम् ॥ **दूषणत्वपक्ष इति** ॥ साक्षादनुमित्यविरोधित्वेन दूषणत्वायोगाद्बाधव्यभिचारोद्भावनद्वारेति ॥ परार्थप्रसङ्गादुद्भावनेत्युक्तम् । बाधोन्नयनद्वारा व्यभिचारोन्नयनद्वारा वेत्यर्थः । प्रकृते चोपाध्यभावेन पक्षे साध्याभावानुमानस्योपाधिव्यभिचारेण हेतौ साध्यव्यभिचारानुमानस्य च सम्भवादिति भावः । यद्वा ननु पक्षे साध्यसन्देहेन विपक्षे च हेत्वभावेन क्वचिदुपाधेर्व्यभिचारोन्नायकत्वा-

सम्भवात्कथं दूषणत्वमित्यत उक्तम् – **बाधव्यभिचारोद्भावनद्वारेति** ॥ बाधोन्नीतव्यभिचारोन्नयनद्वारेत्यर्थः । तथा चोपाधेः पक्षे साध्याभाव-निश्चयसम्पादनद्वारा व्यभिचारोन्नायकत्वं सम्भवतीत्याशयः । अत्र च बाधोन्नायकत्वेनापि दूषणत्वं बोध्यम् ।

(३३) (श.) एवं भेदेप्रमाणत्रितयमुपपाद्य यदुक्तभेदेप्रत्यक्षं तावदित्यादिना प्रमाणत्रयं तन्निराकुर्वन्प्रत्यक्षं तावन्निराकरोति ॥ **यदुक्तमित्यादिना** ॥ **अहं कारस्येति** ॥ अहमिति प्रत्यक्षं खल्वात्माभेदे मानमुक्तम् । तत्तदा स्याद्यदि तस्यात्मविषयकत्वं स्यात् । नच तदस्ति । तस्य त्वन्मतेछेतनाचेतनाचेतनमिश्रितान्तःकरणविषयत्वाङ्गीकारात् । तस्य चात्मनो भिन्नत्वात् । अतो नतद्विषयकाहम्प्रत्यय आत्माभेदेप्रमाण-मित्यर्थः । अथात्माभेदसाधकानुमानानि निराचष्टे ॥ **आद्य इत्यादिना** ॥ विमता आत्मानः परमार्थतः परमात्मनो न भिद्यन्ते आत्मत्वात् परमात्मवदित्यत्र परेणैव खल्वात्मत्वं स्वप्रकाशत्वं नजातिविशेष इत्युक्तम् । तत्र स्वप्रकाशत्वं स्वविषयप्रकाशत्वरूपं कर्तृकर्मविरोधेन परेण नाङ्गीक्रियत इति प्रमाणान्तरावेद्यत्वरूपमेव तदङ्गीकार्यम् । तच्च मां प्रत्यसिद्धम् । मयाऽऽत्मनः प्रमाणान्तरवेद्यत्वाङ्गीकारादित्यर्थः । तर्ह्यन्यदेवात्मत्वमस्त्विवतिचेत् तत्किमबाध्यत्वरूपमुतज्ञानत्वरूपमथ-ज्ञानाधारत्वरूपमिति विकल्पान्हृदिनिधायाध्यन्तावद्दूषयितुं शङ्कते — **अबाध्यत्वमिति** ॥ इदं चात्मनस्त्वयाप्यङ्गीगृतमिति न पूर्वोक्तदोष इति भावः । दूषयति — **तर्हि ति** ॥ **व्यभिचार इति** ॥ अबाध्यत्वरूप-हेतुमतिदेहादावात्मभेदाभावरूपसाध्याभावाद्यभिचार इत्यर्थः । व्यभिचार-माशङ्क्यनिराकरोति ॥ **नचेति** ॥ तत् देहादि । पक्षतुल्यं पक्षे यथाऽऽत्म-

भेदाभावः साध्यते तथा देहादावपि अतस्तत्र साध्याभावस्य सन्दिग्धत्वेन साध्यात्यन्ताभावनिश्चयवति हेतुवृत्त्यभावान्न व्यभिचार इत्यर्थः । ननूक्तरीत्या निश्चितव्यभिचाराभावेऽपि सन्दिग्धव्यभिचारः स्यादेव । साध्याभावसन्देहवतिहेतुनिश्चयस्यैव सन्दिग्धव्यभिचारत्वादिति चेन्न । तथात्वे सर्वेषां हेतूनां साध्याभावसन्देहवति पक्षे विद्यमानत्वेनानुमानमात्रोच्छेदापत्तेः । किन्तु निश्चितसाध्याभाववतिहेतुसन्देह एवसन्दिग्धव्यभिचारः । नचायं प्रकृतेऽस्तीति भावः । पक्षतुल्यत्वमेवासिद्धमित्याह — **त्वयेति** ॥ **परमार्थत इति** ॥ पारमार्थिकं परमात्मप्रतियोगिकभेदाभावरूपं यत्साध्यं तदभावादित्यर्थः । कुत इत्यत उक्तं **रदभेदस्येति** ॥ देहात्माभेदस्येत्यर्थः । तदपिकुत इत्यत उक्तम् । **त्वयेति** ॥ अध्यस्तत्वमारोपितत्वम् । अन्योन्यस्मिन्नन्योन्यात्मकतामध्यस्येति तदीयभाष्यादिति भावः नन्वत्रभेदाभाव एव साध्यते नाभेदः अतो मया देहाभेदस्याध्यस्तत्वाङ्गीकारेण तस्यापारमार्थिकत्वेऽपि देहात्मभेदाभावस्य पारमार्थिकत्वेनास्त्येव देहादौ साध्यमित्यत आह — **भेदाभावस्येति** ॥ तथाचाभेदस्याध्यस्तत्वाङ्गीकारे भेदाभावस्यापि तदङ्गीकृतमिति भावः । द्वितीययमाशङ्क्य निराचष्टे — **ज्ञानत्वं चेदिति** ॥ देहस्य चज्ञानरूपत्वाभावान्नोक्तदोष इति भावः ॥ **नैयायिकं प्रतीति** ॥ ज्ञानसमवायिकारणत्वमात्मत्वमिति वदता तेनात्मनो ज्ञानरूपत्वानङ्गीकारादिति भावः । तृतीयमाशङ्कते — **ज्ञानाधारत्वमिति** ॥ न अयारिकेनात्मनो ज्ञानाधारत्वाङ्गीकारान्नोक्तदोष इति भावः ॥ **तवैवासिद्धेरिति** ॥ त्वन्मते आत्मनो निर्गुणत्वेन ज्ञानाधारत्वानङ्गीकारादुक्तदोष इति भावः ॥ **परमात्माननुसंहितेति** ॥ परमात्माननुसंहितं परमात्माननुभूतं यद्दुःखं

तदननुसन्धातृत्वं तदननुभवितृत्वमित्यर्थः । यत्रात्माभिन्नत्वं तत्र परमात्माननुसंहितदुःखाननुसन्धातृत्वं यथा परमात्मनि । यत्रात्मत्वं न तत्र परमात्माननुसंहितदुःखाननुसन्धातृत्वम् । जीवेष्वात्मत्ववत्सुपरमात्माननुसंहितदुःखानुसन्धातृत्वस्यैव सत्वेन साधना व्यापकत्वादिति भावः । ननूपाधेः साक्षाद्धेतुदोषत्वाभावेन प्रतिपक्षोद्भावकत्वेन हेतुदोषत्वं वाच्यम् । एवं चात्मानः परमात्मनः परमार्थतो भिद्यन्ते । परमात्माननुसंहितदुःखानुसन्धातृत्वाद्व्यतिरेकेण परमात्मवदित्युपाधि व्यतिरेकेण प्रतिपक्षानुमानं कार्यम् । इदं चव्यर्थम् । आत्मभेदसाधनावसर एवास्योक्तत्वादित्यत उक्तम् उपाधेर्बाधव्यभिचारोद्भावनद्वारा दूषणत्वपक्ष इति ॥ उपाधेः साधनाव्यापकत्वे साधनवतः पक्षद्वयावर्तमान उपाधिः साध्यव्यापकत्वेन साध्यमपि व्यावर्तयति । तथाच पक्षे साध्याभावनिश्चयाद्बाधः । पक्षे साध्याभावपमाया एवबाधत्वात् । तथोक्तरीत्या पक्षे साध्याभावनिश्चये तस्यैव विपक्षत्वात्तत्र हेतोः सत्वान्न व्यभिचारः । हेतोर्विपक्षवृत्तित्वस्यैव व्यभिचारत्वादिति यन्मतं तदनुसारेणेदमुपाध्युद्भावनम् । नतु तस्य स्वव्यतिरेकेण प्रतिपक्षोत्थापकत्वमिति मतानुसारेण । अतो नवैयर्थ्यमिति भावः ।

**(३४) विमता आत्मानः परमात्मनोऽपरमार्थतो (अपरमार्थतोऽपि) न भिद्यन्ते आत्मत्वात् परमात्मवदित्याभाससमानयोगक्षेमत्वं च । अनुकूलतर्काभावादप्रयोजकता च । द्वितीये देवदत्तशब्देन तच्छरीरावच्छिन्नचैतन्यविवक्षायां यज्ञदत्तादिशरीराणां देवदत्तशरीरावच्छिन्नचैतन्याधीनत्वासम्भवेन तद्भोगायतनत्वे साध्ये बाधः । अनवच्छिन्न(चैतन्य)विवक्षायां तस्याभोक्तृत्वेन बाधः ।**

**सुप्तमूर्च्छितशरीरेषु व्यभिचारः । तेषामपि पक्षसमत्वे (पक्षत्वे) बाधः । न च वाच्यं भोगायतनत्वात्यन्ताभावानधिकरणत्वं साध्यमिति । त्वया भोगायतनत्वस्य मिथ्यात्वाङ्गीकारेण तदधिकरणस्य शरीरस्य तदत्यन्ताभावाधिकरणत्वाङ्गीकारात् । तृतीये साध्यानिरुक्तिः । न चाधिष्ठानयाथात्म्यज्ञाननिवर्त्यत्वं तत् । निवृत्तिशब्देन ध्वंसविवक्षायां मिथ्यात्वासम्भवात् अत्यन्ताभावविवक्षायां च बाधः । त्वयाऽपि व्यवहारदशायां भेदाङ्गीकारेण (भेदाङ्गीकारे) तदयोगात् । पारमार्थिकत्वाकारेण तथात्वमिति चेन्न । अबाध्यत्वरूपस्य पारमार्थिकत्वस्य त्वयोच्यमानबाध्यत्वज्ञानाधीनज्ञानत्वेनान्योन्याश्रयात् ।**

(३४) (भ.) ॥ विमत इत्यादि । विमतात्मनां परमात्मप्रतियोगिकापारमार्थिकभेदस्य तेनाङ्गीकारात्तदभावसाधनमनिष्टम् । दृष्टान्ते पारमार्थिकभेदस्य तेनाङ्गीकारात् साध्यवैकल्यप्राप्तयाऽनुमानस्याभासत्वं च ज्ञातव्यम् ॥ द्वितीय इति ॥ विमतानि शरीराणि देवदत्तस्यैव भोगायतनानि शरीरत्वाद्देवदत्तशरीरवदित्यर्थः । अत्र भोगायतनत्वात्यन्ताभावानधिकरणत्वं साध्यम् । तेन सुषुप्तमूच्छितमृतशरीरेषु न बाधो नापि व्यभिचार इति यत्प्राक् पूर्वपक्षिणोक्तं तदिदानीं दूषयिष्यन् प्रस्तावनाय पूर्वपक्षिणाऽऽशङ्क्य परिहृतमेव दूषणं स्वयमाह — सुप्तमूच्छितेति ॥ यदर्थमिदं दूषणमभिहितं तदिदानीमाशङ्क्य निराकरोति ॥ न च वाच्यमिति ॥ मिथ्यात्वाङ्गीकारेणेति ॥ तन्मते स्वात्यन्ताभावसमानाधिकरणत्वरूपत्वान्मिथ्यात्वस्येति भावः ॥ तृतीय इति ॥ भेदो मिथ्या भेदत्वाच्चन्द्रभेदवदित्यत्रेत्यर्थः । प्राङ्निरुक्तमेव मिथ्यात्वमाशङ्क्य निराकरोति ॥ न

चेति ॥ **अत्यन्ताभावविवक्षायां वेति** ॥ अत्र निवृत्तिशब्देन यद्यप्यत्यन्ताभावविवक्षा कर्तुं न शक्यते । तस्याजन्यत्वात् । ज्ञाननिवर्त्यत्वस्य च ज्ञानजन्यनिवृत्तिप्रतियोगित्वरूपत्वात् । तथाऽपि निवृत्तप्रतियोगितया ज्ञायमानत्वमेव निवर्त्यत्वमिह विवक्षणीयम् । उभयत्रापि बाधमुपपादयति — **त्वयाऽपीति** ॥ भेदमिथ्यात्ववादिनाऽपि त्वया व्यवहारदशायां ज्ञानोत्तरजीवन्मुक्तिदशायां भेदानुवृत्त्यङ्गीकारेण ज्ञानेन भेदध्वंसस्यैवाभावात् । अत्यन्ताभावस्य तु व्यवहारदशायां भेदाङ्गीकारेण सुतरामयोगात्तदयोगान्निरुक्तमिथ्यात्वायोगादित्यर्थः । केचित्तु प्रध्वंसार्थकत्वपक्षे मिथ्याभूतस्य विनाशायोगादिति भाव इति बाधोपापादनं बहिरेव कृत्वा त्वयाऽपीति वाक्यमत्यन्ताभाव एवोपपादनार्थं प्रवृत्तमित्याहुः । अत्यन्ताभावपक्षमङ्गीकृत्य बाधं परिहर्तुं शङ्कते — **पारमार्थिकत्वाकारेणेति** ॥ **तथात्वमिति** ॥ अत्यन्ताभावप्रतियोगित्वमित्यर्थः ॥ **अबाध्यत्वेति** ॥ पारमार्थिकत्वं नामाबाध्यत्वम् । तच्च बाध्यत्वज्ञानाधीनज्ञानम् । अभावज्ञानस्य प्रतियोगिज्ञानाधीनत्वात् । बाध्यत्वं च पारमार्थिकत्वाकारेणात्यन्ताभावप्रतियोगित्वम् । तथाचाबाध्यत्वसिद्धौ तद्रूपेणात्यन्ताभावप्रतियोगित्वरूपबाध्यत्वसिद्धिः । तत्सिद्धौ च तदभावरूपाबाध्यत्वसिद्धिरित्यन्योन्याश्रयादित्यर्थः ।

**(३४) (मु.) ॥ अपरमार्थतोऽपि न भिद्यन्त इति** ॥ व्यावहारिकभेदेनापि रहिता इति यावत् ॥ **परमात्मवदिति** ॥ तस्य परप्रतियोगिकभेदाभावेन व्यावहारिभेदस्याभावादिति भावः ॥ **अनुकूलतर्काभावादिति** ॥ यदि परमात्माभेदो न स्त्तर्ह्यात्मत्वं न स्यात् । नान्यतोऽस्तिद्रष्टेत्यादिनाऽन्यस्य ज्ञातृत्वनिषेधादिति तर्कोऽस्तीति चेन्न । यदि परमात्माभेदः स्यात् । केन कं

पश्येदिति तस्य ज्ञातृत्वनिषेधादिति वैपरीत्येन तर्कस्य परानुकूलत्वादिति दिक् ॥ **द्वितीय इति** ॥ विमतानि शरीराणीत्यनुमान इति शेषः ॥ **अधिष्ठानत्वासम्भवेनेति** ॥ तस्य परिच्छिन्नत्वादिति भावः । अधीनत्वासम्भवेनेति पाठे यज्ञदत्तादिशरीराणां यज्ञदत्तप्रयत्नानुगुण-व्यापारविकलत्वेन तद्भोगायतनत्वादिति भावः ॥ **बाध इति** ॥ अपसिद्धान्तश्चेत्यपि ग्राह्यम् । ननु देवदत्तान्यविशिष्टप्रविष्टविशेष्य-भिन्नविशेयकविशिष्टान्तरमिति तद्भोगायतनत्वमेव देवदत्तभोगायतनत्वमिति चेन्न । एकस्य विशेष्यस्य विरुद्धाविशिष्टद्वयनिवेशः किं स्वरूपेणोत विशेषणान्तरोपोद्बलितेन । एकस्यैव शुक्लत्वपीतत्वयोर्दर्शनात् । दण्डित्वकुण्डलित्वयोरविरुद्धत्वोपपत्तिः । न द्वितीयः । अनवस्थाद्यपत्तेरिति ॥ **तदत्यन्ताभावानधिकरणत्वाङ्गीकारादिति** ॥ स्वात्यन्ताभावसमानाधि-करणत्वं मिथ्यात्वमित्यङ्गीकारेणात्यन्ताभावाधिकरणत्वं साध्यमिति चेन्न । त्वन्मते सर्वस्य सर्वात्मकत्वे सर्वधर्माणां सर्वत्र सत्त्वेन प्रतियोग्य-समानाधिकरणात्यन्ताभावस्यैवाप्रसिद्धत्वात् । वस्तुतस्तु हेतोरप्रयोजकत्वं देवदत्तकर्मार्जितत्वमुपाधिश्चेति मूर्धाभिषिक्तं दूषणद्वयम् । न च विमतानि शरीराणि देवदत्तकर्मार्जितानि शरीरत्वादित्युपाधेरपि पक्षे साधयितुं शक्यत्वादिति भाव्यम् । तत्र देवदत्तभोगायतनत्वस्योपाधित्वात् । द्वयोः सन्दिग्धत्वेन शङ्कितोपाधित्वोपपत्तेः । द्वयोर्युगपत्साधने चैकेन वा भेदलाभादाधिक्येन निग्रह इति ॥ **तृतीय इति** ॥ भेदो मिथ्या भेदत्वादित्यनुमान इत्यर्थः ॥ **साध्यानिरुक्तिरिति** ॥ व्यावहारिकत्व-प्रातिभासिकत्वयोः प्रत्येकं पक्षदृष्टान्ताननुगमादनुगतस्यानिर्वचनादिति भावः । ननु निरुक्तमेवेत्यतस्तदाशङ्क्य निराह — **न चेति** ॥ निवृत्तिशब्दस्य

द्वेधासम्भावितोऽर्थो नोभयमपीत्याह — **तदयोगादिति** ॥ अत्यन्ताभावप्रतियोगिभेदस्य स्वात्यन्तासत्त्वप्राप्तेर्धर्माङ्गीकारे चैकस्याधिष्ठानज्ञानोत्पत्तौ भेदस्यापि न कस्यापि तत्प्रतीतिः स्यादिति भावः । नन्वत्यन्ताभावप्रतियोगित्वं न स्वरूपेण येनासत्त्वं स्यात्किन्तु धर्मान्तरेणेति शङ्कते — **पारमार्थिकत्वेति** ॥ **अबाध्यत्वेति** ॥ प्रकारान्तरेण पारमार्थिकत्वस्य दुर्वचत्वादिति भावः । अबाध्यत्वं पारमार्थिकत्वम् । तव बाध्यत्वं नाम स्वरूपेणानिषेध्यत्वे सति पारमार्थिकत्वाकारेणात्यन्ताभावप्रतियोगित्वमिति पुनः पारमार्थिकत्वप्रवेशादन्योन्याश्रयत्वमिति भावः ॥

(३४) (कु.) ॥ **तृतीये त्विति** ॥ भेदो मिथ्या भेदात्वाच्चन्द्रभेदवदित्यत्रेत्यर्थः । **तत्साध्यम्** ॥ **निवृत्तिशब्देनेति** ॥ अधिष्ठानयाथात्म्यज्ञानजन्यध्वंसप्रतियोगित्वं तज्जन्यात्यन्ताभावप्रतियोगित्वं वा न साध्यम् । त्वया ब्रह्मज्ञानोत्तरदशायां जीवन्मुक्तिदशायां भेदानुवृत्त्यङ्गीकारेण तदयोगात् । अत्यन्ताभावस्य च जन्यत्वायोगादित्यपि बोध्यम् ॥ **चरमवृत्तेः** पूर्ववृत्त्यनधिकविषयत्वेन तदनिवृत्यनिवर्तकत्वायोगाश्चेत्यपि बोध्यम् ॥ **पारमार्थिकत्वाकारेणेति** ॥ जीवन्मुक्तिदशायां पारमार्थिकत्वाकारो निवर्तते । अत एव दग्धपटायमानत्वादिति भावः ॥ **अबाध्यत्वरूपस्येति** ॥ बाध्यत्वनिरुक्तौ पारमार्थिकत्वप्रवेशितस्य नाबाध्यत्वगर्भत्वादन्योन्याश्रय इति भावः ।

(३४) (हु.) ॥ **विमता आत्मान इति** ॥ **अपरमार्थत इति** ॥ तथा च व्यावहारिकपरमात्मभेदाभावसाधनस्याप्यापात इति भावः ॥ **द्वितीय**

इति ॥[1] सर्वाणि शरीराणीत्यनुमान इत्यर्थः ॥ तदधिकरणत्वाङ्गीकारादिति ॥[2] तथा च तदधिकरणत्वसाधने बाध इति भावः । पूर्वपक्षभागस्थैतद्वाक्यस्यान्ये[3] त्विति रीत्या यथाश्रुतसाध्यपरतया व्याख्यानपक्षेऽपि भोगायतनत्वादेरनुभवबाध एव द्रष्टव्यः ॥ तृतीय इति ॥ भेदो मिथ्या भेदत्वादित्यनुमान इत्यर्थः ॥ साध्यानिरुक्तिरिति ॥ असत्त्वसाधनेऽपसिद्धान्तो बाधश्च सदसद्विलक्षणत्वसाधनेऽप्रसिद्धविशेषणताऽतः साध्यानिरुक्तिरित्यर्थः ॥ बाध इति ॥ तदुपपादयति — त्वयाऽपीति । जन्यजनकभावादिव्यवस्थाया भेदाधीनतयाऽऽत्मज्ञानेन तन्निवृत्तौ तज्जन्यत्वादेः साध्यघटकस्यैवायोगाद्बाधः । अत्यन्ताभावे तज्जन्यत्वस्यैवाभावात्तद्घटितसाध्यसत्त्वानिर्वाहाद्बाध इत्यर्थः ॥ पारमार्थिकत्वाकारेणेति ॥ ज्ञानजन्यपारमार्थिकत्वावच्छिन्नप्रतियोगिकध्वंसप्रतियोगित्वं तदर्थ इत्यर्थः ॥ अबाध्यत्वरूपस्येति ॥ पारमार्थिकत्वस्य बाध्यत्वाभावारूपतया बाध्यत्वशरीरेऽबाध्यत्वं निविष्टमित्यात्माश्रय इत्यपि द्रष्टव्यम् । ननु ज्ञानजन्यध्वंसप्रतियोगित्वमेव बाध्यत्वम् । न पारमार्थिकत्वस्य तच्छरीरे निवेशः । किन्तु ज्ञानेन पारमार्थिकत्वेन तस्मिन्नध्यस्तेन विशिष्टस्य जगतो नाशो भवति । अत एव दग्धपटायमानतया जगदवस्थानं जीवन्मुक्तौ । तथा च वस्तुतस्तादृशध्वंसमादाय बाध्यत्वमुपपादनीयमिति वाच्यम् । वस्तुतः तादृशध्वंसस्य तादृशध्वंसत्वेनैव निवेश इदानीं ज्ञानविषयताविशिष्टघटस्य

---

[1] इत आरभ्य वाक्यद्वयम्, `बाध इति भावः' इतिपर्यन्तं हु.पाठे नास्ति ।

[2] मूले इदं पदं उपलब्धभेदोज्जीवनपाठेषु न लभ्यते ।

[3] `पूर्वपक्षमागच्छैतद्वाक्यस्यान्ये' मु.

नाशात्तस्य बाध्यत्वव्यवहारस्येदानीमप्यापत्तिः । अधिष्ठाने यथाऽऽत्मज्ञानेति[1] निवेशेऽधिष्ठानत्वस्यारोपविशेष्यत्वादन्यस्यानतिप्रसक्तस्य निर्वक्तुमशक्यत्वात् भेदप्रतीतेस्तया तस्य च स्वमिथ्यात्वेऽसिद्धिः प्रागसिद्धतयाऽप्रसिद्धविशेषणत्वादिकं बोध्यम् ।

(३४) (का.) ॥ **विमता आत्मान इति** ॥ यद्यप्यत्र व्यावहारिकभेदस्य परं प्रत्यसिद्ध्या साध्याप्रसिद्धिः । तथापि व्यवहारगोचरभेदशून्यत्वस्य साध्यत्वान्न दोषः । परमते पारमार्थिकस्यैव व्यवहारगोचरत्वात् । यद्वा ब्रह्मज्ञानेतराबाध्यभेदशून्यत्वं साध्यम् । न च प्रत्यक्षविरुद्धत्वान्नैवमनुमानसम्भव इति वाच्यम् । परमार्थतो न भिद्यन्त इत्यस्य प्रमाणत्रयविरुद्धत्वात् । तच्च व्युत्पादितम् ॥ **अनुकूलतर्काभावादिति** ॥ न चैक्ये लाघवमेवानुकूलतर्क इति वाच्यम् ॥ लाघवस्य प्रमाणबाधितत्वात् । अन्यथा परमलाघवात् शून्यवादमेवाङ्गीकुर्याः । ब्रह्मातिरिक्तवियदाद्यशेषप्रामाणिकप्रपञ्चस्यात्यन्तानुपपन्नाविद्याकल्पितत्वकल्पन एव गौरवाच्च ।

॥ **तद्भोगायतनत्व इति** ॥ देवदत्तशरीरावच्छिन्नचैतन्यभोगावच्छेदकत्वे साध्ये बाध इत्यर्थः । अन्यथा यज्ञदत्तशरीरसुखादौ देवदत्तस्य ममेदमित्याद्यनुसन्धानापत्तेरिति भावः ॥ **बाध इति** ॥ साध्याप्रसिद्ध्या पक्षे साध्यसत्त्वानिर्वाह इत्यर्थः । अथ देवदत्तप्रतियोगिकपारमार्थिकभेदाभाववद्भोगावच्छेदकत्वस्य साध्यघटकत्वान्नायं बाधः । यज्ञदत्तादेस्तादृशभेदाभाववत्त्वसम्भवात् । अथवा देवदत्तभिन्नभोगानवच्छेदकत्वे सति भोगावच्छेदकत्वमात्रं साध्यमस्तु । भोक्तुर्देवदत्तत्वमर्थात् सेत्स्यतीति

---

1 `यथार्थज्ञानेति' इति पाठेन भाव्यमिति भाति ।

चेदेवमपि देवदत्तयज्ञदत्तादीनां पारमार्थिकभेदग्राहकोक्तविधप्रत्यक्षादि-प्रमाणबाधो दुर्वारः । न च तेषामप्रामाण्यम् । प्रामाण्ये बाधकाभावात् । बलवद्विरोधिप्रमाणानुपलम्भादिति । एवमत्र देवदत्तकर्मनिर्मितत्वमुपाधि-रित्यादिकं च द्रष्टव्यम् । अत्र प्रागुक्तदोषे परोक्तसमाधानं दूषयितुमाह — **सुषुप्तमूर्च्छितेति** ॥ विवृतमेतदधस्तात् ॥ **त्वयेत्यादि** ॥ तथा च पुनर्बाध एवेति भावः ।

अथ देवदत्तभोगायतनत्वस्य पारमार्थिकत्वेनाभावेऽपि व्यावहारिकत्वेन तत्सत्त्वाभ्युपगमात्तेन रूपेण तदभावानधिकरणत्वस्य साध्यत्वान्न बाधावकाशः । न च परं प्रति व्यावहारिकत्वाप्रसिद्धिः । सप्रकारक-ज्ञानाबाध्यत्वेन भोगायतनत्वस्य योऽभावस्तदनधिकरणत्वस्यैव साध्यत्वात् । सप्रकारकज्ञानाबाध्यत्वस्य च परमते पारमार्थिक एव प्रसिद्धेरेति चेन्न । सप्रकारकज्ञानाबाध्यत्वेन भोगायतनत्वाभावस्यैवा-प्रसिद्धेः । व्यधिकरणधर्मावच्छिन्नाभावानङ्गीकारिभिः सामान्यरूपेण विशेषाभावानभ्युपगमात् । न च सप्रकारकज्ञानाबाध्यत्वविशिष्ट-भोगायतनत्वत्वेन भोगायतनत्वाभावस्य विवक्षितत्वान्न दोष इति वाच्यम् । तस्य केवलभोगायतनत्वत्वापेक्षया गुरुत्वेनाभावप्रतियोगितानवच्छेद-कत्वात् । एतेन भोगायतनत्वस्य मिथ्यात्वे तदत्यन्ताभाववत्तदधि-करणत्वस्यापि मिथ्यात्वेन तदनधिकरणत्वमप्यव्याहतमेवेति नोक्तबाधा-वकाश इत्यपास्तम् । व्यावहारिकत्वादिना तदधिकरणत्वाभावस्याप्रसिद्धेः । तदधिकरणत्वाभावमात्रस्य साध्यत्वे तु प्रातिभासिकत्वादिना तदभावमादायार्थान्तरतादवस्थ्यादिति दिक् ।

॥ **तृतीय इति** ॥ भेदो मिथ्या भेदत्वात् चन्द्रभेदवत् इत्यनुमाने

निर्दुष्टमिथ्यात्वनिर्वचनासम्भव इत्यर्थः । सम्भवन्निर्वचनस्य दुष्टत्वादिति भावः । तदेवाह — **न चेति** ॥ बाध्यत्वरूपं मिथ्यात्वमिति शेषः ॥ **मिथ्यात्वासम्भवादिति** ॥ सत्यत्वप्रतिक्षेपासम्भवादित्यर्थः । प्रध्वंस-प्रतियोगित्वस्य मन्मते सत्यत्वव्याप्यत्वादिति भावः । अत्र दृष्टान्ते साध्यवैकल्यमपि बोध्यम् । न चाधिष्ठानयाथात्म्यज्ञानजन्यध्वंस-प्रतियोगिज्ञानविषयत्वविवक्षणात् न दोष इति वाच्यम् । तद्धि भ्रमविषयत्वपर्यवसितम् । तथा च मया सतोऽपि भ्रमविषयत्वा-ङ्गीकारेणार्थान्तरतादवस्थ्यात् ॥ **तदयोगादिति** ॥ अत्यन्ताभाव-प्रतियोगित्वासम्भवादित्यर्थः । अन्यथाऽत्यन्तासत्त्वापत्तिरिति भावः । केचित्तु अधिष्ठानयाथात्म्यज्ञानजन्यात्यन्ताभावप्रतियोगित्वं मिथ्यात्व-मित्यङ्गीकारे जीवन्मुक्तिकालीनव्यवहारदशायां त्वया भेदानुवृत्त्यङ्गी-कारेणासम्भवप्रसङ्गादिति व्याचक्षते ॥ व्यवहारसतोऽपि भेदस्य पारमार्थिकत्वेनात्यन्ताभावप्रतियोगित्वोपगमान्न दोष इत्याशङ्कते — **पारमार्थिकत्वेति** ॥ तथात्वमत्यन्ताभावप्रतियोगित्वं मिथ्यात्वमिति शेषः ॥ **अबाध्यत्वेति** ॥ पारमार्थिकत्वेनात्यन्ताभावप्रतियोगित्वरूपबाध्यत्वज्ञानस्य पारमार्थिकत्वज्ञानाधीनत्वात्तस्य चैतादृशबाध्यत्वाभावरूपस्य बाध्यत्व-ज्ञानाधीनत्वेनान्योन्याश्रयादित्यर्थः । उपलक्षणमेतत् । दृष्टान्ते साध्यवैकल्यं च । पारमार्थिकत्वेन चन्द्रभेदाभावाप्रसिद्धेः । असतः सद्रूपेण प्रतियोगित्वानुपगमात् । न चात्यन्ताभावप्रतियोगित्वमात्रं मिथ्यात्वम् । तच्च सद्रूपेण असद्रूपेण वा मतद्वयसिद्धमेवेति वाच्यम् । भेदस्य सत्त्वेऽप्यसत्त्वेनात्यन्ताभावप्रतियोगित्वसम्भवादर्थान्तरप्रसङ्गात् ।

**(३४) (श.) विमता इत्यादि** ॥ आत्मनां परमात्मनः सकाशाद-

पारमार्थिकभेदस्य तेनाङ्गीकारत्तदभावसाधनस्यानिष्टवत्वं परमात्मनि परमात्मप्रतियोगिकापारमार्थिकभेदस्य तेनानङ्गीकारान्नसाध्यवैकल्यं दृष्टान्तस्येति ध्येयम् ॥ **द्वितीय इति** ॥ विमतानि शरीराणि देवदत्तस्यैव भोगायतनानि शरीरत्वद्देवदत्तशरीरवदित्यर्थः । अत्र किं देवदत्तशब्देन देवदत्तशरीरावच्छिन्नचैतन्यं विवक्षितमुततदनवच्छिन्नचैतन्यमिति विकल्पौहृदिकृत्वाद्यमनूद्यदूषयति — **देवदत्तशब्देनेति** ॥ **तद्भोगायतनत्व इति** ॥ देवदत्तशरीरावच्छिन्नचेतन्यभोगसाधनत्वेसाध्ये तस्य विमतेषु यज्ञदत्तादिशरीरेष्वभावाद्बाध इत्यर्थः । यज्ञदत्तादिशरीरेषु देवदत्त-शरीरावच्छिन्नचैतन्यभोगसाधनत्वेसाध्ये तस्य विमतेषु यज्ञदत्तादि-शरीरेष्वभावाद्बाध इत्यर्थः । यज्ञादत्तादिशरीरेषु देवदत्तशरीरावच्छिन्न-चैतन्यस्य भोगसाधनत्वं कुतो नास्तीत्यत उक्तं – **यज्ञदत्तादिशरीराणा-मिति** ॥ तदधीनमेव हि तद्भोगसाधनं स्वरूपमात्राभेदेऽप्यवच्छिन्नस्य भिन्नत्वेन देवदत्तशरीरावच्छिन्नचैतन्याधीनत्वस्य प्रत्यक्षबाधितत्वेन त्वयाप्यनङ्गीकारादिति भावः । किं शरीरावच्छिन्ने आत्मन्यहंकारगतमवेव भोक्तृत्वादिकमारोपितम् । तत्रानवच्छिन्नस्यात्मनोऽहंकारसान्निध्यस्यैवा-भावान्न तत्र भोक्तृत्वाद्यारोप इति त्वयाऽङ्गीकारेणानवच्छिन्नचैतन्य-भोगसाधनात्वस्य साधने बाध इति भावः ॥ **तेषामपीति** ॥ अतो न तत्र साध्याभावनिश्चय इति न व्यभिचार इति भावः ॥ **बाध इति** ॥ तत्र भोगसाधनत्वरूपसाध्यस्यैवाभावादंशे बाध इत्यर्थः । तनुचैतद्दोषपरिहाराय भोगायतनत्वशब्देभोगायतनत्वात्यन्ताभावानधिकरणत्वं प्रागेवविवक्षित-मित्यत आह — **नचेति** ॥ **त्वयेति** ॥ त्वयाहिसर्वेषु शरीरेषु विद्यमानं भोक्तृत्वं मिथ्येत्यङ्गीक्रियते । मिथ्यात्वं चस्वात्यन्ताभावसमानाधिकरण-

त्वम् । एवं च शरीरेषु भोगायतनत्वं तदत्यन्ताभावश्चाङ्गीकार्यः । तथाच भोगायतनत्वात्यन्ताभावानधिकरणत्वरूपसाध्यस्याभावाद्बाध इति भावः ॥ **तदधिकरणस्येति** ॥ भोगायतनत्वाधिकरणस्येत्यर्थः । तदत्यन्ताभावः भोगायतनत्वात्यन्ताभावः ॥ **तृतीय इति** ॥ भेदो मिथ्या भेदत्वात् चन्द्रभेदवदित्यत्र मिथ्यात्वरूपसाध्यनिर्वचनं दुर्घटमित्यर्थः ॥ **अधिष्ठानेति** ॥ व्याख्यातमेतदधस्तात् । तत्किं मिथ्यात्वं निवर्त्यत्वं निवर्त्यत्वं निवृत्तिप्रतियोगित्वम् । तत्र निवृत्तिर्नामध्वंसोवात्यन्ताभावोवा । आद्यमनूद्यदूषयति — **निवृत्तिशब्देनेति** ॥ मिथ्याभूतस्य विनाशायोगादिति भावः । द्वितीयमनूद्य दूषयति — **अत्यन्ताभावेति** ॥ बाधमेवोपपादयति — **त्वयेति** ॥ अद्वैतवादिनाऽपि जीवेशभेदस्य व्यावहारिकसत्यत्वमङ्गीकुर्वता व्यवहारदशायां भेदोऽस्तीति अङ्गीक्रियते । अन्यथा तस्य व्यावहारिकत्वायोगात् । व्यवहारकालेविद्यमानस्य चैत्रकालिकनिषेध-रूपात्यन्ताभावप्रतियोगित्वमनुपपन्नमिति भावः । तदयोगात् अत्यन्ता-भावप्रतियोगित्वादयोगात् । न वयं स्वरूपेणात्यन्ताभावप्रतियोगित्वं ब्रूमो येन व्यवहारकाले सतो भेदस्य तन्न स्यात् । अपितु पारमार्थिकत्वा-कारेणैव । व्यावहारिकत्वेन रूपेण सतोऽपि पारमार्थिकत्वरूपेण अत्यन्ताभावप्रतियोगित्वं सम्भवत्येव । यथा श्यामत्वेन रूपेण सतोऽपि घटस्य रक्तत्वरूपेणात्यन्ताभावप्रतियोगित्वमित्याशयेन शङ्कते — **पारमार्थिकत्वाकारेणेति** ॥ पारमार्थिकत्वरूपेण धर्मेणेत्यर्थः । तथात्वमत्यन्ताभावप्रप्रतियोगित्वमित्याशयेन शङ्कते — **पारमार्थिकत्वा-कारेणेति** ॥ पारमार्थिकत्वरूपेण धर्मेणेत्यर्थः । तथात्वमत्यन्ता-भावप्रतियोगित्वम् ॥ **अबाध्यत्वरूपस्येति** ॥ पारमार्थिकत्वकारेणात्यन्ता-

भावप्रतियोगित्वं हि मिथ्यात्वम् । पारमार्थिकत्वं चाबाध्यत्वमेव । तच्च बाध्यत्वाभावः । बाध्यत्वं च मिथ्यात्वमेव । तथाच रिक्तमिथ्यात्वज्ञानेऽबाध्यत्वरूपपारमार्थिकत्वज्ञानस्य काणत्वं पारमार्थिकत्वज्ञाने मिथ्यात्वरूपबाध्यत्वज्ञानस्य कारणत्वमित्यन्योन्याश्रय इत्यर्थः ॥ त्वयोच्यमानेति ॥ त्वयेदानीं निरुच्यमाने इत्यर्थः ।

३५) भेदत्वेन प्रतीयमानत्वादित्यत्र किमिदं प्रतीयमानत्वम् ? (किमिदंप्रतीयमानत्वम् ?) । प्रमाविषयत्वमप्रमाविषयत्वं वा ? प्रतीतित्वसामान्यावच्छिन्नविषयत्वं वा ? (प्रमात्वमप्रमात्वं वा ? किं वा प्रतीतित्वसामान्यम् ?) । नाद्यः । तवासिद्धेः । न द्वितीयः । ममासिद्धेः न तृतीयः । चन्द्रभेद(प्रत्यक्ष)प्रतीतेरपि मिथ्यात्वेनाप्रामाणिकत्वात्प्रामाणिकाप्रामाणिकयोरनुगतसामान्याभावेनासिद्धेः । भेदाभेदयोः भेदेऽनैकान्त्यं च । तस्यापि पक्षत्वे बाधः । भेदाभेदयोर्भेदस्यापारमार्थिकत्वेऽनेनैवानुमानेनाभेदस्यापि मिथ्यात्वं स्यात् । व्यावहारिकभेदसद्भावेऽपि परमार्थतो ब्रह्माभिन्नस्य (व्यावहारिकभेदसद्भावेऽपरमार्थतो ब्रह्मणो भिन्नस्य) जीवस्य पारमार्थिकत्ववत्परमार्थतः पारमार्थिकाभेदाभिन्नो भेदः (अपि) पारमार्थिकः स्यादिति मिथ्यात्वसाधने बाधः । पारमार्थिकापारमार्थिकब्रह्मप्रपञ्चभेदे व्यभिचारः (व्यभिचारश्च) । ब्रह्मणि(णो) धर्मिसमसत्ताकभेदो नास्तीति पारमार्थिकत्वं घटादौ सोऽस्तीत्यपारमार्थिकत्वमिति चेत् (न) । तर्हि जीवब्रह्मणोः प्रपञ्चवद्धर्मिसत्तासमानसत्ताकभेदो नास्तीति तयोरपारमार्थिकत्वं प्रपञ्चः पारमार्थिकः स्यात् । (तर्हि ब्रह्मणः प्रपञ्चात्

"ଓମ୍ମ୍ର" ଧ୍ରଧ୍ର.



धर्मिसमानसत्ताकोऽभेदो नास्तीति तदपारमार्थिकत्वं प्रपञ्चवत् स्यात् ।) चन्द्रभेदे प्रातिभासिकत्वमुपाधिश्च । स च न पक्षे साधयितुं शक्यः । व्यावहारिकत्वाङ्गीकारविरोधात् । अभेदो मिथ्या अभेदत्वात् देहात्माभेदवदित्याद्याभाससाम्यं च । न च दृष्टान्तस्य साध्यवैकल्यं शङ्क्यम् । तथात्वेऽ'न्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्ये'-त्यध्यासभाष्यस्योन्मत्तप्रलापत्वप्रसङ्गात् । गौरोऽहं कृशोऽह-मित्यादिज्ञानस्य तत्त्वावेदकत्वेन प्रामाण्यप्रसङ्गाच्च (तत्त्वा-वेदकप्रामाण्यप्रसङ्गाच्च) । चतुर्थे तु नानापदार्थानामेव सेनावनादि-वदुपाधिभेदेन जगच्छब्दवाच्यतया पदार्थान्तराभावेन घटादीनां तदभेदसाधने बाधः । पृथिव्यादीनां जगदाख्यपदार्था(न्तरा)रम्भकत्वे तदारब्धे जगति पृथिवीत्वादीनां साङ्कर्यप्रसङ्गः । गुणादीनां जगदन्तर्भूतानां तदारम्भकत्वे(त्वेन) तेषां द्रव्यत्वापत्तिश्च । निरवयवानां (गुणादीनां) द्रव्यारम्भकत्वप्रसङ्गाच्च(ङ्गश्च) । घटादीनामन्त्याव-यवित्वहानिश्च स्यात् । घटादिपदार्थानामेव पक्षत्वे तु स्वान्तर्भेदशब्देन स्वप्रतियोगिकभेदाभावेऽभिमते (स्वप्रतियोगिकभेदाभावसाधने) सिद्धसाधनम् । परस्परं भेदाभावमात्रसाधने तु (भेदमात्राभावसाधने तु) साध्यविकलो दृष्टान्तः । आकाशभेदसाधनं त्वस्माभिरन्यत्र कृतं द्रष्टव्यम् । (आकाशभेदसाधनं त्वस्माभिरन्यत्र कृतम् । ग्रन्थगौरवभयान्नेह तन्यते ।) तस्मान्नात्माभेदेऽनुमानं प्रमाणम् ।

(३५) (भ.) भेदत्वादिति हेतोरसिद्धिपरिहारार्थं भेदत्वेन प्रतीयमानत्वा-दित्यर्थो विवक्षित इत्युक्तं तद्दूषयितुं विकल्पयति — भेदत्वेनेति ॥

प्रमात्वमप्रमात्वं वेत्यादि । किं सा प्रतीतिः प्रमारूपोत भ्रान्तिरूपा किं वा प्रतीतिसामान्यमिति भावः ॥ **तवासिद्धेरिति** ॥ भेदप्रतीतेस्त्वया प्रमात्वानङ्गीकारादिति भावः । ममासिद्धेः मया तस्याः प्रमात्वाङ्गीकारादिति भावः । तृतीयपक्षेऽप्यसिद्धिमुपपादयति — **न तृतीय इति** ॥ यथा चन्द्रभेदस्य प्रातिभासिकत्वेनाप्रामाणिकत्वात्प्रामाणिकाप्रमाणिकयोरनुगतभेदत्वसामान्याभावादसिद्धो हेतुरित्युक्तम् । तथा चन्द्रभेदप्रतीतेरपि प्रातिभासिकत्वेनाप्रामाणिकत्वादुभयसाधारणसामान्याभावात्प्रतीयमानत्वहेतुरप्यसिद्ध इत्यर्थः । क्वचित्प्रत्यक्षप्रतीतेरिति पाठः । तदा भ्रमरूपचन्द्रभेदप्रत्यक्षप्रतीतेरित्यर्थः । किञ्चास्तां तावदन्ये भेदाभेदयोस्तु भेदः पारमार्थिको वाच्यः । तथा च तत्र हेतुरनैकान्त्यमित्याह — **भेदाभेदेति** ॥ तस्यापि पक्षत्वाङ्गीकारात्कथमनैकान्त्यमित्यत आह — **तस्यापीति** । अंशे बाध इत्यर्थः । भेदाभेदयोर्भेदस्य पारमार्थिकत्वे स्यादनैकान्त्यमंशे बाधो वा । न चैवं किन्त्वसावपारमार्थिक एवेत्यत आह — **भेदाभेदयोरिति** ॥ तयोर्भेदस्यापारमार्थिकत्वेऽभेदस्यैव पारमार्थिकत्वापत्त्याऽपारमार्थिकभेदाभिन्नस्य भेदस्यापि भेदरूपत्वेन भेदो मिथ्या भेदात्वादित्यनुमानेनैव मिथ्यात्वं स्यादिति भावः । एवं भेदाभेदयोर्भेदस्यापारमार्थिकत्वे तयोरभेदापत्त्या भेदाभिन्नस्याभेदस्य मिथ्यात्वं स्यादित्युक्तम् । इदानीं तेनैव न्यायेन भेदस्याप्यभेदाभिन्नताया अङ्गीकार्यत्वे पारमार्थिकाभेदाभिन्नस्य भेदस्यापि पारमार्थिकत्वस्थितौ भेदस्य मिथ्यात्वसाधने बाधश्च स्यादिति भावेनाह — व्यावहारिकेत्यादिना । ननु परमार्थतः पारमार्थिकाभेदाभिन्नस्यापि भेदस्य न पारमार्थिकत्वप्राप्तिः । तयोर्व्यावहारिकभेदस्याप्यङ्गीकारादित्यत उक्तम् ॥ **व्यावहारिकभेदसद्भावेऽपीति** । तथा च

पारमार्थिकाभेदसद्भावे व्यावहारिकभेदोऽकिञ्चित्करः । अन्यथा परमार्थतो ब्रह्माभिन्नस्य जीवस्यापि व्यावहारिकभेदसद्भावमात्रेणापारमार्थिकत्वं स्यादिति भावः । भेदत्वहेतोर्दूषणान्तरं चाह — **पारमार्थिकेति** ॥ ब्रह्मप्रञ्चयोर्भेदस्तावत्पारमार्थिक एवेत्यङ्गीकार्यम् । ब्रह्मणः पारमार्थिकत्वात्प्रपञ्चस्य त्वन्मतेऽपारमार्थिकत्वात् । विरुद्धधर्माधिकरणयोश्च जलानलवद्भेदस्य नैयत्यात् । ततश्च तयोर्भेदे व्यभिचारश्च स्यादित्यर्थः ॥ **बाधो वेति** ॥ तस्यापि पूर्ववत्पक्षत्वाङ्गीकृताविति भावः । क्वचिद्बाधो वेति पाठ एव नास्ति । अत एव कैश्चनैतद्वाक्यं न व्याकृतम् । ननु ब्रह्मप्रपञ्चयोः पारमार्थिकापारमार्थिकत्वेऽपि तयोर्भेदः पारमार्थिकः कुतः । न च तयोर्भेदस्यापारमार्थिकत्वे ब्रह्मणो वा प्रपञ्चवदपारमार्थिकत्वापत्तिः । प्रपञ्चस्य वा ब्रह्मवत्पारमार्थिकत्वापत्तिरिति वाच्यम् । भेदस्यापारमार्थिकत्वेऽपि ब्रह्मप्रपञ्चयोः पारमार्थिकत्वापारमार्थिकत्वाङ्गीकारोपपत्तेः । तत्र प्रयोजकान्तरसद्भावेन भेदापारमार्थिकत्वस्याप्रयोजकत्वादिति भावेन शङ्कते — **ब्रह्मण इति** ॥ यद्यपि ब्रह्मणि प्रपञ्चाद्भेदोऽस्ति तथाऽपि न स धर्मिसमसत्ताकः । पारमार्थिको न भवतीति यावत् । घटादौ प्रपञ्चे तु ब्रह्मप्रतियोगिको भेदो धर्मिसमसत्ताकः । व्यावहारिक इति यावत् । अतस्तयोर्भेदस्यापारमार्थिकत्वेऽपि न पारमार्थिकत्वादिक्षतिरिति भावः । दूषयति — **नेति** ॥ तर्हीति । नियामकप्रमाणं विनैव पारमार्थिकत्वे धर्मिसत्ताकभेदाभावस्यापारमार्थिकत्वे च तत्सद्भावस्य प्रयोजकत्वेऽङ्गीक्रियमाण इत्यर्थः ॥ **जीवब्रह्मणोरिति** ॥ धर्मिसमसत्ताकभेदो यत्रास्ति तस्य पारमार्थिकत्वं यत्र स नास्ति तस्यापारमार्थिकत्वमित्यपि व्यावस्थायाः सुकरत्वाज्जीवब्रह्मणोस्तदभावा-

दपारमार्थिकत्वं प्रपञ्चस्य तत्सद्भावात्पारमार्थिकत्वमिति वैपरीत्यमपि प्रसज्येतेत्यर्थः । एवमपि त्वया ब्रह्मणि प्रपञ्चवदेवापारमार्थिकत्वं स्यादेवेति परिहाराभिप्राय इत्याहुः ॥ **चन्द्रभेद इति** ॥ इत्थं हि वाक्ययोजना । अस्मिन्ननुमाने प्रातिभासिकत्वमुपाधिश्च । कथम् । दृष्टान्ते चन्द्रभेदे प्रातिभासिकत्वं वर्तते । अतः साध्यव्यापकः । स चोपाधिः पक्षे विमतभेदे साधयितुमशक्यः । तस्य व्यावहारिकत्वाङ्गीकारविरोधात् । **अतः साधनाव्यापक इति** ॥ कुतः साध्यवैकल्यं न शङ्क्यमित्यत आह — **तथात्वे इति** ॥ देहात्मभेदस्य सत्यत्वाङ्गीकारे देहात्मनोरन्योन्यात्मकताया अध्यस्तत्ववर्णनपरस्य त्वदीयभाष्यस्योन्मत्तप्रलपितवाक्यवत्स्वाभ्युपगम-विरोधः स्यादित्यर्थः । दूषणान्तरमाह — **गौरोऽहमिति** ॥ देहात्मनोरभेदे गौरत्वादीनां देहधर्माणामेवात्मधर्मत्वेन तज्ज्ञानस्य तत्त्वविषयकतापत्त्या प्रमात्वप्रसङ्गाच्चेत्यर्थः । तत्त्वावेदकत्वेनेत्यस्य तत्त्वविषयकतेत्यर्थः । न चेष्टापत्तिरिति वाच्यम् । अन्योन्यधर्मांश्चाध्यस्येति भाष्यस्योन्मत्तवाक्यत्व-प्रसङ्गादिति भावः । अत एव पूर्ववाक्येऽन्योन्यधर्मांश्चाध्यस्येत्यंशस्याप्यु-दाहरणम् ॥ **चतुर्थे त्विति** ॥ विमतो जगदाख्यः पदार्थः तत्त्वतः स्वान्तर्भेदहीनो दृश्यत्वाद्गगनादिवदित्यनुमान इत्यर्थः । तत्र तात्त्विक-स्वान्तर्भेदहीनत्वं नाम जगदन्तर्गतानां घटादिपदार्थानामान्योन्यं वा तैश्च घटादिभिर्जगतो वा पारमार्थिकभेदाभावः । तथैव पूर्वपक्षग्रन्थ उपपादितत्वात् । तत्र घटादीनां तदभेदसाधने । जगत्प्रतियोगिक-भेदाभावसाधने । घटादीनां सकाशात्तस्य जगतो भेदाभावसाधन इति वा बाध इत्यर्थः । कुतो बाध इत्यत उक्तम् ॥ **पदार्थान्तराभावेनेति** ॥ घटादिव्यतिरिक्तजगदाख्यपदार्थान्तराभावेनेत्यर्थः । सति हि पदार्थान्तरे

कस्यचित्पदार्थस्य ततो भेदो वा भेदाभावो वा साधयितुं शक्यते न तु तस्यैवाभावे । न हि शशविषणाद्धटादेर्भेदाभावः साधनार्हः । अतोऽतिरिक्तजगद्व्यक्तेरेवाभावेन ततो भेदाभावसाधने बाधो युक्त इत्यर्थः । पदार्थान्तराभावेऽपि कुत इत्यत उक्तं **नानापदार्थानां हि जगच्छब्दवाच्यतयेति** ॥ हिशब्द एवार्थे । तत्कथमित्यत उक्तम् **उपाधिभेदेनेति** ॥ काललक्षणोपाधिविशेषेणेत्यर्थः । तत्र दृष्टान्तकथनं **सेनावनादिवदिति** ॥ यथा करितुरगरथादीनामेवैकस्थानस्थितिलक्षणोपाधिना सेनाशब्दवाच्यत्वं यथा च नानावृक्षाणामेकस्थाननिवासेन वनशब्दवाच्यत्वं यथा वा धान्यादीनामेकस्थाने मिलितानां राशिशब्दवाच्यत्वमेवं विवक्षितैककालोपाधिग्रस्तानां घटादीनामेव जगच्छब्दवाच्यत्वमित्यर्थः । अत एवोक्तं मन्दारमञ्जर्याम् — प्रवाह इति गीयन्ते सजातीयाः प्रवाहिणः । कालेनोपाधिना ग्रस्ता नानावृक्षा वनं यथेति ॥ उपलक्षणमेतत् । घटादीनां परस्परभेदाभावसाधनेऽपि प्रत्यक्षादिविरोधाद्बाध इत्यपि द्रष्टव्यम् ।

ननु न घटादय एव जगच्छब्दार्थः किन्तु तन्तुभिः पट इव घटादिनानापदार्थैर्जगदाख्यः पदार्थ आरभ्यते । अतो नोक्तदोष इत्यत आह — **पृथिव्यादीनामिति** ॥ **जातिसाङ्कर्यप्रसङ्ग इति** ॥ पृथिव्याद्यारब्धस्यावयविनः पृथिवीत्वादिनियमात्पृथिव्यादिसर्वपदार्थारब्धे जगति जातिसाङ्कर्यं स्यादित्यर्थः । इदमपि न्यायमतरीत्यैवोक्तम् । सिद्धान्तेऽनेकविजातीयारब्धेऽपि द्रव्ये जातिसाङ्कर्याभावात् । न हि पृथिव्यादिकमपि केवलपृथिव्यादिमात्रारब्धम् । किन्त्वेकैकमपि भूतं भूतत्रयारब्धमेव । तथा हि श्रुतिः । **तासां त्रिवृतं त्रिवृतमेकैकामकरोदिति** ॥ व्यवहारस्तु तत्तद्भूतभागानां वैशेष्यात् । उक्तं च सूत्रेषु । वैशेष्यात्तु तद्वादस्तद्वादः ।

त्र्यात्मकत्वात्तु भूयस्त्वादिति ॥ **साङ्कर्यस्य जातिबाधकत्वाभावस्योपपादितत्वाच्चेति** ॥ **द्रव्यत्यापत्तिरिति** ॥ द्रव्यस्यैव समवायिकारणत्वादिति भावः । इदमपि न्यायमतालम्बनेनैव । सिद्धान्ते गुणवदुपादानं गुणवदुपादेयतया परिणत इत्यङ्गीकारात् ॥ **निरवयवानामिति** ॥ इदमपि न्यायरीत्यैव । सिद्धान्ते निरवयववस्तुन एवाभावात् । यथोक्तम् । अतः सर्वपदार्थानां भागाः सन्त्येव सर्वदा । सर्वदिक्ष्वपि सम्बन्धादिति ॥ **अतिप्रसङ्गश्चेति** ॥ निरवयवैर्गुणक्रियाजात्यादिभिरपि द्रव्यरम्भप्रसङ्ग इत्यर्थः ॥ **अन्त्यावयवित्वहानिश्चेति** ॥ द्रव्यान्तरानारम्भककार्यद्रव्यस्यैवान्त्यावयवित्वादिति भावः । ननु घटादिसमुदायरूपं वा तदारब्धं वा जगत्पक्षीकृत्य नैवमनुमीयते । किन्तु घटादीनेव पक्षीकृत्य स्वान्तर्भेदहीनत्वं साध्यते । अतो नोक्तदोष इत्यत आह — **घटादीति** ॥ **स्वान्तर्भेदशब्देनेति** ॥ हीनशब्दोत्तरेणेति शेषः । अथवा स्वान्तर्भेदशब्देन स्वप्रतियोगिकभेदं गृहीत्वा तदाभावसाधन इति व्याख्येयम् ॥ **भेदाभावमात्रसाधन इति** ॥ स्वान्तः पदेन स्वप्रतियोगिकत्वं न विवक्ष्यते । किन्तु परस्परप्रतियोगिकत्वमेव । तथा च कथं सिद्धसाधनमिति भावः ॥ **साध्यविकलो दृष्टान्त इति** ॥ आकाशेंऽशानां मिथो भेदस्यैव सत्त्वादिति भावः । नन्विदमेव साध्यवैकल्यमाशङ्क्य प्रागेव निराकृतमित्यत आह — **आकाशभेदसाधनं त्विति** ॥ आकाशेंऽशभेदसाधनं त्वित्यर्थः । अन्यत्र **मन्दारमञ्जर्याम्** । नन्वथाऽपि प्रतीति बलात्संयोगतदत्यन्ताभावयोः सामानाधिकरण्यमस्त्वित्यादिना तस्मादाकाशभेदवादिनं प्रतीति साधूक्तमित्यन्तेन ग्रन्थेनाकाशभेदवादिनं प्रति प्रतीत्यसिद्धेरिति टीकावाक्यविवरणावसरे कृतमाकाशभेदसाधनं द्रष्टव्यमित्यर्थः ।

नैतावताऽऽकाशांशानां मिथो भेदः सिद्धान्तेऽङ्गीकृत इति भ्रमितव्यम् । यदाऽऽकाशभेदो नास्तीति सिद्धान्तस्तदान्तशब्दो विशेषवचन इत्युपाधिखण्डनटीकायां खेऽपि देशान्तरस्य स इति मूलव्याख्यानावसर उक्तत्वात् । सिद्धान्ते आकाशांशानां देशविशेषाणां यावद्द्रव्यभावित्वा-दत्यन्ताभेदस्याङ्गीकारद्भेदवाच्यन्तरशब्दप्रयोगो नोपपद्यत इत्यत आहेति यदेति वाक्यस्य मन्दारमञ्जर्यामेवावतारितत्वाच्च । किन्नामाकाशे औपाधिकभेदाङ्गीकारिणं नैयायिकं प्रति कश्चन स्वाभाविक-मेवांशभेदमङ्गीकृत्य प्रत्यवतिष्ठते चेत्तं प्रति नैयायिकस्य न किमप्युत्तरमित्यभिप्रायेणैवाकाशभेदसाधनं त्वस्माभिरन्यत्र कृतमित्युक्ति-रिति बोध्यम् । अत एव तत्र मन्दारमञ्जर्यामेव परेणौपाधिकभेदोऽङ्गी-क्रियते । तं प्रति स्वाभाविकभेदमङ्गीकारयतीत्याहेति प्रकारान्तरेणैतदेव वाक्यमवतारितमिति ॥ केचित्त्वाकाशांशानां स्वाभाविकभेदसाधनमन्यत्र न्यायामृतादौ कृतमित्यर्थ इत्याहुः । परोक्तानुमाननिराकरणमुपसंहरति ॥ तस्मादिति ॥ उपपादितरीत्या दुष्टत्वादित्यर्थः । आत्माभेद इत्युपलक्षणम् । अनात्मभेद इत्यपि ग्राह्यम् । प्राधान्यादात्माभेदमात्रस्य सङ्कीर्तनम् । अन्यथा चतुर्थानुमानेऽनात्मभेदमात्रनिरासादात्माभेदसाधनाभावेन सामान्येनात्माभेदानुमाननिराकरणोपसंहारायोगात् । केचित्तु तत्र विमतमिति सर्वं चेतनाचेतनजातं विवक्षितमतो नात्माभेदेऽनु-मानमित्युपसंहारोपपत्तिरित्याहुः । तत्र चेतनस्यापि विमतपदेन सङ्ग्रहे तत्र दृश्यत्वहेतोर्भागासिद्धेर्दुर्वारत्वात्कथं पूर्वपक्षिणस्तदभिप्रायकल्पनमिति चिन्त्यम् ।

(३५) **(मु.)** यच्चोक्तं भेदत्वेन प्रतीयमानत्वेन हेतूकृतं भेदत्वमिति

तद्विकल्प्य निराह — **प्रतीतेरपि मिथ्यात्वेनेति** ॥ परेणारोपस्थले ज्ञानार्थयोरुभयोरपि प्रातिभासिकत्वाङ्गीकारादित्यर्थः ॥ **अनुगतसामान्याभावेनेति** ॥ अयं भावः । भेदत्वादित्यत्र मिथ्यासत्ययोरनुगत सामान्याभावदसिद्धिशङ्कायां तदनुगमाय भेदस्याननुगमेऽपि तदुभयप्रतीत्योर्भेदप्रतीतत्वस्यानुगतत्वेन भेदत्वं नाम भेदत्वेन प्रतीयमानत्वादित्युक्तम् । तत्तु भ्रमस्थलेऽर्थमिथ्यात्वेऽपि प्रतीतेः सत्यत्वमिति मते सम्भवति न तु तत्त्वत इति ॥ **तस्यापि पक्षत्वे इति** ॥ भेदाभेदयोर्भेदस्तस्यापि पक्षत्वे वयाधातेन बाध इत्यर्थः । व्यावहारिकभेदेन व्याहतिपरिहार इत्यङ्गीकारे बाधकमाह — **भेदेति** ॥ **अभेदस्यापि मिथ्यात्वं स्यादिति** ॥ भेदाभेदयोः परमार्थत एकत्वापत्त्या भेदमिथ्यात्वसाधनस्यैवाभेदमिथ्यात्वसाधनत्वादिति भावः । यदि चैवमभेदस्यापारमार्थिकत्वं तदा सकलभेदस्यापि मिथ्यात्वसाधने बाधः स्यात् । यो यत्साकं तदभिन्नस्तत्सत्ताक इति व्याप्तेः । यद्वा भेदः सत्यः सत्याभेदभिन्नत्वात् यो यत्सत्ताकभिन्नः स सत्यो तथा जीवो ब्रह्मभिन्न इत्यनुमानमत्राभिप्रेतमित्यूह्यम् ॥ **व्यभिचार इति** ॥ ब्रह्मप्रपञ्चयोर्भेदस्य पारमार्थिकत्वाभावे तयोः पारमार्थिकत्वव्यावहारिकत्वरूपवैलक्षण्यायोगादिति भावः ॥ **बाधो नेति** ॥ तस्यापि पक्षत्व इति शेषः । ब्रह्मणः पारमार्थिकत्वेऽपि प्रपञ्चप्रतियोगिकभेदस्य तथात्वाभावात् । न व्यभिचार इति शङ्कते — **ब्रह्मण इति** ॥ **प्रपञ्चः पारमार्थिकः स्यादिति** ॥ जीवब्रह्मणोः प्रपञ्चप्रतियोगिकधर्मिसत्तासमानसत्ताकभेदाभावात्प्रपञ्चवदेव मिथ्यात्वं स्यादित्यर्थः । प्रयोगश्च । ब्रह्म मिथ्या भवितुमर्हति प्रपञ्चप्रतियोगिकपारमार्थिकभेदशून्यत्वात् प्रपञ्चवदिति ॥ **चन्द्रभेद इति** ॥ चन्द्रभेदे विद्यमानस्य मिथ्यात्वस्य प्रातिभासिकत्वं प्रयोजकत्वं न भेदत्वमित्यर्थः ।

ननूक्तहेतुनैवोपाधिं पक्षे साधयामीत्यत आह — स चेति ॥ न च घटादौ साध्यव्यापकताभाव इति वाच्यम् । भेदत्वरूपसाधनावच्छिन्न-साध्यव्यापकतापत्तेः । व्यावहारिकभेदस्य पक्षत्वान्न दोषः ॥ **साध्यवैकल्यं न शङ्क्यमिति** ॥ परस्य सर्वाद्वैतवादित्वादिति भावः ॥ **उन्मत्तेति** ॥ असत्यत्वेऽन्योन्यस्मिन्नन्योन्यात्मकतामध्यस्येत्यारोपोक्त्ययोगादिति भावः । ननु भाष्ये चाध्यासोक्तिर्व्यावहारिकस्यैव पारमर्थिकैक्यं त्वनुमतमेवेति चेत् तर्हि तदारोपितैक्यमेव दृष्टान्तीकृतमिति कथं साध्यवैकल्यम् । नन्वेवमपि देहात्मनोः पारमार्थिकैक्ये व्यभिचार इति चेन्न । तस्यापि पक्षत्वात् । तथाऽप्यात्मनः स्वप्रतियोगिकैक्ये व्यभिचार इति चेन्न । भेदसामानाधिकरण्यैक्यत्वस्यैव हेतुत्वात् । न च विशेषणासिद्धिः । यत्र परेणाभेदमङ्गीकृत्य व्यावहारिकभेदोऽङ्गीक्रियते तत्स्थलीयाभेदस्यैव पक्षीकृतत्वात् । किञ्च भेदः पारमार्थिकोभेदत्वा-च्चन्द्रभेदवत् । ब्रह्म मिथ्या वस्तुत्वाच्चन्द्रभेदवदित्याभाससाम्यं चेत्यूह्यम् ॥ **गौरोऽहमिति** ॥ अस्य देहात्माभेदप्रत्यक्षत्वादिति भावः । नन्विदं प्रत्यक्षं व्यावहारिकं देहात्माभेदं गृह्णाति । अतो भ्रान्तमिति चेन्न । किमत्र व्यावहारिकं यदैक्यं गृह्णातीत्यर्थः । उतैक्यं व्यावहारिकं गृह्णातीति । नाद्यः । तदभावात् । द्वितीये ऐक्यांशे प्रमा स्यात् । न चेष्टापत्तिः । अन्योन्यात्मकतामध्यस्येति विरोधात् ॥ **चतुर्थेति** ॥ विमतं तात्त्विकस्वान्तर्भेदहीनामित्यत्रेत्यर्थः । अत्र विमतपदेन जगदाख्यः पदार्थः पक्षीकृतः । अत्र घटाद्यतिरिक्तस्तदनुगत उच्यते । उत घटादि-रेवेत्यभिप्रेत्या क्रमेण निराह । यथा विजातीयगजतुरगाद्या एकदेशत्वोपाधिना एकराजाधीनत्वोपाधिना वा एकदेशेनेत्युच्यते न गजाद्यतिरिक्तांशे नास्ति । तथा घटाद्या एकबुद्ध्युपारूढत्वाद्युपाधिना

जगदुच्यते । एवञ्चातिरिक्तजगत एवाभावेनाभेदसाधने बाध इत्यर्थः । एकैकस्य घटादेरनेकत्वायोगादिति भावः । तन्त्वारब्धपटवज्जगदपि किन्न स्यादित्यत आह — **पृथिव्यादीनामिति** ॥ पृथिवीत्वं जलत्वं विना पृथिव्यां जलत्वं च तद्विना जले तद्द्वयमपि जगति कारणगतजातेः कार्येऽप्यावश्यकत्वादिति साङ्कर्यमिति भावः ॥ **द्रव्यत्वापत्तिश्चेति** ॥ समवायिकारणत्वस्यैव द्रव्यत्वपदार्थत्वादिति ज्ञेयम् ॥ **द्रव्यारम्भकत्व इति** ॥ निरवयवस्य महतो द्रव्यारम्भकत्वे सिद्धान्तहानिप्रसङ्गाच्चेत्यर्थः । किञ्च घटादिपदार्थानां जगदारम्भकत्वं प्रत्येकं मिलितानां वा । नाद्यः । एकस्यानारम्भकनियमात् । अनेकानुगतधीविरोधाच्च । न द्वितीयः । भूतभविष्यतां जगदुत्पत्तौ मेलनासम्भवात् । किञ्च जगत आरभ्यत्वेऽ-नाद्यन्तं जगदेतदिति वचनविरोधः । घटादीनां जगत्त्वेऽप्यनादित्वविरोध इति चेन्न । घटादिप्रवाहस्य जगत्त्वात् । घटाद्यभावकाले गगनादौ जगत्त्वस्य पर्याप्तत्वाच्च । द्वितीयं दूषयति — **घटादिपदार्थानामिति** ॥ स्वप्रतियोगिकेति स्वान्तशब्दस्य तदर्थत्वौचित्यादिति भावः । अस्तु वैको वा जगत्पदार्थः । आकाशे आकाशांशभेदसत्त्वात्साध्यवैकल्पम् । कथं तत्रांशभेद इत्यत आह — **आकाशभेदसाधनं त्विति** ॥ अन्यत्र मन्दारमञ्जर्याम् । तथा हि । आकाशः स्वाभाविकस्वान्तर्भेदवान् युगपदनेकमूर्तसंयोगित्वात् । न च कालादौ व्यभिचारः । पक्षतुल्यत्वात् । न च हेतुरप्रयोजकः । आकाशानां यदि भेदो न स्यात् तर्हि मूर्तानां सामानाधिकरण्यं स्यादिति बाधकरण्डसत्त्वात् । न चौपाधिकभेदाद-विरोधः । उपाधीनामपि सामानाधिकरण्यविरोधात् । अन्यथा घटादीनामपि तत्सङ्गप्रतियोगित्वोपाधिनौपाधिकः स्वांशभेदः स्यात् । न स्वाभाविकः । किञ्चाहं देशान्तरादागतो देशान्तरे च गच्छामि । इह पक्षी

नेह पक्षीत्यादिप्रतीतिस्तद्भेदे मानम् । न चास्यालोकादिभेदविषयत्वम् । अन्धकारेऽपि स्पार्शनादिनेह स्तम्भो नेह स्तम्भ इति प्रतीतेः । किञ्च यत्र गृध्रस्तत्रैव रात्रावपीत्यधिकरणैक्यं प्रतीयते । सौरचन्द्रावलोकयोश्चान्यत्वेनालोकविषयत्वे तदसम्भवात् । किञ्च यत्रालोकस्तत्रान्धकार इति धीर्नलोकाधिकरणत्वं सहते । न च सर्वासां प्रतीतीनामौपाधिकविषयत्वं वाच्यम् । इह पक्षी नेह पक्षीत्यादावुपाध्यदर्शनात् । न च पक्षिशरीरतदभावयोरेकाधिकरण्यम् । आत्माश्रयात् । उपलक्षके चेत्प्रदर्शिता । स्वाभाविकैकदेशाभावे घटस्योपाधेयावदाकाशसम्बन्धित्वम् । सर्वोऽपि घटाकाशः स्यात् । यदत्रोक्तं घटाकाशः स्यादिति कोऽर्थ इति । तत्रायमेव प्रदेशो घटाकाशो नान्यः । किन्तु महाकाशोऽयमिति यद्वैलक्षण्यं प्रतीयते तन्न स्यादिति ॥ यच्चोक्तमुपादेयवदाकाशसम्बन्धित्वेऽप्युपाधेः प्रतिबिम्बपक्षपातित्वेन स्वपरिमाणादिकं प्रतिबिम्बभूतघटाकाश एवोपरञ्जयति । न महाकाश इति ॥ तत्तु प्रक्रियाविलसितम् । घटाकाशमहाकाशयोर्बिम्बप्रतिबिम्बभावस्यैवाभावात् । पूर्वमेकमेकमेव मुखमिदानीं मुखान्तरमुत्पन्नमितिवदाकाशान्तरमुत्पन्नमित्यप्रतीतेः । किन्तु पूर्वप्रदेशोऽयं चैक एवाभूदिदानीं विच्छिन्नं भागद्वयमित्येव प्रतीतिः । तथाऽप्युपाध्यनुसरणनियमाद्भेदस्य न स्वाभाविकत्वमित चेन्न । सूक्ष्मबुद्धीनामुपाध्यभावेऽपि भेदप्रतीतेः । मूढबुद्धीनां तु समुद्रमध्यपतितस्य पाराद्यदर्शनावस्थायां जलानामन्योन्यसादृश्यात्संश्लेषविशेषाच्च जलभेदाज्ञानवदुपपत्तेः । कुतश्चायं स्वाभाविकभेदे प्रद्वेषः । सावयवत्वेऽनित्यत्वं स्यादिति चेन्न । कृतकत्वस्य विरोधिसन्निपातस्य द्रव्यत्वावच्छिन्ने साध्ये मध्यमपरिमाणस्यैव बाधितत्वात् । सांशत्वेऽपि सोपादानत्वरूपसावयवत्वानङ्गीकाराच्चेत्यलं प्रपञ्चेन । यच्चोक्तं संयोगः

स्वात्यन्ताभावसमानाधिकरण इति । तन्न । विरोधात् । अग्रे वृक्षः कपिसंयोगी मूले नेत्यबाधितप्रतीतिबलादङ्गीक्रियत इति चेन्न । अग्रे मूले चेत्यधिकरणभेदस्यैव प्रतीतेः । न च वाच्यं वृक्षः संयोगी नेत्युभयत्र वृक्षस्यैव विशेष्यतया भानात्तस्यैवाधिकरणत्वम् । **नाग्रमूलयोरिति** ॥ तथात्वेऽग्रे मूले चेति सप्तम्यनुपपत्तेः । अग्रमूल पुरस्कारं विनाऽपि संयोगतदभावप्रतीत्यापत्तेश्च । अग्रमूलयोरप्यधिकरणत्वानुभवविरोधाच्च । अग्रे वृक्षः कपिसंयोगीत्यादौ मतुपः संयोगतदभावसम्बन्धिता-सामान्यविषयकत्वेनाधिकरणताऽविषयत्वाच्च । तस्मान्नेयं प्रतीति-र्वृक्षाधिकरणत्वगोचरा । किन्तु मूलाग्रयोरेवाधिकरणत्वम् । वृक्षस्तु तादृशमूलाग्रवानिति परम्परया संयोगतदभावयोर्वृक्षसम्बन्धिता गोचरतैव । अन्यथाऽग्रे कपिर्मूले नेति प्रतीत्या कपेरपि स्वात्यन्ताभावसमानाधिकरणत्वं स्यात् । स्वात्यन्ताभावसमानाधिकरणत्वं नाम तदधिकरणसमवेतत्वमेवेति चेन्न । संयोगात्यन्ताभावस्य तदभावापत्तेः । तस्मात्स्वस्वोचितसम्बन्धेन स्वात्यन्ताभावसमानाधिकरणत्वं कप्यादीनां सुवचमेव । कपिसंयोगस्यैव तथात्वेन तदुपपत्तौ कपेरपि तत्कल्पने गौरवमिति चेत् तर्हि संयोगस्य यः समवायस्तस्यैव तथात्वेनोपपत्तौ संयोगस्यातत्कल्प्यम् । किञ्चाग्रे वृक्षश्च समवायी मूले नेति प्रतीत्या समवायोऽपि स्वात्यन्ताभावसमानाधिकरणः स्यात् । अपि च वृक्षादावंशभेदेनोपपत्तावप्याकाशभेदेऽनङ्गीकारेण तदनुपपत्तेश्चेत्यलम् ।

**(३५) (कु.)** प्रमेयत्वं प्रमाविषयत्वम् । अप्रमेयत्वमप्रमाविषयत्वम् । प्रतीतित्वं प्रतीतिविषयत्वम् । क्वचित्तु प्रतीयमानत्वं प्रमात्वं प्रतीतित्वं सामान्यं वेति पाठः । तत्र प्रतीयमानत्वघटकं प्रतीतित्वमित्यर्थः ॥ **प्रत्यक्षप्रतीतेरपीति** । भ्रमरूपचन्द्रभेदप्रत्यक्षरूपप्रतीतेरपि त्वन्मते

प्रातिभासिकत्वेनोभयसाधारणसामान्यायोगादित्यर्थः ॥ **भेदाभेदेति** ॥ भेदाभेदयोर्मिथ्यात्वाभावादनैकान्त्यमित्यर्थः । ननु तस्यापि पक्षीकरणान्नानैकान्त्यमित्यत आह — **तस्यापीति** । भेदाभेदस्य पारमार्थिकत्वमवश्यमङ्गीकार्यम् । तत्रापि मिथ्यात्वे साध्ये बाध इत्यर्थः । कुतः पारमार्थिकत्वमङ्गीकार्यमित्यत आह — **भेदाभेदयोरिति** ॥ अनेन भेदाभेदसाधकेन । ननु भेदाभेदयोर्भेदो यदि प्रातिभासिकः स्यात्तदा भेदमिथ्यात्वसाधकेनाभेदस्यापि मिथ्यात्वं स्यात् । न चैवं किन्तु व्यावहारिकः । अत एव न बाधोऽपि । व्यावहारिकस्यापि मिथ्यात्वादत आह — **व्यावहारिकभेदसद्भावेऽपीति** ॥ जीवब्रह्मणोरिव व्यावहारिकभेदस्य पारमार्थिकभेदविरोधित्वाभावात् । पारमार्थिकाभेदाभिन्ने भेदे पारमार्थिकत्वमावश्यकमिति दुरुद्धरो विरोध इत्यर्थः । पारमार्थिकापारमार्थिकेति ब्रह्मप्रपञ्चयोर्विशेषणं तद्भेदपारमार्थिकत्वद्योतनाय । तस्यापि पक्षत्वे आह — **बाधो वेति** ॥ ब्रह्मप्रपञ्चयोर्भेदस्यापारमार्थिकत्वे द्वयोः पारमार्थिकत्वमपारमार्थिकत्वं वा स्यात् । न त्वेकस्य पारमार्थिकत्वमपरस्यापारमार्थिकत्वमतस्तस्य पारमार्थिकत्वे वक्तव्ये तत्र च मिथ्यात्वे साध्ये बाध इत्यर्थः ।

ननु ब्रह्मप्रपञ्चभेदस्यापारमार्थिकत्वेऽपि तयोः पारमार्थिकत्वापारमार्थिकत्वव्यवस्था प्रकारान्तरेण भविष्यतीत्याशयेन शङ्कते — **ब्रह्मण इति** ॥ धर्मिसत्तासमानसत्ताकभेदतदभावापारमार्थिकत्वपारमार्थिकत्वव्यवस्थापकावित्यत्र नियामकाभावात् । विपरीतो नियम्यनियामकभावः किन्न स्यादित्यत आह — **तर्हीति** ॥ तथा च न साधनव्यापकतेति भावः । अन्योन्यधर्मांश्चेत्यस्योपन्यासस्तु व्यवहितेनाधस्थेनान्वयप्रदर्शनार्थः ।

क्वचिदन्योन्यात्मकमध्यस्थेत्येव पाठः ॥ **गौरोऽहमिति** ॥ देहात्माभेदस्य मिथ्यात्वाभावे गौरोऽहमित्यादिज्ञानस्याप्रमात्वप्रसङ्गाद्विषयाभावादिति भावः ॥ **चतुर्थ इति** ॥ विमतं तात्त्विकस्वान्तर्भेदहीनं मतत्वत इत्यत्रे-त्यर्थः । जगदत्र पक्षः । तच्च पटादिवन्न घटपटारब्धद्रव्यान्तरं किन्तु सेनावनादिन्यायेन केनचिदुपाधिविशेषणं प्रमेयत्वादिना क्रोडीकृतम् । घटपटाद्येव तत्र तात्त्विकस्वान्तर्भेदहीनत्वे साध्ये बाधः । ब्रह्मप्रपञ्चयोस्तात्त्विकभेदस्य साधितत्वात् घटादिरूपजगति तत्प्रयोगिका-भेदसाधने इष्टापत्तेरग्रे वदिष्यति । ननु पृथिव्याधारजगदाख्यः पदार्थः किन्न स्यादित्यत आह — **पृथिव्यादीनामिति** ॥ प्रथिव्याद्यारब्धस्यावयविनः प्रथिवीत्वादिनियमाज्जगति पृथिवीत्वादेः साङ्कर्यं स्यादित्यर्थः ॥ **द्रव्यत्वापत्तिश्चेति** ॥ समवायिकारणं द्रव्यमिति तल्लक्षणादिति भावः ॥ **घटादीनामिति** ॥ **द्रव्यारम्भकत्वेति** । द्रव्यानारम्भकं कार्यद्रव्यमन्त्या-वयवीति तल्लक्षणत्वादिति भावः ॥ **आकाशभेदसाधनमिति** ॥ आकाशांशनां स्वाभाविकभेदसाधनमन्यत्र न्यायामृतादौ कृतमित्यर्थः । तथा च पराभिप्रेतसाध्यस्यापि तत्र वैकल्यमित्यर्थः ।

(३५) (इु.) ॥ **किमिदं प्रतीयमानत्वमिति** ॥ प्रतीयमानत्व-घटकप्रतीतित्वमित्यर्थः । क्वचित्प्रतीतत्वमित्येव[1] पाठः ॥ **तवेति** ॥ त्वन्मते (भेदप्रतीतेः) भ्रमत्वादिति भावः ॥ **ममेति**[2] ॥ तत्प्रतीतेः प्रमात्वस्यैव मयाऽङ्गीकृतत्वादिति भावः ॥ **त्वत्पक्ष इति** ॥ **प्रतीतेरिति** ॥ त्वत्पक्षे भ्रमस्याविद्यावृत्तिरूपतया विषयत्वान्मिथ्यात्वेन तत्र प्रतीतित्वस्यैवाभावेन प्रतीतिविषय[त्वस्य]चन्द्रभेदेऽसत्त्वाद्दृष्टान्ते साधनवैकल्यमित्यर्थः ।

---

1 `क्वचित्प्रतीतिभेदप्रतीतित्वमित्येव' मु. 2. `प्रमेति' मु.

प्रामाणिकाप्रामाणिकयोरेकजातिस्त्वन्यत्र निराकृतेति भावः ॥ **भेदाभेदभेद इति** ॥ भेदाभेदयोर्भेदस्तत्रेत्यर्थः ॥ **बाध इति** ॥ तस्य पारमार्थिकत्वावश्यम्भावादिति भावः । कुत इत्यतस्तदुपपादयति — **भेदाभेदयोरिति** ॥ **अनेनैवेति** ॥ भेदमिथ्यात्वसाधक[बाधक]स्यैवा-भेदमिथ्यात्वसाधकत्वावश्यम्भावादिति भावः । परमार्थतस्तयोरभेदेऽपि व्यावहारिकसर्वव्यवस्थासम्भव इत्यत आह — **व्यावहारिकभेदसद्भाव इति** ॥ **परमार्थत इति** ॥ अपरमार्थतो ब्रह्मणो भिन्नस्येति च्छेदः । तथा च पारमार्थिकब्रह्मणाऽपरमार्थतो भेदवतो जीवस्य पारमार्थिकाभेदवत् । पारमार्थिकभेदेन सहापारमार्थिकभेदवतो जीवस्य भेदस्य भेदेन सह पारमार्थिकाभेदस्य सत्त्वेन पारमार्थिकत्वप्राप्त्या मिथ्यात्वसाधने बाध एवेति भावः ॥ **परमार्थतोऽभेदादिति** ॥ परमार्थतोऽभेदादित्यर्थः । न च स्वरूपतः परमार्थस्य पारमार्थिकप्रतियोगिकपारमार्थिकभेदाभावस्तस्य पारमार्थि-कत्वापादकः । जीवब्रह्मणोर्दृष्टत्वात् । न चेह तथा भेदस्यापारमार्थिकत्वा-दिति वाच्यम् । व्याप्यतावच्छेदककोटौ पारमार्थिकत्वनिवेशे गौरवात्[1] साध्यस्यापि हेतुज्ञानकाले एवसाध्यत्वप्राप्त्या तेन साधनाभावप्रसङ्गाच्च । अतः यत्प्रतियोगिकपारमार्थिकभेदाभावो यत्र तत्र[2] परमार्थतस्तदात्म-कत्वमित्येव व्याप्तिः । असत्यपि सत्प्रतियोगिकभेदः पारमार्थिक[3] एवातो न कुत्रापि व्यभिचार इत्याशयेनोक्तापादनात् । केषुचित् पुस्तकेषु व्यावहारिकभेदसद्भावेऽपि परमार्थतो ब्रह्मणो भिन्नस्य जीवस्य

---

[1] इतः यत्प्रतियोगिकपारमार्थिकेतिपर्यन्तं मु.पाठे नास्ति ।

[2] `यत्र तस्य' मु. `यस्य तत्र' हु.

[3] `सत्प्रतियोगिकभेदेऽपारमार्थिकभेद' मु.

पारमार्थिकत्ववत्परमार्थतः पारमार्थिकाभेदाभिन्ने भेदे पारमार्थिकत्वं स्यादिति मिथ्यात्वसाधने बाध इति पाठस्तत्र न कोऽपि क्लेशः ॥ **पारमार्थिकापारमार्थिकेति** ॥ इदं च भेदस्य मिथ्यात्वे ब्रह्मणोऽपारमार्थत्वं (प्रपञ्चस्य परमार्थत्वं) स्यादित्यनिष्टसूचनाय ॥ **व्यभिचारश्चेति** ॥ **पक्षबहिर्भाव इत्यादिः** ॥ **बाधो वेति** ॥ पक्षान्तर्भाव इत्यादिः[1] । प्रपञ्चप्रतियोगिकब्रह्मधर्मिकभेदस्य मिथ्यात्वान्न तत्र व्यभिचारबाधौ । न च तर्हि ब्रह्मणोऽपारमार्थिकजगता सहाभेदापत्तिः । इष्टापत्तेः । न च तर्हि ब्रह्मणोऽपारमार्थिकत्वापत्तिः । आपादकाभावात् । अपारमार्थप्रति-योगिकाभेद एवापादक इति चेत् (न) । स्वसमानसत्ताकतादृशा-भेदस्यैवापारमार्थिकत्वं प्रति व्याप्यत्वाभ्युपगमात् । ब्रह्मणि तदभावेनापादनायोगात् । नापि ब्रह्मप्रतियोगिकप्रपञ्चनिष्ठभेदे बाधव्यभिचारौ तस्य मिथ्यात्वाभ्युपगमात् । न च तर्हि ब्रह्मणोऽपि मिथ्यात्वं स्यात्[2] परमार्थनिष्ठाभेदप्रतियोगित्वादिति चेन्न । अपारमार्थिकनिष्ठप्रतियोगि-समानसत्ताकाभेदे प्रतियोगित्वस्यैवापारमार्थिकत्वव्याप्यत्वेन जगन्निष्ठ-ब्रह्माभेदस्य ब्रह्मसमानसत्ताकत्वाभावेनापादनासम्भवात् । अन्यथाऽऽ-रोपितरजतानुयोगिकाभेदवच्छुक्तेरप्यपारमार्थिकत्वं स्यादित्यभिसन्धि-पूर्विकामाशङ्कामुद्धाट्य दूषयति — **ब्रह्मण इति** ॥ **धर्मिसमानसत्ताकोऽभेद इति** ॥ अभेद इति छेदः । अपारमार्थिकप्रतियोगिकाभेद इत्यर्थः । तस्य व्याप्तिग्रहाय सहचारं दर्शयति — **घटादाविति** ॥ सोऽस्तीत्य-

---

[1] तथा चैतट्टिप्पणिरीत्या `बाधो वा' इत्येव पाठः । काशिकारीत्या `तस्यापि पक्षत्वे बाधो वा' इति ।

[2] `मिथ्यात्वस्य' मु.

पारमार्थिकप्रतियोगिकधर्मिसमानसत्ताकभेद इत्यर्थः । एतेन प्रपञ्चे ब्रह्मभेदस्य मिथ्यात्वमाश्रित्य कृता शङ्काऽपि तुल्यन्यायेनोपपादितप्राया भवतीति न न्यूनता । तत्पक्षस्य शङ्कायामेवानभिप्रेतत्वे पूर्वं सामान्योक्त्या ब्रह्मप्रतियोगिकप्रपञ्चभेदे प्रपञ्चप्रतियोगिकब्रह्मभेदे च[1] व्यभिचार-बाधयोरुक्तत्वेनैकत्र तद्दोषमुद्धृत्यान्यत्र तदकरणे शङ्काया असामाञ्जस्य-प्रसङ्गात् । न च भेदद्वये व्यभिचारादिशङ्काया अभिप्रेतत्वे ब्रह्मप्रपञ्चभेद इत्येकवचनासङ्गतिरिति वाच्यम् । प्रपञ्चैकस्याभावेन ब्रह्मघटभेद-घटब्रह्मभेदपटभेदादिसङ्ग्रहाय जात्यैकवचनत्वात् । अपारमार्थिकत्वाव-च्छिन्नप्रतियोगिताकस्वसमानसत्ताकभेदशून्यत्वं यत्र तत्रापारर्थिकत्वमिति व्याप्तेर्घटादिप्रपञ्चान्तर्भावेन तवापि सिद्धत्वात् । अपारमार्थिक[त्व]-प्रपञ्चप्रतियोगि[ता]कस्वसमानसत्ताकभेदे शून्यत्वे ब्रह्मणोऽपारमार्थिकत्वं दुर्वारं स्यात् । अतस्तस्य सत्यत्वेऽभ्युपगन्तव्ये बाधकव्यभिचारौ दुर्वारावेवेत्याशयेन[2] समाधत्ते ॥ **तर्हीति । स्वसमानसत्ताकभेद इति** ॥ अत्र स्वसमानसत्ताकभेद इति छेदः । अन्ये तु बाधो वेति ब्रह्मप्रपञ्च-भेदस्यापारमार्थिकत्वे[कं चेत्] द्वयोः पारमार्थिकत्वमपारमार्थिकत्वं वा स्यात् । न त्वेकस्यैव पारमार्थिकत्वमपरस्य[स्या]पारमार्थिकत्वमित्यवश्यं भेदस्यापारमार्थिकत्वे वक्तव्ये तत्र मिथ्यात्वसाधने बाध इत्यर्थः । ननु ब्रह्मप्रपञ्चभेदस्यापारमार्थिकत्वेऽपि तयोः पारमार्थिकत्वापारमार्थिकत्व-

---

[1] `ब्रह्मप्रतियोगिकप्रपञ्चभेदे प्रपञ्चप्रतियोगिकत्वं ब्रह्मभेदे च' मु. । ब्रह्मप्रतियोगिक-प्रपञ्चप्रतियोगिकब्रह्मभेदे' ह्.।

[2] `बाधकव्यभिचारावेवेत्याशयेन' मु.

व्यवस्था प्रकारान्तरेण[1] भविष्यतीत्याशयेन शङ्कते — **ब्रह्मण इति** ॥ धर्मिसत्तासमानसत्ताकभेदतदभावापारमार्थिकत्वपारमार्थिकत्वव्यवस्थापका वित्यत्र[2] विपरीत एव नियम्यनियामकभावः किं न[3] स्यादित्याह तर्हीत्याहुः । तन्मते उभयत्रापि भेद इत्येव छेदः । प्रपञ्चवदिति दृष्टान्तस्तु अपारमार्थिकत्वाशय एव । तदुक्तिरपि स्वरूपतो मिथ्यात्वापादनाय । अन्यथोपहितरूपेण मिथ्यात्वाङ्गीकारादिष्टापत्तिः स्यादित्यवधेयम् । क्वचित्पुस्तके वाक्यद्वयेऽपि धर्मिसमानसत्ताकभेद इति पाठो दृश्यते । ततश्चैष (तत्रैष) एवार्थ इति ध्येयम् ॥ **प्रातिभासिकत्वमिति** ॥ ब्रह्मज्ञानेतरबाध्यत्वादिरूपमित्यर्थः ॥ **न चेति** ॥ तत्प्रातिभासिकत्वम् । अन्योन्यस्मिन्निति युष्मदस्मत्प्रत्ययगोचरयोरित्यनेन प्रकृतयोरात्मानात्मनोरन्योन्यस्मिन्[4] आत्मन्यनात्मनोऽनात्मन्यात्मनोऽध्यस्य सर्वोऽपि व्यवहार इति भाष्यार्थः ॥ **गौरोऽहमिति** ॥ गौरवर्णशरीरस्याहं पदार्थात्मनि भासमानाभेदस्याध्यस्तत्वादित्यर्थः । नन्वन्यतरचन्द्रस्यारोपितत्वादारोपितानारोपिताभेदस्य[5] सत्य(साध्य)त्वात्साध्यविकलो दृष्टान्त इति

---

[1] इतः अग्रिम`व्यवस्थापक'शब्दपर्यन्तं हु.पाठे नास्ति । तत्स्थाने एवं दृश्यते - `व्याव्स्थापिकावित्यत्र नियम्यनियामकभावः विपरीत एव नियम्यनियामकभावः किं न-' इति पठ्यते ।

[2] `-भेदतदभावौ पारमार्थिकत्वापार-' इति पाठेन आभ्व्यमिति भाति ।

[3] `-व्यवस्थापकाविति किञ्चिन्न' मु. । `इत्यत्र विपरीत एव नियम्यनियामकभावः किं न' इति भागः प्राक् प्रदर्शितहु.पाठात् स्वीकृतः ।

[4] `प्रकृतयोरात्मनोरन्योन्यस्मिन्' मु.

[5] `नन्वन्यतरचन्द्रस्यारोपितानारोपितभेदस्य' मु.

सर्वगतत्वाधिकरणतत्त्वप्रकाशिकायामुक्तम् । न च चन्द्रान्तरारोपस्य पूर्वपक्षदूषितस्य सिद्धान्ते व्यवस्थापनपूर्वं[1] साध्यवैकल्यस्य दृढीकृतत्वात् (तत्)परित्यागेन दूषणान्तरस्यैव कथनाच्च तद्विरोध इति चेन्न । यतश्चन्द्रान्तरारोप एव युक्तिसिद्धो भवति । तथा हि । चन्द्रान्तरारोपेऽङ्गुलिचलनादिनैकचन्द्रचलनस्यापरचन्द्रचलनाभावस्य च प्रत्ययानुपपत्तिः[2] । क्रियामात्रस्य चन्द्र एवारोपस्वीकारात् । एवं वक्रत्वादेरप्युभयत्रापि तुल्यतया प्रत्ययप्रसङ्गश्च । अतो भीषणत्वादि-विशिष्टसर्पस्य रज्जाविव वक्रत्वचलनादिविशिष्टचन्द्रस्यैवारोपो वाच्यः । न च पूर्वपक्षोक्तरीत्याऽधिष्ठानानुपपत्तिः । पुरोवृत्तिचन्द्रस्यैवा-धिष्ठानत्वसम्भवात् । न च पुरोवृत्तिचन्द्रभिन्नतया प्रतीयमानस्य कथं (तत्)तादात्म्येन भानमिति वाच्यम् । तत्तादात्म्यभानं विनैव चन्द्रस्य भ्रमगोचरतासम्भवात् । न च भ्रमविषयस्य नियमेनाधिष्ठानतादात्म्येनैव[3] भानमिति नियमः । परमते स्फटिकादौ लौहित्यरूपप्रतिबिम्बाध्यासस्थले प्रतिबिम्बस्य, सर्वपक्षेऽत्रैव भ्रमे भासमानक्रियादेः, स्थिरेष्वेव पर्वतादिषु चलनभ्रमस्थले चलनादेः, केशोण्ड्रकादिभ्रमस्थले च[4] दीर्घतया भासमानरश्म्यादीनां च तादात्म्येन भासमानवस्त्वन्तरानिरूपणात् । पर्वतादिवृत्तिरूपादीनामारोप्यमाणादतिरिक्तत्वेनैव भानात् । केशोण्ड्रकादि-स्थले तेषां दीपसम्बन्धित्वेनैव भानेन तदतिरिक्तत्वस्यैव दर्शनात् । अन्तरालभागे तत्तादात्म्यापन्नतया भासमानस्यैन्द्रियकस्यानुपलम्भात् ।

---

1 `व्यवस्थापनम् । पूर्वं' मु. 2. `प्रतीत्युपपत्तिः' मु.

3 `नियमताधिष्ठानतादात्म्येनैव' मु.

4 इतः अग्रिम`केशोन्ड्रकादिस्थल'इतिपदपर्यन्तं हु.पाठे नास्ति ।

स्फटिकरूपे लौहिताभेदाध्यास इत्युक्तावपि मुखाध्यासस्थलेऽगतिरेव[1] दर्पणान्तर्गततयैव भानात् । न च मायावादिना बौद्धेन वा[2] निरधिष्ठानभ्रमः स्वीकर्तुं शक्योऽपसिद्धान्तप्रसङ्गात् । न च भ्रमविषयीभूततादात्म्येन भासमानत्वस्यैव तदधिष्ठानरूपत्वाच्चन्द्रादीनां चातथात्वात्कथमधिष्ठानत्वमिति वाच्यम् । उक्तभ्रमेऽधिष्ठाननिरूपणान्यथाऽनुपपत्त्या शुक्तिरजतादिभ्रमे रजतादौ भासमानसत्त्वस्याधिष्ठानभूतसत्पदार्थनिरूपणान्यथाऽनुपपत्त्या च तद्भ्रम[तदुप]जनककरणसन्निकर्षाश्रयत्वस्यैवाधिष्ठानत्वपदार्थत्वाभ्युपगमात् शुक्तिकासन्निकृष्टचक्षुषा दोषवशाद्रजताकारज्ञानमिवोक्तदोषसहितचक्षुषा सह चन्द्रदीपादीनां सन्निकर्षवशादेव चन्द्रदीपादिषु प्रतीयमानवक्रत्वादिमच्चन्द्रान्तरभेददीर्घाकाररश्म्याद्याकारकज्ञानोत्पत्य[ज्ञानासत्त्वा]ङ्गीकारात् । तत्र भासमानारोपितचन्द्रस्यासत्त्वेन सत्यचन्द्रे भासमानतद्भेदस्य सत्यत्वात् । न चैक एवायं चन्द्र इति भेदबाधानुभवविरोधः । अनयोरन्यतर एक एव चूतोऽपरः पनस इति चूतपनसयोः स्वरूपस्वत्वावगाहित्वपूर्वकं तयोस्तादात्म्यमात्रस्य बाधावगाह्यनुभववदनयोरभेद एव न तु भेद इत्यनुभवाभावात् । प्रत्युत भासमानयोरनयोर्मध्ये एतत्प्रदेशस्थ एक एव चन्द्रोऽस्ति न त्वपर इति भेदावशेषपूर्वकं चन्द्रस्यैव बाधानुभवात् । न चारोपप्रयोजकस्मरणानुपपत्तिरूपपूर्वपक्षोक्तदोषः । तस्य प्रधानज्ञानमुद्रया अपेक्षितत्वेन परिदृश्यमानचन्द्रस्याधिष्ठानस्यापि प्रधानत्वे[3] बाधकाभावेन तज्ज्ञानमात्रेणारोपोपपत्तेः । तज्ज्ञानं चानुभवरूपं यथाकथञ्चित्स्मरणरूपं वा । त्वन्मते भेदभ्रमहेतुभेदज्ञानवदित्युभयथाऽपि न दोषः ।

---

1 `मुखादिस्थले गतिरेव' मु. 2. `बौद्धेनैव' मु. 3. `प्रधानत्वेन' मु.

चन्द्रान्तरारोपोऽपि बौद्धसम्मतः । यत्स्वरूपत एव कल्पितं तन्मिथ्या यथाऽङ्गुल्यवष्टम्भनिमित्तोऽपरश्चन्द्रमा इति विष्णुत्तत्त्वनिर्णयटीकायां तन्मतोपन्यासात् । इत्थं च चन्द्रान्तरस्यारोपितत्वेन तद्भेदस्य सत्यत्वेन टीकोक्तं दृष्टान्ते साध्यवैकल्यं सुदृढमेव । एतद्ग्रन्थे तद्व्यवस्थापनाभावस्तु भेदत्वहेतोरसिद्धेरप्युक्तत्वेन तादृशासिद्धेर्भेदारोपपक्षाश्रयतात्पर्येणाप्युपपादयितुं शक्यत्वेनैकस्मिन्नेव पक्षे निर्भरस्याप्रदर्शितत्वात्तद्व्यवस्थापनानावश्यकतेति सहृदयैराकलनीयम् ॥ **चतुर्थे त्विति** ॥ विमतं तत्त्वत इत्यनुमान इत्यर्थः ॥ **उपाधिभेदेनेति** ॥ पृथिव्यादिसमुदायत्वेनेत्यर्थः ॥ **पदार्थान्तराभावेनेति** ॥ न चापेक्षाबुद्ध्या समुदायाख्यं नानासमुदायं शङ्क्यम् । एकं विशिष्टमुत्पद्यते । तत्र न वक्ष्यमाणदूषणानां प्रसक्तिः । तत्रांशवृत्तिधर्माणामनङ्गीकारात् । अन्यथा दण्डसम्बन्धाद्दण्डविशिष्टपुरुषोत्पत्तौ दण्डत्वपुरुषत्वजात्योः साङ्कर्यापत्तिरिति वाच्यम् । वर्तमानकालमात्रवृत्तिसमुदायस्य तथा वक्तुं शक्यत्वेऽप्यतीतानागतानां ज्ञानानां[1] मेलनस्य कदाऽप्ययोगेन प्रकृते तादृशसमुदायोत्पत्तेर्वक्तुमशक्यत्वादित्यभिप्रायात्[2] । घटादितुल्यतया पृथिव्याद्यारब्धत्वाङ्गीकारे[3] वक्ष्यमाणदूषणानामपि सङ्गतेः ॥ **बाध इति** ॥ भेदस्य प्रत्यक्षतः सत्यत्वेनैव निश्चितत्वादिति भावः ॥ **पृथिवीत्वादीनामिति** ॥ दारुपाषाणादिनिर्मितगृहादावप्येष(प्येवं) दोषः स्यादिति चेन्न । तस्य सर्वप्रत्यक्षादिसिद्धत्वेन यथाकथञ्चिद्दोषपरिहारसम्भवेऽपि प्रकृतस्याप्रामाणिकत्वादेवैते

---

1 `अंशानां' हु. 2. `समुदायोक्तेर्वक्तुमशक्य-' मु.

3 पाठद्वयाधारेण निश्चितः अयं पाठः । तथा हि पाठद्वयम् - `पृथिव्याद्याधारत्वाङ्गीकारे' मु.। `द्यारब्धत्वाङ्गीकारे' हु.।

दोषा अभ्युच्चयत्वेनोक्ता इत्यभिप्रायात् ॥ **गुणादीनामिति** ॥ **द्रव्यत्वापत्तिश्चेति** ॥ समवायिकारणत्वस्य द्रव्यलक्षणत्वादित्यर्थः ॥ **निरवयवानामिति** ॥ न च निरवयवपरमाणूनां द्रव्यारम्भकत्व-दर्शनात्कथमेतदिति वाच्यम् । गगनस्यैकस्य द्रव्यान्तरारम्भकत्वे लोके गगनव्यवहारभागिपदार्थस्यैवाभावप्रसङ्गः । घटारम्भकपरमाणूनामिव तस्य पृथगप्रतीतेः । अंशत आरम्भकत्वं तु निरवयवस्यानुपपन्नमिति तात्पर्येण निरवयवत्वविशेषणोपादानात् ॥ **आकशभेदसाधनमिति** ॥ आकाशांशानां[1] स्वाभाविकभेदसाधनमित्यर्थः । अन्यत्र न्यायामृतादौ । तथा च पराभिमतस्वान्तर्भेदशून्य(रूप)त्वसाध्यस्यापि तत्र वैकल्यमित्याशयः ।

(३५) (का.) परोक्तहेतुमपि दूषयति — **भेदत्वेनेति** ॥ इदंप्रतीय-मानत्वमित्येकपदम् । इदं वक्ष्यमाणविशेषसामान्याकारबोधौपयिकं प्रतीयमानत्वपदं यत्परं तत्प्रतीतिविशेषणं किमित्यर्थः । तेन न वक्ष्यमाणविकल्पानुपपत्त्यवकाशः ॥ **तवासिद्धेरिति** ॥ भेदमात्रस्य मिथ्यात्वेन तत्प्रतीतेः प्रमात्वायोगात् पक्षदृष्टान्तयोर्हेत्वसिद्धेरित्यर्थः ॥ **ममासिद्धेरिति** ॥ घटपटादिभेदास्यारोपितानारोपितचन्द्रभेदस्य च सत्यत्वादिति भावः । न च चन्द्रान्तरस्यारोपितत्वे गौरवम् । चन्द्रसमीपदेशे चन्द्रान्तरारोपं विना तत्प्रतीत्यनुपपत्तेः । मिथ्यैव चन्द्रान्तरं प्रत्यभादित्यनुस्मृतेश्च । एतेन दृष्टान्ते साध्यवैकल्पं च सूचितम् ।

॥ **चन्द्रभेदप्रत्यक्षप्रतीतेरिति** ॥ तन्मते चन्द्रभेदप्रत्यक्षस्य भ्रमत्वेन प्रातिभासिकत्वात् व्यावहारिकप्रातिभासिकयोरनुगतसामान्याभावेन हेत्व-सिद्धेरित्यर्थः । अन्यथा बाष्पारोपितधूमादिमति वह्न्याद्यभावादनुमानो-

---

[1] `आकाशानां' मु.

च्छेदप्रसङ्ग इति भावः । अभ्युपेत्यापि दोषमाह — **भेदाभेदेति** ॥ भेदाभेदयोर्यो भेदस्तत्रेत्यर्थः ॥ **तस्यापि पक्षत्व इति** ॥ तत्साधारणविमतेः पक्षतावच्छेदकत्वात् पक्षे व्यभिचारस्य चादोषत्वादिति भावः । ननु भेदाभेदभेदस्यापि मिथ्यात्वाङ्गीकारात् न बाध इत्यत आह — **भेदाभेदयोरिति** ॥ **मिथ्यात्वं स्यादिति** ॥ अभेदस्यापि भेदत्वेन पक्षत्वात् हेतुमत्त्वाच्चेति भावः । अत्रैव दोषान्तरमाह — **व्यावहारिकेति** ॥ **पारमार्थिकः स्यादिति** ॥ अभेदस्य पारामर्थिकत्वे तदभिन्नभेदस्य मिथ्यात्वायोगादिति भावः । भेदाभेदयोः व्यावहारिकभेदसत्त्वात् कथमभेद इत्यत उक्तम् — **परमार्थतोऽभिन्न इति** ॥ व्यावहारिकभेदश्च न पारमार्थिकाभेदविरोधीत्याशयः । अत्र दृष्टान्तो व्यावहारिकेत्यादिः । स्थलान्तरे व्यभिचारमाह — **पारमार्थिकेति** ॥ पारमार्थिकं ब्रह्म अपारमार्थिकश्च प्रपञ्च इत्यनयोर्भेदस्य पारमार्थिकत्वात् तत्रापि व्यभिचार इत्यर्थः ॥ **तस्यापीति** ॥ ब्रह्मप्रपञ्चभेदस्यापीत्यर्थः । तस्यापारमार्थिकत्वे च ब्रह्मवत् प्रपञ्चस्य पारमार्थिकत्वापत्त्या तदन्तर्गतभेदे पुनर्बाध एवेत्यर्थः ।

स्यादेवं यदि ब्रह्मप्रतियोगिकपारमार्थिकभेदशून्यत्वं ब्रह्मधर्मापादकं स्यात् । न चैवम् । अपि तु ब्रह्मप्रतियोगिकधर्मिसत्तासमसत्ताक-भेदशून्यत्वमेवातो नोक्तदोष इत्याशङ्कते — **ब्रह्मणीति** ॥ भेदो ब्रह्मभेदः ॥ **प्रपञ्चवत् स्यादिति** ॥ तुल्यन्यायेन प्रपञ्चप्रतियोगिकधर्मिसत्तासमान-सत्ताकभेदशून्यत्वस्य प्रपञ्चधर्मापादकत्वप्राप्तेरिति भावः । चन्द्रभेद इति साध्यव्यापकत्वप्रदर्शनार्थम् । यद्यपि मिथ्यात्ववति घटदौ न प्रातिभासिकत्वम् । तथापि भेदत्वावच्छिन्नसाध्यव्यापकत्वादुपाधित्वमिति ॥ नन्वस्य साधनव्यापकत्वात् नोपाधित्वम् । भेदत्वेन पक्षेऽप्युपाध्य-

नुमानादित्याशङ्कां वारयति — **न चेति** ॥ तथा चापसिद्धान्त इति भावः । शङ्करभाष्यविरोधमेव विवृणोति ॥ **गौरोऽहमिति** ॥ देहात्माभेदस्य मिथ्यात्वानङ्गीकारे तद्विषयस्य गौरोऽहमित्यादिज्ञानस्याबाधितविषयत्वेन प्रमात्वापत्त्या तद्भ्रमत्ववर्णनपरभाष्यविरोध इति भावः । **प्रामाण्यप्रसङ्गाच्चेति** पाठे तु दूषणान्तराभिधानमेतदिति ज्ञातव्यम् । यत्तु जीवेशाभेदस्यापि मिथ्यात्वमिष्टमेवेति नोक्ताभाससाम्यापत्तिः । न चैवं भेदस्य सत्यत्वापत्तिः । श्रुत्या दृश्यत्वावच्छेदेनैव मिथ्यात्वावधारणादिति तत् तुच्छम् । भेदाभेदोभयमिथ्यात्वस्य व्याहतत्वेन श्रुत्यापि प्रतिपादयितुमशक्यत्वात् । उपपन्नस्यैव श्रुत्यर्थत्वात् । अन्यथाऽभिमान्यधिकरणविरोधादिति ।

**चतुर्थानुमाने** विमतं जगत् तत्त्वतः स्वान्तर्भेदहीनं मेयत्वात् गगनवत् इत्यत्र गगनादिवत् जगतः स्वतन्त्रपदार्थत्वे तदवयवरूपतदेकदेशप्रसिद्ध्या तदभेदरूपसाध्यसिद्धिः स्यात् । न चैवम् । नानावस्तूनामेव सेनावनादिपदार्थत्ववत् समूहत्वविशेषोपाधिना जगत्पदार्थत्वात् । तदवच्छिन्ने च साध्यस्य विशेषणाप्रसिद्ध्या बाध इत्याह — **चतुर्थे त्विति** ॥ नन्वस्तु तर्हि गगनादिवत् जगत् पदार्थान्तरमेव । न चैतावता पृथिव्यादीनां कथमभेदसिद्धिरिति वाच्यम् । पृथिव्यादीनां जगदुपादानत्वेन तदेकदेशत्वादित्याशङ्क्याऽह — **पृथिव्यादीनामिति** ॥ **जातिसाङ्कर्यप्रसङ्ग इति** ॥ पृथिव्याद्यारब्धस्य पृथिव्यादित्वनिमादिति भावः ॥ **जगदन्तर्भूतानामिति** जगदारम्भकत्वे हेतुः ॥ **द्रव्यत्वापत्तिरिति** ॥ उपादानत्वरूपारम्भकत्वस्य द्रव्यधर्मत्वादिति भावः । निरवयवानां विभुद्रव्याणां जगदाख्यद्रव्यारम्भकत्वे ततोऽपकृष्टपरिमाणत्वप्राप्त्या विभुत्वव्याघात इति द्रष्टव्यम् ॥ **अन्त्यावयवित्वहानिश्चेति** ॥ अन्त्याववित्वस्य द्रव्यानारम्भकद्रव्यत्व-

रूपत्वादिति भावः । इदमुपलक्षणम् । पृथिव्यारब्धस्य जगतोऽपि जगदन्तर्गतत्वेन जगदारम्भकत्वावश्यम्भावेन जगदन्तरस्वीकारापत्त्याऽनवस्था च बोध्या । ननु विशिष्टघटादिः स्वान्तर्भेदहीन इति साधनान्नोक्तदोष इत्याशङ्क्य साध्यविकल्पेन दूषयति — **घटादिपदार्थानामिति ॥ साध्यविकल इति ॥** मया गगने घटादिप्रतियोगिकपारमार्थिकभेदाभ्युपगमादिति भावः । स्वैकदेशभेदाभावसाधनेऽप्याह — **आकाशेति ॥** आकाशैकदेशानामाकाशेन मिथश्च तात्त्विकभेदसाधनमन्यत्र न्यायामृतादौ कृतमतो दृष्टान्ते साध्यवैकल्यमिति भावः ।

एवं विमतौ परमार्थतः परस्पराभिन्नौ प्रमेयत्वात् परस्परवत् इत्याद्यशेषाभिलषितभेदसाधकानुमानेषु प्रत्यक्षादिप्रमाणबाधः । सर्वत्र साक्षिणः पारमेश्वरस्य च भेदप्रत्यक्षस्य प्रमाणसिद्धत्वात् । विमतौ न परमार्थतः परस्पराभिन्नौ परस्परविरुद्धधर्मवत्त्वात् व्यतिरेकेण परस्परवत् इत्यनुमानात्, द्वा सुपर्णेत्याद्यागमाच्च । परस्परविरुद्धधर्मानधिकरणत्वमन्ततः पक्षेतरत्वमप्युपाधिः । विमतौ व्यवहारतो परस्पराभिन्नौ मेयत्वात् परस्परवत् इत्याभाससाम्यम् । अनुकूलतर्काभावादेवाप्रयोजकत्वं चेत्येवमाद्यन्तदोषदुष्टत्वात् नाद्वैतमुपादेयम् ।

यदत्र केनचित्प्रलपितम् । सोऽयं भेदः किं धार्मिस्वरूपस्तद्धर्मो वा । नाद्यः । भिन्नमिति प्रतीतौ प्रकारत्वानुपपत्तेः । घटभेदप्रतीत्योरविशेषप्रसङ्गाच्च । विषयवैलक्षण्याभावात् । ग्राहकसामग्रीवैचित्र्यानुपपत्तेश्च । घटप्रतीतौ भेदसन्देहानुपपत्तेश्च । अज्ञातांशाभावात् । भेदस्य सप्रतियोगित्वानुपपत्तेश्च । धर्मिणो घटादेर्निष्प्रतियोगिकत्वात् । रूपादेरपि धर्मिस्वरूपत्वापत्तेश्च । भेदवदभेदस्यापि धर्मिस्वरूपत्वेन भेदाभेदयो-

रभेदापत्तेश्च । तत्प्रतीत्योरविशेषप्रसङ्गाच्च । तत्पदयोः पर्यायत्वापत्तेश्च । एतेन कारणत्वादीनां धर्मिस्वरूपत्वमप्यपास्तं वेदितव्यम् । द्वितीये भावोऽभावो वा ? नाद्यः । जात्यादिरूपत्वे सप्रतियोगिकत्वाद्यनुपपत्तेः । पृथक्त्वादिरूपत्वे च गुणादौ भेदप्रत्ययानुपपत्तेः । अन्योन्याभावेनैवोपपत्तौ पृथक्त्वरूपगुणान्तरानङ्गीकाराच्च । नान्त्यः । भेदस्यान्योन्याभावरूपत्वे कपिसंयोगवति वृक्षे तद्भेदसत्त्वप्रसङ्गात् । मूले वृक्षो न कपिसंयोगीति प्रतीतेः । अत्यन्ताभावरूपत्वे च नास्ति न भवतीति प्रतीत्योरविशेष-प्रसङ्गात् । स्वस्मिन्नपि स्वात्यन्ताभावसत्त्वेन स्वभेदबुद्ध्यापत्तेश्च । तद्भेदस्य तद्धर्मात्यन्ताभावरूपत्वे च प्रथमदोषानिस्तारात् ।

किञ्च प्रतियोगिप्रमाणयोरभावान्न भेदसिद्धिः । तथाहि । न तावत् घटभेदस्य घटः प्रतियोगी । घटवति घटभेदानुपपत्तेः । लघवाद-भावत्वावच्छेदेनैव प्रतियोगिविरोधावधारणात् । किञ्च भेदस्याभेदा-भावत्वेनाभेदस्यैव तत्प्रतियोगित्वं स्यात् । न चाभेदो घटादिस्वरूप एवेति वक्तुं शक्यम् । घटवति घटभेदानुपपत्तेः । न चाभेदस्यापि भेदप्रतियोगित्वं सम्भवति । तज्ज्ञानस्य भेदज्ञानाधीनत्वात् भेदज्ञानस्य च प्रतियोगिज्ञानाधीनत्वेनान्योन्याश्रयात् । अत एव न तत्र प्रत्यक्षं प्रमाणम् । अन्योन्याश्रयात् । एवं घटे पटभेदाभेदयोः संशयनिश्चयदशायां पटे घटभेदनिश्चयादर्शनात् घटभेदनिश्चये पटभेदनिश्चयस्य हेतुत्वं वाच्यम् । 'यत्संशयव्यतिरेकनिश्चयौ यत्र प्रतिबन्धकौ तन्निश्चयस्तद्धेतु'रिति नियमात् । एवं पटभेदनिश्चये घटभेदनिश्चयस्य हेतुत्वमित्यन्योन्याश्रयः । किञ्च प्रतियोगित्वग्राहकसन्निकर्षाभावान्न प्रतियोगित्वविशेषितभेदप्रत्यक्षसम्भवः । ज्ञानमेव सन्निकर्ष इति चेत् हन्त तर्हि तज्ज्ञानं प्रतियोगित्वविषयं

भेदज्ञानापेक्षमित्यन्योन्याश्रयः । नाप्यनुमानम् । देवदत्तो यज्ञदत्तभेदवान् तद्दुःखानुसन्धातृत्वादित्यादेरौपाधिकभेदेनाप्युपपत्तेः । अत एव नागमः । पारमार्थिकभेदासाधकत्वात् । तस्मात् सर्वाऽपि भेदप्रतीतिरनिर्वचनीयाविद्याविलास एवेति युक्तम् । तदुक्त`मसम्भावनीयावभासचतुरा हि से'ति ।

तदेतत् सर्वमपि विशेषाङ्गीकारपराहतम् । तथाहि — भेदस्तावत् धर्मिस्वरूपस्तद्धर्मश्च भवति । अभेदेऽपि धर्मधर्मिभावो विशेषप्रभावात् । अत एव भिन्नमिति प्रतीतौ प्रकारत्वमपि । घटभेदप्रतीत्योर्वैलक्षण्यमपि विशेषादेव । न च विशेषस्य तटस्थस्य प्रतीतिवैचित्र्यनियामकत्वे विषयवैयर्थ्यात् विज्ञानवादप्रसङ्गः । विषयविधया तथात्वे चानुभवविरोध इति वाच्यम् । घटत्वभेदत्वरूपप्रकारवैचित्र्यादेव प्रतीतिवैचित्र्यम् । प्रकारयोस्तु विशेषकृतं वैचित्र्यमित्यत्र दोषाभावात् । अत एव ग्राहकसामग्रीवैचित्र्यमप्युपपद्यते । ग्राह्यवैचित्र्यस्योपपादितत्वात् । एतेन घटप्रतीतौ भेदसन्देहानुपपत्तिरित्यपि निरस्तम् । घटत्वेन तत्प्रतीतावपि भेदत्वेन तदप्रतीतेः । घटत्वभेदत्वयोरभेदेऽपि विशेषसद्भावादेव तदुपपत्तेः । भेदस्य सप्रतियोगिकत्वमपि विशेषबलादेव । न चैवं घटो न सप्रतियोगिक इति व्यवहारानुपपत्तिः, सप्रतियोगिकभेदाभिन्नत्वादिति वाच्यम् । तदभिन्नत्वेऽपि तद्विशेषस्यैव तद्व्यवहारविषयत्वात् । अभेदे भेदकार्यनिर्वाहको विशेषः । रूपादेर्धर्मिस्वरूपत्वं त्विष्यत एव । न चैवं रूपप्रतीतौ रसादिप्रतीतिप्रसङ्गः । रसत्वादिना तदप्रतीतेर्विशेषत एवोपपत्तेः । भेदाभेदयोरभेदश्चेष्ट एव । परापेक्षया भेदस्य स्वापेक्षयाऽभेदत्वे बाधकाभावात् । न चैवं घटे स्वापेक्षयेव परापेक्षयाऽपि अभेदव्यवहार-

प्रसङ्गः । स्वरूपे विशेषभावादिति वाच्यम् । विशेषाभावे स्वापेक्षयेत्यस्यैवानुपपत्तेः । तद्भावे तु तत एव स्वाभेदो न पराभेदः । अत एव न भेदाभेदप्रतीत्योरविशेषः । न वा तत्पदयोः पर्यायत्वम् । प्रतिपाद्यवैचित्र्यस्योक्तत्वात् । एतेन कारणत्वादिकमपि व्याख्यातम् ।

यच्चोक्तं भावोऽभावो वेति, तत्र ब्रूमो यो भेदो यत्र प्रतीयते स तत्स्वरूप इति । न चैवं घटात्यन्ताभावे प्रतीयमानघटभेदस्य घटात्यन्ताभावरूपतया तस्य च घटेऽपि सत्त्वात् घटभेदप्रतीतिप्रसङ्ग इति वाच्यम् । घटे घटभेदत्वेन तदसत्त्वात् । न च स्वरूपप्रतियोगिप्रतियोगितावच्छेदकाविशेषे भेदत्वात्यन्ताभावत्वयोरप्यविशेष इति वाच्यम् । घटनिषेधोऽत्यन्ताभावो घटतादात्म्यनिषेधोऽन्योन्याभाव इति विशेषात् । घटो न भवतीति साक्षाद्घटस्य प्रतियोगित्वं भासत इति चेत् घटोऽपि प्रतियोग्येव । तादात्म्यं भेदप्रतियोगितावच्छेदकमित्यप्याहुः ।

एतेन संयोगेन संयोग्यत्यन्ताभावस्य संयोगरूपसंयोगितादात्म्यावच्छिन्नप्रतियोगिताकतया तद्भेदत्वापत्तिरिति निरस्तम् । संयोगस्य संयोग्यत्यन्ताभावाप्रतियोगित्वात् । तदवच्छेदकत्वेऽपि संयोगत्वेनैव । न तु तादात्म्यत्वेनेति विशेषात् । वस्तुतोऽन्योन्यात्यन्ताभावयोः सदसत्प्रतियोगिकत्वाभ्यामस्ति महान् विशेषः । एतेन नास्ति, न भवतीति प्रतीत्योरविशेषप्रसङ्गोऽपि निरस्तः । यदपि मूले वृक्षः कपिसंयोगी नेति प्रतीतेर्मूलावच्छिन्नवृक्षे कपिसंयोगिभेदः सिध्येदिति तदिष्टमेव विशिष्टभेदवादिनाम् । न चैवं प्रत्यभिज्ञाविरोधः । शाखामूलाद्यवच्छिन्नयोरभेदस्यापि सत्त्वात् । न च भेदाभेदयोर्विरोधः । विशेषबलादविरोधोपपत्तेः । न चैवं विशेष एवास्तु, किं भेदेनेति वाच्यम् । भेदस्य प्रमितत्वात् ।

यत्त्वभावत्वावच्छेदेन प्रतियोगिविरोधावधारणात् घटवति घटभेदानुपपत्तिरिति । तदसत् । घटवति घटप्रागभावादेरनुपपत्तेः । प्रागभावादेः प्रतियोगिदेशवृत्तित्वस्य प्रमितत्वात् । प्रतियोगिकालावृत्तित्वरूपो विरोधस्तत्रावधार्यत इति चेत् तर्हि भेदस्य प्रतियोगिदेशकालवृत्तित्वस्य प्रमितत्वात् प्रतियोगिवस्त्ववृत्तित्वरूपो विरोधोऽत्रावधार्यताम् । प्रतियोगिनैकदैकत्रानवस्थानरूपविरोधः प्रागभावाद्यनुगत इति चेत् स्वाभावेनैकदैकत्रानवस्थानरूपविरोधो भेदाद्यनुगत इत्यस्तु । वस्तुतः प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिविरोधः सर्वाभावसाधारणः । भेदस्यापि तादात्म्येन प्रतियोगिविरुद्धत्वात् ।

यदपि भेदस्याभेदाभावत्वान्न घटादेस्तत्प्रतियोगित्वमिति, तदपि न । प्रागभावादेरिव भेदस्य स्वाभावाभावत्वेऽपि घटादिप्रतियोगिकत्वाविरोधात् । अभेदस्य घटादिस्वरूपत्वेऽपि न दोषः । अभेदत्वेनाभेदस्य प्रतियोगिन्येव सत्त्वात् । घटत्वघटाभेदत्वयोर्विशेषसद्भावादेव घटत्वेन घटवति घटाभेदत्वेन तदसत्त्वसम्भवात् । यदपि भेदाभेदयोः परस्परज्ञानाधीनज्ञानत्वादन्योन्याश्रय इति । तत्तुच्छम् । घटाभेदज्ञानहेतोर्घटभेदाज्ञानस्याघटत्वेन घटज्ञानमात्राधीनत्वात् । अत एव भेदप्रत्यक्षमप्युपपद्यते । यदपि घटपटभेदयोरन्योन्यज्ञानाधीनज्ञानत्वादन्योन्याश्रय इति । तदपि न साधु । घटपटभेदयोरन्योन्यसंशयस्य ग्राह्यसंशयवदन्योन्यज्ञानाप्रतिबन्धकत्वेनान्योन्यज्ञानाधीनज्ञानत्वासिद्धेः । अन्यथा ग्राह्यसंशयस्यापि प्रतिबन्धकत्वप्रसङ्गेन वस्तुमात्रस्यैव स्वज्ञानाधीनज्ञानत्वापत्या ज्ञानमात्रापलापापत्तेः । विपक्षे बाधकाभावेन यत्संशयेत्यादिनियमस्याप्रयोजकत्वाच्च । यदपि

प्रतियोगित्वांशे सन्निकर्षाभावात् प्रतियोगिविशेषितभेदप्रत्यक्षानुपपत्तिरिति । तदतिमन्दम् । निर्विकल्पकोपस्थितेरेव सन्निकर्षत्वसम्भवात् । तस्याश्च भेदज्ञानानपेक्षत्वेनान्योन्याश्रयानवकाशरत् । प्रतियोगित्वस्य प्रतियोगिस्वरूपत्वेन तदुपस्थितेस्तत्सन्निकर्षत्वसम्भवाच्च ।

एवमनुमाने धर्मिसत्तासमानसत्ताकत्वेन भेदविशेषणादुद्देश्यसिद्धिः । न चाप्रयोजकत्वम् । विपक्षे चैत्रादेर्मैत्रादिदुःखानुसन्धानापत्तेर्बाधकत्वात् । चैत्रमैत्रयोरैक्याच्चैत्रचैतन्यस्य मैत्रीयदुःखाद्यनुसन्धानमिष्टमेवेति वाच्यम् । मैत्रशरीरोत्पन्नदुःखादेश्चैत्रशरीरेऽनुसन्धानस्यानिष्टत्वात् । न च तत्तच्छरीरगतान्तःकरणभेदादनुसन्धानाभाव इति वाच्यम् । योगिन्यनुपपत्तेरुक्तत्वात् । अत एवाऽगमोऽपि स्वाभाविकभेदमेव ग्राहयति । अत्त्यनश्नन् इत्युक्ताशनानशनयोः स्वाभाविकभेदेन विनाऽनुपपत्तेः । मुक्तौ भेदश्रुतीनामुदाहृतत्वाच्च । न च भेदस्य वस्तुस्वरूपत्वाङ्गीकारात् स्वरूपस्य च स्वाभाविकत्वे विवादाभावादर्थान्तरमिति वाच्यम् । यतो न भेदो वस्तुस्वरूपमात्रम् । धर्मधर्मिभावाद्यनुपपत्तेः । किन्तु तद्विशेष इत्युक्तम् । तथा च धर्मत्वपरप्रतियोगिकत्वादिविशेषितवस्तुस्वरूपविशेषस्य साध्यत्वान्न दोषः ।

अथ वस्तुस्वरूप एव विशेषसद्भावे किं मानमिति चेदिदं तावत् – स्वरूपस्य वस्त्वभिन्नत्वेऽपि वस्तुनः स्वरूपमिति सम्बन्धानुभवादेव स्वरूपस्य वस्तुतो विशेषसिद्धिः । एवं `यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति । एवं धर्मान् पृथक् पश्यंस्तानेवानुविधावति', `एकधैवानुद्रष्टव्यं', `नेह नानास्ति' इत्यादिश्रुतिभिः ब्रह्मणस्तद्धर्माणां चाभेदः सिद्धः । दृश्यते च `सत्यं ज्ञानमनन्तं ब्रह्म', `आनन्दं ब्रह्मणो विद्वान्' इत्यादौ विशेष्यविशेषणभावादिना

व्यवहारः । तदुभयविरोधादर्थादाक्षिप्यते विशेषः । एवं घटतद्धर्माणामपि पृथगनुपलम्भेनैकत्वे सिद्धे धर्मधर्मिभावादेर्विशेष एव शरणमिति ॥

यत्त्वनिर्वाच्याविद्यासामर्थ्यादेव सर्वलौकिकवैदिकव्यवहारोपपत्तौ किं विशेषेणेति । तत्तुच्छम् । अविद्याया विषयनिरपेक्षत्वे विज्ञानवादप्रसङ्गात् । तत्सापेक्षत्वे च तत्स्वभावभूतयोरभेदधर्मत्वयोर्विरोधध्रौव्यात् । अभेद एव स्वाभाविको धर्मत्वं तु मिथ्यैवेति चेत् तर्हि तत्प्रतिपादकश्रुतीनाम् अतत्त्वावेदकत्वादप्रामाण्यप्रसङ्गः । परमार्थतो निर्विशेषचैतन्यस्वरूपमात्रे सर्वश्रुतीनां तात्पर्यान्नायं दोष इति चेन्न । दृष्टादृष्टत्यागकल्पनाप्रसङ्गात् । प्रतीतविशेषपरित्यागेनाप्रतीतनिर्विशेषस्वीकारात् । शब्दतो निर्विशेषानुभवस्यादृष्टत्वाच्च । न च सोऽयमित्यादौ तत्तेदन्ताविशिष्टयोरभेदान्वयबाधेन स्वरूपमात्रबोधो दृष्ट एवेति वाच्यम् । तत्राप्यतीतसम्बन्धरूपतत्तोपलक्षितस्य तत्कालसम्बन्धध्वंसरूपतत्ताविशिष्टस्य वा वर्तमानकालसम्बन्धरूपेदन्त्वविशिष्टेनाभेदान्वयात् ।

किञ्चाद्वैतवादे तावदविद्यैव नोपपद्यते । विकल्पदोषात् । सत्यत्वे द्वैतप्रसङ्गात् । मिथ्यात्वे कल्पकाभावः । स्वकल्पितत्वे आत्माश्रयात् । अविद्यान्तरकल्पितत्वे चानवस्था । तथा च कुतो धर्मत्वादेर्मिथ्यात्वपरिकल्पनावकाशः । नन्वेवमनुपपन्नत्वं मिथ्यात्वे साधकमेव । उपपन्नत्वे हि सत्यत्वं स्यादिति चेत् तर्हि लाघवादात्मैवाविद्येति कल्प्यताम् । आत्मनोऽविद्यात्वमविद्यानिवृत्तावात्मनिवृत्त्यापत्त्याऽनुपपन्नमिति चेदत एव मिथ्येत्यस्य सुवचत्वात् । आत्मनोऽविद्यात्वमप्रामाणिकमिति चेत्तद्धर्मस्याविद्यात्वे किं प्रमाणमुपलब्धमायुष्मता प्रतीतप्रमाणानां निरस्तत्वादिति दिक् ।

नन्वेवं विशेषोऽपि नोपपद्यते । विकल्पदोषात् । तथाहि । धर्मधर्मिणोर्विशेषो यदि धर्मधर्मिभ्यां भिन्नस्तर्हि भेद एवास्तु किमन्तर्गडुना विशेषेण । यद्यभिन्नस्तर्हि धर्मधर्मिणावेव स्तो न विशेषः । तथा च धर्मधर्मिभावोऽपि न स्यादिति चेन्मैवम् । अभिन्नत्वेऽपि विशेषस्य तन्मात्रत्वाभावेन दोषाभावात् । विशेषस्य विशेषित्वे विशेषानवस्था स्यादिति चेत् वस्त्वन्तरत्वाभावेनादोषत्वादिति । स्यादेतत् । भेदविशेषयोर्नित्यत्वे नानित्यघटादिस्वरूपत्वम् । अनित्यत्वे चोत्तरकालं निर्विशेषाभेदापत्तिरिति चेन्मैवम् । अनित्यगतस्यानित्यत्वेऽप्युत्तरकालं वस्तुन एवाभावेन निर्विशेषाभिन्नवस्त्ववशेषप्रसङ्गाभावात् । नित्यगतस्य नित्यत्वेन सर्वाभेदप्रसङ्गस्यात्यन्तमयुक्तत्वाच्च । तस्माज्जडजीवेश्वराणां मिथः स्वाभाविक एव पञ्चविधो भेदः । तथा हि श्रुतिः ——

`जीवेश्वरभिदा चैव जडेश्वरभिदा तथा ।
जीवभेदो मिथश्चैव जडजीवभिदा तथा ।
मिथश्च जडभेदोऽयं प्रपञ्चो भेदपञ्चकः ॥
सोऽयं सत्यो ह्यनादिश्च सादिश्चेन्नाशमाप्नुयात् ।
न च नाशं प्रयात्येष न चासौ भ्रान्तिकल्पितः ॥
कल्पितश्चेन्निवर्तेत न चासौ विनिवर्तते ।
द्वैतं न विद्यत इति तस्मादज्ञानिनां मतम्' ॥ इत्यादिः ॥

अत्र जीवेश्वरभेदत्वं नाम न जीवेश्वरोभयप्रतियोगिकभेदत्वम् । परस्परभेदस्योभयप्रतियोगिकत्वाभावेनासङ्ग्रहात् । अत एव नोभयानुयोगिकभेदत्वम् । एकस्योभयानुयोगिकत्वाभावात् । नापि जीवेश्वरान्यतरप्रतियोगिकभेदत्वमन्यतरानुयोगिकभेदत्वं वा । जडेश्वरभेदादेः पृथगु-

पादानवैयर्थ्यात् । नापि जीवेश्वरान्यतरप्रतियोग्यनुयोगिकभेदत्वम् । मिथो जीवभेदस्य पृथगुपादानानुपपत्तेः । किन्तु जीवेश्वरद्वित्वसमानाधिकरणप्रतियोगितानुयोगिताकभेदत्वम् । जीवेश्वरगतप्रतियोगित्वानुयोगित्वयोर्जीवेश्वरद्वित्वसमानाधिकरणत्वाज्जीवेश्वरभेदसङ्ग्रहः । जडेश्वरगतप्रतियोगित्वानुयोगित्वयोरतथात्वान्न तत्सङ्ग्रहः । न चैवं मिथोजीवभेदसङ्ग्रहापत्तिः । तत्प्रतियोगित्वानुयोगित्वयोः प्रत्येकं जीवेश्वरद्वित्वसमानाधिकरणत्वादिति वाच्यम् । स्वानुयोगिवृत्तिजीववेश्वरद्वित्वसमानाधिकरणप्रतियोगिताकभेदत्वस्य विवक्षितत्वात् । मिथो जीवभेदस्य च स्वानुयोगिवृत्ति यज्जीवेश्वरद्वित्वं तत्समानाधिकरणप्रतियोगिताकत्वाभावेनासङ्ग्रहात् । एतेन जडेश्वरभेदत्वं जडजीवभेदत्वं च व्याख्यातं वेदितव्यम् । मिथो जीवभेदत्वादिकं च जीवप्रतियोगिकजीवानुयोगिकभेदत्वादिरूपम् । जीवत्वं चात्र भगवत्प्रतिबिम्बत्वमेवेति सङ्क्षेपः ।

नन्वेवमीश्वरस्य परब्रह्मत्वानुपपत्तिः । तस्य त्रिविधपरिच्छेदराहित्यरूपत्वात् । देशकालपरिच्छेदातिरिक्तवस्तुपरिच्छेदस्य तद्भेदरूपत्वादिति चेन्मैवम् अप्रामाणिकं भाषिष्ठाः । `अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणा' इत्यादिनिगमनिरुक्तनिरवधिकनिःशेषनिर्दोषकल्याणगुणपूर्णत्वस्यैव परब्रह्मत्वरूपत्वात् । तस्मात् जडजीवेश्वराणां परस्परभेदप्रपञ्चस्य पारमार्थिकत्वात् परमेश्वरपरमप्रसादसिद्धये सकलजगज्जन्मादिकारणत्वाद्यनन्तकल्याणगुणाकरतया सर्वोत्तमत्वेन सर्वदैव समुपास्यः श्रीनारायण एवेति सिद्धम् ।

(३५) (श.) एवं साध्यं निराकृत्य हेतुमपि निराकरोति ॥ भेदत्वेनेत्यानिना ॥ चन्द्रभेदस्य मिथ्यात्वेनाप्रामाणिकत्वात्प्रामाणिकाप्र

आमाणिकानुगतसामान्याभावेन भेदत्वसामान्यं नहेतुरित्यतोभेदत्वेन प्रतीयमानत्वं हेतुरित्युक्तम् ॥ तत्र प्रतीयमानत्वं प्रतीतिगोचरत्वम् । तच्च प्रतीतिस्वरूपं कीदृशमित्यर्थः ॥ **प्रतीतित्वसामान्यमिति** ॥ प्रमाऽप्रमानुगतं प्रतीतित्वसामान्यमित्यर्थः ॥ **तवेति** ॥ त्वयाभेदप्रतीतेः प्रमात्वानङ्गीकारादिति भावः ॥ **प्रतीतेरपीति** ॥ यथा चन्द्रभेदस्य मिथ्यात्वेनाप्रामाणिकत्वात्प्रामाणिकाप्रामाणिकानुगतभेदत्वसामान्याभावः तथाभेदप्रतीतेरपि मिथ्यात्वेनाप्रामाणिकत्वात्प्रामाणिकाप्रामाणिकानुगतप्रतीतत्वरूपसामान्याभावेन स्वरूपासिद्धो हेतुरित्यर्थः ॥ **भेदाभेदेति** ॥ भेदश्चाभेदश्च भेदाभेदौ तयोर्भेदेव्यभिचार इत्यर्थः । तत्र भेदत्वं वर्ततेमिथ्यात्वं नास्तीति भावः ॥ **बाध इति** ॥ मिथ्यात्वरूपसाध्याभावादिति भावः । ननु भेदो मिथ्यैवातो न बाध इत्यत आह — **भेदाभेदयोरिति** ॥ अपारमार्थिकत्वे मिथ्यात्वे । अनेन भेदो मिथ्येत्यादिना ॥ **अभेदस्यापि मिथ्यात्वं स्यादिति** ॥ यदि भेदाभेदसयोर्भेदस्य मिथ्यात्वं तर्हि मिथ्यात्वस्यासत्वपर्यायत्वेन भेदाभेदयोर्भेद एव नास्तीति स्यात् । भेदाभावेचतयोरभेद एव स्यात् । एवं चानेनानुमानेन भेदस्य मिथ्यात्वे साधिते तदभिन्नाभेदस्यापि तत्स्यात् । अत एव तद्दोषपरिहाराय भेदाभेदस्य सत्त्वेङ्गीकार्ये बाधो दुष्परिहर इति भावः । प्रकारान्तरेण बाधमुपपादयति — **व्यावहारिकेति** ॥ अभेदस्य खलु परेण पारमार्थिकत्वमङ्गीक्रियते । यद्युक्तरीत्या भेदाभेदयोरभेदः स्यात् तर्हि पारमार्थिकाभेदाभिन्नो भेदोऽपि पारमार्थिकः स्यादिति पुनस्तस्य मिथ्यात्वसाधने बाधः स्यात् । ननु भेदाभेदयोः पारमार्थिकाभेदेऽपि व्यावहारिकभेदस्याप्यङ्गीकारादभेस्यपारमार्थिकत्वेपि न भेदस्य पारमार्थिकत्वमित्यत उक्तम् — **व्यावहारिकेत्यादि** ॥ जीवेशयो-

व्यावहारिकभेदसद्भावेऽपि तस्याप्रयोजकत्वेन परमार्थतः पारमार्थिक ब्रह्माभिन्नत्वेन जीवस्य यथा पारमार्थिकत्वमङ्गीक्रियते तथेहापीत्यर्थः । स्थलान्तरेव्यभिचारमाह — **पारमार्थिका अपारमार्थिकेति** ॥ पारमार्थिकं ब्रह्म । अपारमार्थिकः प्रपञ्चः । अनयोर्भेदत्वेन प्रतीयमानत्वं वर्तते । मिथ्यात्वं नास्तीति व्युभिचार इत्यर्थः । तस्यापि मिथ्यात्वान्न व्यभिचार इत्यतोब्रह्म प्रपञ्चयोः पारमार्थिक अपारमार्थिकत्वविशेषणं तस्यापि मिथ्यात्वान्न व्यभिचार इत्यतोब्रह्मणो पारमार्थिकत्वं प्रपञ्चस्यपारमार्थिकत्वं स्यात् । अत एव तद्दोषपरिहाराय तयोर्भेदस्य सत्त्वे वाच्ये स्यादेव व्यभिचार इति भावः । ननु ब्रह्मप्रपञ्चयोर्भेदस्य मिथ्यात्वेऽपि नोक्तदोषः । तथाहिपारमार्थिकत्वे धर्मिसमसत्ताकभेदरहितत्वं प्रयोजकम् । आरमार्थिकत्वे तुधर्मिसमत्ताकभेदवत्त्वम् । एवं च ब्रह्मणि धर्मिसत्ता-समानसवशकः पारमार्थिको भेदो नास्तीति तस्य पारमार्थिकत्वम् । प्रपञ्चे धर्मिसमसत्ताकव्यावहारिको भेदोऽस्तीति तस्यापारमार्थिकत्वम् । अतो नब्रह्मणोपारमार्थिकत्वं प्रपञ्चस्य पारमार्थिकं स्यादित्यापादनं युक्तमित्या शङ्कते — **ब्रह्मणो धर्मीति** ॥ एवमपि त्वया ब्रह्मणि प्रपञ्चप्रति-योगिकधर्मिसमसत्ताकभेदानङ्गीकारादेवप्रपञ्चाभिन्ने ब्रह्मणि प्रपञ्चवदेवा-पारमार्थिकत्वं स्यादेवेति परिहरति ॥ **नेति** ॥ चन्द्रभेद इत्युपाधेः साध्यव्यापकत्वोपपादनायोक्तम् । तथाच यत्र मिथ्यात्वं तत्र प्रातिभासिकत्वं यथा चन्द्रभेदे । अतः साध्यव्यापकत्वम् । यत्र भेदत्वं तत्र प्रातिभासिकत्वमिति ननियमः । हेतुमत्यपिविमतभेदेप्रातिभासिकत्वाभावेन साधनाव्यापकत्वमिति भावः । ननु विमतो भेदः प्रातिभासिको-भेदत्वाच्चन्द्रभेदववदिति पक्षे पिप्रातिभासिकत्वं साध्यते । अतः

साधनव्यापकत्वान्नायमुपाधिरित्यत आह — **स चेति** ॥ **व्यावहारिकत्वेति** ॥ त्वयाविमतभेदस्य व्यावहारिकत्वाङ्गीकारेणेदानीं प्रातिभासिकत्वसाधने स्ववाक्यविरोध इत्यर्थः ॥ **साध्यवैकल्यमिति** ॥ देहात्माभेदस्यासत्वत्वादिति भावः । कुत इत्यात आह — **तथात्व इति** ॥ यदि देहात्मभेदस्य मिथ्यात्वं न स्यात् तर्हि तस्य मिथ्यात्वप्रतिपादकभाष्यस्याविद्यमानप्रतिपादकोन्मत्तवाक्यतुल्यत्वं स्यादित्यर्थः । अन्योन्यस्मिन्नन्योन्यात्मकतामध्यस्येति शाङ्करभाष्यस्यात्मनि देहतादात्म्यं देहे चात्मतादात्म्यमारोप्येत्यर्थः । अत्राध्यस्येत्यनेन मिथ्यात्वं प्रतिपाद्यत इति ध्येयम् । दूषणान्तरमाह — **गौरोहमिति** ॥ यदि देहात्माभेदस्य सत्यत्वं तर्ह्यात्मन एवदेहत्वेन देहधर्माणाङ्गौरत्वादीनामात्मनि सत्यत्वेन तदवगाहिज्ञानं तत्वावेदकं स्यात् । नचेष्टापत्तिः । अन्योन्यधर्मांश्चध्यस्येत्युत्तरभाष्ये आत्मनि देहधर्माणां मिथ्यात्वप्रतिपादनविरोधादिति भावः ॥ **चतुर्थ इति** ॥ विमतं जगत्तत्त्वतः स्वान्तर्भेदशून्यं दृश्यत्वाद्गगनवदित्यत्रेत्यर्थः ॥ **नानेत्यादि** ॥ उक्तानुमानेन हि जगदाख्यपदार्थस्य स्वैकदेशैः पटादिदभिर्भेदाभावस्साध्यते । तत्तदा स्यात् यदि घटादीनां जगदाख्यपदार्थैकदेशत्वं स्यात् । न चैतदस्ति । घटादिनानापदार्थानामेव कालाद्युपाधिविशेषेण जगच्छब्दवाच्यतया कालघटादिव्यतिरेकेण जगदाख्यपदार्थान्तरस्याभावात् । अत्र दृष्टान्तस्सेनावनादिवदिति । यथा गजतुरगादीनामेवैकस्थाननिवासेन सेनाशब्दवाच्यत्वं यथा वा नानावृक्षाणमेकस्थाननिवासेन वनशब्दवाच्यत्वं तथेहापीत्यर्थः । ननु नानापदार्थानामेव जगच्छब्दवाच्यत्वं किन्तु तं तु भिन्न पट इवनानापदार्थैर्जगदाख्यपदार्थ आरभ्यते । अतो घटादीनान्त-

देकदेशत्वसम्भवान्नोक्तदोष इत्यत आह — **पृथिव्यादीनामिति** ॥ **साङ्कर्यप्रसङ्ग इति** ॥ परस्परपरिहारेण विद्यमानयोरेकत्र समावेशः साङ्कर्यम् । पृथिवीत्वपरिहारेण जलत्वं जले जलत्वपरिहारेण पृथिवीत्वं पृथिव्याम् उभयोस्तदारब्धे जगति समावेशः । एवमन्यत्रापि । अतो जातिमात्रस्य साङ्कर्यप्रसङ्ग इत्यर्थः ॥ **द्रव्यत्वापत्तिश्चेति** ॥ समवायिकारणस्य द्रव्यत्वादिति भावः । निरवयवानां गुणकर्मादीनाम् । सावयवपदार्थस्यैव द्रव्यारम्भकत्वादिति भावः । ननु निरवयवानामपि परमाणूनां द्व्यणुकाख्यद्रव्यारम्भकत्वं दृष्टमिति कथमिदमनिष्टमिति चेन्न । द्रव्यारम्भकशब्देन महद्द्रव्यारम्भकत्वस्याभिप्रेतत्वात् ॥ **अन्त्यावयवित्वहानिश्चेति** ॥ कार्यद्रव्यत्वे सति द्रव्यान्तरानारम्भकत्वं ह्यन्त्यावयवित्वम् । यदि घटादीनामपि जगदाख्यद्रव्यारम्भकत्वन्तर्ह्यन्त्यावयवित्वहानिः स्यादित्यर्थः । ननु न घटादिपदार्थैरारब्धं जगदाख्यं पदार्थं पक्षीकृत्य तस्य स्वान्तर्भेदहीनत्वं साध्यते । येनोक्तदोषः । किन्तु घटादिकमेव पक्षीकृत्य तस्य स्वान्तर्भेदहीनत्वं साध्यते । अतो नोक्तदोष इत्यत आह — **घटादीति** ॥ स्वान्तर्भेदशब्देन हीनशब्दसाहितेनेति शेषः । अतः स्वानतर्भेदशब्दमात्रस्य भेदाभावासाधकत्वात्कथमिदमिति चोद्यानवकाशः ॥ **सिद्धसाधनमिति** ॥ घटादीनां स्वाप्रतियोगिकभेदाभावस्यास्माभिरप्यङ्गीकारादिति भावः । **साध्यविकल इति** ॥ घट मठाकाशादीनामन्योन्यभेदस्यैव सद्भावादिति भावः । तत्रोक्तबाधकपरिहारायाह — **आकाशभेदेति** ॥ अन्यत्र मन्दारमञ्जर्याम् । आत्माभेदसाधकानुमाननिराकरणमुपसंहरति — **तस्मादिति** ।

(३६) यच्चेदमुच्यते (घटपटाद्यभेदेऽनुमानं प्रमाणमिति) । विमतं घटादि पटप्रतियोगिक(तात्विक)तादात्म्याधिकरणम् अभिधेयत्वात् प्रमेयत्वाद्वा पटवत् । पटो वा न घटाद्वस्तुतो भिद्यते द्रव्यत्वात् पृथिवीत्वाद्वा घटवदिति । अत्रेदं वक्तव्यम् । मुद्गरप्रहारादिना घटः किं नश्यत्युत नेति । न चेदनित्यत्वप्रतिपादकश्रुतिविरोधोऽपसिद्धान्तश्च । घटार्थं क्रियमाणव्यापारवैयर्थ्यं च स्यात् । (घटाद्यर्थ-क्रियाकरणादिदोषापत्तिश्च ।) आद्ये तदैव गगनादिरविद्याप्रपञ्चः (गगनाविद्यादिप्रपञ्चः) किं नश्यत्युत नेति । आद्ये (घटाद्यर्थ)क्रियाभावः प्रसज्येत । गगनाविद्ययोर्नाशायोगाच्च । महाप्रलयमोक्षौ च स्याताम् । द्वितीये कथं पटस्य घटादिना पारमार्थिकाभेदः । न हि नष्टे रजतेऽनुवृत्तायाः शुक्तेः पारमार्थिका-भेदः । दूरस्थवनस्पत्योरभेदग्राहि च प्रत्यक्षं तत्त्वावेदकप्रमाणं स्यात् । वस्तुतस्तयोस्तादात्म्यादिति प्रतिकूलतर्का ऊह्याः । अभेदसाधकानुमानमात्रस्य प्रत्यक्षानुमानागमबाधकतर्कपराहति-सोपाधिकत्वाभाससमानयोगक्षेमत्वादीनि साधारणदूषणानीति । अद्वैतश्रुतयस्तु भगवत्पादैरेवान्यत्रान्यथा व्याख्याताः ॥ छ ॥

रमानाथाय हरये पूर्णानन्दशरीरिणे ।
निर्दोषगुणपूर्णाय सर्वयज्ञभुजे नमः ॥
(रमानाथाय रामाय सर्वयज्ञभुजे नमः ॥
निर्दोषगुणपूर्णाय पूर्णानन्दशरीरिणे ॥ १ ॥)

॥ इति श्रीमत्पदवाक्यप्रमाणपारावारपारङ्गतश्रीमद्ब्रह्मण्यतीर्थपूज्यपादशिष्येण व्यासयतिना कृतं भेदोज्जीवनं समाप्तम् ॥

(॥ इति श्रीब्रह्मण्यपूज्यपादानां शिष्येण व्यासयतिना रचितं भेदोज्जीवनं सम्पूर्णम् ॥ छ ॥)

(३६) (भ.) एवं केनचिच्छङ्कितमनुमानचतुष्टयं निराकृत्यापरेण शङ्कितमनात्मभेदसाधकमनुमानद्वयमपि निराकर्तुमनुवदति ॥ **यच्चेदमुच्यत इति** ॥ अत्र घटवदित्यनन्तरमिति शब्दोऽध्याहार्यः ॥ **अपसिद्धान्तश्चेति** ॥ परेणापि घटादेर्मिथ्यात्वसिद्ध्यै परिच्छिन्नत्वाङ्गीकारेण व्यावहारिक-विनाशाङ्गीकारादिति भावः ॥ **घटाद्यर्थक्रियेति** ॥ मुद्गरादिप्रहारानन्तरमपि तेन घटेन जलाहरणाद्यर्थक्रियाकरणरूपदोषश्चेत्यर्थः । आपत्तिश्चासौ दोषश्चेति दोषापत्तिरिति विपरीतसमासः ॥ **तदेवेति** ॥ घटनाशकाल एवेत्यर्थः । न गगनाविद्यादीत्यादिपदेन स्तम्भादिसङ्ग्रहः । जगदभेदवादे घटस्य पटेनैव गगनादिनाऽप्यभेदात्तदैव विनाशः सम्भावित इति विकल्पोपपत्तिः ॥ **उत नेतीति** । वक्तव्यमित्यनुवर्तते ॥ **घटाद्यर्थक्रियाभाव इति** ॥ तेषां गगनादीनां याऽर्थक्रियाऽवकाशदानादिरूपा तदभावः प्रसज्येतेत्यर्थः ॥ **गगनाविद्ययोर्नाशायोगाच्चेति** ॥ गगनस्य व्यावहारिकनित्यत्वेनाविद्याया ज्ञानैकनिवर्त्यत्वेन मुद्गरप्रहारादिना घटनाशकाले तयोर्विनाशो न युज्यत इति भावः । तयोर्व्यापकत्वेन नाशायोगादित्यप्याहुः । तादृशयोरपि गगनाविद्ययोरितरेषां चेदानीमेव नाशाङ्गीकारे किं बाधकमित्यत आह — **महाप्रलयमोक्षौ स्यातामिति** ॥ तदैवेत्यनुवर्तते । तथा च यदि घटनाशकाले सर्वविनाशः स्यात्तर्हीदानीमेव महाप्रलयः स्यात् । अविद्याविनाशे चेदानीमेव मोक्षोऽपि स्यादित्यर्थः ॥ **द्वितीय इति** ॥ घटनाशेऽपि गगनादीनामनाशश्चेदित्यर्थः ॥ **कथमिति** ॥ नष्टानष्टयोः पारमार्थिकाभेदायोगादिति भावः । तदेवोपपादयति — **न हीति** ॥ **पारमार्थिकाभेद इति** ॥ नष्टरजतेनेति शेषः । अत्र सर्वस्यापि व्यावहारिकप्रपञ्चस्य विप्रतिपत्तिविषयतया नष्टानष्टघटपटयोर्निदर्शयितु-

मशक्यत्वात्प्रातिभासिकव्यावहारिके रजतशुक्ती एव निदर्शयति । न हि व्यावहारिकयोर्घटपटयोरिव प्रातिभासिकव्यावहारिकयोः रजतशुक्त्योः पारमार्थिकाभेदोऽङ्गीकर्तुं शक्य इति ॥ जडाभेदसाधकानुमाने तर्कपराहतिं चाह[1] ॥ **दूरस्थेति** ॥ यदि जडानां पारमार्थिकोऽभेदस्तर्हीति पूरणीयम् । एवं प्रत्येकमनुमानानि दूषयित्वा साधारणदूषणैरपि दूषयति — **अभेदसाधकानुमानमात्रस्येति** ॥ विमता आत्मान इत्याद्यनुमान-षट्कस्यापीत्यर्थः । योगक्षेमत्वादीत्यादिपदेनाप्रयोजकत्वपरिग्रहः । तथा हि । आद्यानुमानस्य तावन्नाहं सर्वज्ञो न निर्दुःख इत्यादिप्रत्यक्ष-पराहतिः । द्वा सुपर्णेत्यागमपराहतिः । जीवो ब्रह्मप्रतियोगिक-धर्मिसमानसत्ताकभेदाधिकरणम् । ब्रह्माननुसंहितदुःखानुसन्धातृत्वादि-त्याद्यनुमानपराहतिः । परमात्मत्वेन सोपाधिकत्वम् । विमता आत्मानः परमात्मनोऽपरमार्थतोऽपि न भिद्यन्ते आत्मत्वात्परमात्मवदि-त्याभाससमानयोगक्षेमत्वम् । अस्त्वात्मत्वं तथाऽपि साध्यं माऽस्त्वित्य-प्रयोजकता च । विमतानि शरीराणि देवदत्तस्यैव भोगायतनानीत्यनु-मानस्य न मम यज्ञदत्तशरीरं भोगायतनमिति देवदत्तीयप्रत्यक्षपराहतिः । भिन्नाश्च भिन्नधर्माश्च पदार्था इत्याद्यागमपराहतिः । विमतानि शरीराणि न देवदत्तस्यैव भोगायतनानि देवदत्तानधिष्ठितत्वात् व्यतिरेकेण देवदत्तशरीरवत् । न चासिद्धिः । देवतत्तो न यज्ञदत्तादिशरीराधि-ष्ठाताऽव्यापकत्वाद् व्यतिरेकेणेश्वरवदित्यनुमानेन तत्सिद्धेः । तथा चानुमानपराहतिः । देवदत्ताधिष्ठितत्वमुपाधिः । विमतानि कलत्राणि देवदत्तस्यैव भोगायतनानि कलत्रत्वाद्देवदत्तकलत्रवदित्यभाससाम्यम् ।

---

[1] `तर्कपराहतीन्याह' मु.

अनुकूलतर्काभावेन हेतोरप्रयोजकता च । भेदो मिथ्येति तृतीयानुमानेऽपि नाहं सर्वज्ञो नापि यज्ञदत्तो नापि च घट इत्यादिदेवदत्तप्रत्यक्षविरोधः । सत्यं भिदेत्याद्यागमविरोधः । भेदः सत्यः प्रमाणदृष्टत्वादात्मवदित्यनुमानविरोधः । आरोपितत्वमुपाधिः । अभेदो मिथ्याऽभेदत्वाद्देहात्माभेदवदित्याभाससाम्यं चोक्तमेव । भेदाभेदभेदे वा ब्रह्मप्रपञ्चभेदे वा भेदत्वसद्भावेऽपि मिथ्यात्वादर्शनादप्रयोजकता च । चतुर्थानुमाने घटादीनामन्योन्यभेदस्याबाधितप्रत्यक्षसिद्धत्वात्सुलभैव प्रत्यक्षपराहतिः । भिन्नाश्च भिन्नधर्माश्च पदार्था निखिला अपीत्यागमविरोधः । घटो न पटादिभ्यस्तात्त्विकभेदशून्यः । घटत्वाद् व्यतिरेकेण पटवदित्याद्यनुमानविरोधः । ईश्वरत्वमुपाधिः । विमतं तात्त्विकस्वान्तर्भेदवत्क्लृप्यत्वादित्यपि प्रयोक्तुं शक्यत्वादाभाससाम्यमप्रयोजकता च । एवमेव पञ्चमषष्ठयोरपि प्रत्यक्षादिपराहतिः सोपाधिकत्वं चोपपादनीयम् । अथ श्रुतयश्च नेह नानेत्यादिका अभेदबोधिकेत्युक्तं निराकरोति — **अद्वैतश्रुतयस्त्विति** । अन्यत्र बृहदारण्यभाष्यादावन्यथा इह ब्रह्मणि किञ्चन नाना भिन्नं गुणकर्मादिकं नानात्वं वा नास्तीत्येवं भगवति भेदाभावपरतया नेह नानाऽस्ति किञ्चनेति श्रुतिर्व्याख्याता । तत्त्वमस्यादिकास्तु सादृश्यपरतया व्याख्याता इत्यर्थः । यथोक्तमनुव्याख्याने —

'स्वातन्त्र्ये च विशिष्टत्वे स्थानमत्यैक्ययोरपि ।
सादृश्ये चैक्यवाक् सम्यक् सावकाशा यथेष्टत' इति ॥

इति शब्दस्येत्ययं परिहार इति पूर्वप्रतिज्ञावाक्येन सम्बन्धः । समाप्तिद्योतकत्वं वा । हेत्वर्थको वाऽयमिति शब्दः । तस्माद्विष्ण्वाख्यस्य ब्रह्मणश्चेतनाचेतनात्मकविश्वभिन्नत्वं सिद्धमित्युपसंहारवाक्यशेषेणान्वयः ।

एवं समापितप्रकरणः श्रीमद्व्यासतीर्थमुनिराट् यदर्थमनेन प्रकरणेन विष्णोर्विश्वतो भेदं समर्थितवान् तल्लक्षणविशिष्टतया विष्णुंस्तुवन्नमति ॥ **रमानाथायेति** ॥ निर्दोषश्चासौ गुणपूर्णश्चेति विग्रहः । यथा गुणपूर्णत्वसिद्ध्यर्थं विश्वभेदसमर्थनमेवं निर्दोषत्वसिद्ध्यर्थमपि भवतीति भावेन निर्दोषेत्युक्तिः । एतेनादिमश्लोकेऽपि निर्दोषत्वेन चेत्युपलक्षणया ग्राह्यमिति सूचयति । यथोक्तमनुव्याख्याने —

'........तस्य भेदश्च सर्वतः ।
अदोषत्वसिद्ध्यर्थं यदभेदे तदन्वय 'इति ॥

भगवन्नमनमिव भगवतीनमनमपि भगवत्प्रीतिहेतुरिति ज्ञापनायोक्तं **रमानाथायेति** ॥ स्वकृतग्रन्थस्य वाग्यज्ञरूपत्वात्तेन सर्वयज्ञभोक्ता भगवान्प्रीणात्विति भावेनोक्तं **सर्वयज्ञभुज इति** ॥ यथोक्तं न्यायामृतान्ते —

'मत्प्रेरकेण हरिणा या पूजा स्वस्य कारिता ।
वाग्यज्ञरूपा लक्ष्मीशस्तया प्रीणातु केशव ' इति ॥

नन्वशरीरश्चेद्विष्णुः कथं तस्य सर्वयज्ञभोक्तृत्वम् । शरीरी चेद्यज्ञदत्तवदन्तवान् स्यात् । किञ्च यज्ञभोक्तृत्वाङ्गीकारे तस्यापूर्णताप्रसङ्गः । अपूर्णस्यैव लोके भोगदर्शनादित्यत उक्तम् — **पूर्णानन्दशरीरिण इति** ॥ अस्त्येव भगवतः शरीरम् । तच्चान्दादिगुणात्मकमेव । अतो न भोक्तृत्वानुपपत्तिर्नापि मृत्यादिदोषानुषङ्गः । न च तर्हि भोक्तुरपूर्णतापत्तिः । पूर्णानन्दस्यापि क्रीडाभोगोपपत्तेरिति भाव इत्यशेषमतिमङ्गलम् ॥ छ ॥

निर्दोषोरुगुणार्णवाय निखिलाम्नायैकवेद्याय ते
सत्याशेषजगज्जनिस्थितिलयज्ञानादिसद्धेतवे ॥
श्रीमन्मध्वहृदब्जसद्मनिवसद्धंसाय कंसद्विषे
संसेवत्सु मनः स्वभीष्टतनवे श्रीकृष्णवृष्णे नमः ॥ १ ॥

भेदोज्जीवनभावदीपनमिदं वाग्बुद्धिशुद्ध्यै कृतं
पूर्वाचार्यवचो विचार्य सरसं सङ्गृह्य सारं ततः
बालिश्याद्बत शैशवं खलु मया प्रादर्शि
तत्क्षम्यतां वत्सानामिव मातुरौधसपयः पाने प्रसक्तं बुधैः ॥ २ ॥

क्रोडार्यपादपाथोऽजभाजा भगवता कृता ॥
भूयाद्भगवतः प्रीत्यै भेदोज्जीवनपञ्चिका ॥ ३ ॥ छ ॥

॥ इति श्रीमद्भास्करीवेङ्कटवराहाचार्यपूज्यचरणचरणाराधकेन भगवन्नम्ना विरचितो भेदोज्जीवनभावप्रदीपः समाप्तः ॥ छ ॥ छ ॥

(३६) (मु.) विमतं घटादीति । येन भास्करादिना । जगदादीनामपि सत्यत्वं स्वाभाविकभेदाभावश्चाङ्गीक्रियते तस्येदमनुमानमिति ज्ञेयम् । अत्र तात्त्विकपदं स्वाभाविकपरम् । यद्वा मायावादिन एवेदमनुमानम् । अत्र तात्त्विकतादात्म्याधिकरणमित्यस्य तात्त्विकभेदाधिकरणं न भवतीत्यर्थः ॥ श्रुतीति ॥ श्वोभावो मर्त्यस्येत्यादिरुदाहर्तव्या ॥ घटाद्यर्थक्रियेति ॥ यदि मुद्गरप्रहारादिना घटो नश्यति तर्हि तदनन्तरमपि जलाहरणादि-क्रियापत्तिरित्यर्थः ॥ तदैवेति ॥ घटनाशकाल एवेत्यर्थः ॥ घटाद्यर्थक्रियाभाव इति ॥ घटनाशे पटादीनामपि नाशेन तदर्थक्रियाऽपि न स्यादित्यर्थः ॥ नाशायोगाच्चेति ॥ नित्यत्वादिति भावः । सर्वस्यापि प्रलयो मोक्षश्च स्यादित्याह — महाप्रलयेति ॥ कथामिति ॥ घटनाशेऽप्यनष्टस्य तदभेदायोगादिति भावः । तत्र दृष्टान्तमाह — न हीति ॥ भ्रमोत्पन्न-रजतस्य बाधेऽप्यबाधितायाः शुक्तेरजताभेदादर्शनादित्यर्थः । ननु मुद्गरप्रहारेऽपि न घटनाशः । श्रुतिस्तु सर्वेषां प्रलये युगपन्नाशेनापि चरितार्था । न च मुद्गरप्रहारानन्तरं घटानुपलम्भविरोधः ।

व्यञ्जकाभावेनोपपत्तेः । तात्कालिकवचनं त्वदर्शनमात्रविषयम् । नष्टो घट इति प्रत्यक्षं त्वव्यक्तत्वं गोचरयति । व्यक्तस्यैवार्थक्रियाकारित्वान्नार्थक्रियापत्तेश्चेत् । मैवम् । नित्यस्याकाशादेः कदाऽपि नाशाभावेन तदात्मकस्याप्यनाशेन श्रुतिव्याकोपात् । किञ्च व्यञ्जकाभावः किमत्यन्ताभावो ध्वंसो वा । आद्ये न कदाऽपि घटो पलब्धिः स्यात् । द्वितीये सर्वेषां युगपन्नाश इत्यस्य भङ्गापत्तिः । न च व्यञ्जकस्याप्यनभिव्यक्तिरेव न नाश इति वाच्यम् । अनवस्थापत्तेः । ननु तथाऽपि व्यावहारिकभेदबलेनैकस्य नाशेऽप्यन्यस्यानाशोपपत्तिरिति वाच्यम् । तस्य व्यवहारतो नाशाभावेऽपि परमार्थतस्तदवश्यम्भावात् । न चेष्टापत्तिः । घटनाशात्पूर्वमुत्तरत्र च गगने विशेषानुलम्भादित्यलमतिपरिहसनीयप्रक्रियानिरासायासलेशेन । जडानां तात्त्विकाभेदे बाधकतर्कं चाह — **दूरस्थेति** ॥ **अद्वैतश्रुतय इति** ॥ अद्वैतपरतया पराभिमता इत्यर्थः ॥ **अन्यथेति** ॥ ईश्वरीयस्वान्तर्भेदाभावस्वातन्त्र्यविशिष्टत्वकारकशक्तिधारकत्वान्तर्नियामकत्वसर्वव्याप्तत्वसादृश्यप्रियत्वस्थानैक्यमत्यैक्यसायुज्यादिविषयतयेत्यर्थः । एवं स्वातन्त्र्याद्यशेषभिन्नो हरिः सर्वोत्तम इत्यशेषगुणाकरत्वादन्योन्यभिन्नजीवजडात्मकात्प्रपञ्चादत्यन्तमतिमङ्गलम् ॥ छ ॥ छ ॥

**प्रत्यक्षैः सकलात्मसाक्षिभिरलं निःशेषदोषोज्झितैः**
**प्रत्यक्षागमसम्मताङ्गनिचयैर्निर्बाधतर्कैरपि ॥**
**साङ्गाम्नायपुराणसस्मृतिकलासूत्रेतिहासागमै-**
**र्भिन्नोऽस्मत्प्रमितः परात्परतमः श्रीशोऽस्तु मे प्रेयसे ॥ १ ॥**

**मुरारि कल्पाङ्गं बलयति रमाकल्पलतिका वरा**
**कल्पानल्पप्रसवफलपत्रालिमहिता ॥**

करालम्बास्माकं मुरहरनगारोहणविधौ
सुरामावासा जनयतु मनीषारथफलम् ॥ २ ॥

प्रारिप्सोर्जगदीश्वरस्य जगतीं नाट्यादिरङ्गायते
स्वैरं विश्वधुरं बिभर्ति युवराड्यः स्थापनेच्छोरपि ॥
नासीरः किल वीरभूषणमणिर्यः सञ्जिहीर्षोरसौ
वायुर्व्यासदिवाकरस्य तरणी भूतोस्ति मध्वात्मना ॥ ३ ॥

मूढः प्रौढाग्रगण्यो भवति हि बधिरो वाग्धराणामुदारो
मूकः स्याद्वावदूको कुकृतिरपगतिः पङ्गुराक्रान्तिगुः स्यात् ॥
व्यङ्गो भूयादनङ्गः कुमतिरपि नृपः पण्डकः पुंप्रवीणो
यत्तुष्टिस्वृष्टिमात्रात्सकलमविकलं साऽवताद्भारती नः ॥ ४ ॥

जयार्यवचनाङ्गतागहनभावनानारसा
चकास्ति चतुरालयाचरितचारनानापदि ।
गुरूक्तमणिसन्ततेर्दृढसुवर्णसूत्रैरलं
विकीर्णविविधत्रयीकचनिबन्धसैरन्ध्रिका ॥ ५ ॥

वाणी यस्य सतां सुधारसकरी माधुर्यसारोपमा
स्वातन्त्र्यासिकठोरतेजितमहाप्रासाग्रधारा सताम् ।
दृष्टादुष्टजनाघपुण्यफलसम्प्राकारितो व्यासराट् सोऽयं मे
दिशतात्कुशाङ्कविशिरः पट्टाग्रभूषामणिः ॥ ६ ॥

यज्जिह्वा सिंहपीठे विलसति वचसां राज्यसाम्राज्यलक्ष्मीर्यत्स्वान्तः
श्रीर्निशान्ते विहरति स हरिः कान्तया क्लान्तिहीनः ॥
ये श्रीमध्वार्यवाणीविवरणविदुषामग्रगण्या वरेण्यास्ते तीर्थाचार्यवर्या मम
किल गुरवो विठ्ठलार्यप्रसूताः ॥ ७ ॥

मुद्गलार्यतनूजेन जनार्दनपुरौकसा ।
शर्मणाऽऽनन्दतीर्थेन यथा प्रज्ञमभाषि वाक् ॥ ८ ॥

भेदचिन्तारत्नमिदं मध्वशास्त्राब्धिसम्भवम् ।
बुद्धिशाणसमुल्लीढं ध्रियतां हरिणा हृदि ॥ ९ ॥

इति श्रीपदवाक्यपारङ्गतव्यासतीर्थपूज्यचरणकृतभेदोज्जीवनविवरणं भेदचिन्तारत्नं समाप्तम् ॥ छ ॥ छ ॥

(३६) (कु.) ॥ **अपसिद्धान्तश्चेति** ॥ ब्रह्मज्ञानेनाविद्यकनिवृत्तेरङ्गीकारात् प्रत्यक्षविरोधश्च बोध्यः ॥ **घटाद्यर्थक्रियाकरणदोषापत्तिरिति** ॥ मुद्गरप्रहरोत्तरमपि घटसत्त्वे घटाद्यर्थक्रिया स्यादित्यर्थः । क्वचित्तु घटार्थं क्रियमाणव्यापारवैयर्थ्यं स्यादिति पाठः ॥ **गगनाविद्ययोरिति** ॥ **व्यापकस्य नाशादर्शनादित्यर्थः** ॥ **महाप्रलय इति** ॥ घटपटादिवत्प्रपञ्चान्तर्गतस्य सर्वस्य नाशे महाप्रलयस्य च मोक्षस्य च नाशः स्यादित्यर्थः । द्वितीये घटादीनां नाशेऽपि गगननाशे कथं घटपटादिना गगनादेः पारमार्थिको भेद इत्यर्थः । शुक्तेः पारमार्थिकभेदो रजते न यदिति जडानां पारमार्थिकभेदः स्यादिति तर्के आपादकं पूरणीयम् । एवं प्रातिस्विकाननुमानदोषानभिधाय साधारणानपि तानाह — **अभेदसाधकानुमानमात्रस्येति** ॥ आदिपदेनाप्रयोजकत्वसत्प्रतिपक्षौ । एतानि तु तत्र प्रदर्शितान्येव कानिचित्पुनरूह्यानीति भावः । एवमनुमानान्तरेऽपीति ॥ **अद्वैतश्रुतय इति** ॥ ता विवृताश्च व्याख्याता अस्माभिरन्यत्र बोध्यम् । तथा च युज्यते विष्णवाख्यस्य परब्रह्मणो विश्वभिन्नत्वमित्युपसंहारोऽपि बोध्यः ॥ छ ॥ छ ॥

व्यासहंसगतिः कुत्र मादृक् क्वापि गतिः क्व वा ।
अनयोरिहसंयोगं मन्ये नृहरिसाधितम् ॥ १ ॥

तर्ककर्कशकशावशतश्चेद्गौरियं विचलिता गुरूमागति ।
गृष्टिरित्यपि विचिन्त्य दयातः साधुभिः सपदि तत्र विधेया ॥ २ ॥

विद्वच्चकोरास्तृप्यन्तु भेदचन्द्रिकयाऽनया ।
भेदोज्जीवनटिप्पण्यानिरूढार्थविलोकनात् ॥ ३ ॥

इति श्रीकुम्भारीनारायणाचार्यसूनुवासुदेवाचार्यविरचिता भेदोज्जीवनटिप्पणी भेदचन्द्रिका समाप्ता ॥ छ ॥ छ ॥

(३६) (हु.) ॥ तात्त्विकेति ॥ प्रातिभासिकतादात्म्यमादाय सिद्धसाधनतावारणाय ब्रह्मस्वरूपेण तादात्म्यं तयोर्वास्तवमित्यभिमानः ॥ वस्तुत इति ॥ तादृशभेदमुपादाय बाधवारणाया नित्यत्वेति ॥ `ततोऽन्यदार्त'मिति श्रुतीत्यर्थः ॥ अपसिद्धान्तश्चेति ॥ महाप्रलये सर्वेषां कारणावस्थापन्नरूपलयाङ्गीकारादित्यर्थः[1] ॥ घटाद्यर्थमिति ॥ पुनर्घटोत्पत्त्यर्थमित्यर्थः । अन्यथा घटस्य सिद्धत्वात्तद्वैयर्थ्यापात इति भावः । घटार्थक्रियाकरणदोषापत्तिरिति पाठे घटस्य जलाहरणादिरूपा या क्रिया तत्करणप्रसङ्गादित्यर्थः ॥ क्रियाभाव इति ॥ आकाशाभावेन नित्यं तत्क्रियोत्पत्तेरदर्शनादित्यर्थः ॥ नाशायोगादिति ॥ निरवयवत्वेन समवायिकारणनाशरूपकारणाभावात् । नित्यत्वेन कारणशून्ययोः कारणात्मना स्थितिरूपलयायोग इत्यर्थः ॥ महाप्रलयेति ॥ सर्वप्रपञ्चस्य नाशाङ्गीकारपक्षे तन्नाशावश्यकत्वादिति भावः ॥ द्वितीये इति ॥ गगनानीनां नित्यत्व इत्यर्थः ॥ कथमिति ॥ प्रमेयत्वाभिधेयत्वादिहेतुमत्सु

---

[1] `-स्थानापन्न-' मु.

गगनादिषु पटप्रतियोगिकतात्त्विकतादात्म्याधिकरणत्वाभावेन व्यभिचारादुक्तहेतवः कथं तत्साधयेरन्नित्यर्थः । नाशेऽपि गगनतादात्म्यं वास्तवमङ्गीक्रियत एव पटस्येत्यत आह — **न हीति** ॥ तथात्वे रजतार्थिनः शुक्तौ प्रवृत्तिः स्यादेवेति भावः ॥ **आभाससमानयोगक्षेमत्वादीनीति** । आदिनाऽप्रयोजकत्वसत्प्रतिपक्षौ ग्राह्यौ ॥ **श्रुतय इति** ॥ **व्याख्याता इति** ॥ अस्माभिरपि ता विवृता इति शेषः ॥ **समास इति** ॥ सङ्क्षेपः कृत इत्यर्थः । तस्मात्स्वातन्त्र्यादिगुणविशिष्टो विष्णुरित्युपसंहारवाक्यं पूरणीयमित्यशेषमतिमङ्गलम् ॥ छ ॥

नैजस्वातन्त्र्यादिगुणैः सिद्धभेदस्वरूपवान् ।
चिदचिद्भ्यः स मे व्यासः प्रीतोऽस्तु जगदीश्वरः ॥ १ ॥

दुर्वादिभुजगः[1] परिदर्शनेन नष्टाभिधाममृतवाग्बलतोऽभिरक्षन् ।
यो व्यासराजयतिराट् तदनुव्रतेयं वाणी ममेह विदुषां वितनोतु मोदम् ॥ २ ॥

श्रीमद्व्याघ्रपुरीवासिवासुदेवार्यसूनुना ।
शिष्येण तेषां रचिता भेदोज्जीवनटिप्पणी ॥ ३ ॥

अनया ग्रन्थकृत्या यत्प्राप्तं पुण्यं समस्तशः ।
अस्मद्गुरुहृदब्जस्थप्राणेशायार्पयाम्यहम् ॥ ४ ॥

॥ इति श्रीव्याघ्रपुर्युपनामक श्रीनाथविरचिता भेदोज्जीवनटिप्पणी
भेदसञ्जीवनी[2] सम्पूर्णा ॥

---

[1] इमौ द्वितीयतृतीयश्लोकौ हु.पाठे न स्तः ।

[2] इदं पदं मु.पाठे नास्ति ।

(३६) (का.)

दुरन्तदुर्मतध्वान्तध्वंसकृन्मध्वभास्करः ।
बळित्थेत्यादिवेदोक्तगुणः प्रीतोऽस्तु मे सदा ॥

॥ इति श्रीमद्व्यासराजतीर्थश्रीपादकृतभेदोज्जीवनव्याख्यानं
श्रीमहामहोपाध्यायकाशीतिरुमलाचार्यकृतं समाप्तम् ॥

(३६)(श.) अनात्मभेदसाधकानुमानानां परेणानुक्तत्वादिदानीतान्य-शङ्कते — **यच्चेदमित्यादिना** ॥ अत्र पटाभेदसाधनमुपलक्षम् । एवमेव घटस्यानात्मप्रपञ्चमात्राभेदः साधनीयः । यथा रजतनाशेऽप्यनुवृत्तायाः न शुक्ते रजताभेदः एवं घटनाशेऽप्यनुवृत्तपटादिप्रपञ्चस्यनघटाभेद इत्याशयेनाह — **अत्रेदमित्यादिना शुक्तेः पारमार्थिकाभेद इत्यन्तेन** ॥ **आनित्यत्वप्रतिपादकश्रुतीति** ॥ यमप्येति भुवनमित्यादिश्रुतिविरोध इत्यर्थः ।

॥ **अपसिद्धान्त इति** ॥ मुद्गरप्रहारादिना घटनाशस्यपूर्वाचार्यैरङ्गी-काराच्चयेदानीं तदनङ्गीकारे सिद्धान्तविरोध इत्यर्थः ॥ **घटाद्यर्थक्रियेति** ॥ यदि मुद्गरप्रहारादिना घटो न नश्यति तर्हि तदनन्तरं जलाहरणाद्यर्थ-क्रियाकारित्वप्रसङ्ग इत्यर्थः ॥ तदैव यदा घटो नश्यति तदैवेत्यर्थः । **अर्थक्रियाभाव इति** ॥ घटनाशकाल एवाविद्यानाशे घटान्तराद्युत्पत्तिर्न स्यात् । एवं च जलाहरणादिक्रियालोपः स्यादित्यर्थः ॥ **नाशायोगाच्चेति** ॥ ऐक्यापरोक्षज्ञानेन महाप्रलय एव तन्नाशाभ्युपगमेनेदानीं तन्नाशायोगात् नाशे चेदानीमेव महाप्रलयमोक्षौ स्यातामित्यर्थः । तदेवोपपादयति — **नहीति** ॥ यथा हि नेदं रजतमिति बाधकज्ञानेन रजते नष्टेऽपि शुक्तेर्नाशभावान्न तयोः पारमार्थिकाभेद एवं घटनाशेऽप्यनष्टस्याविद्या-गगनादिप्रपञ्चस्य न घटाभेद इत्यर्थः । अनात्मा भेदसाधकानुमानस्य

तर्कपराहतिमाह — **दूरस्थवनस्पत्योरिति** ॥ यदि जडेपरस्परं पारमार्थिकाभेदोऽङ्गीक्रियते तर्हि दूरे विद्यमानयोर्द्वयोः चूतपनसवृक्षयोरेक एवायं वृक्ष इति योभ्रमोजायते तस्यापि प्रामाण्यं स्तात् । तयोर्वास्तवाभेदेन तदवगाहिनस्तस्य तत्वावेदकत्वादित्यर्थः । एवमात्मानात्मभेदसाधकानुमानानां प्रत्येकं दूषणमभिधायेदानीमभेदमात्रसाधकानुमानसाधारणं तदाह — **अभेदसाधकेति** ॥ **प्रत्यक्षेत्यादि** ॥ विमता आत्मानः परमात्मनः परमार्थतो न भिद्यन्त इत्याद्यात्माभेदसाधकानुमानस्य नाहं सर्वज्ञो न निर्दुःख इत्यादिप्रत्यक्षविरोधः । द्वासुपर्णेत्याद्यागमविरोधः । जीवः ब्रह्मप्रतियोगिकधर्मिसत्तासमानसत्ताकभेदाधिकरणं ब्रह्माननुसंहितदुःखानुसन्धातृत्वात् । व्यतिरेकेण ब्रह्मवदित्यद्यनुमानविरोधः । अनुकूलतर्काभावात्पक्षेतरत्वस्योपाधित्वम् । विमता आत्मानः परमात्मनः परमार्थतोऽपि न भिद्यन्ते आत्मत्वात् परमात्मवदित्यपिसाधयितुं शक्यत्वेनाभाससमानयोगक्षेमत्वम् । विमतं घटादि पटप्रतियोगिकतादात्म्याधिकरणम् अभिधेयत्वादित्याद्यनात्माभेदसाधकानुमानस्य घटः पटो नेत्यादिप्रत्यक्षविरोधः । घटः पटप्रतियोगिकतादात्म्याधिकरणं न भवति प्रतियोगिसामानाधिकरण्यावच्छेदकानवच्छिन्नपटनिष्ठात्यन्ताभावप्रतियोगिधर्माधिकरणत्वात् व्यतिरेकेण पटवदित्याद्यनुमानविराधः । मिथश्च जडभेदोऽयमित्यागमविरोधः । अनुकूलतर्काभावेन पक्षेतरत्वस्योपाधित्वम् । विमतं घटादि व्यवहारोऽपि पटप्रतियोकितादात्म्यानधिकरणं न भवति अभिधेयत्वात् पटवदिति साधयितुं शक्यत्वेनाभावससमानयोगक्षेमत्वमिति विवेकः । इदानीमभेदसाधकश्रुतीर्निराकरोति ॥ **अद्वैतश्रुतय इति** ॥ नेहनानेत्याद्या इत्यर्थः ॥ **अन्यत्रेति** ॥ काठकोपनिषद्भाष्यादौ भगवतो गुणकर्मादिभेदनिषेधकत्वेन व्याख्याता इत्यर्थः

॥ एवं समापितप्रकारणोभगवान् व्यासतीर्थमुनिर्मङ्गलमध्यानिमङ्गलां तानि शास्त्राण्यायुष्मत्पुरुषकाणिभवन्तीमिस्मरणादं तेऽपि तदाचरति ॥ **रमानाथायेति** ॥ हरये नम इति सम्बन्धः । भेदनिरूपणस्य प्रयोजनसूचनायरमानाथायेति विशेषणम् । अरमापदं चेतनाचेतनात्मक-सर्वजगदुपलक्षणम् । तथाच चेतनाचेतनात्मकजगन्नाथायेत्यर्थः । अनेन भेदसमर्थनसय्यपद्योक्तजगदीश्वरत्वसमर्थनार्थत्वं सूचिमिति ध्येयम् । भेदकधर्मकथनाय सर्वयज्ञभुज इति । तर्ह्यपूर्णत्वं स्यादित्यत उक्तं गुणपूर्णायेति । स्वस्यानन्दादिगुणपूर्णत्वेऽपि भक्तानुग्रहाय भुङ्क्ते नतु तृप्त्यर्थमिति भावः । यत्र गुणास्तत्र दोषा इति नियमाद्दोषवानपिकिमित्यतो निर्दोषेति । निर्दोषश्चासौ गुणपूर्णश्चेति विग्रहः । यद्वा एतदपि-भेदकधर्मकथनम् । ननु हरेः शरीरमस्ति नवा । आद्ये मरणादिप्रसङ्गः । द्वितीये तस्य भोक्तृत्वायोग इत्यत उक्तम् — **पूर्णानन्दशरीरिण इति** ॥ अस्त्येवशरीरं तच्च सुखात्मकं नतु विनाशाविनाभाविप्राकृतम् । अतो नोक्तदोष इत्यशेषमतिमङ्गलम् ॥ ६ ॥

पद्मापद्माजवन्द्यायपद्मपत्रनिभेक्षण ॥
पद्मना भायरामायनमः सत्पद्ममालिने ॥

(शर्कराश्रीनिवासेन बालबोधाय निर्मिता ॥
भेदोज्जीवनव्याख्येयं भूयात्प्रीत्यै रमापतेः ॥
भेदोज्जीवनव्याख्यानलब्धं पुण्यमनुत्तमम् ॥
प्राप्यास्मद्गुरवः प्रीताः क्रियासुः करुणां मयि) ॥

॥ इति श्रीव्यासतीर्थविरचितभेदोज्जीवनस्य व्याख्या
शर्कराश्रीनिवासविरचिता सम्पूर्णा ॥

॥ श्रीमध्वेशार्पणमस्तु ॥

श्रीः

# परिशिष्टम् १

## सटिप्पणिभेदोज्जीवने उल्लिखितानां प्रमाणवाक्यानां सूची

(अत्र '*'चिह्नितानां दशवाक्यानामाकरा नोपलब्धाः । यत्र अध्यायादिसङ्ख्या नोपलब्धा तत्र आकरमात्रमुल्लिखितम् । आवश्यकस्थले भागश उल्लिखितानां समग्रपाठो दर्शितः ।)

'अग्निर्हिमस्य भेषजम्'*

'अग्नीषोमीयं पशुमालभेत' (तैत्तरीयसंहिता षष्ठकाण्डम्)

'अथ कस्मादुच्यते ब्रह्मेति बृहन्तोह्यस्मिन् गुणाः' (आकरः नोपलब्धः । एतत्संवादितया श्रीमध्वाचार्याणां गीतातात्पर्यवचनमुद्ध्रियते - "ब्रह्म परिपूर्णम् । 'अथ कस्मादुच्यते परं ब्रह्म । बृहति बृंहयति' इति च श्रुतिः । बृह बृहि वृद्धाविति पठन्ति । 'परमं यो महद् ब्रह्म' इति च । [गी.ता.१०-१२] - इति"

'अथ सम्पत्स्यते'(छा.उ.६-३-१४ । एतद्वाक्यघटितं समग्रं वाक्यमेवं वर्तते - "यथा सोम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्षमानीय तं ततोऽतिजने विसृजेत् स यथा तत्र प्राङ्वोदङ्वाऽधराङ्वाप्राध्मायीताभिनद्धाक्ष आनीतोऽभिनद्धाक्षो विसृष्टस्तस्य यथाऽभिनहनं प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा एतां दिशं व्रजेति स ग्रामाद् ग्रामं पृच्छन् पण्डितो मेधावी गान्धारानेवोपासम्पद्येतैवमेवेहाऽचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सत् सम्पत्स्यत इति स य एषोऽणिमैतदात्म्यमिदं सर्वं तत् सत्यं स आत्माऽतत् त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥" - इति ।)

'अदुःखमितरत्सर्वं जीवा एव तु दुःखिनः ।
तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते'

(परमश्रुतिः । अनुव्याख्याने द्वितीयाध्यायद्वितीयपादे उदाहृता)

'अधिष्ठानं च सदृशतथ्यवस्तुद्वयं विना ।

न भ्रान्तिर्भवति क्वापि स्वप्नमायादिकेष्वपि' (अनु.व्या. ३-१)

'अनश्नन्नन्यः' (आथ.उ.५-१ । पश्यत 'द्वा सुपर्णा')

'अनादिकालतो वृत्तास्समया हि प्रवाहतः' ('नचोच्छेदोऽस्ति कस्यापि समयस्य' इत्युत्तरार्धे एतत्समन्द्धो भागः । अनुव्याख्यानम् २-२-१)

'अनुकूलेन तर्केण सनाथे सति साधने ।

साध्यव्यापकताभङ्गात्पक्षे नोपाधिसम्भवः'

(विष्णुतत्वविनिर्णयटीकायां 'प्रामाण्यं च स्वत एव । अन्यथाऽनवस्थानात् ।' इति

वाक्यव्याख्यानावसरे उल्लिखितम् ।)

'अन्यमीशम्'(आथ.उ.३-१-२. पश्यत 'जुष्टं यदा')

'अन्यानन्दादिसादृश्यमानुकूल्यादिना परे' (अनु.व्या. ३-२ अन्ते)

'अन्येभ्योऽपि दृश्यते'(पाणिनिसूत्रम् ३-३-१३०)

'अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता । प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ्' (मीमांसाग्रन्थे न्यायप्रकाशेऽपि अभियुक्तोक्तिरितीदमुल्लिखितम्)

'अव्ययं विभक्ति-समीप-समृद्ध्यर्थाभावात्यासम्प्रति-शब्दप्रादुर्भाव-पश्चाद्-यथानुपूर्व्य-यौगपद्य-सादृश्य-सम्पत्ति-साकल्यान्तवचनेषु' (पाणिनिसूत्रम् २-१-६)

'अष्टाशीतिसहस्राणि विस्तीर्णो योजनानि तु । प्रमाणं तत्र विज्ञेयं कलाः पञ्चदशैव तु ।' (याजुर्वेदिकी सोमोत्पत्तिरिति प्रथिते उपविंशतिश्लोकात्मके ग्रन्थे अयं श्लोक उपलभ्यते )

'असदेवेदमग्र आसीत्' (छा.उ.३-१-१,६-२-१)

'असम्भावनीयावभासचतुरा हि सा' (पञ्चपादिका)

'अस्मत्पक्षे गुणाद्याश्च तद्वन्तो हि विशेषतः ।

अनन्यत्वान्नाऽनवस्था' (अनु.व्या.वैशेषिकाधिकरणम्)

'अस्य महिमानम्'(आथ.उ.३-१-२. पश्यत 'जुष्टं यदा')

'आत्मन आकाशः सम्भूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । पृथिव्या ओषधयः' (तै.उ.२-१-१)

'आनन्दं ब्रह्मणो विद्वान्' (तै.उ.२-४)

'आनन्दो विषयानुभवः सत्ता चेति सन्ति त्रयो धर्माः, अपृथक्त्वेऽपि चैतन्यात्पृथगिवावभासन्ते' (पञ्चपादिकायां प्रथमाधिकरणे प्रथमवर्णके)

'आशिषि लिङ्लोटौ'(पाणिनिसूत्रम् ६-६-१२३)

'आश्रयव्याश्रयसिद्धी साध्यासिद्धिश्च दूषणम् । केषाञ्चिन्न हि ते दोषाः व्याप्तौ सत्यां कथञ्चन' (अनु.व्या.३-२ सन्ध्याधिकरणम्)

'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः' (भ.गी. १४-२)

'इदमः प्रत्यक्षगतं समीपतरवृत्ति चैतदो रूपम् । अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात्' (दिनकरीशब्दखण्डे शक्तिविचारावसरे उल्लिखितम्)

'इदमर्थवस्त्वपि भवेद्रजते परिकल्पितं रजतवस्त्विदमि' (१-३४ सङ्क्षेपशारीरकम्)

'इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः । नाकस्य पृष्ठे सुकृते तेऽनुभूत्वा इमं लोकं हीनतरं वा विशन्ति' (आथर्वणश्रुतिः १-२-१०)

'ईक्षतेर्नाशब्दम्' (ब्र.सू.१-१-५-१)

'उत्तमः पुरुषस्त्वन्यः' (भ.गी.१५-१७)

'उत्ताना वै देवगवा वहन्ति'*

'उत्सर्गतोऽपि यत्प्राप्तमपवादविवर्जितम् ।

व्यभिचार्यपवादेन मानमेव भविष्यति'(अनु.व्या.३-२ सन्ध्याधिकरणम्)

'उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।

अर्थवादोपपत्ती च लिङ्गन्तात्पर्यनिर्णये' (ब्र.सू.भाष्योदाहृतम् १-१-४)

'ऋजवः सन्तु पन्थाः' (ऋक्संहिता । 'अनृक्षराः' इत्यारम्भः ।)

'एकधैवानुद्रष्टव्यम्' (बृ.उ.४-१-२३)

'एकमेवाद्वितीयम्' (छा.उ. ६-२-१ । 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतः सज्जायत इति कुतस्तु खलु सोम्यैवं स्यादिति होवाच कथमसतः सज्जायेतेति सत् त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहुस्यां प्रजायेयेति तत् तेजोऽसृजत तत् तेज ऐक्षत बहु स्यां प्रजायेयेति तदपोऽसृजत तस्माद् यत्र क्वच शोचति स्वेदते वा पुरुषस्तेजस एव तदध्यापो जायन्ते ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्त तस्माद् यत्र क्वच वर्षति तदेव भूयिष्ठमन्नं भवत्यद्भ्य एव तदन्नाद्यं जायते ॥' इति समग्रपाठः)

'एतत्सर्वं मन एव' (बृ.उ. १-६-९ । 'त्रीण्यात्मनेऽकुरुतेति मनो वाचं प्राणं तान्यात्मनेऽकुरुतान्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषमिति मनसा ह्येव पश्यति मनसा शृणोति कामः सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव तस्मादपि पृष्ठत उपस्पृष्टो मनसा विजानाति यः कश्च शब्दो वागेव सैषा ह्यन्तमायत्तैषा हि नः प्राणोऽपानो व्यान उदानः समानोऽन इत्येतत् सर्वं प्राण एवैतन्मयो वा अयमात्मा वाङ्मयो मनोमयः प्राणमयः ॥' इति समग्रपाठः)

'ऐतदात्म्यमिदं सर्वम्' (छा.उ. ६-३-५,७,९,११,१२,१४,१५,१६ । 'यथा खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत् त्रिवृदेकैका भवति तदुक्तं पुरस्तादेव भवत्यस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां स य एषोऽणिमैतदात्म्यमिदं सर्वं तत् सत्यं तत् सत्यं स आत्माऽतत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥' इति प्रथमस्य समग्रपाठः)

'कथमसतः सज्जायेत' (छा.उ.६-२-१ । पश्यत 'एकमेवाद्वितीयम्')

'कुतस्तु खलु सोम्यैवं स्यादिति होवाच' (छा.उ.६-२-१ । पश्यत 'एकमेवाद्वितीयम्')

'केवलो निर्गुणश्च' (श्वेताश्वतरोपनिषत् ६-११ । 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥')

'जगद्व्यापारवर्जम्' (ब्र.सू.)

'जय जय जह्यजामजित' (भा.१०-९४-१५)

'जयेर्जयाभिभवयोराद्येऽर्थेऽसावकर्मकः । उत्कर्षप्राप्तिराद्योऽर्थो द्वितीयार्थे सकर्मकः' (मायावादखण्डनटीकोदाहृतम्)

'जीवेश्वरभिदा चैव जडेश्वरभिदा तथा ।' (अनु.व्या. १-४ प्रकृत्यधिकरणे उदाहृता श्रुतिः)

'द्वैतं न विद्यत इति तस्मादज्ञानिनां मतम्' (अनु.व्या. १-४ प्रकृत्यधिकरणे उदाहृता श्रुतिः)

'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानम्' (आथ.उ. ३-१-२ । 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥')

'ततोऽन्यदार्तम्' (बृ.उ.५-५-१)

'तत्त्वमसि' (छा.उ.६-३-१४ । पश्यत 'अथ सम्पत्स्यते')

'तत्र तत्र स्थितो विष्णुस्तत्तच्छक्तिप्रबोधकः ।

दूरंतोऽप्यतिशक्तः स लीलया केवलं प्रभुः' (अनु.व्या.१-२-१)

'तदात्मानमेवावेदाहं ब्रह्मास्मि' (बृ.उ.३-४-१०)

'तद्गुणसारत्वात् तद्व्यपदेशः' (ब्र.सू.)

'तद्धैक आहुरसदेवेदमग्र आसीत्' (छा.उ. ६-२-१ । पश्यत 'एकमेवाद्वितीयम्')

'तमासुरावेशवशादजानती सत्यां च सर्वप्रभवौ जगत्प्रभू । निर्दोषसौख्यैकतनू शुभाशिषस्ताभ्यां ददौ सोऽदितिरात्मपुत्रवत्' (म.भा.ता.नि. २०-११८)

'तयोरन्यः'(आथ.उ.५-१ । पश्यत 'द्वा सुपर्णा')

'तस्मादसतः सदजायत' (छा.उ. ६-२-१ । पश्यत 'एकमेवाद्वितीयम्')

'(दधि)त्रपुसं प्रत्यक्षो ज्वरः'*

'त्रिकालसर्वदेशीयनिषेधाप्रतियोगिता । सतोच्यतेऽध्यस्ततुच्छे तं प्रतियोगिनी' (न्यायामृते सत्वनिरुक्तिप्रकरणे)

'दध्ना जुहोति' (तै.ब्रा.२-१-५)

'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' (आरण्यकवचनं स्यात्)

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।

तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥' आथर्वणोपनिषत् ५-१)

'द्वाविमौ पुरुषौ लोके' (भ.गी.१५-१५)

'द्विशब्दो द्वित्वसङ्ख्यायां भेदे चापि प्रयुज्यते' (नानार्थरत्नमाला)

'द्वे ब्रह्मणी वेदितव्ये' (मैत्रा.६-२२)

'धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसङ्ग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ।' (सि.कौ.आत्मनेपदप्रकरणम् ७-१-७)

'न प्रमाणं मनोऽस्माकमयोग्यानुपलब्धिगम् ।

औपाधिकस्थो भेदोऽयं नाध्यक्षमतिगोचरम् ।

प्रमाणसहकारित्वाद्विषयस्याप्यभावतः ।

अप्रमाणं मनोऽस्माकं प्रमादेराश्रयत्वतः'(अद्वैतग्रन्थः)*

'न हिंस्यात्'*

'नरकेऽपि वसन्नीशो नासौ दुःखभुगुच्यते ।

नीचोच्चता हि दुःखादेर्भोग इत्यभिधीयते ।

नासौ नीचोच्चतां याति पश्यत्येव सदा प्रभुः' (ब्र.सू.भा.३-१-१३-१७ उदाहृतं भागवततन्त्रवाक्यम्)

'नष्टानामपि वस्तूनां भेदो नैव विनश्यति' (वैशेषिकाधिकरणन्यायसुधायामुल्लिखितम्)

'नाकस्य पृष्ठे सुकृते तेऽनुभूत्वा इमं लोकं हीनतरं वा विशन्ति' (आथ.उ. १-२-१०)

'निद्रा रतिर्मन्युरहं मदश्च देहेन जातस्य हि मे न सन्ति' (भा.५-१०-११)

'निरञ्जनः परमं साम्यमुपैति' (आथ.उ. ३-१-३ पश्यत 'यदा पश्यः')

'निरनिष्टो निरवद्यः'*

'निषेधस्य निषेधश्च भाव एव बलाद्भवेत्' (अनु.व्या. ३-३ सर्ववेदान्तप्रत्ययाधिकरणम्)

'नीचोच्चतैव दुःखादेर्भोग इत्यभिधीयते' (पश्यत 'नरकेऽपि वसन्नीशः')

'नेह नानास्ति किञ्चन' ('मनसैवानुद्रष्टव्यं नेह नानाऽस्ति किञ्चन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥' बृ.उ.४-४-१४)

'अन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्य' (शाङ्करब्र.सू.भा. १-१-१)

'पक्षतावच्छेदकनानात्वे ह्यंशतः सिद्धसाधनं दोषः' (तत्वचिन्तामणिः)

'पञ्चभेदांश्च विज्ञाय विष्णोः स्वाभेदमेव च ॥

निर्दोषत्वं गुणोद्रेकं ज्ञात्वा मुक्तिर्नचान्यथा' (महाभारततात्पर्यनिर्णयः १-८१)

'परमं साम्यमुपैति' (आथ. ३-१-३ पश्यत 'यदा पश्यः')

'पुण्यपापे विधूय' (आथ. ३-१-३ पश्यत 'यदा पश्यः')

'प्राक् प्रध्वंससदात्वेन त्रिविधोऽभाव इष्यते ।

भावाभावस्वरूपत्वान्नान्योन्याभावता पृथक्' (तत्वसङ्ख्यानम्)

'बह्वीः प्रजाः पुरुषात्सम्प्रसूताः' (आथ.उ.३-५ । 'पुमान् रेतः सिञ्चति योषितायाम्' इति पूर्वार्धम् ।)

'ब्रह्मणोऽप्यल्पदुःखं स्यात्तदप्यनभिमानतः । नास्त्यात्मसम्बद्धतया' (बृ.उ.भाष्यम् ६-३-३३)

'भिन्ना जीवाः परो भिन्नस्तथाऽपि ज्ञानरूपतः ।

प्रोच्यन्ते ब्रह्मरूपेण वेदवादेषु सर्वशः' (भा.ता.)

'भिन्ना प्रकृतिरष्टधा' (भ.गी. ७-४)

'भिन्नाश्च भिन्नधर्माश्च पदार्था निखिला अपि' (अनु.व्या. वैशेषिकाधिकरणम्)

'मायावादिना सर्वस्य कल्पितत्वङ्गीकारात्काल्पनिकी व्यवस्था घटेतापि न तु भास्करस्यातस्तं प्रतीदं दुःखानुसन्धानाद्यापादनम्' (उपाधिखण्डनटीकायाः अर्थानुवादोऽयम्)

'मिथ्यात्वं यदि दुःखादेः' (अनु.व्या. १-१-१ । 'तद्वाक्यस्याग्रतो भवेत्' इत्युत्तरपादः ।)

'मोहस्तु परिशेषतः । अर्धप्राप्तिरिति ज्ञेयो दुःखमात्रप्रतिस्मृतेः' (भा.ता.)

'यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः । तस्मादेतद् ब्रह्म नाम रूपमन्नं च जायते ॥' (आथ.उ.१-१-९)

'यतः स्वरूपतश्चान्यो जातितः श्रुतितोऽर्थतः ।

कथमस्मि स इत्येव सम्बन्धः स्यादसंहितः' (विष्णुतत्वविनिर्णये प्रथमपरिच्छेदे तत्वमसिविचारे 'यं वै सोम्यैतमणिमानम्' इति वाक्यार्थविचारावसरे)

'यत्र द्वैतमिव भवति' (बृ.उ.२-४-४)

'यत्रोभयोः समो दोषः परिहारोऽपि वा समः ।
नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे' (श्लोकवार्तिके शून्यवादे २५२श्लोकः)

'यत्संशयव्यतिरेकनिश्चयौ यत्र प्रतिबन्धकौ तन्निश्चयस्तद्धेतुः' (त.चि. प्रामाण्यवादः)

'यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति । एवं धर्मान् पृथक् पश्यंस्तानेवानुविधावति' (कठोपनिषत् ४-१४)

'यदधीना गुणाश्चैव दोषा अपि हि सर्वशः ।
कथं तस्य गुणा न स्युः स्युर्दोषाश्च कथं पुनः' (अनु.व्या.२-१ अन्ते)

'यदा पश्यः पश्यते रुग्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ।' (आथ.उ.३-१-३)

'यद्धेतुव्यवच्छेदकत्व-' (विमतः भिन्नः मुक्तत्वादिति ग्रन्थादौ प्रस्तुतानुमानस्य हेतुविचारावसरे तत्त्वोद्योतटीकायाम्')

'यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम् ॥' (गरुडपुराणम् अध्यायः १०९ श्लोकः ४४)

'यस्मात्क्षरमतीतोऽहम्' (भ.गी.१५-१८)

'याथातथ्यतोऽर्थान्' (ईशावास्योपनिषत् ८ । 'स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम् । कविर्मनीषी परिभूः स्वयम्भूर्याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥' - इति समग्रपाठः ।)

'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः' (पाणिनिसूत्रम् १-४-१०५)

'येनाश्रुतं श्रुतं भवति' (छा.उ. ६-९-३)

'यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' (तै.उ. २-७)

'रूपवदन्योन्याभावस्तु योग्योऽपि वायावधिकरणे योग्यताविरहान्न गृह्यते । अन्योन्याभावग्रहे तस्याः प्रयोजकत्वात्' (रुचिदत्तेनोपाध्यायमतानुवादे)

'विचित्रशक्तिः' (श्रुतेस्तु शब्दमूलत्वात् इति सूत्रन्यायसुधायामुल्लिखितम्)

'विभेदजनके ज्ञाने' (जाबालदर्शनोपनिषत् ४-६३)

'विरोधे गुणवादः स्यादनुवादोऽधारिते । भूतार्थवादस्तत्त्वानामनुवादस्त्रिधा मतः' (बालप्रकाशनामकग्रन्थे वर्तत इति मीमांसाकोशे लिखितम्)

'व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः । रूपहानिरसम्बन्धो जातिबाधकसङ्ग्रहः' (किरणावल्यां पृथिवीग्रन्थे)

'शुक्तिकाज्ञाने रजतं तत्त्वतो ज्ञातं भवति सा हि तस्य तत्त्वम्' (वाचस्पत्युक्तिः)

'शुभं पिबत्यसौ नित्यं नाशुभं स हरिः पिबेत्' (आथर्वणोपनिषत् ५-१)

'संयोगादेरयुक्तत्वात्तदन्यस्याप्रसिद्धितः । सन्निकर्षस्य तेनेदं भेदसंज्ञेव मानम्'*

'संविदेव हि भगवती विषयसत्त्वोपगमे नः शरणम्' (प्रकरणपञ्चिकायां जातिनिर्णये)

'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ. २-१-१)

'सत्यस्सो अस्य महिमा' (ऋक्संहिता)

'सत्ये एव नीचोच्चत्वलक्षणे विकृती अनुभवति । तादृशविक्रियायाश्च न जीवस्वरूपहानिसम्पादकत्वम्' (न्या.सु.जिज्ञासाधिकरणे बन्धमिथ्यात्वनिरासप्रस्तावे)

'सदेव सोम्येदमग्र आसीत्' (छा.उ.६-२-१ । पश्यत 'एकमेवाद्वितीयम्')

'सन्दिग्धसाध्यवान्पक्षः' (प्रपञ्चमिथ्यात्वानुमानखण्डने अन्ते)

'समानं वृक्षम्' (आथ.उ.५-१ । पश्यत 'द्वा सुपर्णा')

'सर्व एव शुभः कालः'*

'सर्वदा जयतो विष्णोर्जयस्तस्य प्रकाशनम् । श्रवणं दृष्टिरित्यादिप्रार्थ्यं तज्ज्ञापनं स्मृतम् । शृणोति पश्यति ह्येष जयतीत्यादिकं स्वतः । जय पश्य शृणुष्वेति तत्तज्ज्ञापनमेव तु' (भा.ता. श्रुतिगीता)

'सर्वेषामेव भावानां स्वाश्रयत्वेन सम्मते । प्रतियोगित्वमत्यन्ताभावं प्रति मृषात्मता' (चित्सुखी)

'साक्षी चेता केवलो निर्गुणश्च' (श्वेताश्वतरोपनिषत् ६-११ । पश्यत 'केवलो निर्गुणश्च')

'सुखदुःखादिभोगश्च स्वरूपैक्ये न भेदतः । दृश्यो हि' (उपाधिखण्डनम्)

'सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः' (पाणिनिसूत्रम् ७-१-३९)

'सुप्सुपा' ('सह सुपा' इति २-२-२२तमपाणिनिसूत्रस्य अर्थानुवादोऽयम्)

'सोऽस्माच्छरीरादुत्क्रम्य'*

'स्वतन्त्रः स्वेच्छाधीनप्रवृत्तिः' (तत्वोद्योतटीका मङ्गलश्लोकव्याख्यानम्)

'स्वतन्त्रत्वात्सुखसज्ज्ञानशक्तिपूर्वैर्गुणैः पूर्णः' (भा.ता.)

'स्वतन्त्रस्य पूर्णगुणत्वनियमात्' (न्या.वि.)

'स्वभावजीवकर्माणि द्रव्यं कालः श्रुतिः क्रिया ।' (अनु.व्या. २-२ उदाहृता श्रुतिः)

'द्रव्यं कर्म च कालश्च स्वभावो जीव एव च' (अनु.व्या. १-१ उदाहृता श्रुतिः)

'स्वयं दासास्तपस्विनः'*

'स्वेच्छानुसारितामेव स्वातन्त्र्यं हि विदो विदुः' (अनु.व्या. २-२ )

---------

श्रीः

# परिशिष्टम् - २

(अस्मिन् परिशिष्टे काशिकाविवृतेरुर्वरितो भागः प्रदत्तः । ३६भागेषु विभक्तस्य भेदोज्जीवनस्य अन्तिमानां दशैकादशानां भागानां विवृतिरन्यान्यकारणतो न पूरिता ।)

(३) ॥वस्तुतो निरुक्तभेदवद्वृत्तित्वं तादृशभेदवद्वृत्तिभेदप्रतियोगितायां स्वरूपतोऽनवच्छेदकत्वमिति ॥ अत्रेयमधिकाशङ्का - स्वाश्रयप्रतियोगिकभेदवद्वृत्ति-भेदप्रतियोगितायां स्वरूपतोऽनवच्छेदकत्वं नानाव्यक्तिनिष्ठत्वमिति हि परिष्कृतसाध्यम् । अस्य साध्यस्य पक्षे पर्यवसाने करणीये 'एतदात्मा तदात्मा न' इति भेदः अवश्यं स्वीकार्यः इत्यनुमानप्रयोक्तुराशयः । परन्त्वस्यानुमानस्य बाधः । तथा हि - अत्र 'घटः आत्मा न' इति भेदः स्वीक्रियते । स्वशब्दोपात्तात्मत्वाश्रयात्मप्रतियोगिकभेदवान् घटः । तद्वृत्तिर्भेदः पुनः 'घट आत्मा न' इति । तन्निरूपितप्रतियोगितायामात्मत्वं स्वरूपतोऽवच्छेदकमेवेति बाधः - इति ।

अस्य समाधनप्रकारः परमपूज्यैः श्रीफलिमारुभण्डारकेर्युभयमठाधीशैः श्रीश्रीविद्यामान्यतीर्थैः प्रदर्शितः । परन्तु स न केनापि लिखित्वा संरक्षितः । तदभिहितसमाधानप्रकारस्मरणेन एवं परिहारः सम्भाव्यते - अत्र 'आत्मत्वं भेदविशिष्टम्' इति प्रतिज्ञा । वैशिष्ट्यं च स्वसामानाधिकरण्य-स्वनिरूपितप्रतियोगितानिरूपितस्वरूपतोऽवच्छेदकत्वाभाववत्वैतदुभयसम्बन्धेन । आत्मत्वे इत्थं समन्वयः - स्वं = 'एतदात्मा तदात्मा न' इति प्रतीतिसिद्धो भेदः । स्वाधिकरणम् = एतदात्मा । तद्वृत्ति = आत्मत्वम् । तद्वृत्तित्वमात्मत्वे इति भेदस्य प्रथमसम्बन्धः आत्मत्वे आयातः । तथा, स्वं = दर्शितो भेदः । स्वनिरूपितप्रतियोगिता = तदात्मनिष्ठा । तन्निरूपिता स्वरूपतोऽवच्छेदकता आत्मत्वे नास्तीति तादृशप्रतियोगितानिरूपितस्वरूपतोऽवच्छेदकताभाववत्त्वम् आत्मत्वे आयातमिति आत्मवं द्वितीयसम्बन्धेनापि भेदविशिष्टं भवति ।

'घटः आत्मा न' इति भेदस्वीकारे तु नैतत्सम्भवति । तथा हि, भेदाश्रये घटे आत्मत्वं नास्तीति आत्मत्वे स्वसामानाधिकरण्यमेव न वर्तते । तथा च न बाधावकाशः ।

उक्तबाधस्य प्रथमसम्बन्धेनैव वारितत्वात् द्वितीयसम्बन्धानिवेशे 'आत्मा घटो न' इति भेदमादायार्थान्तरता ।

(१५)॥**अज्ञानवत् प्रविलीनस्येति** ॥(२२८) अज्ञानं यथा तत्वज्ञानविरुद्धत्वात् नश्यति तथा तत्कार्यजीवोऽपि नश्यतीति कथं तस्य ब्रह्मभावः इति भावः ।

॥ **अनवसरताण्डवायितेनेति** ॥(२२९) ताण्डवनृत्यस्य हि रौद्रभावकालः अवसरः न तु श्रृङ्गाराद्युपेतः । तथा वाद्युक्तस्य निराकरणं सङ्गतम्, नत्वनुक्तस्येति भावः । अत्र मूले 'किमनेनाकाण्डताण्डवेन' इत्यत्र रूपकमस्ति । उपमानवाचकमकाण्डताण्डवपदम् तथा उपमेयभूतानुक्तोपालम्भवाचकम् अनेनेति पदं च प्रयुक्तं, नतु उपमावाचकमिवादिपदम् । अतः काशिकायां 'अनवसरताण्डवायितेन अनेन = अनुक्तोपालम्भेन' इति अचारक्विबन्ततया सा उपमा स्फुटीकृता ॥

॥ **कथं पक्षदृष्टान्तभाव इतीति** ॥ अनुमाने दृष्टान्तः पक्षाद्भिन्नः भवेत् । प्रकृते जीवः पक्षः । दृष्टान्तभूतं ब्रह्म च जीवाभिन्नत्वेन सन्दिग्धमिति तत्र पक्षाद्भेदः न निश्चित इति दृष्टान्तत्वानुपपत्तिरस्ति । न तु पक्षत्वानुपपत्तिः । पक्षत्वार्थमपेक्षितस्य साध्यसन्देहस्याक्षतेः । अतोऽत्र 'कथं दृष्टान्तभावः' इति वाक्येन भाव्यम् । 'कथं पक्षदृष्टान्तभावः' इति कुत उक्तम् - इति शङ्काया आशयः । 'एवमनुपपत्तिसद्भावात् पक्षाभिमतस्य जीवस्य पक्षत्वं दृष्टान्ताभिमतस्य ब्रह्मणः दृष्टान्तत्वं च कथम्?' इति पक्षत्वसहितदृष्टान्तत्वमाशङ्क्यते इति समाधानस्याशयः । इतोऽपि पक्षत्वशङ्कोपपत्तिं स्वरसतया दर्शयितुं यद्वेति समाधानान्तरमारब्धम् । अस्मिन् कल्पे 'भेदसिद्धेः पूर्वम् = अभेदनिश्चये, यथा जीवस्य पक्षत्वमनुपपन्नं तथा तत्सन्देहे = अभेदसन्देहे ब्रह्मणो दृष्टान्तत्वमनुपपन्न'मिति पक्षत्वानुपपत्तिः दृष्टान्तानुपपत्तौ दृष्टान्ततया उपपादिता इति स्वारस्यम् ।

(१६) ॥ **न च ब्रह्मतादात्म्याधिकरणीभूतेति** ॥(२४४) ब्रह्मप्रतियोगिकतादात्म्याधिकरणं = ब्रह्म । तत्प्रतियोगिकः व्यावहारिकः भेदः पक्षभूते जीवे सिद्ध इति सिद्धसाधनता इति प्रश्नकर्तुराशयः । समाधानस्यायमाशयः - अद्वैतसिद्धान्ते 'जीवः ब्रह्म न' इति प्रतीतिस्वीकारेऽपि 'जीवः ब्रह्मप्रतियोगिकतादात्म्याधिकरणं न' इति प्रतीतिः नाङ्गीकृता, जीवस्य ब्रह्मतादात्म्याधिकरणत्वात् । यथा 'घटाकाशः महाकाशो न' इति प्रतीतिसद्भावात् घटाकाशे महाकाश-

प्रतियोगिकव्यावहारिकभेदस्वीकृतावपि 'घटाकाशो महाकाशप्रतियोगिकतादात्म्याधिकरणं न' इति प्रतीत्यभावात् घटाकाशे महाकाशतादत्म्याधिकरणभेदः न स्वीकृतः तथा - इति ।

॥ **तदनिर्णयादिति** ॥(२४५) प्रतिवादी अद्वैती 'सर्वस्यापि ब्रह्मतादात्म्याधिकरणतया ब्रह्मतादात्म्याधिकरणभेदः अप्रसिद्धः' इति विवदति । तस्याः विप्रतिपत्तेरयमप्यर्थः यत् 'जगति भेदे घटपटादिप्रतियोगिकत्वं सिद्धं, न तु ब्रह्मतादात्म्याधिकरणप्रतियोगिकत्वम्' इति । एवं च साध्ये भेदे साध्यतावच्छेदक=ब्रह्मतादात्म्याधिकरणप्रतियोगिकत्वसन्देहः साध्यसन्देहे एव पर्यवस्यति - इत्याशयः ।

॥ **अथ पक्षताविशिष्टपक्षधर्मताज्ञानमिति** ॥ शङ्काया अयमाशयः - पर्वतः वह्निमानित्यनुमितिं प्रति 'पर्वतः वह्निमान् वा न वा' इति सन्देहरूपा पक्षता स्वरूपसती स्वातन्त्र्येण हेतुः । तथा 'पर्वतः धूमवान्' इति पक्षतावच्छेदकपर्वतत्ववति हेतोः सत्त्वज्ञानं पृथक् अनुमिति हेतुः । न तु 'सन्दिग्धवह्निमान् पर्वतः धूमवान्' इति ज्ञानम्, येन पक्षताविशिष्टपक्षधर्मताज्ञानमनुमितिहेतुः स्यात् । तथा च कथं 'पक्षताविघटनद्वारा पक्षधर्मताविघटनेन वा दोषः?' इति शङ्कितम्? - इति । समाधानस्यायमाशयः - पक्षताविशिष्टपक्षधर्मतायाः अनुमितिकारणत्वाभावेऽपि अनुमिति-प्रयोजकत्वं न हीयते । (यथा खलु घटाकारणस्यापि कुलालपितुः घटप्रयोजकत्वं वर्तते तथा ।) यत्र पक्षताविशिष्टपक्षधर्मत्वं भवति तत्रैव अनुमितिर्भवतीति विशिष्टपक्षधर्मतायाः अनुमितिप्रयोजकत्वं सम्पद्यते । परन्तु अन्यथासिद्धत्वात् कारणत्वं न भवति । तथा च प्रयोजकैकदेशविघटकस्य विशिष्टविघटकत्वं सम्पन्नम् - इति ।

॥ **ब्रह्मधर्मिकभेदानुमानस्य प्राधान्यादिति** ॥(२४६) जीवेश्वरभेदे अनुमानकथनावसरे आदौ जीवपक्षकानुमानमुक्तम् । परिहारकाले तु ब्रह्मपक्षकानुमानमुपात्तम् । तत्कुत इति शङ्कायाः समाधानमत्र दीयते । जीवधर्मिकभेदः जीवप्रत्यक्ष इति हेतोः तत्रानुमानमादौ उक्तम् । परन्तु ब्रह्मधर्मिकभेदः मङ्गलश्लोके प्रस्तुतत्वात् प्रधानः । अतस्तत्साधकानुमाने परिहार उपक्रान्तः इति ।

॥ **ननु पक्षधर्मिकसाध्यतदभावकोटिकसन्देहस्यैव इति** ॥ शङ्कायाः अयमाशयः - साध्याप्रसिद्धेः साध्यसंशयरूपा पक्षता न घटते इति पूर्वपक्षे प्राप्ते मूले 'जीवप्रतियोगिकतादात्म्यं ब्रह्मण्यस्ति न वा' इति संशयः प्रदर्शितः । स च साध्याभावधर्मिकः पक्षवृत्तित्वतदभावकोटिकः 'साध्याभावः

पक्षे वर्तते न वा' इत्याकारकः । परन्तु अनुमानापेक्षितसंशयः 'पक्षः साध्यवान् वा न वा' इति पक्षधर्मिकः साध्यतदभावकोटिकः स्यात् । तत्कथमन्यविधसंशयप्रदर्शनम् - इति । परिहारस्यायमाशयः - पक्षतारूपसंशयः पक्षधर्मिक एव भवेदिति न नियमः । अभिधेयत्वानुमाने 'अभिधेयत्वं शब्दे अस्ति न वा' इति साध्यधर्मिकः पक्षवृत्तित्वतदभावकोटिकः संशयः पक्षतारूपेण स्वीकृतः । अभिधेयत्वस्थले साध्यधर्मिकः पक्षवृत्तित्वतदभावकोटिकः । प्रकृते साध्याभावधर्मिकः पक्षवृत्तित्वतदभावकोटिक इति व्यत्याससद्भावेऽपि पक्षधर्मिक एव संशयो भवेदिति न नियम इति तु अनेन सिद्ध्यति - इति ।

॥ **विप्रतिपत्त्यधीनसंशयस्येति** ॥ विरुद्धार्थप्रतिपादकवाक्यद्वयं विप्रतिपत्तिः । स्वारसिक-सन्देहाभावेऽपि विप्रतिपत्तिश्रवणेऽसाधारणधर्माज्ञाने संशयो भवतीत्याशयः ।

॥ **यो यद्व्यापकीभूताभावप्रतियोगीति** ॥ (२४७) यः = धूमः यद्=वह्न्यभाव-व्यापकीभूत=धूमाभाव-प्रतियोगी सः = धूमः तदभाव=वह्न्यभावाभाव=वह्नि-व्याप्यः - इति दृष्टान्ते समन्वयः । प्रकृते - यः = ब्रह्माननुसंहितदुःखानुसन्धातृत्वरूपो हेतुः, यद्=ब्रह्मप्रतियोगिकतादात्म्यरूपसाध्याभाव-व्यापकीभूत-हेत्वभाव-प्रतियोगी सः = हेतुः, तदभाव=साध्याभावाभाव=साध्यव्याप्यः - इति समन्वयः ।

(१७) ॥ **अभेदसाधकत्वेन पराभिमतस्येति** ॥ (२५२) अद्वैतिनः तत्वमसीत्यत्र द्वेधा अन्वयमाश्रित्य व्याख्यान्ति । 'तत् त्वम् असि' इति ब्रह्म उद्दिश्य जीवाभेदः विधीयत इति व्याख्याने तेन वाक्येन ब्रह्मधर्मिकजीवप्रतियोगिकाभेदः सिद्ध्यति । 'त्वं तदसि' इत्यन्वये जीवधर्मिकब्रह्मप्रतियोगिकाभेदः सिद्ध्यति - इति ।

॥ **जडतादात्यस्य पक्षसमत्वेनेति** ॥ जडस्य दुःखाननुसन्धातृत्वात् जडतादात्म्ये जीवानुसंहितदुःखाननुसन्धातुरभेदत्वरूपहेतुः वर्तते । तथा जीवधर्मिकत्वाभावरूपसाध्यमपि वर्तत इति तस्य अन्वयदृष्टान्तत्वसम्भवे कुतो व्यतिरेकदृष्टान्त आश्रित इति शङ्का । तस्या इत्थं समाधानम् - 'सर्वं खल्विदं ब्रह्म' इति श्रुतेरद्वैतिनः सर्वत्र जीवजडयोः ब्रह्मतादात्म्यमुररीकुर्वन्ति । एवं च एकस्यैव तादात्म्यस्य ब्रह्मजीवजडानि धर्मीणि प्रतियोगीनि च भवन्ति । तेन जडतादात्यस्य प्रकृते पक्षत्वेनानिर्देशेऽपि तत्र साध्यं न निर्णीतं, किन्तु सन्दिग्धम् । अतः

पक्षतावच्छेदकरहितः सन्दिग्धसाध्यवान् पक्षसमः इति लक्षणानुसारं पक्षसमस्य तस्यान्वयदृष्टान्तत्वं न सम्भवतीति भावः ।

॥ **दुःखाननुसन्धातृत्वत्वरूपहेत्वभावस्येति** ॥ अयं भावः - प्रकृते हेतुः जीवानुसंहितदुखाननुसन्धातुरभेदत्वम् । अननुसन्धातुरभेदः अननुसन्धातृत्वरूपः, भेदाभावः भेदप्रतियोगितावच्छेदकरूप इति न्यायात् । तथा च तादृशाभेदत्वं दुःखाननुसन्धातृत्वत्वरूपम् । एवं, जीवः दुःखानुसन्धाता । जीवत्वं = दुःखानुसन्धातृत्वम् । जीवाभेदः जीवत्वरूपः, भेदाभावः भेदप्रतियोगितावच्छेदकरूप इति न्यायात् । तथा चा जिवैक्यं (जीवाभेदः, जीवत्वम् अथवा जीवतादात्म्यं) = दुःखानुसन्धातृत्वम् । एवं च जीवैक्ये दुःखानुसन्धातृत्वत्वमेव उभयवादिसम्मतं, नतु दुखाननुसन्धातृत्वत्वरूपो हेत्वभावः - इति ।

(२०) ॥ **अष्टद्रव्यवृत्त्युपाधीति** ॥ (२९५) पृथिव्याद्यष्टान्यतमत्वं तादृशोपाधिः ।

॥ **साक्षाद्व्यापकत्वं चेति** ॥ दृष्टान्ते गुणत्वे पृथिवीत्वादीतररूपत्वसाक्षाद्व्यापकत्वं विवक्षितम् । अतः तद्व्यापकजात्यव्यापकत्वमित्यत्र तच्छब्देन रूपत्वं ग्राह्यम् । तत् = रूपत्वं, तद्व्यापकजातिः = गुणत्वम्, तद्व्यापिका जातिः = सत्ता, न तु गुणत्वमिति समन्वयः ।

अस्मिन् परिष्कारे तद्व्यापकत्वमित्यत्र व्यापकत्वम् अधिकदेशवृत्तित्वरूपं विवक्षितम् । तच्च तदवच्छिन्नभेदवद्वृत्तित्वे सति तद्वद्वृत्तित्वम् । (तदभाववति तद्वति च वर्तमानं तदपेक्षया अधिकदेशवृत्ति भवति । यथा रूपत्वाभाववति रसे रूपत्ववति रूपे च भवत् गुणत्वं रूपत्वापेक्षया अधिकदेशवृत्ति - इत्याशयः । तदभाववति विद्यमानमित्ययमर्थः भेदघटिततया तदवच्छिन्नभेदवद्वृत्तित्वमिति निविष्टः ।)

तदेतादृशं व्यापकत्वं गुणत्वे वर्तते । तथा हि - तत् = रूपत्वं, तदवच्छिन्नभेदः = तदवच्छिनप्रतियोगिताको भेदः = 'रसः रूपं न' इति प्रतीतिसाक्षिको भेदः, तद्वान् = रसः, तद्वृत्ति = गुणत्वं, तद्वृत्तित्वं गुणत्वे वर्तते । एवं, तत् = रूपत्वं, तद्वत् = रूपं, तद्वृत्ति = गुणत्वं, तद्वृत्तित्वं गुणत्वे - इति समन्वयः ।

अथ दलकृत्यविचारः - सत्यन्तपरित्यागे 'तद्वद्वृत्तित्वमधिकदेशवृत्तित्व'मिति स्यात् । तथा सति अनुमानस्य साध्यवैकल्यदोषः । तथा हि, तत् = रूपत्वं, तद्वद्रूपवृत्ति = रूपत्वम् । रूपत्वं प्रति

गुणत्वं व्यापकमेव भवति । तथा च, तद्=रूपत्व-व्यापक=रूपत्व-व्यापकत्वमेव गुणत्वे आयातं, न तु तद्व्यापकजात्यव्यापकत्वमिति दृष्टान्ते साध्यवैकल्यम् । तद्वारणाय तदवच्छिन्नभेदवद्वृत्तित्वं ग्राह्यम् । इदानीं रूपत्वं रूपत्वव्यापकं न भवति । 'रूपं रूपं न' इति प्रतीत्यभावात् रूपत्वे रूपत्वावच्छिन्नभेदवद्वृत्तित्वं न भवतीति तत्र न सत्यन्तसमन्वयः ।

तद्वद्वृत्तित्वरूपविशेष्यदलानिवेशे पुनः साध्यवैकल्यम् । तथा हि, तत् = रूपत्वं, तदवच्छिन्नभेदः = 'रसो रूपं न' इति भेदः, तद्वान् = रसः, तद्वृत्ति = रसत्वमिति रसत्वं तद्व्यापकं स्यात् । तद्व्यापकरसत्वव्यापकत्वमेव गुणत्वे नतु अव्यापकत्वमिति साध्यवैकल्यम् । तद्वारणाय तद्वद्वृत्तित्वनिवेशे, रसत्वस्य तद्=रूपत्व-वद्=रूप-वृत्तित्वं नास्तीति रसत्वे रूपत्वव्यापकत्वं न भवतीति दोषपरिहारः ।

तद्व्यापकजात्यव्यापकत्वमित्यनुक्त्वा तद्व्यापकधर्माव्यापकत्वमिति विवक्षणे पुनः साध्यवैकल्यम् । तथा हि, तत् = रूपत्वं, तद्व्यापकधर्मः = विशेषगुणत्वं, तद्व्यापकत्वमेव गुणत्वे नत्वव्यापकत्वमिति दोषः । जातिनिवेशे च, विशेषगुणत्वं सखण्डत्वात् न जातिरिति न तदादाय दोषः ।

अथ परिष्कारः - नन्वेवं विवक्षणे अनुमानस्य सिद्धसाधनता । तथा हि, पृथिवीत्वादि-व्यतिरिक्तजातिः = रूपत्वम्, तद्व्यापकजातिः = गुणत्वं, तदव्यापकत्वं द्रव्यत्वे वर्तते । एवं च आत्मत्वापेक्षामन्तरेण सिद्धेनैव साध्यपर्यवसानात् सिद्धसाधनम् - इति चेत्, तत्परिहाराय 'तद्व्यापकजात्यव्यापकत्व'मित्यत्र अव्यापकत्वं तदवच्छिन्नभेदवदवृत्तित्वरूपं विवक्ष्यते । एवं चेदानीं रूपत्वसाक्षाद्व्यापकत्वं नाम, रूपत्वव्यापकजात्यवच्छिन्नभेदवदवृत्तित्वम् । रूपत्वव्यापकजातिः = गुणत्वं, तदवच्छिन्नभेदः = 'द्रव्यं गुणो न' इति भेदः, तद्वत् = द्रव्यं, तद्वृत्तित्वमेव द्रव्यत्वे नत्ववृत्तित्वमिति न तदादाय साध्यपर्यवसानमिति न सिद्धसाधनता । (तद्वद्वृत्त्यभावाप्रतियोगित्वरूपं गुणत्वव्यापकत्वं द्रव्यत्वे नास्तीति द्रव्यत्वं गुणात्वाव्यापकं जातमिति मनसि निधाय शङ्का । तद्व्यापकजात्यव्यापकत्वमित्यत्र अव्यापकत्वघटकं व्यापकत्वं पुनरधिकदेशवृत्तित्वम् । तच्च पूर्वोक्तरूपम् । अधिकदेशवृत्त्यर्थं तदवच्छिन्नभेदवद्वृत्तित्वमपेक्षितम् । अतः अव्यापकत्वं तदवच्छिन्नभेदवदवृत्तित्वरूपम् । तादृशं गुणत्वाव्यापकत्वं द्रव्यत्वे नास्ति - इति समाधानस्याशयः ।)

नन्वथापि सिद्धसाधनता । तथा हि, पृथिवीत्वादिव्यतिरिक्तजातिपदेन एतावत्पर्यन्तं रूपत्वमादाय समन्वयादिकं कृतम् । इदानीं तेन पदेन गुणत्वं गृह्यते । तद्व्यापिका जातिः = सत्ता, तद्व्यापकं = प्रमेयत्वं, अव्यापकं भवति द्रव्यत्वम् । प्रदर्शितं परिष्कृतमव्यापकत्वमपि द्रव्यत्वे समस्ति । तदवच्छिन्नभेदः = सत्तावच्छिन्नभेदः = 'सामान्यं सत्तावन्न' इति प्रतीतिसाक्षिकः, तद्वत्सामान्यवृत्तित्वं द्रव्यत्वे नास्तीति सत्तावच्छिन्नभेदवदवृत्तित्वरूपमव्यापकत्वं द्रव्यत्वे वर्तत इति सिद्धसाधनता - इति चेत् तत्परिहाराय तदव्यापकत्वं तदवच्छिन्नभेदवदवृत्तित्वमित्यनुक्त्वा तदवच्छिन्नभेदवदसमवेतत्वरूपं विवक्ष्यते । अवृत्तित्वस्थाने असमवेतत्वं निविश्यत इति यावत् । इदानीं न दोषः । तथा हि, तद्=गुणत्व-व्यापक=सत्ता-वच्छिन्नभेदवत् सामान्यं खलु । तत्समवेतत्वं नाम तन्निरूपितसमवायसम्बन्धावच्छिन्नाधेयता । सा चाधेयता तदैव प्रासेत्स्यत् यदि सामान्ये किञ्चित् समवायेनाभविष्यत् । एवं च सत्तावच्छिन्नभेदवत्समवेतत्वाप्रसिद्ध्या तदभावरूपं सत्ताऽऽव्यापकत्वमपि द्रव्यत्वे वक्तुमशक्यमिति न सिद्धसाधनता । किन्तु, आत्मत्वजातिमादाय तद्व्यापकद्रव्यत्वावच्छिन्नभेदवद्गुणासमवेतत्वस्य द्रव्यत्वे समन्वयः । (प्राक् साक्षाद्व्याप्यत्वं तद्व्याप्यजात्यव्याप्यत्वे सति तद्व्याप्यत्वमिति दलद्वयघटिततया परिष्कृतम् । तदनुसारेण साक्षाद्व्यापकत्वमपि तद्व्यापकजात्यव्यापकत्वे सति तद्व्यापकत्वरूपं वक्तव्यम् । एवमुक्तौ द्रव्यत्वे गुणत्वव्यापकसत्ताऽव्यापकत्वसद्भावेऽपि गुणत्वव्यापकत्वं नास्तीति दोषप्रसक्तिरेव न स्यात् । तथापि तद्व्यापकत्वमनिवेश्य तद्व्यापकजात्यव्यापकत्वमात्रस्य निवेशे, तत्रापि अव्यापकत्वस्य उक्तभेदवदसमवेतत्वरूपत्वे लाघवमिति मनसिकृत्य काशिकाचार्यैः एवं परिष्कृतम् । अत एवादौ तद्व्यापकजात्यव्यापकत्वमित्यस्य दृष्टान्ते गुणत्वे समन्वयावसरे 'तत् = रूपत्वं, तद्व्यापिका जातिः = सत्ता, तदव्यापकं भवति गुणत्व'मिति न समन्वेतव्यम् । तस्यापाततः सम्भवेऽपि उक्तरूपं परिष्कृतसत्ताऽऽव्यापकत्वं न कथयितुं शक्यमिति ध्येयम् ।)

॥ **स्वाधिकरणवृत्तित्वेत्यादि** ॥(२९६) तद्व्यपकजात्यव्यापकत्वमित्यत्र तद्व्यापकत्वं सम्बन्धविधया अनुगमय्य साध्यपरिष्कारोऽत्र कृतः । अस्य दृष्टान्ते इत्थं समन्वयः - पृथिवीत्वादिव्यतिरिक्तकिञ्चिज्जातिः = रूपत्वम् । काशिकोक्तोभयसम्बन्धेन तद्विशिष्टजातिः = गुणत्वम् । तथा हि, स्व=रूपत्वा-धिकरण=रूप-वृत्ति = गुणत्वम् । एवं स्व=रूपत्वा-वच्छिन्न(रूपं

रसो नेति)भेदवत्=रस-वृत्ति = गुणत्वम् । अतः उक्तोभयसम्बन्धेन रूपत्वविशिष्टं भवति गुणत्वम् । तदवच्छिन्न(द्रव्यं गुणो नेति)भेदवद्द्रव्यासमवेतत्वं भवति गुणत्वे - इति समन्वयः ।

॥ **यद्यपीति** ॥ अयमाशयः - सत्तासाक्षाद्व्याप्यत्वादित्येव हेतुकथने घटत्वे व्यभिचारः इत्युक्तम् । पृथिवीत्वादिभिन्नां यां काञ्चिदपि जातिं प्रति घटत्वं साक्षाद्व्यापकं न भवति, घटत्वव्याप्यजातेरेवाभावात् - इति खलु व्यभिचारकथनस्याशयः । परन्तु घटत्वे साध्यसम्भवात् न व्यभिचारप्रसङ्गः । तथा हि, पृथिवित्वादिभिन्नजातिः = घटत्वं, तद्व्यापकजातिः = पृथिवीत्वं, तदव्यापकत्वं घटत्वे वर्तते ! (न हि साक्षाद्यापकत्वशरीरे तद्व्यापकत्वं निविष्टम् । येन घटत्वाधिकदेशवृत्तित्वरूपं घटत्वव्यापकत्वं घटत्वे नास्तीति साध्यं न स्यात् ।) तथा च साक्षात्पदं व्यर्थमेव इति चेदत्रोच्यते - 'एतदनुमाने साध्यपर्यवसानाय पृथिवीत्वादिभिन्नधर्मस्य जातित्वमङ्गीकरणीयम् । तत्रान्यस्य आकाशत्वादेरसम्भवात् आत्मत्वस्य जातित्वमङ्गीकरणीयम्' इति खलु आत्मत्वजातिसाधनरीतिः । परन्तु, द्रव्यत्वसत्तयोर्मध्ये विद्यमानस्य द्रव्य-गुणान्यतरत्वस्य जातित्वाङ्गीकारेऽपि साध्यपर्यवसानं सुशकम् । तथा हि, पृथिवीत्वादिभिन्नजातिः = द्रव्यत्वं, तद्व्यापकजातिः = द्रव्यगुणान्यतरत्वं, तदव्यापकत्वं द्रव्यत्वे वर्तते इति सिद्धसाधनता स्यत् । तत्परिहाराय साक्षाद्व्यापकत्वशरीरे तद्व्यापकत्वमपि निवेश्यम् । इदानीं द्रव्यत्वे द्रव्यत्वव्यापकत्वं नास्तीति न सिद्धसाधनता । एवं चानया रीत्या तद्व्यापकत्व-घटितसाध्यपरिष्कारस्यावश्यकतया घटत्वे घटत्वव्यापकत्वं नास्तीति साध्याभावात् व्यभिचारः प्रसक्तः । तद्वारणाय साक्षात्पदमावश्यकम् - इति भावः ।

॥ **अन्यथा त्विति** ॥ (२९७) उक्तसमाधाने द्रव्यगुणान्यतरत्वरूपधर्मस्य जातित्वाङ्गीकारः आवश्यकः । परन्तु अन्यतरत्वस्य तद्भिन्नभिन्नत्वरूपतया जातित्वं न स्वीकारार्हमिति विभाव्यते चेत् तदा घटत्वे व्यभिचारप्रसक्तिर्नास्तीति साक्षात्पदं नावश्यकमिति भावः ।

॥ **गगनावृत्तिधर्मसमवायित्व इति** ॥ समवायित्वं समवायानुयोगित्वम् । सप्तसु पदार्थेषु समवायिनः आद्यास्त्रयः । एवं च धर्मसमवायित्वं त्रिषु विद्यमानं सत्तासमव्याप्तमिति न्यूनवृत्तिरूपसत्तासाक्षाद्व्याप्यं न भवति । गगनावृत्तिधर्मसमवायित्वं तु गगनभिन्नेषु द्रव्येषु, सर्वेषु गुणेषु, सर्वेषु कर्मसु च वर्तते इति सत्तापेक्षया न्यूनवृत्ति भवति, सत्तायाः गगनेऽपि वृत्तेः । तदेवं काशिकाकारैः सूक्ष्मेक्षिकया स्थलं मार्गितम् ।

॥ **यत्किञ्चिदेकभेदस्येति** ॥ जातिपदेन मनस्त्वस्य ग्राह्यतया, इदानीं मनस्त्ववन्मनःप्रतियोगिकः एको भेदो ग्राह्यः । प्रकृतविचारसौलभ्याय शृङ्गग्राहिकतया देवदत्तमनःप्रतियोगिकभेदः साध्यतया स्वीकार्यः । सर्वपदादाने देवदत्तेतरमनस्सु देवदत्तमनोभेदसद्भावात् सिद्धसाधनता स्यात् । सर्वपददाने च सर्वमनस्सु देवदत्तमनोऽप्यन्तर्भवति । परन्तु तत्र स्वभेदः वक्तुमशक्य इति न दोषः - इति शङ्काशयः ।

॥ **एकमनोभेदस्य सर्वमनस्स्वभावादिति** ॥ एकश्चासौ मनोभेदश्च इति एतत्कल्प-साध्यपरिष्कारानुगुणः विग्रहः । सर्वमनस्-स्वभावादिति आपाततः पदच्छेदः भाति । स प्रकृताननुगुणतया नादरणीयः । किन्तु सर्वमनस्सु अभावादिति पदविभागः । अग्रिमतृतीय-पङ्क्तावप्येवमेव पदविभागो द्रष्टव्यः ।

॥ **तादृशभेदप्रतियोगिनीति** ॥ साध्यतया देवदत्तमनोभेदस्य गृहीततया तत्प्रतियोगिनि देवदत्त-मनसि व्यभिचार इति भावः ।

॥ **प्रागेव दूषितेति** ॥ 'एतेन विभुत्वादिजात्यन्तरसिद्ध्याऽर्थान्तरमित्यपास्त'मिति १९तममूले इति ध्येयम् ।

॥ **पृथिव्यादिद्रव्याणीति** ॥ (२९८) अत्र दृष्टान्ते गुणे आत्मवृत्तिद्रव्यत्वरूप-जातिमद्व्यतिरिक्तत्वमादाय समन्वयः । पक्षे च तदसम्भवात् आत्मत्वजातिमादायैव समन्वयः ।

॥ **यद्यप्यात्मत्वसिद्धेः प्रागिति** ॥ (२९९) अयमाशयः - जातिं विना व्यक्तिभानायोगः इति नियमो वर्तते । घटशब्दश्रवणे घटः घटत्वेन भासते, न तु शुद्धघटः । तदनुसारं अनुमाने 'द्रव्यत्वान्यात्मनिष्ठजात्यन्या' इति साध्यनिर्देशावसरे आत्मनिष्ठेत्यभिलपितम् । तत्र आत्म-रूपव्यक्तिः आत्मत्वरूपजात्यैव भासेत । परन्तु सा जातिरद्यापि न सिद्धा । तत्कथमात्मनिष्ठेति निर्देशः कृतः - इति । परिहारस्यायमाशयः - साध्यकोटौ आत्मा न आत्मत्वेन रूपेण निविश्यते, किन्तु तद्व्यक्तित्वेन पृथिव्याद्यष्टद्रव्यभिन्नद्रव्यत्वेन वा निविश्यते । आत्मत्वसिद्धेः प्राक् आत्मा एतादृशरूपैः भासते इति यावत् । एतादृशानि रूपाणि आत्मत्वजातिसिद्धेः प्रागपि सिद्धानीति न साध्याप्रसिद्धिदोषः - इति ।

इदमप्यत्रावधेयम् - जात्यखण्डधर्मव्यतिरिक्तानां किञ्चिद्रूपेणैव भानमिति न्यायानुसारेण व्यक्तिभाने

कस्यचन धर्मस्य भानमावश्यकम् । स च धर्मः जातिप्रवृत्तिनिमित्तकशब्दस्थले जातिरेव । यथा घटपटादिशब्दैः घटपटादिः घटत्वपटत्वादिरूपेण भासते । जातिभिन्नप्रवृत्तिनिमित्तकशब्दस्थले तु तद्रूपं जातिर्भवितुं नार्हतीति जातिभिन्नधर्मेणैव भासते । यथा, आकाशशब्देन आकाशः शब्दाश्रयत्वादिना, भूतशब्देन भूतानि अजातिभूतभूतत्वेन भासन्ते । प्रकृते आत्मत्वजातिसिद्धेः पूर्वं आत्मशब्दप्रयोगे आत्मा अष्टद्रव्यभिन्नद्रव्यत्वादिना भासते - इत्याशयः । आत्मशब्दस्थले अष्टद्रव्यभिन्नद्रव्यशब्दः प्रयुज्यत इत्याशयः इत्यपि वदन्ति ।

॥ **पटः पटात्मेत्यादि** ॥ मेयत्वरूपहेतुमति दृष्टान्ते घटे पटात्मान्यतर=पट-वृत्ति= पटत्व-रूपजातिशून्यत्वं वर्तते । पक्षे पटे एवं साध्यपर्यवसानायोगात् पटात्मान्यतरात्म-वृत्तिजातिशून्यत्वेन साध्यपर्यवसानं कार्यम् । आत्मवृत्तिजाती द्रव्यत्वसत्ते पटेऽपि स्त इति आत्मत्वस्य जातित्वं स्वीकृत्यैव साध्यपर्यवसानं कार्यमित्यात्मत्वजातिसिद्धिः ।

॥ **सत्ताद्रव्यत्वाभ्यामिति** ॥ अत्र अनेनेत्यनेन कश्चन चैत्रादिः ग्राह्यः । चैत्रस्य घटं दृष्ट्वा यत् कदाचित् 'इदं सत् द्रव्यम्' इति ज्ञानं भवति तद्विषयीभूतः घटः अत्र पक्षः । 'इदं सत् द्रव्य'मिति ज्ञाने हि सत्ता द्रव्यत्वं च प्रकारौ, तद्विषयश्च घटः । अतः घटः 'सत्ताद्रव्यत्वाभ्यां ज्ञायमानं' भावति । सत्ताद्रव्यत्वप्रकारकज्ञानविशेष्यमिति यावत् । अत्र दृष्टान्ततया 'अयं पटः' इति ज्ञानविषयीभूतः पटः स्वीकार्यः । तत्र हेतुः वस्तुत्वं वर्तते । यदा 'अयं पटः' इति ज्ञानं भावति तदा पटः पटत्वेन ज्ञायते न तु आत्मवृत्तिभ्यां सत्ताद्रव्यत्वाभ्याम् । अतस्तत्र 'इदानीमात्मवृत्तिजात्या न ज्ञायते' इति साध्यमपि वर्तते । एतत्कालवृत्ति-आत्मवृत्तिजातिप्रकारकज्ञानविशेष्यत्वाभावरूपं साध्यमस्तीति यावत् । हेतुमति पक्षे तु एवं साध्यपर्यवसानमशक्यम् । स हि, अनुमानात् प्राक् आत्मवृत्तितया सिद्धाभ्यां सत्ताद्रव्यत्वाभ्यामिदानीं ज्ञायमानमेवास्ति । अतस्तत्र साध्यपर्यवसानाय सत्ताद्रव्यत्वातिरिक्ता काचन जातिरुररीकरणीया । सैवाऽऽत्मत्वमिति आत्मत्वजातिः सिद्ध्यतीति भावः ।

अत्र पक्षे अनेन इति न दीयते इति चेत् अर्थान्तरता । चैत्रः 'इदं सत् द्रव्यम्' इति यं घटं जानाति तमेव घटं अन्यः 'अयं घटः' इति जानाति चेत्, तत्र घटे 'इदानीमात्मवृत्तिजात्या = द्रव्यत्वेन सत्तया वा अज्ञायमानत्व'रूपं साध्यं भवति । तद्वारणाय अनेनेति देयं । इदानीं पक्षे साध्ये च घटकं ज्ञानद्वयमेकस्यैव स्वीकरणीयमिति नार्थान्तरता ।

साध्ये इदानीमिति कालविशेषस्यादाने तस्यैव चैत्रस्य कालान्तरीयं 'अयं घटः' इति ज्ञानमादाय पुनरर्थान्तरता । अतः इदानीमिति । एतदनुमानसम्बन्धि इदं सर्वं विवरणं श्रीमदनन्त-तन्त्रिमहोदयैरुपदिष्टम् ॥

(२१) ॥ **अवृत्तित्वेन गुणाद्यनन्तर्भूतस्येति** ॥ (३१३) आत्मा गुणादिषु नान्तर्भूतः अवृत्तित्वात् व्यतिरेकेण गुणादिवत् इत्यनुमानेन गुणाद्यनन्तर्भूतत्वे सिद्धे, आत्मा द्रव्यं गुणाद्यनन्तर्भूतत्वे सति पदार्थत्वात् घटवदिति परिशेषानुमानेनेत्यर्थः ।

॥ **आभाससमानयोगक्षेमेति** ॥ आभासेन समानौ = आभाससमानौ । आभाससमानौ योगक्षेमौ यस्य सः = आभाससमानयोगक्षेमः - इति विग्रहः । अनुमानदूषणप्रणाडीविशेषोऽयम् । वादिप्रयुक्तानुमाने स्वयं दोषमनुद्घाट्य दूष्यानुमानसमानमनुमानान्तरं प्रतिवादिना प्रयुज्यते । प्रत्यनुमाने यो दोषः स वाद्यनुमानेऽपि समानः । यदि वाद्यनुमाने तद्दोषपरिहारसम्भवः तर्हि प्रत्यनुमानेऽपि स समानः । एवं आभासेन = दुष्टेन अनुमानेन, समानौ, योगक्षेमौ = साधक-बाधकभावाभावौ = साधकबाधकसत्वासत्वे यस्येति भावः ।

॥ **यद्यपि स्वप्रकाशत्वादेरित्यादि** ॥ स्वप्रकाशत्वज्ञानाय तद्घटकपदार्थज्ञानापेक्षा वर्तत इति गौरवमुक्तम् । परन्तु, ये आत्मत्वजातिमात्मपदप्रवृत्तिनिमित्ततया स्वीकुर्वन्ति तेऽपि स्वप्रकाशत्व-रूपं धर्मं तथा तज्ज्ञानस्य घटकज्ञानापेक्षत्वं चाङ्गीकुर्वन्त्येव । एवं च येन निमित्तेन दोषः उक्तः स न परिहृत इति न लाघवम् । प्रत्युत आत्मत्वरूपजात्यन्तराङ्गीकारप्रयुक्तगौरवमधिकमिति शङ्काशयः । परिहारस्यायमाशयः - लाघवकथनस्य नायमाशयः यत् स्वप्रकाशत्वज्ञानस्य घटकधर्मज्ञानापेक्षा नास्तीति । किन्तु प्रकारान्तरद्वयेन लाघवमस्तीति । तथा हि, यथा 'घटपदं घटे = घटत्वविशिष्टघटे शक्तम्' इति घटपदशक्तिज्ञानाय प्रवृत्तिनिमित्तघटत्वज्ञानापेक्षा वर्तते तथा 'आत्मपदं स्वप्रकाशत्वविशिष्टे आत्मनि शक्तम्' इति शक्तिज्ञानाय स्वप्रकाशत्वज्ञानमपेक्ष्यते । स्वप्रकाशत्वज्ञानाय च स्वत्व-प्रकाशादीनां ज्ञानमावश्यकमिति शक्तिज्ञानस्यानेकोपाधि-ज्ञानापेक्षतया गौरवम् । एवं, यथा घटपदशक्यतावच्छेदकता घटत्वे तथा आत्मपदशक्यतावच्छेदकता स्वत्वे प्रकाशे चाङ्गीकरणीया । आत्मत्वाङ्गीकारे च नैतत्सर्वमिति लाघवमित्याशयः ।

(२२) ॥ **साक्षाज्जातित्वानुमितिविरोधित्वे मानाभावादिति** ॥ (३२१) तद्वत्ताबुद्धिं प्रति तदभाववत्ताज्ञानं तदभावव्याप्यवत्ताज्ञानं च प्रतिबन्धकम् । 'आत्मत्वं जातिः' इत्यनुमितिं प्रति 'आत्मत्वं न जातिः' इति 'आत्मत्वं जातित्वाभावव्याप्यवत्' इति च ज्ञानं प्रतिबन्धकम्, न तु 'आत्मत्वं स्वाश्रयप्रतियोगिकभेदवदवृत्ति' इति ज्ञानमिति भावः ।

॥ **फलीभूतेत्यादि** ॥ पृथिवीत्वं जलत्वादीतरद्रव्यत्वसाक्षाद्व्याप्यजातिभिन्नमित्याद्यनुमानानां फलीभूतानुमानम् - आत्मत्वं नानाव्यक्तिनिष्ठं जातित्वादित्यनुमानम् । आत्मत्वं नानाव्यक्ति-निष्ठमित्यस्य स्वाश्रयप्रतियोगिकभेदवद्वृत्तीत्यर्थः । तज्ज्ञानं प्रति च व्यक्त्यभेदज्ञानं प्रतिबन्धकमिति भावः ।

॥ **मणिमन्त्रादिवदिति** ॥ (३२२) दाहं प्रति मणेः मन्त्रादीनां च न तदभाववत्तादिज्ञानतया विरोधित्वमपि तु स्वातन्त्र्येणैव विरोधित्वं तथा व्यक्त्यभेदज्ञानस्य जातित्वानुमितिं प्रत्यपि साक्षाद्विरोधित्वमङ्गीकरणीयमिति भावः ।

(२३) ॥ **कारणविघटनद्वारेति** ॥ (३२७) जातिसिद्धिकारण=जातिसाधक-विघटनद्वारेत्यर्थः ।

**॥ इति श्रीमदधोक्षजतीर्थाधिष्ठित-उडुपीपेजावरमठाधीश-विद्वत्तिमिङ्गिलसागर-श्रीश्री१०८श्रीविश्वेशतीर्थचरणान्तेवासिना श्रीप्रह्लाद-पद्मातनूजेन तिरुमलाचार्यकुलकर्णिना विरचिता विद्वत्तल्लजश्रीमदनन्ततन्त्रिमहोदयपरामृष्टा श्रीकाशीतिरुमलाचार्यविरचितायाः भेदोज्जीवनटिप्पण्याः काशिकायाः टिप्पणिः काशिकाविवृतिः समाप्ता ॥**